

राष्ट्रिय
संस्कृत
संस्थानम्
देहली
गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

॥ १४ ॥

# सिद्धान्तलक्षणसुबोधिनी

(सिद्धान्तलक्षणगूढार्थतत्त्वालोकस्य व्याख्या)

प्रणेता
पण्डित श्रीकृष्णमाधव झा



# Rashtriya Sanskrit Sansthan

*(Under the auspices of the Ministry of Education and Culture, Govt. of India)*

Delhi

Ganganatha Jha Kendriya Sanskrit Vidyapeeth

TEXT SERIES

*General Editor*

Dr. G. C. Tripathi

## No. 14

# SIDDHANTA LAKSHANA SUBODHANI

(An exposition of Gudharthatattvaloka of Dharmadatta (Baccha) Jha on the Siddhantalakshana of Jagadisha.)

*by*

Pandit Shri Krishnamadhava Jha

*Edited by*

Dr. Kishoranatha Jha




ALLAHABAD

1982

राष्ट्रियसंस्कृतसंस्थानम्
(केन्द्रीयशिक्षामन्त्रालयस्याङ्गभूतम्)
देहली

—•—

गंगानाथझा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

—•—

चतुर्दशम् पुष्पम्

# सिद्धान्तलक्षणसुबोधनी

(सिद्धान्तलक्षणजागदीश्याः धर्मदत्त (बच्चा) झा प्रणीतस्य गूढार्थतत्त्वालोकस्य व्याख्या)

—•—

प्रणेता
पण्डित श्रीकृष्ण माधव झा

सम्पादकः
डा० किशोर नाथ झा

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः

॥१४॥

# सिद्धान्तलक्षणसुबोधनी

[सिद्धान्तलक्षणजागदीश्याः धर्मदत्त (बच्चा) झा प्रणीतस्य गूढार्थतत्त्वालोकस्य व्याख्या]

प्रणेता

पण्डित श्रीकृष्ण माधो झा

सम्पादकः

डॉ० किशोर नाथ झा




गंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
मोतीलाल नेहरू पार्क
प्रयागः
१९८२

# FOREWORD

The Vidyapeetha has a feeling of enormous satisfaction in presenting the work *Siddhanta Lakshana Subodhani* to the scholars and lovers of Sanskrit. This is an erudite and scholarly work from the pen of Pandit Krishna Madhava Jha, one of the greatest Nyaya scholars presently living in the country of Mithila. It is a well-known fact that the discipline of Nyaya has developed itself in its minute details in this region and it is here that it has been able to achieve its loftiest heights.

In the beginning of an extensive and almost insurveyable literature of Nyaya Philosophy, stands the monumental work *Tattva-Chintamani* by Gangesh Upadhyaya. Though the work deals only with the four Pramanas accepted in the Nyaya Shastra, it, in fact, covers a vast field of this Shastra and draws into discussion many a point not directly connected with the Pramanas. A number of posterior scholars in Mithila and Bengal have commented upon the work of Gangesh. Perhaps the foremost among all the commentaries ever written on Tattva Chintamani, is the *Didhiti* of Raghunatha Shiromani who is credited with the foundation of the Bengal or the Navadvipa School of Indian Logic. Raghunath had studied at the feet of such illustrious Gurus as Pakshadhar Mishra and Vasudeva Sarvabhauma. The latter was teaching at Puri when Chaitanya came from Navadvipa to Orissa in the beginning of the 16th century.

Raghunatha Shiromani had a long chain of direct and indirect disciples. More than a dozen scholars have written brilliant commentaries on the works of Raghunath, their *Adi Guru*. One of the most famous commentaries on the works and the ideas of Raghunath Shiromani is the one by Jagadish Tarkalankara who has exhibited his skill, scholarship and interest in explaining mainly the problems and subtle points connected with the testimony (Pramana)

of *Anumana*. However, as Jagadish was a very great and profound scholar of Nyaya, his explanations are not so easily intelligible to the young scholars of Nyaya. The Commentary is commonly known as *Jagadishi*.

In order to facilitate the understanding of the views of Jagadish Tarkalankara, Pandit Dharma Dutta (Bachcha) Jha of Mithila in the last part of the 19th century wrote down an exposition of certain selected topics previously explained by Jagadish. His exposition is known as *Gudhartha-tattvaloka*.

The present work tries to explain in simpler terms and expressions the difficult and less intelligible points in the *Gudhartha tattvaloka* of Dharma Dutta Jha. Though written in form of a *Bhasya* on the *Gudharthatattvaloka*, it is more or less an independent, scholarly work which sheds light on all the minute aspects of the Siddhanta Lakshana.

I am sure that with the publication of such a scholarly work written by a Pandit who has absorbed in himself the best of the Nyaya traditions both of the Mithila and the Bengal Schools, we are making an humble contribution towards the preservation and propagation of the ancient tradition of Nyaya in this part of the country. I congratulate Pandit Krishna Madhava Jha for producing such a scholarly work in the most mature years of his life and also for allowing us to publish it through this Vidyapeetha. I am also to thank Dr. Kishora Nath Jha, Reader in *Sarvadarshan* at this Vidyapeetha and the worthy son of the author of this work, who has taken the trouble of editing this work and of going through the proofsheets, a most tedious job for such a work indeed.

Ganganatha Jha Kendriya
Sanskrit Vidyapeetha,
ALLAHABAD
January 20th, 1983.

G. C. TRIPATHI
*Principal*

# यत्किंचित् प्रास्ताविकम्

भगवत्या जगदम्वायाः कृपया पितृचरणेन प्रणीतेयं **सिद्धान्तलक्षण-सुबोधनी** प्रकाशिताऽभवदिति मोमुद्यते चेतः ।

नव्यन्यायस्याध्ययनाध्यापनव्यसनिनः पूज्यवर्यस्य पितृचरणस्य स्वान्तःसुखाय वार्द्धक्ये कालयापनोपायात्मकोऽयमायासः सर्वथा स्पृहणीयोऽनुकरणीयश्च विदुषामिति मन्ये ।

अनुमितेरसाधारणं कारणं व्याप्तिज्ञानम् । तत्र का नाम व्याप्तिरिति जिज्ञासाया उपशमाय व्याप्तिस्वरूपं निरूपयितुकामो गङ्गेशोपाध्याय-स्तत्त्वचिन्तामणौ प्रथमतः व्याप्तिपञ्चकं सिंहव्याघ्रलक्षणं च प्रणीय पश्चात् तस्याः सिद्धान्तं लक्षणमकरोत् । तस्य चालोकदर्पणप्रभाद्यनेकासु व्याख्यासु कालजयिनी लोकविश्रुता च रघुनाथशिरोमणिरचिता दीधितिस्त-स्या अप्यनन्तासु टीकासु व्युत्पादिकाधिका जगदीशतर्कालङ्कारस्य विवृतिरिति सैवाधुना प्राचुर्येणाध्ययनाध्यापनयोः प्रसिद्धा । अस्या अपि वहुभि-र्विपश्चिदपश्चिमैः गोलोकनाथवलदेवकृद्धिनाथादिभिः कृतेषु परिष्कारेषु ख्रिष्टीयैकोनविंशतितमशतकस्योत्तरार्धे समुत्पन्नेन सर्वतन्त्रस्वतन्त्रेण पुण्य-श्लोकेन मैथिलविदुषा **धर्मदत्त(बच्चा)झा शर्मणा** कृतो गूढार्थतत्त्वा-लोकोऽनेकपरिष्कारसारसंग्रहस्वरूपः स्वतन्त्रचिन्तनपरोऽपि मितवचनात्मको विदुषां परीक्षास्थलमिव दुरूह आसीत् । अतएवैतदीयं व्याख्यान-मपेक्षितमासीत् ।

१९७७ तमे ख्रिष्टाब्दे विद्यापीठीयशोधपत्रिकायामस्या अंशतः प्रकाशनं तदानीन्तनेनेह कार्यकारिप्राचार्येण शास्त्रसंरक्षणसंवर्द्धनव्रतिना **डा०हरिहरझा महाशयेन** प्रारब्धम् । पश्चात् ग्रन्थगौरवेण लेखक-वैदुष्येण च प्रभावितः गुणैकपक्षपाती नितरामुदारचेताः शास्त्रेषु वैकटिके-क्षणसंपन्नः सहृदयोऽस्माकं कल्याणमित्रं **डा०गयाचरणत्रिपाठि** महाभागः विद्यापीठस्यास्य प्राचार्यः स्वतन्त्रग्रन्थतयास्य मुद्रापणाय व्यवस्थाम-करोत् ।

मुद्रणालयस्याव्यवस्थया ग्रन्थस्य दुरदृष्टेन चानावश्यकोऽत्र समजनि विलम्बस्त्रुटिश्च । त्रिषु मुद्रणालयेषु क्रमशोऽस्य ग्रन्थस्य मुद्रापणं सम्पन्नम् । अतएव षड्वर्षानन्तरमस्य ग्रन्थस्य प्रकाशितं स्वरूपं समक्षमागतं विदुषाम् । धन्यवादार्हश्चेह अरविन्दप्रिन्टर्स व्यवस्थापकः श्री **गोविन्दशरणदासमहोदयः** । यो हि धैर्येण यथासमयं मुद्रणमकरोत् । गुरुचरणाः प्रो० **श्री अनन्तलालठक्कुरमहाभागाः** मदीयां प्रार्थनां स्वीकृत्य स्वकीयेन वैदुष्यपूर्णेनोपोद्घातेन ग्रन्थमलमकुर्वन् । पितृचरणस्यातिवार्द्धक्येन मनसोऽसन्तुलनेन च मुद्रापणावसरे वैचारिकसाहाय्यलाभो नाभूदिति स्थले स्थले त्रुटिः संभवति । यद्यपि यथामति सावधानतया सम्पादनमाचरितं तथापि नव्यन्यायस्य परिष्कारेषु प्रवेशाभावेनात्मनोऽत्रापाटवं स्वीकरोमि । गुणगृह्या वचने विपश्चितः मामकीनां त्रुटिं क्षंस्यन्तीति मम विश्वासः ।

नव्यन्यायस्याधुनाध्ययनाध्यापनयोः संजाते लोपे ग्रन्थेषु यदि तदीयविचाराणां संरक्षणं स्यात् कदाचित् भविष्यति काले लाभो भवेत् इदानीमपि गवेषणपराः धिषणाजुषो लाभान्विता भवेयुरिति विचार्यैव प्रकाशकस्य सन्तोषः । ग्रन्थलेखकस्तु सर्वमेतद् जानन्नपि—

**"कालो ह्ययं निरवधिर्विपुला च पृथ्वीति"**

भवभूतिवाक्यं स्मारं स्मारं प्रवृत्तोऽभूत् ।

अन्ते चात्र सर्वविधसाहाय्यार्थं प्रस्तुतौ मित्रवर्यौ **डा० राघव प्रसाद चौधरी, डा० जगन्नाथ पाठक** महाशयौ प्रति कृतवेदितां निवेद्य गुरुचरणेभ्यः **प्रो० ठक्कुर** महाशयेभ्यः विद्वद्वरेण्येभ्यः, **डा० हरिहर झा** सदाशयेभ्यः **डा० गयाचरणत्रिपाठिमहाभागेभ्यश्च** प्रणामानर्पयामि विद्यावयोभ्यां सर्वथा कनीयान् । एतेभ्यः सर्वविधं सौविध्यमिहाहमवाप्नुवमिति । मम तु सौभाग्यं यत् पितृचरणेन प्रणीतस्य गुरुचरणस्योपोद्घातेन विभूषितस्य ग्रन्थस्य संपादनं नियोगस्थेन मयाचरितमिति ।

विजयादशमी
२७-१०-८२ ।

—विदुषां विधेयस्य
**किशोरनाथझा शर्मणः**

# उपोद्घातः

भारतीयवाङ्मये मिथिलाया अवदानं वहुविस्तृतं वैशिष्ट्यपूर्णं च। दर्शन-प्रस्थानेषु पुनर्मैथिलकृतयो विषयानन्यान् गुणबाहुल्येन संख्याधिक्येन चातिशेरते। सुवहोः कालादेव मैथिलेषु तत्त्वचिन्ता लब्धप्रसरा दृश्यते। शुक्लयजुर्वेदप्रस्थापको भगवान् वाजसनेयो याज्ञवल्क्यः प्रमुखः प्राचीनमैथिलदार्शनिकेष्वित्यत्र नातिकथनमपेक्षते। शुक्लयजुःसंहिताया अन्तिमोऽध्याय ईशावास्योपनिषदि व्याख्यायते, इतरा उपनिषदो ब्राह्मणभागसन्निविष्टत्वान्न मन्त्रोपनिषदः। बृहदारण्यकोपनिषद् व्याख्याभूता तस्या एव मन्त्रोपनिषद इति नातितिरोहितम्। ब्रह्मिष्ठतमस्य महर्षेर्याज्ञवल्क्यस्य संवादा बृहदारण्यकादिविधृता अर्वाचीनभारतीयदर्शनप्रस्थानानां वीजभूता इति निःसन्दिग्धमेव। महर्षिरयं जनुषा मैथिलो नवेत्यत्र विवादो वरीवर्ति। निवासस्तस्य मिथिलायाम्, आश्रयश्च जनको वैदेह इत्यत्र बृहदारण्यकोपनिषत् महाभारतादिकं च प्रमाणम्।

जनकं च राजर्षिं जना जनको जनक इति धावन्ति स्म ज्ञानाय च धनाय च, यस्मै याज्ञवल्क्यो ब्रह्मपारायणं जगौ, ऋषिश्च पंचशिखः सांख्ययोगविद्यां ददौ, सहस्रं च दिग्देशागतानां तत्त्वविदां यमाश्रयते स्म, यश्च प्रस्थापकोऽद्वैतब्रह्मवादस्य निष्कामकर्मवादस्य च परिस्तुतस्य भगवद्गीतासु तस्येयं गाथा भारतादिषु गीयते।

अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन।
मिथिलायां प्रदीप्तायां न मे दहति किंचन॥ इति।

जनकसभायां न केवलं याज्ञवल्क्यस्य, अपि त्वष्टावक्रस्य, सुलभाया गार्ग्याश्च ख्यातिप्राप्तिः स्मर्यते। वैयासकेः शुकस्य जनकोपासनं प्रथितं भारतसंहितायाम्। भारतीये धर्मव्याधकौशिकसंवादे मिथिलाभवस्येतरजनस्यापि तत्त्वचिन्तोत्कर्षो निदर्शितः।

दर्शनप्रस्थानेषु आन्वीक्षिकी मिथिलासमुद्भवेति दृढा प्रसिद्धिः। न्यायसूत्रकारोऽक्षपादो गौतमोऽभिन्नोऽहल्यापतेरिति स्कन्दपुराणम्। वादपरम्पराया निदर्शनं भूयसा मिथिलायां लब्धप्रसरमिति वादशास्त्रस्य निर्माणमपि तत्रैव शोभतेतराम्। गौतमकुण्डोऽहल्यास्थानं च मिथिलामण्डलस्थे तदेव मतं परिपुष्णीतः। वैशेषिकसूत्रकारस्य कणादर्षेः सांख्यसूत्रकारस्य कपिलस्य मिथिलासंबन्धो जनश्रुतिविधृतो वर्तते विदेहेषु।

उत्पत्तिर्यत्रकुत्रापि वा भवतु प्रचारस्तु समेषामास्तिकदर्शनानां मण्डनमुखेन नास्तिकदर्शनानां च खण्डनमुखेन विदेहेष्वेव सुस्पष्टं धारावाहिकं च दृश्यते।

शौद्धोदनेर्भगवतस्तथागतस्य तीर्थङ्करस्य महावीरस्य प्रादुर्भावो मिथिलासन्निहितयोः प्रदेशयोरभूत्। तयोर्मतं न मैथिलैरूरीकृतम्। अवान्तरबौद्धन्यायाचार्यैः साकं मैथिलनैयायिकानां सारस्वती स्पर्धा सुबहोः कालात् प्रवृत्ता आसीत्। तस्याः स्वरूपं बौद्धनिबन्धैः साकं न्यायग्रन्थानां तुलनामुखेन न चिरादेव प्रकाशं गतम्। वस्तुतस्तु बौद्धवैदिकन्यायप्रस्थानयोः पारस्परिकखण्डनमण्डनविधयैव प्राचीनन्यायस्योद्भवो विवृद्धिश्चाभूताम्। यवनाक्रमणतो बौद्धन्यायस्य देशादस्मात् समूलोत्पाटनेन समाप्तिरस्य संजातेति सुस्पष्टमेतत्। जैनाचार्यैः पुनरनेकान्तोपासकैर्मैथिलमतानि प्रतिबन्धकेऽसति स्वीकृतानि। उभयत्रैव सन्दर्भोद्धारादिभिः संरक्षितानि न्यायादिमतानि, येन विलुप्ताचार्याणां विलुप्तग्रन्थानां च परिचयो भूयसा लभ्यते।

न्यायशास्त्रे मीमांसाशास्त्रे च मैथिलकृतयो बाहुल्येन दृष्टिपथमापतन्ति। कुमारिलकृतिव्याख्यायां मैथिलानामाग्रहातिशयः। मैथिलप्रतिपक्षभूतैः शान्तरक्षितकमलशीलकर्णकगोमिरत्नकीर्तिप्रभृतिभिर्बृहट्टीकाश्लोकवार्त्तिकादिभ्यः कृतः श्लोकोद्धारश्च बाहुल्येन दृश्यते। प्राभाकरैर्भाट्टानां विवाद आदितो निरूढः। प्राभाकराश्च गौडेषु लब्धप्रसरा आसन्। मैथिलो मण्डनमिश्रस्तज्जन्मपूता माहिष्मती च मिथिलामण्डलप्रसिद्धा स्वीक्रियते। मण्डनधर्मपत्नी शोणभद्रतीरोद्भवेति मण्डनेन मिलितुकामो भगवान् शंकरः प्रयागादुत्तरस्यां दिशि प्रस्थितवानिति च तत्पोषके प्रमाणे। मण्डनोऽयं श्रीशंकरशिष्यात् सुरेश्वरादभिन्न इत्यत्र सुरेश्वरवार्त्तिके मण्डनमतखण्डनं बाधकम्।

मण्डनस्य शंकरमतवितृष्णा भर्तृहर्यनुसरणं चात्र विचारणीये । श्रीधराचार्यादिभिः प्राच्यैर्मण्डनसन्दर्भोद्धारः, वाचस्पतेर्मण्डनकृतविधिविवेकब्रह्मसिद्धिव्याख्यानम् , भामत्यां च मण्डनानुसरणं तदीयं प्राच्यत्वमेव पुष्णन्ति । मुरारिमिश्रो मीमांसाप्रस्थानान्तर-प्रस्थापको मिथिलाभव इति स्वीकृतमेतत् ।

वाचस्पतेर्मैथिलत्वे न कस्यापि विमतिः । तदीये काले मिथिला सर्वविद्यानिधान-मासीत् । स्वयं चासौ सर्वतन्त्रस्वतन्त्रः । गुरुरस्याचार्यस्त्रिलोचनो न्यायमंजरी न्याय-प्रकीर्णकं च निर्मितवान् । तन्मतानि ज्ञानश्रिया रत्नकीर्तिना दुर्वेकमिश्रेण अनि-रुद्धाचार्येण अन्यैश्च कैश्चित् परामृष्टानि । वाचस्पतेस्तात्पर्यटीकायां प्राचीनाचार्य-व्याख्यावैमुख्येन त्रिलोचनानुरक्तिरेव कारणमित्यनिरुद्धः । मीमांसायां विधिविवेक-व्याख्या न्यायकणिका, तत्वबिन्दुप्रकरणं च, वेदान्ते शारीरकभाष्यव्याख्या भामती ब्रह्मसिद्धिव्याख्या ब्रह्मतत्त्वसमीक्षा च, न्यायशास्त्रे न्यायवार्त्तिकोपरि तात्पर्यटीका न्यायसूचीनिबन्धश्च, सांख्ये ईश्वरकृष्णकारिकाव्याख्या तत्त्वकौमुदी, योगशास्त्रे च व्यासभाष्यव्याख्या तत्त्ववैशारदी वाचस्पतेरवदानानि । प्रायः सर्वेषु ग्रन्थेषु धर्मकीर्तिमतानि समालोचितानि वाचस्पतिना । स्वयं च समालोचितोऽसौ ज्ञानश्रिया रत्नकीर्त्तिना च विक्रमशिलाचार्याभ्याम् । देशतः कालतश्च वाचस्पतिसन्निहिता अन्ये बहवो न्याया-चार्या आसन् येष्वविद्धकर्णोऽध्ययनो भाविविक्तः शंकरो वित्तोको नरसिंहः शतानन्दश्च बौद्धाचार्यैर्नामग्राहं ससन्दर्भोद्धारं च परामृष्टाः । नूनं तेषु केचन मैथिलाः स्युः । सत्सु तत्कालिकेषु बहुषु नैयायिकेषु वाचस्पतिरेव कालजयी, अन्ये च विलुप्तिं गता इति तस्य लोकोत्तरत्वं समायाति ।

वाचस्पतितो नातिदूर एव श्लोकवार्त्तिककाशिकाकारः समुल्लिखितो रत्न-कीर्तिना । अनन्तरं च समायातस्तन्त्रवार्त्तिकव्याख्याता परितोषमिश्रः, न्यायरत्नमाला-तन्त्ररत्न-शास्त्रदीपिकान्यायरत्नाकरकारः पार्थसारथिमिश्रश्च । इतस्ततो न्यायग्रन्थेषु परत्र च मीमांसामहोदधिः मीमांसामहार्णवो माहाव्रती च परामर्शमायान्ति । तेषां मिथिलोद्भूतिः संभाव्यते । अर्वाचीने काले पुनः अधिकरणमालाकारो गोविन्दठक्कुरो-ऽधिकरणकौमुदीकारश्च देवनाथठक्कुरो मैथिलावास्ताम् ।

सत्यपि मीमांसादिशास्त्रचर्चाप्राचुर्ये वाचस्पत्युत्तरकाले मिथिलायां न्यायविद्यैव मुख्यत्वमाप। न्यायशास्त्रेतिहास एव मैथिलानां मुख्यो गौरवस्थानम्। न्यायस्य वादशास्त्रत्वं सुप्रसिद्धम्। पक्षप्रतिपक्षपरिग्रहस्तत्रानिवार्यः। आदित उदयनाचार्यकालपर्यन्तं बौद्धाचार्या एव नैयायिकानां प्रतिपक्षा आसन्। उभयोः पराक्रमश्च तत्तच्छास्त्रयोर्विवृद्धिहेतुः। वाचस्पतेः पुरतः प्रौढगौडनैयायिकः सानातनिरपि समुपस्थापितो मैथिलाचार्यैः। वाचस्पतिप्रतिपक्षाणां ज्ञानश्रीरत्नकीर्तिप्रभृतीनां बौद्धाचार्याणां समुल्लेखः कृत एव। न्यायसम्प्रदाये पुनस्तदनन्तरं श्रीवत्सानिरुद्धौ न्यायसम्प्रदायमलंचक्रतुः। आद्यस्तयोर्वाचस्पतिद्वेषीति परिशुद्धावुदयनेन तन्मतानि खण्डितानि। द्वितीयस्य विवरणमपि तत्र परामृष्टम्। साम्प्रतमेवानिरुद्धकृता विवरणपंजिका अंशतः प्राप्ता प्रकाशिता च। उदयनस्तु तात्पर्यटीकाव्याख्यातृषु प्रमुखः। प्राचीनन्यायप्रस्थानेऽयमन्तिम आचार्यः नवीनप्रस्थाने च प्रथमः। अयं पुनराद्यो मैथिलाचार्यो वैशेषिकप्रस्थाने शालिकनाथश्रीधराचार्ययोर्मतानि खण्डितवान्। वैशेषिकपदार्थलक्षणपरा लक्षणावली प्रशस्तपादीयपदार्थधर्मव्याख्याभूता किरणावली चोदयनकृते समुपलभ्येते। न्यायनये पुनर्न्यायकुसुमांजलिरात्मतत्त्वविवेकश्च प्रकरणे परमात्मजीवात्मप्रतिपादनपरे, तात्पर्यपरिशुद्धिर्वाचस्पतितात्पर्यटीकाव्याख्यारूपा, लक्षणमाला च न्यायपदार्थलक्षणात्मिका तरीयाः कृतयः। आत्मतत्त्वविवेकस्य बौद्धाधिकारो वा बौद्धधिक्कारो वेति नामान्तरम्। अत्राधिकृतो मुख्यो बौद्धाचार्यः प्राक्परामृष्टो ज्ञानश्रीमित्रः। कल्याणरक्षितनाम्ना बौद्धाचार्येण तस्य संबन्धस्तु कल्पित एव। वस्तुतस्तु कल्याणरक्षितनामा आचार्य एव नासीत्। शुभगुप्ताख्यस्य बौद्धाचार्यस्य मतानि कमलशीलेन समुद्धृतानि, भोटभाषायां तदीया ग्रन्थाश्चानूदिता विद्यन्ते। अस्य शुभगुप्तस्यैव भ्रामकं नामान्तरं कल्याणरक्षित इति। न च शुभगुप्तेनापि न्यायाचार्यस्योदयनस्य कश्चन सम्बन्धः। ज्ञानश्रिया रत्नकीर्तिना च तस्य सुगभीरः संबन्धोऽस्माभिरन्यत्र सप्रमाणमुपन्यस्तः।

न्यायनये उदयनस्य मतानि न परामृष्टानि बौद्धैः। वस्तुतस्तु यावनविप्लवेन विनष्टे बौद्धसम्प्रदाये न तस्य सदृशः प्रतिपक्षो जनिं लेभे। प्रकृष्टप्रतिपक्षविरहात् न्यशास्त्रेऽपि वैकल्यं संजातम्।

श्रीहर्षेण खण्डनखण्डखाद्ये उदयनकृतानि न्यायपदार्थलक्षणानि समालोचितानि। कालान्तरे वर्धमानोपाध्यायेन द्वितीयवाचस्पतिना शंकरमिश्रेण च न्यायदृष्टचा खण्डनोद्धारो विहितः। तथैव प्रत्यक्तत्त्वप्रदीपिकायां चित्सुखमुनिना वैशेषिकपदार्थानां समालोचनं कृतम्। एतावता अवसिते आक्षपादैस्सह बौद्धानां विरोधे वैदान्तिकानां न्यायप्रतिपक्षत्वं समायाति। परं तेषां नैयायिकैः समबलत्वाभावे नायं विवादः कल्याणोदर्कः कस्यचिदभूत्।

उदयनकालादेव न्यायवैशेषिकशास्त्रयोः संजातो घनिष्ठतरः संबन्धः। समान तन्त्रयोरेकत्वे पर्यवसानं नव्यग्रन्थेषु दृश्यतेतराम्। शिवादित्यमिश्रकृता सप्तपदार्थी श्रीवल्लभकृता न्यायलीलावती. शशधराचार्यकृतो न्यायसिद्धान्तदीपः मणिकण्ठमिश्रकृतं न्यायरत्नं च उदयनोत्तरा आकरग्रन्था न्यायवैशेषिकतन्त्रे। तरणिमिश्रकृतो रत्नकोषो बहुपरामृष्टं न्यायसूत्रव्याख्यानम्, न चेदं पूर्णतया लभ्यते। संदर्भाश्च रत्नकोषस्थाः मणिकण्ठगङ्गेशवर्धमाननव्यवाचस्पतिशंकरमिश्रवंशधरोपाध्यायादिभिः समुद्धृताः परामृष्टाश्च।

नव्यन्यायप्रस्थाने गङ्गेशोपाध्यायकृतस्तत्त्वचिन्तामणिर्न्यायप्रकरणं प्रमाणचतुष्टयपर्यालोचनपरम्। गुणगौरवेण चायं सर्वान् नव्यग्रन्थानतिशेते। अत्र प्रतिपक्षतया भूयसा प्राभाकरमतं समागच्छति। स्वल्पपरिज्ञाता अपरिज्ञाताश्च मैथिलन्यायाचार्या नारायणसर्वज्ञो रवीश्वरः कुसुमांजलिपरिमलकृद् दिवाकरोपाध्यायः, न्यायनिबन्धव्याख्याता प्रभाकरोपाध्यायः सोन्दरोपाध्यायो न्यायभास्करकारो हरिनाथोपाध्यायश्च गङ्गेशेन तत्त्वचिन्तामणौ परामृष्टा इति तट्टीकावलीपर्यालोचनया ज्ञायते। चिन्तामणिव्याख्यासंख्यानं सुदुष्करम्। मैथिलेषु गौडीयेषु दाक्षिणात्येषु चास्य समादरातिरेकः सुदीर्घकालादेव प्रसृतः।

गङ्गेशप्रतिपक्षो न्यायदर्पणकारो वटेश्वरोपाध्यायो मैथिलेषु नव्यन्यायसम्प्रदायान्तरं स्थापितवान्, यत्र चिन्तामणिप्रभानिर्माता यज्ञपत्युपाध्यायः संजातः। पक्षधरोपाध्यायेन यज्ञपतिमतानि स्वीये तत्त्वचिन्तामण्यालोके दूषितानि। यज्ञपतिसूनुः पक्षधरशिष्यो नरहरिः स्वपितृदूषणोद्धारं विदधे।

गङ्गेशतनयो वर्धमानोपाध्यायः स्वपितृमतमुररीकृत्य अन्वीक्षानयतत्त्वबोधाख्यां, न्यायसूत्रव्याख्यां, परिशुद्धिप्रकाशं न्यायपरिशिष्टप्रकाशं किरणावलीप्रकाश कुसुमांजलिप्रकाशं किरणावलीप्रकाशं लीलावतीप्रकाशं खण्डनप्रकाशं, खण्डनोद्धारं बौद्धाधिकारप्रकाशं तर्कभाषाप्रकाशं च विहितवान् । नव्यदृष्टया प्राचीनग्रन्थव्याख्यातृषु वर्धमानः प्राधान्यं भजते । वर्तते च तद्व्याख्यानुव्याख्यानपरम्परा ।

यज्ञपतिसमकालिकौ नव्यवाचस्पतिः शंकरमिश्रश्च । वाचस्पतेः न्यायशास्त्रे दश निबन्धाः श्रूयन्ते । तेषु न्यायतत्त्वलोकाख्या न्यायसूत्रवृत्तिः न्यायरत्नप्रकाशः तत्त्वचिन्तामणिप्रकाशः खण्डनोद्धारश्च प्रसिद्धाः । शंकरकृतन्यायवैशेषिककृतिषु चिन्तामणिमयूखः, त्रिसूत्रीनिबन्धव्याख्या, भेदप्रकाशः, खण्डनटीका, कणादरहस्यम्, वादिविनोदो वैशेषिकसूत्रोपस्कारश्च परिज्ञातानि ।

वाचस्पतिशंकरयोरवर आसीत् पक्षधरो जयदेवः । तस्य तत्त्वचिन्तामण्यालोको मैथिलचिन्तामणिव्याख्याग्रन्थेषु प्रमुखः । पक्षधरशिष्येषु रुचिदत्तोपाध्यायो नरहरिः माधवः वासुदेवोपाध्यायः भगीरथठक्कुरश्च प्रसिद्धाः । गौडीयो रघुनाथशिरोमणिरपि तस्य शिष्येषु परिगण्यते । गोकुलनाथोपाध्यायो बहुग्रन्थनिर्माता मैथिलन्यायमतपरिपोषकः समालोचकश्च गौड़ीयमतानाम् । तस्मिन्नेव गौडमैथिलसारस्वतप्रतिस्पर्धिता समाप्तिं गता ।

रघुनाथेन पक्षधरपक्षः खण्डितः । मधुसूदननरहरिप्रभृतिभिश्च शिरोमणिमतं खण्डितम् । मधुसूदनेनालोककण्टकोद्धारो विहितः । महेशठक्कुरेण चालोकोपरि दर्पणो निर्मितः । रुचिदत्तेन तत्त्वचिन्तामणिप्रकाशः, कुसुमांजलिप्रकाशमकरन्दः, द्रव्यप्रकाशमकरन्दः, द्रव्यप्रकाशविवृतिः लीलावतीविलासश्च निर्मिताः । रुचिदत्तग्रन्थानां दाक्षिणात्येष्वेव बहुलः प्रचारः, न तथा गौडेषु मैथिलेषु वा । धर्मराजाध्वरीन्द्रेण, तत्सूनुना रामकृष्णेन, वैद्यनाथदीक्षितेन, तार्क्ष्यनारायणेन च रुचिदत्तव्याख्यापरिष्कारो विहितः ।

बंगेषु नव्यन्यायस्य प्रचलनं कदाभूदिति न परिज्ञायते । वेदान्तविद्यामयो नरहरिविशारदस्तत्रत्यः प्रथमो मणिटीकाकार इत्यनुमीयते । विशारदसूनुर्वासुदेवसार्व-

भौमस्तु गौड़ीयनव्यन्यायसम्प्रदायप्रवर्तकत्वेन गणनीयः । तस्यानुमानमणिपरीक्षा समुपलभ्यते । वंगेषु उत्कलेषु प्रतीच्येषु च सार्वभौमस्य पाण्डित्यख्यातिर्वरीवर्त्ति । तत्सूनुश्च जलेश्वरवाहिनीपति भट्टाचार्यश्चिन्तामण्यालोकोद्योतं विहितवान् । जलेश्वर सुतः स्वप्नेश्वरोऽपि न्यायतत्त्वनिकषं निर्मितवानिति परिज्ञायते । सार्वभौमभ्रातृजः काशीनाथविद्यानिवासस्तत्त्वचिन्तामणिविवेचनकारोऽसमां प्रतिपत्तिमवाप । प्रगल्भाचार्यकृता चिन्तामणिटीका मातृकागता समुपलभ्यते प्रगल्भपौत्रेण पद्मनाभमिश्रेणापि चिन्तामणिपरीक्षा विहिता ।

सार्वभौमशिष्यो रघुनाथशिरोमणिर्नवद्वीपीयनव्यन्यायसम्प्रदायकर्तृत्वेन स्वीक्रियते । तस्य कृतिषु तत्त्वचिन्तामणिदीधितिः, आख्यातवादः, नञ्वादः, पदार्थखण्डनम्, किरणावलीप्रकाशदीधितिः, आत्मतत्त्वप्रकाशदीधितिः, न्यायलीलावतीप्रकाशदीधितिश्च प्रसिद्धानि । चिन्तामणिदीधितौ पक्षधरमतानां केषांचन समालोचने सत्यपि गौडेषु पक्षधरग्रन्थानां समादरातिशयो दीधितिसम्प्रदायेऽपि चिन्तामण्यालोकव्याख्याबाहुल्यदर्शनादनुमातुं शक्यते ।

हरिदासन्यायालंकारः, कृष्णदाससार्वभौमः, रामभद्रसार्वभौमः, श्रीरामतर्कालंकारः भवानन्दसिद्धान्तवागीशः गुणानन्दविद्यावागीशः, रुद्रन्यायवागीशः, रामकृष्णभट्टाचार्यः, जयरामन्यायपञ्चाननः, मथुरानाथतर्कवागीशः, जगदीशतर्कालंकारः, गदाधरभट्टाचार्यश्च रघुनाथग्रन्थानामुपव्याख्यानानि निर्मितवन्तः । तेषु कानिचन सम्प्रदायप्रच्युतानि मातृकापिहितानि च सन्ति । गदाधरकृता चिन्तामणिदीधितिटीका सुविशाला दाक्षिणात्येषु गौडेषु च प्रतिष्ठिता । जगदीशकृता दीधितिटीका सारग्राहिणी संक्षिप्ततरा च । एतस्याः समादरः सार्वत्रिकः ।

टीकोपटीकाकारैर्न सर्वत्र भागचतुष्टयात्मकस्तत्त्वचिन्तामणिग्रन्थो व्याख्यातः, आधिक्येनानुमानखण्डस्य शब्दखण्डस्य व्याख्योपव्याख्याः समुपलभ्यन्ते । उपमानखण्डस्य तु स्वल्पे व्याख्याग्रन्थाः सन्ति । कालक्रमेण चिन्तामणिपंक्तिव्याख्यैव बाहुल्येनाभूत् । अधुना किमपि प्रसिद्धं व्याख्यानमालम्ब्य मूलग्रन्थस्य सन्दर्भविशेषपरिष्करणे एव दृश्यते नैयायिकानां प्रवृत्तिः । अत्र मैथिलपण्डितधुरन्धरस्य सर्वतन्त्रस्वतन्त्रस्य बच्चा

झा॰ नाम्नो, धर्मदत्तोपाध्यायस्य (१८६०—१९१८ ई०) नामधेयं विशिष्य समुल्लेखमर्हति। जगदीशतर्कालंकारव्याख्यातं व्याप्तिपंचकं सिद्धान्तलक्षणमवच्छेदकत्वनिरुक्ति. व्याप्त्यनुगमं पक्षतां, अवयवं, सव्यभिचारं सत्प्रतिपक्षं चालम्व्यानेन गूढार्थतत्त्वालोको विलिखितः। गदाधरकृतिषु सामान्यनिरुक्तिः, व्युत्पत्तिवादः शक्तिवादश्चानेन गूढार्थतत्त्वालोकेनालोकिताः। आनन्दपूर्णकृतौ ईश्वरानुमानपंक्तिविशेषघटिता तदीया व्याख्यापि प्रकाशं नीता।

प्रस्तुते सिद्धान्तलक्षणजागदीशीतत्त्वालोकव्याख्याग्रन्थे सुप्रसिद्धेन मैथिलश्रोत्रियवंशावतंसेन शास्त्रैकशरणेन महापण्डितेन श्रीमता कृष्णमाधवोपाध्यायेन [१८९८ ई० समुत्पन्नेन] महता परिश्रमेण आबाल्यं गौडमैथिलनव्यन्यायग्रन्थचर्चाफलमुपनिबद्धम्। नव्यन्यायरहस्यग्रहणेऽद्यत्वे वैमुख्यं बाहुल्येन वरीवर्तीति परिज्ञायापि ग्रन्थकारेणात्र क्लेशविशेषः स्वीकृत इति न्यायविदां परं प्रमोदस्थानम्। धन्यवादैश्चाभ्यर्हणीयौ लेखकप्रकाशकाविति।

विजयादशमी
१३८९ बंगाब्दीया

श्रीमतोऽनन्तलालदेवशर्मठक्कुरस्य
वर्धमानविश्वविद्यालयस्थस्य

# विषय-सूची

| विषयः | | पृष्ठसंख्या |
|---|---|---|

# सिद्धान्तलक्षणजागदीशीतत्त्वालोकव्याख्या

पण्डित श्री कृष्णमाधव झा

## अथ साध्यानुयोगिकभेदकल्पः ।

नीले पादसरोजं ते, कामकोटिफलप्रदम् ।
कुरु गूढार्थसारल्यं स्यामहं सफलः सुखी ॥१॥
राधाबिम्बसमायुक्तः, प्रतिबिम्बोऽपि तादृशः ।
स मे कृष्णः सदा पातु द्रौपदीत्राणकारकः ॥२॥
आलोके निहितार्थोऽपि सम्यङ् नैव प्रकाशते ।
तदर्थं कृतयत्नोऽहं नीलाधीनं फलं भवेत् ॥३॥
बिठ्ठोग्रामनिवासोऽयं गोवर्द्धनसुतः सुधीः ।
करोति सरलां व्याख्यां तत्त्वालोकप्रकाशिनीम् ॥४॥

नन्वित्यादि शङ्कायां सिद्धान्तमाह—"अत्रोच्यते" इति । मयेत्यध्याहार्यम् । अस्मत्पदार्थो मणिकारः गङ्गेशोपाध्यायः । तस्य समवेतत्वसंबन्धेन तृतीयार्थकृतावन्वयः, तस्याश्च जन्यतासंबन्धेन धात्वर्थव्यापारेऽन्वयः, धात्वर्थश्च ज्ञानानुकूलो व्यापारः, तस्य निरूपितत्वसंबन्धेन कर्माख्यातविषयतायामन्वयः, तस्याः स्वरूपसंबन्धेन प्रथमान्तपदार्थव्याप्तावन्वयः । तथा च मणिकारसमवेतकृतिजन्यज्ञानानुकूलव्यापारनिरूपितविषयतावती जिज्ञासाविषयीभूता प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामानाधिकरण्याभिन्ना व्याप्तिरिति चिन्तामणिवाक्यार्थः ।

अथवा मूले नन्वित्यादि शङ्कासिद्धान्तमाह—"अत्रोच्यते" इत्यादि । जिज्ञासाविषयीभूता पूर्वपक्षसमाप्त्यनन्तरं वा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नभिन्नसाध्यसामाधिकरण्याभिन्ना व्याप्तिः प्रतिपत्त्यनुकूलव्यापारविषयं इत्यर्थः ।

अथ संबन्धप्रतियोग्यनुयोगिपदार्थयोरव्यवधानेनोपस्थितिरूपाया आसत्तेः, अव्यवहितोत्तरत्वपूर्वत्वान्यतरसंबन्धेनैकपदसाकाङ्क्षपदविशिष्टापरपदज्ञानरूपाकाङ्क्षाज्ञानस्य वा अभावेन कथमत्र साध्ये तादृशप्रतियोगितावच्छेदकावच्छिन्नभेदप्रतीतिः ? न च मा प्रतीयतां को दोषः, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नवृत्तिभेदप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थे क्षत्यभावादिति वाच्यम् । वह्नित्वावच्छिन्नेत्याद्यग्रिमाव्याप्तिपरग्रन्थे साध्ये एव भेदविरोधिप्रतियोगितावच्छेदकीभूततादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वप्रदर्शनेन साध्यानुयोगिकतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यैव लक्षणघटकताप्रतीतेः । ननु ग्रन्थविरोधेन शाब्दासत्त्याकाङ्क्षाज्ञानयोः कार्यकारणभावस्य सङ्कोचोऽनावश्यक इति चेन्न धूमवान् वह्नेरित्यत्रातिव्याप्तेः । तादृशाभावप्रतियोगिघटे साध्यतावच्छेदकधूमत्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेन तत्सामानाधिकरण्यस्य वह्नौ सत्त्वात् । न चावच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकभेदप्रतियोगिसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वमिति प्रकृते नोक्तदोषः । भेदस्य स्वप्रतियोगितावच्छेदकेन सह विरोधेन तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नं धूमे धूमत्वावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदासत्त्वादिति वाच्यम् । तादृशाभावप्रतियोगिनि धूमे धूमघटोभयभेदस्य सत्त्वेन तत्रातिव्याप्तेस्तादवस्थ्यात् । न च तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकभेदप्रतियोगितावच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः, किं वा तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकः साध्यतावच्छेदकेतरधर्मानवच्छिन्नप्रतियोगिताकभेदः तत्प्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति कथनेन उभयभेदमादाय नोक्तदोषः । धूमघटोभयभेदप्रतियोगितावच्छेदकत्वस्य धूमत्वघटत्वोभयत्वैतत्त्रितयपर्याप्तत्वेन धूमत्वमात्रापर्याप्तत्वात् । तादृशभेदीयप्रतियोगितायां साध्यतावच्छेदकेतरघटत्वाद्यवच्छिन्नत्वस्य सत्त्वेन साध्यतावच्छेदकेतरानवच्छिन्नत्वस्य तत्रासत्त्वात् तन्निरूपकाभावस्य लक्षणाघटकत्वेन नोभयभेदमादायातिव्याप्तिरिति वाच्यम् । एवं सति प्रमेयवान् धूमादित्यत्राव्याप्तेः ।

प्रमेयत्वस्य भेदप्रतियोगितानवच्छेदकत्वेन प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्ने साध्यतावच्छेदकप्रमेयत्वावच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धेः । उभयभेदस्य व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन उभयघटकप्रत्येक सत्वात् । तस्य केवलान्वयित्वेन वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तेश्च । अयं न द्वौ इति प्रतीत्या व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकप्रत्येकवृत्तिधर्मावच्छिन्नानुयोगिताकभेदस्य प्रामाणिकत्वात् । न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकोभयावृत्तिधर्ममात्रावच्छिन्नप्रतियोगिताकभेदप्रतियोगितावच्छेदकसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति कथने प्रमेयवान् धूमादित्यत्र तादृशप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकोभयावृत्तिधर्ममात्रावच्छिन्नतत्प्रमेयाभावप्रतियोगितावच्छेदकसमानाधिकरणप्रमेयत्वावच्छिन्नसामानाधिकरण्यस्य धूमे सत्वेन नोक्तदोषः । एवं वह्निधूमोभयवान् वह्नेरित्यत्र नातिव्याप्तिः, उभयावृत्तिधर्ममात्रावच्छिन्नप्रतियोगिताकस्य तत्तद्धूमत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नत्वाव्यापकत्वेन तद्धूमभेदस्य न लक्षणघटकत्वम्, तादृशान्यभेदप्रतियोगितावच्छेदकसामानाधिकरण्यस्य साध्यतावच्छेदकेऽसत्वादितिवाच्यम् । एवं सति तादात्म्येन प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तेः । उभयावृत्तिधर्ममात्रावच्छिन्नप्रतियोगिताकभेदस्य हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभाव प्रतियोगितावच्छेदकावच्छिन्नत्वाव्यापकत्वेन तस्य लक्षणाघटकतया तादृशभेदाप्रसिद्धेः । चालिनीन्यायेन सर्वासां तत्तद्व्यक्तीनां, तादृशस्य भेदस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नत्ववति स्वस्मिन् स्वभेदासत्वेन, तदव्यापकत्वात् ।

अत एव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वव्यापकप्रतियोग्यवृत्तिभेदप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरिति निरस्तम् । तादात्म्येन प्रमेयवान् वाच्यत्वादित्यत्र तादात्म्यसंबन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्याऽव्याप्त्यापत्तेः । न च व्युत्पत्तिवैचित्र्येण प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छेदेन साध्यतावच्छेद-

कत्वावच्छिन्नप्रतियोगिताकभेदः तादृशभेदीयप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति कथने तादात्म्येन प्रमेयवान् वाच्यत्वादित्यत्र नाव्याप्तिः, साध्यतावच्छेदकताभेदस्य तादृशप्रतियोगितावच्छेदकत्वव्यापकत्व.दिति वाच्यम् । तथा सति प्रमेयवत्त्वान् तद्व्यक्तित्वादित्यत्राव्याप्तेः, तादृशप्रतियोगितावच्छेदके घटत्वे साध्यतावच्छेदकप्रमेयभेदस्यासत्त्वात्, घटत्वस्य प्रमेयत्वात् । न च तादृशाभावप्रतियोगितानिरूपितावच्छेदकतात्वावच्छेदेन साध्यतावच्छेदकताविशिष्टान्यत्वविवक्षणेनादोषः । वै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्वैतच्चतुष्टयसंबन्धेन । वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन । तथा च यादृशसाध्यतावच्छेदकताविशिष्टान्या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकता तादृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । प्रमेयनिष्ठसाध्यतावच्छेदकताविशिष्टान्यत्वस्य प्रतियोगितावच्छेदकतायां सत्त्वेन तादृशसाध्यतावच्छेदकप्रमेयावच्छिन्नसामानाधिकरण्यस्य हेतौ सत्त्वादिति वाच्यम् । एवं सति महद्गौरवात्, नञ्व्यत्यासकल्पनापेक्षया गौरवादिति चेत् शृणु । प्रकृते विवक्षितलघुलक्षणज्ञानाय तादृश.भावप्रतियोगितावच्छेदकावच्छिन्नपद, नञ्पदार्थयोरव्यवधानेनोपस्थितिकल्पनायाः, तादृशशब्दयोश्चाव्यवधानेन अन्वयानुसन्धानकल्पनायाश्च युक्तत्वम् । नायं सुधांशुरित्यादौ तथादर्शनेन अत्र तथाकल्पनाया नायुक्तत्वम् । व्याप्तिलघुलक्षणस्यैव नियामकत्वात् । किं वा व्याप्तिलक्षणस्य निर्दुष्टत्वाच्च । तथा च साध्ये तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्येष्टस्य लक्षणघटकत्वोपपत्तिः । एवञ्च यत्पदघटितवाक्ये नञ्समभिव्याहारे यत्पदार्थस्य विशेष्ययोग्यत्वं स एव नञ्समभिव्याहारे विशेष्यः । प्रतियोग्यभावान्वयस्य तुल्ययोगक्षेमत्वात् ।

अथ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकभेदवत्साध्यसामानाधिकरण्यं व्याप्तिरित्यस्य धूमवान् वह्नेरित्यत्रातिव्याप्तिः । तादृशप्रतियोगिघटभेदस्य साध्ये धूमे सत्त्वात् । न च तादृशाभावप्रतियोगितावच्छेदकपर्याप्तावच्छेदकताकप्रतियोगिताकसामान्यभेदवत्साध्यसामानाधिकरण्यं व्याप्तिरिति कथने नोक्तदोषः, तादृशाभावप्रतियोगिधूमसामान्यभेदस्य साध्ये

धूमेऽसत्त्वादिति वाच्यम्। एवं सति हेत्वधिकरणे यावान्नास्तीत्यभावप्रतियोगिता-वच्छेदकयावत्त्वावच्छिन्नस्वस्य साध्यमात्रे सत्त्वेनासंभवापत्तेः। न चास्तु तादृशाभाव-प्रतियोगिनि साध्यभेदो यथाश्रुत इति वाच्यम्। नानाव्यक्तिसाध्यकस्थलाव्याप्ति प्रदर्शकवह्नित्वावच्छिन्नस्येत्यादि ग्रन्थविरोधापत्तेः। अनेन ग्रन्थेन साध्ये एव तादृशाभावप्रतियोगिकभेदस्य लाभात्।

यत्तु प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीति ग्रन्थेन हेतुसमानाधिकरणाभाववृत्त्युभयावृत्तितत्तदभावत्वधर्मनिष्ठा-च्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताभावनिष्ठावच्छेद-कताभिन्नावच्छेदकत्वानिरूपितप्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता--वच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्मनिष्ठावच्छेदकताभिन्नावच्छेद-कत्वानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदत्वा वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटवत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणे (तादृशाभावप्रतियोगितावच्छेदकतावद्धर्मावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदत्वावच्छि-न्नानुयोगिताकपर्याप्तिप्रतियोगिकूटवत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणे) समवायेन प्रमेयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकप्रमेयत्वावच्छिन्नप्रतियोगिता-कभेदस्याप्रसिद्धत्वेऽपि हेतुसमानाधिकरणतादृशघटपटादितत्तत्प्रमेयाभावप्रतियोगिता-वच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदकूटस्य साध्ये विरहान्नातिव्याप्तिः। वह्निमान् धूमादित्यत्र तादृशभेदकूटस्य वह्नौ सत्त्वेन नासंभव इति। तन्न साध्यानु-योगिकभेदीय प्रतियोगितावच्छेदकतायाम् इतरवारकपर्याप्तिनिवेशेऽपि समवायेन प्रमेयवान् वाच्यत्वादित्यत्र अतिव्याप्तेस्तादवस्थ्यात्। यथाश्रुते प्रतियोगिव्यधिकरणस्यापि यथाश्रुतस्यैव (अपारिभाषिकस्यैव) साध्यतावच्छेदकसंबन्धेन प्रतियोग्यधिकरणा-वृत्तित्वस्य प्रवेशेन समवायेन असमवेत प्रमेयस्याधिकरणाप्रसिद्धया हेत्वधिकरणे प्रतियोगि-व्यधिकरणत्वेन तदभावस्य गगनादेः अत्र धर्तुमशक्यतया तादृशाभावप्रतियोगि-समवेतप्रमेयप्रतियोगिकभेदकूटस्य असमवेतप्रमेये सत्त्वेन तद्वत्साध्यसंबन्धित्वस्य व्यभिचारिणि वाच्यत्वे सत्त्वात्। धनी चैत्रत्वादित्यत्राव्याप्तिवारणाय तादृशसंबन्धि-त्वस्यैव विवक्षणीयत्वात्।

प्रमेयत्वावच्छिन्नाप्रतियोगिकत्वे सति घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्ति-वाच्यत्ववत्त्वसमवायान्यतरसंबन्धेन प्रमेयवान् वाच्यत्वादित्यत्रातिव्याप्तेश्च। स्व-(अभाव) प्रतियोगितावच्छेदकावच्छिन्नाधिकरणभेदकूटवदधिकरणकाभावस्यैव-प्रतियोगिव्यधिकरणत्वेन तदीयप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताक भेदानुयोगिकपर्याप्तिप्रतियोगिकूटवत्त्वस्य साध्ये सत्त्वेन तादृशसाध्यसामानाधिकरण्यस्य हेतौ सत्त्वात्।

एवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदका-वच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदानुयोगिताकपर्याप्तिप्रतियोगिकूटवत्साध्यसामाना-धिकरण्यं व्याप्तिः।

अथवा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदका-वच्छिन्नत्वसामानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगि-ताकपर्याप्तिप्रतियोगिकूटवत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणेना-तिव्याप्तिविरहेऽपि सर्वेषां साध्यानां हेतुसमानाधिकरणप्रतियोगिव्यधिकरण-यावान्नास्तीत्यभावीयप्रतियोगितावच्छेदकयावत्त्वावच्छिन्नत्वेन तादृशकूटस्य साध्येऽसत्त्वेन असंभवापत्तेः।

अत एव प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्व-व्यापककूटत्वावच्छिन्नवत्साध्यसामानाधिकरण्यं व्याप्तिः। व्यापकता च स्वाश्रयभेद-प्रतियोगितावच्छेदकत्वसामानाधिकरण्येनेत्यपि निरस्तम्। सर्वेषां साध्यानां यावान्नास्तीत्याकारकतादृशाभावप्रतियोगित्वेन तादृशभेदकूटस्य साध्येऽसत्त्वेन असंभव इति। प्रमेयत्वावच्छिन्नाप्रतियोगिकत्वे सति घटत्वावच्छिन्नाप्रतियोगिक स्ववृत्तिवाच्यत्ववत्त्वसवमायान्यतरसंवन्धेन प्रमेयवान् वाच्यत्वादित्यत्रातियाव्प्तेस्ताद-वस्थ्यात्। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियगितावच्छेदकतत्तद्-घटत्वनिष्ठावच्छेदकताव्यापकत्वस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-ताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वे स्वाश्रयभेदप्रतियोगिता वच्छेदक-त्वसामानाधिकरण्यसंबन्धेन सत्त्वात्। व्याप्यतावच्छेदकसंबन्धस्तादात्म्यरूपः। यद्

स्वरूपसंबन्धो व्याप्यतावच्छेदको भवेत् तदा स्वाश्रयभेदप्रतियोगितावच्छेदकत्वसंबन्धो व्यापकतावच्छेदको बोध्यः ।

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्मव्यापकतायाः स्वाश्रयाश्रयभेदप्रतियोगितावच्छेदकत्वसामानाधिकरण्यसंबन्धेन कूटत्वे निवेशे च साध्यस्य हेत्वधिकरणे साध्यघटोभयाभावस्य यावान्नास्तीत्यभावस्य वा प्रतियोगित्वेन तत्तदभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदकूटस्य तादृशस्य तत्र ( साध्ये ) असत्त्वेन असंभवस्तदवस्थ इति चेन्न । साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्ना या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकसामान्यभेदवत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणेनादोषात् । साध्यघटोभयाभावस्य यावान्नास्तीत्यभावस्य च साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वेन लक्षणाघटकत्वात् ।

स्ववृत्तिभेदीयतद्घटत्वावच्छिन्नप्रतियोगितासंबन्धेन तद्घटः पटवान् तद्घटत्वादित्यादौ हेतुसमानाधिकरणस्य घटपटोभयाभावस्य यावान्नास्तीत्यभावस्य च या प्रतियोगिता तदवच्छेदकावच्छिन्नप्रतियोगिताकस्य घटपटोभयभेदस्य यावद्भेदस्य च साध्ये सत्त्वेन लक्षणसमन्वय इति ।

साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य हेतुसमानाधिकरण प्रतियोगिव्यधिकरणाभावीयप्रतियोगितायां निवेशेन तयोरभावयोर्लक्षणाघटकत्वात् न तदभावावादायासंभवासंभवाच्च । बह्निधूमोभयवान् बह्ने रित्यादौ अतिव्याप्तिवारणाय व्यासज्यवृत्तिधर्मे साध्यतावच्छेदकातिरिक्तत्वनिवेशः । इति साध्यानुयोगिकभेदकल्पः ।

### अथ बह्नित्वावच्छिन्नत्वस्येति ।

अत्र बह्नित्वावच्छिन्नस्येत्युक्तिः सार्वभौमव्याख्यां दूषयितुम् । तथाहि बह्निमान् धूमादित्यादिनानाव्यक्तिसाध्यकसद्धेतौ चालिनीन्यायेन तत्तत्साध्याभावप्रतियोगित्वस्य साध्ये सत्त्वेनाव्याप्तिः । तद्वारणाय लक्षणघटकं यत्पदं लुप्तसप्तमी-

कम् । अवच्छिन्नपदं च अवच्छेदकतानिरूपितार्थकम् (प्रतियोगित्वम्) स्वीकृत्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगित्वा-त्यन्ताभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्रैव तात्पर्यम् । प्रतियोगिताया अव्याप्यवृत्तित्वेन तद्व्यक्तित्वावच्छेदेन वर्तमानायाः साध्यनिष्ठायाः प्रतियोगितायाः वह्नित्वादिसाध्यतावच्छेदकावच्छेदेनाभावात् वह्निमान् धूमादि-त्याद्यनेकव्यक्तिसाध्यके नाव्याप्तिः । न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणा-भावप्रतियोगितासामान्यशून्यसाध्यसामानाधिकरण्यं व्याप्तिरित्येवास्तु व्याप्तिलक्षणं किमिति शिरोवेष्टनेन नासिकास्पर्शानुधावनमिति वाच्यम् । (तादृशाभावप्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिताकभेदवत्साध्यसामानाधिकरण्यं व्याप्तिरिति कथनं व्यर्थमिति यावत्) । तत्संबन्धावच्छिन्नप्रतियोगिता तत्संबन्धप्रतियोगिन्येव वर्तते इति पक्षे समवायेन द्रव्यवान् प्रमेयत्वादित्यादावतिव्याप्तेः । समवायसंबन्धावच्छिन्न द्रव्यत्वावच्छिन्नप्रतियोगितायाः समवेतद्रव्यनिष्ठायाः तादृश्या असमवेतगगनादावसत्त्वेन तच्छून्यगगनसंबन्धित्वस्य प्रमेयत्वे सत्त्वात् । तदुक्तौ तु नोक्तदोषः, प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावीयसमवायसंबन्धावच्छिन्नद्रव्यत्वावच्छिन्नप्रतियोगितावच्छेदक-द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदीयप्रतियोगिताया असमवेतद्रव्ये गगनादावपि सत्त्वेन तदभावस्य तत्रासत्त्वात् । ननु द्रव्यवान् प्रमेयत्वादित्यत्र हेत्वधिकरणे गुणादौ यथा समवायेन समवेतद्रव्याभावः, तथा गगनं नास्तीत्याद्यसमवेतद्रव्याभावोऽपि साध्यतावच्छेदक-समवायेन प्रतियोगिव्यधिकरणः तदीयप्रतियोगिताशून्यत्वस्य गगनादावसत्त्वेन नाति-व्याप्तिरिति तादृशप्रतियोगिताशून्यत्वमेव साध्ये निवेश्यं किं शिरोवेष्टनेन नाशिका-स्पर्शनेनेति चेत्सत्यम् । साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणत्वघटितकल्पे दोषाभावेन इष्यतां वा तदेव, तत्रैव मूलतात्पर्यस्य वक्तव्यत्वादिति सार्वभौमैर्व्याख्यात-मिति । तथा च साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमासाधिकरणाभाव-प्रतियोगितासामान्यशून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरिष्टा तत्रैव जगदीशस्य तात्पर्यमिति सार्वभौमभट्टाचार्यस्याशयः ।

मूले वह्नित्वावच्छिन्ने प्रतियोगितावदेच्छेकावच्छिन्नत्वप्रदर्शनेन वह्नित्वनियत-(व्यापक) प्रतियोगिताया अपि सत्त्वे सूचिते तस्या व्याप्यवृत्तित्वलाभात् वह्निमान्

धूमादित्यत्र तत्तद्वह्न्यभावमादायाव्याप्तेर्न वारणमिति दूषणं सूचितं भवति। सार्वभौमभट्टाचार्येण यत् प्रतियोगिताया अव्याप्यवृत्तित्वमुक्तम्, तन्न युक्तम्। एवं सति सत्तावान् जातेरित्यत्र हेत्वधिकरणे गुणे प्रतियोगिव्यधिकरणगुणान्यत्वविशिष्ट-सत्त्वाभावस्य सत्त्वेन तत्प्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वादव्याप्तिर्भवति सार्व-भौममते। विशिष्टः शुद्धान्नातिरिच्यते इति मन्यमानस्य सार्वभौमभट्टाचार्यस्य मते नोक्तदोषः संभवति। सिद्धान्ते अन्यमते च दोषः संभवत्येव। किञ्च अत एव शब्दाश्रयवान् तज्ज्ञानत्वादित्यत्राव्याप्तिर्दत्ता। एवं शब्दाश्रयवान् तज्ज्ञानत्वा-दित्यत्र तत्तद्व्यक्त्यभावमादाय (तत्तद्देशस्थगगनाभावमादाय) अत्र मतेऽव्याप्तिः। तादृशप्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वात्।

केचित्तु रूपवान् पृथिवीत्वादित्यत्र विपर्ययतया रूपत्वविशिष्टाभावमादाया-व्याप्तेर्वारणाय तादृशाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसं-बन्धावच्छिन्नत्वनिवेशेन तत्तद्व्यक्त्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। तत्तद्व्यक्तित्वनिष्ठप्रतियोगितावच्छेदकतायां स्वरूपसंबन्धावच्छिन्नत्वस्य सत्त्वेन साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नत्वस्य तत्रासत्त्वात्, अतोऽवच्छिन्नत्वेन साध्यतालाभाय वह्नित्वावच्छिन्नत्वस्येत्युपादानम्। तथा च साध्यतावच्छेदकता-घटकस्वरूपसंबन्धावच्छिन्नत्वस्य तत्तद्व्यक्त्यभावीयप्रतियोगितावच्छेदकतायां सत्त्वेन तदभावमादाय अत्राव्याप्तिः संभवति, अतो वह्नित्वावच्छिन्नत्वस्येत्यत्र अवच्छिन्नत्व-पदोपादानम्। न चोभयोः स्थलयोर्भेदेन अव्याप्तितादवस्थ्यमिति ग्रन्थविरोधः, वह्नित्वावच्छिन्नतत्तद्व्यक्त्यपेक्षया वह्नेः सामान्येन सामान्यविशेषयोः परस्परविशेषेण भेदात्। यदि वह्निमान् धूमादित्यत्रैवाव्याप्तिर्भवेत् तदा तादवस्थ्यमित्युक्तिः संगच्छेदिति वाच्यम्। तादवस्थ्यस्य केवलाव्याप्तावन्वयेन तथोक्तिसंगतेः। यथापूर्वमव्याप्तिः तथैवेदानीमप्यत्रैवेति भावः। न चाग्रेऽपि अव्याप्ति-र्दास्यते तत्र तादवस्थ्यमिति नोच्यते केवलाव्याप्तेस्तत्रापि सत्त्वादिति वाच्यम्। तदनभिधानस्य (तादवस्थ्यमित्यकथनस्य) अकिञ्चित्करत्वात्। कथमन्यथा अवच्छेद कत्वनिरुक्तौ "न चैवानतिरिक्तवृत्तित्वांशवैयर्थ्यमित्यादि" पंक्तौ पारिभाषिकावच्छेद-कत्वापत्तितादवस्थ्यादिति लेखनोपेक्षा घटते। क्वचित् तदुक्तिश्च परस्यातिप्रतिभा-

शून्यताज्ञापनेन पराजयोत्कर्षसूचनायेति प्रागुक्तसाध्यतासमनियतसाध्यकस्थलीय-दोषसद्भाव एव तादवस्थ्यशब्दस्य पारिभाषिकत्वात् नासङ्गतिः। नहि तत्र (तादवस्थ्येत्यत्र) साध्यत्वयोः अवच्छेदकैक्यापेक्षेत्यपि कश्चिद् वदति। तन्न, साध्यता-वच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य पारिभाषिकस्य (स्वानवच्छेदकसंबन्धा-वच्छिन्नत्व, स्वसामानाधिकरण्याभ्यां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वा निरूपकत्वस्य) प्रतियोगितायां विवक्षणीयतया वह्निसाध्यकस्थलेऽपि अव्याप्ति-संभवात्। वह्नित्वावच्छिन्नसाध्यकस्थले एतस्या अव्याप्तेरनुपेक्षणीयत्वात्।

यत्तु प्रतियोगितावच्छेदकताघटकसंबन्धेन तादृशाभावीयप्रतियोगितावच्छेदक-विशिष्टभेदस्य साध्ये विवक्षणीयत्वेन प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटक-संबन्धावच्छिन्नत्वं न निवेश्यम्। रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टा-भावमादाय नाव्याप्तिः। विषयितया तादृशाभावप्रतियोगितावच्छेदकरूपत्वविशिष्ट-ज्ञानभेदस्य रूपे सत्त्वादिति। तन्न स्वरूपेण गुणभेदविशिष्टसत्तासाध्यके गुणान्यत्व-विशिष्टसत्तावान् जातेरित्यत्र सामानाधिकरण्यसंबन्धेन गुणभेदविशिष्टसत्त्वा-भावमादायाव्याप्तेः। हेत्वधिकरणे गुणे तेन संबन्धेनैतादृशाभावसत्त्वात्। विषयिता-समवायान्यतरसंबन्धेन रूपत्वविशिष्टवान् आत्मघटान्यतरत्वादित्यत्र हेत्वधिकरणे आत्मनि समवायेन रूपत्वविशिष्टस्य, हेत्वधिकरणे घटे विषयितया रूपत्वविशिष्टस्य च साध्यस्यासत्त्वात्। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धा-वच्छिन्नत्वस्य निवेशे तु नोक्तदोषः। तदसत्त्वेन तत्र तदभावस्य लक्षणाघटकत्वात्। (प्रतियोगितावच्छेदकतायां तदसत्त्वेन तत्र तदभावस्य लक्षणाघटकत्वात्।) प्रति-योगितावच्छेदकतायां च साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिवेशेऽपि तत्तद्-व्यक्त्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः, किन्तु तन्निवेशेऽपि वह्नित्वा वच्छिन्नवान् धूमादित्यत्राव्याप्तिरिति सूचयितुं वह्नित्वावच्छिन्नेत्युक्तम्, इत्यस्यापि सुवचत्वात्। वह्निपदस्य समवायेन वह्नित्वविशिष्टस्यैव बोधकतया नानासंबन्धेन वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तेः संभवन्त्याः प्रतियोगितावच्छेदकतायां साध्यता-वच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य निवेशे तत्र तत्राव्याप्तेरभावात् नानासंबन्धेन

वह्नित्वविशिष्टसाध्यकस्थलेऽव्याप्तिलाभाय वह्नित्वाच्छिन्नस्येत्युक्तमिति ज्यायः। इति वह्नित्वावच्छिन्नस्येति।

### अथ अन्यथा व्याचष्टे।

शब्दार्थत्यागेन तात्पर्यार्थप्रतिपत्त्यनुकूलकृतिमान् दीधितिकार इत्यर्थः। प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगितावच्छेदकतानिरूपकोऽर्थः, स चार्थो न विवक्ष्यते। प्रतियोगितावच्छेदकतानिरूपकस्य प्रतियोगित्वरूपार्थस्य साध्ये सत्त्वेन वह्निमान् धूमादित्यत्र तत्तद्व्यक्त्यभावमादायाव्याप्तेः। किन्तु साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकभेदस्तात्पर्यविषयीभूतोऽर्थो विवक्ष्यते। तथा हि प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र अवच्छेदकपदस्य अवच्छेदकत्वे लक्षणा, अवच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदस्य यत्पदार्थैकदेशे साध्यतावच्छेदकेऽन्वयः तथा च वह्निमान् धूमादित्यत्र तत्रद्व्यक्त्यभावमादाय नाव्याप्तिः, तादृशप्रतियोगतावच्छेदकतत्तद्व्यक्तित्वभेदस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात्। इत्यन्यथा व्याचष्टे इति।

### अथ तादृशप्रतियोगिताभिन्नप्रतियोगिताकल्पः।

अथ वह्निमान् धूमादित्यत्र तत्तद्व्यक्त्यभावमादाय अव्याप्तिवारणाय अवच्छेदकपदस्य अवच्छेदकत्वे लक्षणां, यत्पदार्थैकदेशे साध्यतावच्छेदके अन्वयञ्च स्वीकृत्य उक्तव्याख्यानक्लेशोऽनुचितो दीधितिकृताम्। तादृशप्रतियोगितावच्छेदकावच्छिन्नपदशक्यार्थः प्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपकः (प्रतियोगिता रूपः) अर्थः, तद्भेदस्य यत्पदार्थे यद्धर्मावच्छिन्ने प्रतियोगित्वेऽन्वयस्वीकारेऽपि तत्रादोषात्। अवच्छेदकभेदेन तयोः प्रतियोगितयोर्भेदात्। तथा च अव्याप्यवृत्तिसाध्यकस्थले, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति फलितम्। न च तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरित्येवोच्यताम्, अलं तादृशाभावीयप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपकप्रतियोगिताप्रतियोगिकभेदस्य यत्पदार्थे साध्यनिष्ठप्रतियोगित्वे निवेशे-

नेति वाच्यम् । प्रतियोगिव्यधिकरणत्वघटितव्याप्तौ हेत्वधिकरणे साध्यतावच्छेदक-संवन्धेन प्रतियोग्यसंबन्धित्वस्य तत्संवन्धित्वस्य च तादृशाभावे वा निवेशेनैव अव्याप्तिदोषाभावेन प्रतियोगितायां साध्यतावच्छेदकसंवन्धावच्छिन्नत्वं न निवेश्यम् । तथा च अव्याप्यवृत्तिसाध्यकस्थले साध्यतावच्छेदकसंवन्धेन प्रतियोग्यसंवन्धिहेतुसंबन्धिवृत्त्यभावप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिक-रण्यं व्याप्तिरिति फलितम् । धूमवान् वह्नेरित्यत्र साध्याभावस्य लक्षण-घटकत्वेन नातिव्याप्तिः । एवं तदात्मानुयोगिकसमवायेन आत्मत्ववान् ज्ञानत्वादि-त्यत्रापि हेत्वधिकरणे साध्यवद्भिन्नात्मनि आत्मत्वाभावस्य तेनैव संवन्धेन प्रतियोग्य-संबन्धितया प्रतियोगिव्यधिकरणतदभावप्रतियोगिताभेदस्य साध्यनिष्ठप्रतियोगिताया-मसत्त्वेन नातिव्याप्तिः ।

प्रतियोगिव्यधिकरणत्वाघटितव्याप्तौ वाच्यं ज्ञेयत्वादित्यत्र व्यधिकरण-संबन्धेन साध्याभावमादाय अव्याप्तिवारणाय तादृशप्रतियोगितायां साध्यता-वच्छेदकसंवन्धावच्छिन्नत्वमवश्यं निवेश्यम् । तथा च नोक्तदोषः । साध्यता-वच्छेदकस्वरूपसंबन्धेन वाच्यत्वस्य केवलान्वयित्वेन तत्संबन्धावच्छिन्नवाच्यत्वा-भावस्याप्रसिद्धेः । अन्याभावप्रतियोगिताभेदस्य साध्यनिष्ठप्रतियोगितायां सत्त्वात् । एवं सति व्यभिचारिमात्रेऽतिव्याप्तिः । साध्यतावच्छेदकसंबन्धावच्छिन्न-तादृशसाध्याभावप्रतियोगिताभिन्नान्यसंबन्धावच्छिन्नप्रतियोगितावत्साध्यसामानाधिक-रण्यस्य हेतौ सत्त्वात् । साध्यतावच्छेदकसंबन्धतदन्यसंबन्धयोर्भिन्नत्वेन तत्संबन्धा-वच्छिन्नप्रतियोगितयोरपि भेदात् । व्यभिचारिणः सर्वंलक्षणालक्ष्यत्वेन नेष्टापत्तिं कर्तुं शक्यते । अनवच्छेदकत्वानुसरणे तु नोक्तदोषः । साध्यतावच्छेदके धूमत्वादौ तादृशाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेन तत्र तदभावस्यासत्त्वात् । ननु हेत्वधिकरणे धूमो नास्तीत्यभावप्रतियोगितावच्छेदकधूमत्वनिष्ठावच्छेदकताक-प्रतियोगिताभेदस्य जातिमद्धूमनिष्ठप्रतियोगितायां सत्त्वेन धूमवान् वह्नेरित्यत्राति-व्याप्तिः, हेत्वधिकरणे अयोगोलके जातिमतो वह्नेः सत्त्वेन तत्र जातिमान् नास्तीत्य-भावस्यासत्त्वात् । अवच्छेदकभेदेन तयोः प्रतियोगितयोर्भेदात् । न च व्याप्यवृत्ति-साध्यकस्थले साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरण-

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताभिन्नप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । अव्याप्यवृत्तिसाध्यकस्थले साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेत्वधिकरणसंबन्ध्यभावप्रतियोगिताभिन्नप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणे नोक्तदोष इति वाच्यम् । एवं सति दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तेः । तादृशप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगितायाः सावच्छिन्नावच्छेदकत्वात् । जात्यखण्डोपाधिव्यतिरिक्तस्य किञ्चिद्धर्मेण भाननियमादिति चेन्न । अव्याप्यवृत्तिसाध्यकस्थले साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेतुसामानाधिकरण्याभावप्रतियोगिताभिन्नप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः ।

व्याप्यवृत्तिसाध्यकस्थले च साध्यतावच्छेदकसंबन्धावच्छिन्नहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकनिष्ठावच्छेदकताकप्रतियोगिताभिन्नप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात् । तादृशरूपयोः परस्परभेदात् । अवच्छेदकता च साक्षात्परम्परासाधारणा गृह्यते ।

अथवा साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धिहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपकप्रतियोगिताभिन्नप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः ।

एवं हेतुसमानाधिकरणाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकनिष्ठावच्छेदकतानिरूपकप्रतियोगिताभिन्नप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्ति-

प्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्युभयत्र विवक्षणेनादोषात् । अवच्छेदकतायाम् अवच्छेदकतावैशिष्ट्यं च स्वतादात्म्य-स्वनिरूपितत्वान्यतरसंबन्धेन । निरवच्छिन्नसाध्यतावच्छेदकस्थले स्वतादात्म्यं सावच्छिन्नसाध्यतावच्छेदकस्थले स्वनिरूपितत्वं बोध्यम् ।

यद्वा साध्यतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगिता-भिन्नप्रतियोगिताविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति व्याप्य-वृत्तिसाध्यकस्थले । एवं साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धि हेत्वधिकरण-वृत्त्यभावप्रतियोगिताभिन्नप्रतियोगिताविशिष्टसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यव्याप्यवृत्तिसाध्यकस्थले । साध्यतायां प्रतियोगिता वै० स्वनिरूपिता-वच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वाभ्याम् । प्रतियोगितायां साध्यतावृत्तित्वञ्च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व-संबन्धेन । उभयत्रावच्छेदकतायाम् अवच्छेदकता वै० स्वसामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टय-संबन्धेन । स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन । अत्र साध्यतायां प्रतियोगितावैशिष्ट्यनियामकस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपित--त्वस्यानुक्तौ, इदं ज्ञानं विषयितासंबन्धेन तार्णवह्निमत् वह्नि-ज्ञानत्वादित्यत्रातिव्याप्तिः । हेतुसमानाधिकरणतादृशाभावप्रतियोगिताभिन्नवह्न्य-भावप्रतियोगितायां द्वितीयस्ववृत्तित्वसंबन्धेन तार्णवह्निनिष्ठसाध्यतायाः सत्त्वात् । साध्यतावच्छेदकतायाः वैशिष्ट्यनियामकानां चतुर्णां संबन्धानां प्रतियोगिता-वच्छेदकतायां सत्त्वेन तदन्यावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितायां सत्त्वात् । वह्नित्वनिष्ठप्रतियोगितावच्छेदकतायां वह्नित्वनिष्ठसाध्यतावच्छेदकतावैशिष्ट्यनियाम-कानां चतुर्णां संबन्धानां सत्त्वेन वह्नित्वावच्छेदेन वह्नित्वनिष्ठसाध्यता-वच्छेदकताविशिष्टा भवति प्रतियोगितावच्छेदकता तदन्यावच्छेदकत्वानिरूपित-प्रतियोगिताविशिष्टा भवति साध्यता । उभयोरवच्छेदकतयोर्निरवच्छिन्नत्वेन समवाय-मात्रावच्छिन्नत्वेन च तन्नियामकसंबन्धानां तत्र सत्त्वात् । स्वनिरूपितावच्छेदकता-विशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य प्रतियोगितावैशिष्ट्यनियामकस्य साध्यताया-

मुपादाने तु नोक्तदोषः। स्वनिरूपितवह्नित्वनिष्ठप्रतियोगितावच्छेदकताया वैशिष्ट्य-नियामकानां चतुर्णां संबन्धानां तार्णत्वनिष्ठसाध्यतावच्छेदकतायामसत्त्वेन एतस्याः तार्णत्वनिष्ठसाध्यतावच्छेदकतायाः वह्नित्वनिष्ठप्रतियोगितावच्छेदकताविशिष्टान्यत्वेन प्रतियोगिविशिष्टत्वस्य साध्यतायामसत्त्वात्।

साध्यतायां प्रतियोगितावैशिष्ट्यनियामकस्य स्वसामानाधिकरण्यस्य अनुपादाने, ज्ञानं विषयितासंबन्धेन तार्णवह्निमत् वह्निविषयकज्ञानत्वादित्यत्रैवातिव्याप्तिः। एतत्संबन्धभिन्नतादृशत्रितयसंबन्धेन प्रतियोगितावच्छेदकताविशिष्टा भवति साध्यता-वच्छेदकता। स्वावच्छेदकसमवायसंबन्धावच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्व-संबन्धावच्छिन्नस्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्वानां त्रयाणां साध्यतावच्छेद-कतायां सत्त्वात्। स्वसामानाधिकरण्यस्योपादाने तु नोक्तदोषः। प्रतियोगितावच्छेदक-वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतासामानाधिकरण्यस्य तार्णत्वावच्छेदेन साध्यता-वच्छेदकतायामसत्त्वेन साध्यतावच्छेदकता भवति प्रतियोगितावच्छेदकताविशिष्टान्या तदनिरूपितत्वस्य साध्यतायामसत्त्वेन साध्यता न भवति प्रतियोगिताविशिष्टेति नाति व्याप्तिः।

प्रथमसंबन्धनियामकघटकस्ववृत्तित्वस्यानुपादाने, इदं ज्ञानं विषयितया जातिमत्वह्निमद् जातिमज्ज्ञानत्वादित्यत्रातिव्याप्तिः। तादृशप्रतियोगिताभिन्ना जातिमान् नास्तीत्यभावप्रतियोगिता तद्वैशिष्ट्यस्य साध्यतायां सत्त्वात्। स्वसामाना-धिकरण्य स्वावच्छेदकसंबन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्वानां जात्यवच्छेदेन साध्यतावच्छेदकतायां सत्त्वात्। तदन्यावच्छेदकत्वानिरूपितत्वस्य साध्यतायां सत्त्वेन साध्यता भवति प्रतियोगिताविशिष्टा। स्ववृत्तित्वस्योपादाने तु नोक्तदोषः। साध्यतावच्छेदकवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानवच्छेदकजातित्वावच्छिन्नत्वस्य — प्रतियोगितावच्छेदकतायां सत्त्वेन प्रतियोगितावच्छेदकता न भवति साध्यता-वच्छेदकताविशिष्टा किन्तु तदन्यैवेति तन्निरूपितत्वस्यैव प्रतियोगितायां सत्त्वेन साध्यतायाः प्रतियोगितायाम् अवृत्तित्वात् साध्यता न भवति प्रतियोगिताविशिष्टा।

प्रथमसंबन्धवैशिष्ट्यनियामकघटकस्य स्वानवच्छेदकानवच्छिन्नत्वस्यानुपादाने, इदं ज्ञानं विषयितया जातिमद् वह्निमत् वह्निज्ञानत्वादित्यत्रातिव्याप्तिः। तादृश-

प्रतियोगिताभिन्नवह्न्यभावप्रतियोगितावैशिष्ट्यस्य साध्यतायां सत्त्वात् । तदन्यावच्छेदकत्वानिरूपितत्वस्य साध्यतायां सत्त्वेन साध्यतायाः प्रतियोगिताविशिष्टत्वात् । एतदुक्तौ च नोक्तदोषः । वह्नित्वनिष्ठप्रतियोगितावच्छेदकताया निरवच्छिन्नत्वेन तदनवच्छेदकजातित्वावच्छिन्नत्वस्य जातिनिष्ठसाध्यतावच्छेदकतायां सत्त्वेन तस्याः प्रतियोगितावच्छेदकताविशिष्टत्वाभावात् ।

प्रथमसंवन्धवैशिष्ट्यनियामकघटकस्य स्वावच्छेदकसंवन्धावच्छिन्नत्वस्यानुपादाने तु कालिकेन वह्नित्वविशिष्टो यः समवायेन वह्नित्वविशिष्टः तस्य विषयितया साध्यतायाम् इदं ज्ञानं विषयितया तादृशवह्निमत् समवायेन वह्नित्वविशिष्टज्ञानत्वादित्यत्रातिव्याप्तिः । तादृशभिन्ना या केवलसमवायसंवन्धावच्छिन्नवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपकप्रतियोगिता तद्वैशिष्ट्यस्य साध्यतायां सत्त्वात् । एतदतिरिक्तेन प्रतियोगितावैशिष्ट्यनियामकसंवन्धघटकोक्तत्रितयसंवन्धेन प्रतियोगितावच्छेदकतावैशिष्ट्यस्य साध्यतावच्छेदकतायां सत्त्वात् । एतदुक्तौ च नोक्तदोषः । प्रतियोगितावच्छेदकतानवच्छेदककालिकसंवन्धावच्छिन्नत्वस्य साध्यतावच्छेदकतायां सत्त्वेन तस्याः प्रतियोगितावच्छेदकताविशिष्टान्यत्वमिति तन्निरूपितत्वस्य साध्यतायां सत्त्वेन साध्यतायाः प्रतियोगिताविशिष्टत्वाभावात् ।

साध्यतायां प्रतियोगितावैशिष्ट्यनियामकद्वितीयसंवन्धस्यानुपादाने इदं ज्ञानं विषयितया वह्निमत् तार्णवह्निज्ञानत्वादित्यत्रातिव्याप्तिः । तादृशाभावप्रतियोगिताभिन्नतार्णवह्न्यभावप्रतियोगितावैशिष्ट्यस्य वह्निनिष्ठसाध्यतायां सत्त्वात् । वह्नित्वावच्छेदेन निरवच्छिन्नसाध्यतावच्छेदकतायां निरवच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकतावैशिष्ट्यस्य सत्त्वेन तदन्यावच्छेदकत्वानिरूपितत्वस्य साध्यतायां सत्त्वात् । तदुक्तौ तु नोक्तदोषः । साध्यतावच्छेदकतानवच्छेदकतार्णत्वत्वावच्छिन्नत्वस्य प्रतियोगितावच्छेदकतायां सत्त्वेन साध्यतावच्छेदकताविशिष्टान्यतार्णत्वत्वावच्छिन्नावच्छेदकतानिरूपकत्वस्यैव प्रतियोगितायां सत्त्वात्, साध्यतायाः प्रतियोगित्वावृत्तित्वेन वृत्तित्वसंवन्धेन साध्यतायाः प्रतियोगिताविशिष्टत्वाभावात् ।

वृत्तित्वनियामकवैशिष्ट्यनियामकसंबन्धघटकस्वसामानाधिकरण्यस्यानुपादाने अत्रैवातिव्याप्तिः । एतदतिरिक्तसाध्यतावच्छेदकतावैशिष्ट्यनियामकोक्तत्रितयसंबन्धेन प्रतियोगितावच्छेदकतायाः वह्नित्वावच्छेदेन साध्यतावच्छेदकताविशिष्टत्वेन तदन्यावच्छेदकत्वानिरूपकत्वस्य प्रतियोगितायां सत्त्वात् । साध्यतायाः प्रतियोगितावृत्तित्वेन वृत्तित्वसंबन्धेन साध्यता भवति प्रतियोगिताविशिष्टेति भवति तत्रातिव्याप्तिः । एतदुक्तौ च नोक्तदोषः । तार्णत्वावच्छेदेन प्रतियोगितावच्छेदकतायां वह्नित्वनिष्ठनिरवच्छिन्नसाध्यतावच्छेदकतासामानाधिकरण्यस्य अभावेन साध्यतावच्छेदकताविशिष्टान्यतार्णत्वनिष्ठसावच्छिन्नावच्छेदकतानिरूपकत्वस्यैव प्रतियोगितायां सत्त्वेन साध्यतायाः प्रतियोगित्वावृत्तित्वात् । वृत्तित्वसंबन्धेन प्रतियोगिताविशिष्टा साध्यता न भवतीति नातिव्याप्तिः ।

द्वितीयसंबन्धनियामकघटकस्य स्ववृत्तित्वसंबन्धस्यानुक्तौ तु इदं ज्ञानं विषयितया जातिमत्, जातिमद्वह्निविषयकज्ञानत्वादित्यत्रातिव्याप्तिः । तादृशाभावप्रतियोगिताभिन्नजातिमद्वह्न्यभावप्रतियोगितावैशिष्ट्यस्य साध्यतायां सत्त्वात् । जात्यवच्छेदेन प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावैशिष्ट्यस्य स्ववृत्तित्वातिरिक्ततत्त्रितयसंबन्धेन सत्त्वात् । एतदुक्तौ तु नोक्तदोषः । जातिमद्वह्न्यभावप्रतियोगितानिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकतानवच्छेदकजातित्वावच्छिन्नत्वस्य साध्यतावच्छेदकतायां सत्त्वेन प्रतियोगितावच्छेदकताविशिष्टान्यजातिनिष्ठावच्छेदकतानिरूपकत्वस्यैव साध्यतायां सत्त्वेन साध्यतायाः प्रतियोगित्वाविशिष्टत्वात् ।

द्वितीयसंबन्धनियामकघटकस्वानवच्छेदकानवच्छिन्नत्वस्यानुपादाने तु इदं ज्ञानं विषयितया वह्निमत् जातिमद्वह्निज्ञानत्वादित्यत्रातिव्याप्तिः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नजातिमद्वह्न्यभावप्रतियोगितावैशिष्ट्यस्य साध्यतायां सत्त्वात् । साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वस्य प्रतियोगितायां सत्त्वेन स्ववृत्तित्वसंबन्धेन साध्यतायाः प्रतियोगितावृत्तित्वात् स्ववृत्तित्वसंबन्धेन प्रतियोगितावैशिष्ट्यस्य साध्यतायां सत्त्वात् । एतदुक्तौ च नोक्तदोषः । साध्यतावच्छेदकवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानवच्छेदक-

जातित्वावच्छिन्नजातिनिष्ठप्रतियोगितावच्छेदकतायां सत्त्वेन तद्विशिष्टान्यावच्छेदकता सैव, तन्निरूपकत्वस्य प्रतियोगितायां सत्त्वेन साध्यतायाः प्रतियोगित्वावृत्तित्वात् साध्यतायां वृत्तित्वसंबन्धेन प्रतियोगितावैशिष्टयस्याभावात् ।

द्वितीयसंबन्धनियामकघटकस्य स्वावच्छेदकसंबन्धावच्छिन्नत्वस्यानुपादाने तु समवायेन वह्नित्वविशिष्टसाध्ये व्यभिचारिणि कालिकेन वह्नित्वविशिष्टत्वे सति समवायेन वह्नित्वविशिष्टाभावप्रतियोगितामादायातिव्याप्तिः ( इदं ज्ञानं समवायेन वह्नित्वविशिष्टवत् कालिकसमवायोभयसंबन्धेन वह्नित्वविशिष्टवह्नि ज्ञानत्वादित्यत्रातिव्याप्तिः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नकालिकसमवायोभयसंबन्धावछिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितावैशिष्टयस्य समवायसंबन्धावछिन्नवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताकसाध्यतायां सत्त्वात् । स्वावच्छेदकसंबन्धावच्छिन्नत्वातिरिक्तसंबन्धत्रयस्य साध्यतावच्छेदकतायाः प्रतियोगितावच्छेदकतायां वैशिष्टयनियामकस्य सत्त्वेन साध्यतायाः प्रगियोगितावृत्तित्वमिति स्ववृत्तित्वसंबन्धेन साध्यतायाः प्रतियोगिताविशिष्टत्वात् । एतत्संबन्धोक्तौ तु नोक्तदोषः । साध्यतावच्छेदकतानवच्छेदककालिकसंबन्धावच्छिन्नत्वस्य प्रतियोगितावच्छेदकतायां सत्त्वेन तन्निरूपकत्वस्य प्रतियोगितायां सत्त्वेन तदनिरूपितत्वाभावात् साध्यतायाः प्रतियोगितायामवृत्तित्वेन स्ववृत्तित्वसंबन्धेन प्रतियोगिताविशिष्टत्वस्य साध्यतायामसत्वादिति चेन्न । वृत्त्यनियामकसंबन्धस्य प्रतियोगित वच्छेदकत्वपक्षे व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामनाधिरकण्यं व्याप्तिरित्यस्य धनी प्रमेयत्वादित्यत्र नातिव्यारितः । स्वामित्वसंबन्धेन तत्र धनाभावस्य लक्षणघटकत्वेन तदीयप्रतियोगिताया एव साध्ये सत्त्वात् । वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षे तत्रातिव्याप्तेः । साध्यतावच्छेकदसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया साध्यतावच्छेदकसंबन्धावच्छिन्नप्रयोगिताकसाध्याभावस्य लक्षणाघटकत्वात् ।

न च साध्यतावच्छेकस्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वस्याप्रसिद्धया

नातिव्याप्तिः । तादृशप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगित्वाप्रसिद्धेरिति वाच्यम् । एवं सति धनी चैत्रत्वादित्यत्राव्याप्तेः । वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षे साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया तादृशप्रतियोगिताकाभावस्य लक्षणाघटकत्वात् ।

सिद्धान्ते तु नोक्तदोषः । वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षेऽपि हेतुसमानाधिकरणाभावीयप्रतियोगितायां यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावः तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यस्य सत्वात् । एवञ्च वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वपक्षे प्रतियोगिताभिन्नप्रतियोगिताकल्पस्य निर्दुष्टत्वेऽपि उभयसाधारणपक्षे अनवच्छेदकत्वघटितसिद्धान्तस्यावश्यकत्वमिति बोध्यम् । किञ्च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वकल्पे प्रतियोगिताभिन्नप्रतियोगिताकल्पस्य निर्दुष्टत्वेऽपि तस्य तदनवच्छेदकत्वपक्षे संयोगेन प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिः । हेतुसामानधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितायां साध्यतावच्छेदकगुरुधर्मावच्छिन्नत्वस्याप्रसिद्धया तादृशप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगित्वाप्रसिद्धेः । सिद्धान्तेऽनवच्छेदकत्वकल्पे तु नोक्तदोषः । तादृशाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् । प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तिस्तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षया वारणीया । गुरुधर्मस्यापि पारिभाषिकप्रतियोगितावच्छेदकत्वस्वीकारात् । तथा च अव्याप्यवृत्तिसाध्यकस्थले प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तद्भिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् ।

व्याप्यवृत्तिसाध्यकस्थले च साध्यतावच्छेदकसंबन्धावच्छिन्नहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तदभिन्नसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । न च प्रतियोगिताभिन्नप्रतियोगिताकल्पेऽपि तत्तद्दोषो वारणीयः । प्रतियोगिव्यधिकरणहेतु-

समानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपकप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तद्धर्मरूपसाध्यतावच्छेदकावच्छिन्न-सामानाधिरण्यं व्याप्तिः। व्याप्यवृत्तिसाध्यकस्थले साध्यतावच्छेदकसंबन्धावच्छिन्नहेतु-समानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसमानाधि-करणाभावप्रतियोगितानवच्छेकं तद्धर्मरूपसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति। एवञ्च प्रमेयवह्निमान् धूमादित्यत्र नाव्याप्तिः। तादृशप्रतियोगिताभिन्न-प्रतियोगितावच्छेदकवह्नित्वस्य प्रमेयवह्नित्वविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितान-वच्छेदकत्वेन तद्धर्मावच्छिन्नसामानाधिकरण्यस्य धूमे सत्वादिति वाच्यम्। एवं सति धूमवान् वह्नेरित्यत्रातिव्याप्तेः। प्रतियोगिव्यधिकरणहेतुसमानाधिकरण भावप्रतियो-गिताभिन्नप्रतियोगितावच्छेदकद्रव्यत्वस्य धूमत्वविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितान-वच्छेदकत्वेन तद्धर्मावच्छिन्नसामानाधिकरण्यस्य वह्नौ सत्त्वात्। न च साध्यता-वच्छेदके प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगिताया अनतिरिक्तवृत्तित्वरूपम् अवच्छेदकत्वं विवक्षणीयम्। तच्च स्वव्यापकतत्कत्वरूपम्। स्वस्य (धर्मस्य) व्यापिका प्रतियोगिता यस्य (धर्मस्य) तत्वम्। तथा च तादृशप्रतियोगिताभिन्नप्रतियोगितानतिरिक्तवृत्तिसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्। एवं च प्रमेयवह्निमान् धूमादित्यत्र तादृशप्रतियोगिता-भिन्नवह्निनिष्ठसंयोगसंवन्धावच्छिन्नप्रतियोगितायां प्रमेयवह्नित्वव्यापकत्वस्य सत्त्वेन नाव्याप्तिरिति वाच्यम्। तथा सति सामानाधिकरण्यसंबन्धेन घटभेदविशिष्टसाध्यकसद्धेतौ साध्याभावस्य गुरुधर्मावच्छिन्नाभावतयाऽप्रसिद्धया घटभेदाभावीयप्रतियोगित्वातिरिक्तवृत्तितया साध्यतावच्छेदकस्येत्यव्याप्तेः। (सामानाधिकरण्यसंबन्धेन घटभेदविशिष्टपटत्ववान् तद्व्यक्तित्वादित्यत्राव्याप्तेः। घटभेदविशिष्टपटत्वत्वस्य घटभेदत्वापेक्षया गुरुत्वेन प्रतियोगितानवच्छेदकत्वात् तद-वच्छिन्नाया तादृशप्रतियोगिताभिन्नप्रतियोगिताया अप्रसिद्धया तदनतिरिक्तवृत्ति-त्वस्याप्यप्रसिद्धेः। तादृशाभावीयप्रतियोगिताभिन्ना घटभेदत्वावच्छिन्ना या प्रतियोगिता तदतिरिक्तवृत्तित्वस्य घटभेदविशिष्टपटत्वत्वे साध्यतावच्छेदके सत्वात्।) एवं विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तेश्च। प्रतियोगिव्यधिकरणहेतु

समानाधिकरणाभावीयप्रतियोगिताभिन्नसत्तात्वावच्छिन्नप्रतियोगिताया गुणकर्मान्यत्वविशिष्टसत्तात्वव्यापकत्वेन तादृशप्रतियोगितानतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य साध्यतावच्छेदके गुणकर्मान्यत्वविशिष्टसत्तात्वे सत्त्वात्। न च समवायेन गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिवारणाय, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकनिष्ठव्याप्यतानिरूपितव्यापकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षणीयमिति नोक्तदोषः। विशिष्टसत्तात्वस्य सत्तात्वाव्यापकत्वादिति वाच्यम्। साध्यतावच्छेदकगुणकर्मान्यत्ववैशिष्ट्यसत्तात्वोभयघटकसत्तात्वनिष्ठ व्यापकतानिरूपितव्याप्यत्वस्य तादृशप्रतियोगितावच्छेदके सत्तात्वे सत्त्वात्। स्वस्मिन् स्वव्याप्यत्वस्वव्यापकत्वयोः सर्वसंमतत्वात्। न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यादृशसाध्यतावच्छेदकावच्छिन्नव्यापकतानिरूपितव्याप्यतावच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षणे नोक्तदोषः। तादृशप्रतियोगितावच्छेदके सत्तात्वे तादृशव्याप्यतानवच्छेदकत्वस्य सत्त्वादिति वाच्यम्। विकल्पासहत्वेन कथयितुमशक्यत्वात्। तथा हि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदके साध्यतावच्छेदकावच्छिन्नव्यापकतानिरूपितव्याप्यतावच्छेदकत्वं हि किं साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वम्? तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं साध्यतावच्छेदकसंबन्धावच्छिन्नयादृशसाध्यतावच्छेदकधर्मावच्छिन्नाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्। अथवा साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकावच्छिन्नव्यापकत्वावच्छेद्यत्वपर्यवसायि। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम्। किं वा प्रतियोगिव्यधिकरणहेतुसमानाधिकर-

णाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यत्किञ्चिद्धर्मावच्छिन्नव्याप्यतानिरूपितव्यापकत्वपर्यवसायि । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यत्किञ्चिद्यादृशसाध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकं तादृशधर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम् । तत्र नाद्यः, इदं वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेः । स्वरूपसंबन्धावच्छिन्नवाच्यत्वत्वावच्छिन्नप्रतियोगिताया अप्रसिद्धया तादृशप्रतियोगिताकाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्न प्रतियोगितावच्छेदके वाच्यत्वत्वेऽप्रसिद्धेः ।

न द्वितीयः, पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यत्राव्याप्तेः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितावच्छेदकप्रमेयत्वाधिकरणजलादिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके पृथिवीतरभेदे सत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वस्य तत्रासत्त्वात् । साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकत्वस्यासत्त्वात् । न हि भवति प्रमेयव्यापको जलादिभेदः । न तृतीयः, प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेः । प्रमेयधूमत्वस्य वह्निसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितावच्छेदकयत्किञ्चित्पर्वतीयवह्नित्वावच्छिन्नसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन तस्य (प्रमेयधूमत्वस्य) तादृशप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नव्याप्यतानिरूपितव्यापकतावच्छेदकत्वात् । किञ्च साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य प्रमेयधूमत्वे सत्त्वेन तादृशप्रतियोगितावच्छेदकत्वाभावाच्च । न च तादृशाभावीयप्रतियोगिताभिन्नप्रतियोगितावच्छेदकस्य विषयितयाऽभाववति विषयितया अवृत्तित्वं व्याप्यत्वम् । तादृशप्रतियोगितावच्छेदकस्य विषयितया संबन्धिनि विषयितया अभावाप्रतियोगित्वं व्यापकत्वं प्रकृते गृह्यते । तथा च वाच्यं ज्ञेयत्वादित्यत्र नाव्याप्तिः । तादृशप्रतियोगितावच्छेदकवाच्यत्वत्वावच्छिन्नस्य विषयितया साध्यतावच्छेदकवाच्यत्वत्वावच्छिन्नाभाववति अवृत्तित्वेन विषयितया तादृशप्रतियोगितावच्छेदकावच्छिन्नवति

विषयितया अभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्। विषयितया व्याप्यव्यापकभावस्य विवक्षणे प्रमेयवह्निमान् धूमादित्यत्राव्याप्तेः। विषयितया तादृशप्रतियोगिताभिन्नप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नवति वह्निविषयकज्ञाने साध्यतावच्छेदकप्रमेयवह्नित्वावच्छिन्नस्य विषयितया असत्त्वेन साध्यतावच्छेदकस्य व्यापकतानवच्छेदकत्वात्। वह्निज्ञानवतः पुरुषस्य अहं प्रमेयवह्निं जानामीत्यनुव्यवसायाभावेन उभयज्ञानीयविषयितयोः परस्परभिन्नत्वात्। न च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरित्यस्य प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिः। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन प्रमेयवह्नेः तादृशप्रतियोगितानाश्रयत्वात्। सिद्धान्ते अनवच्छेदकत्वानुसरणे तु नोक्तदोषः। तादृशप्रतियोगितानवच्छेदकत्वस्य प्रमेयवह्नित्वे सत्त्वादिति वाच्यम्। एवमपि गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तेः सिद्धान्ते विद्यमानत्वात्। पारिभाषिकावच्छेदकत्वानुसरणेऽपि न निर्वाहः। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकधूमत्वस्य विषयितया प्रमेयधूमत्वविशिष्टप्रमेयधूमविषयकज्ञानवृत्त्यभावप्रतियोगितावच्छेदकत्वेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्त्वं पारिभाषिकप्रतियोगितानवच्छेदकत्वम्। तस्य साध्यतावच्छेदके प्रमेयधूमत्वेऽसत्त्वात्। अतो विषयितया गुरुसाध्यकहेतोरुभयपक्षयोरलक्ष्यत्वस्य स्वीकरणीयत्वात्। तेन विषयितया गुरुधर्मावच्छिन्नसाध्यकहेतावव्याप्तिः प्रतियोगिताभिन्नप्रतियोगिताकल्पे अनुपादेयेति।

हेतुसमानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्यवृत्तिसाध्यकव्याप्तिलक्षणे व्यधिकरणसंबन्धेन साध्याभावमादायासंभववारणाय तादृशाभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेश्यम्। तथा च तादृशाभावीयप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगितायाः प्रसिद्ध्या नासंभवः। एवञ्च धनी चैत्रत्वादित्यादौ वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वकल्पेऽव्याप्तिः। स्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः।

अतः प्रतियोगिताभिन्नप्रतियोगिताकल्पमुपेक्ष्य अनवच्छेदकत्वानुसरणं कृतं दीधितिकृता । अव्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणे प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणव्यधिकरणसंबन्धावच्छिन्न ( अनभिप्रेतसंबन्धावच्छिन्न) प्रतियोगिताकसाध्याभावमादाय असंभववारणाय साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वं हेत्वधिकरणे निवेश्यम् । उभयलक्षणे उभयत्र साध्य ावच्छेदकसंबन्धस्य निवेशः ।

अथास्तु साध्यतावच्छेदकसंबन्धेनैव तयोः व्याप्यव्यापकभावः । प्रतियोगिवैयधिकरण्यं तु साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावरूपमेव हेत्वधिकरणे वाच्यम् । तथा च हेत्वधिकरणे साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितावच्छेदकावच्छिन्ननिरूपितव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम् ।

तथा च व्यभिचारिमात्रे अभावमात्रस्यैव प्रतियोगिव्यधिकरणत्वेन तादृशप्रतियोगिताभिन्नप्रतियोगित्वाप्रसिद्ध्यैव नातिव्याप्तिरिति चेन्न । संयोगेन धूमाभावीयप्रतियोगितावद्वान् वह्नेरित्यत्रातिव्याप्तेः । साध्यतावच्छेदकधूमाभावप्रतियोगित्वावच्छिन्नाधिकरणत्व, हेत्वधिकरणवृत्त्यभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्वयोः निरूपकैक्येनैक्यात् तादृशाधिकरणत्वद्वयाप्रसिद्धया साध्याभावो न लक्षणघटक इत्यभावान्तरप्रतियोगिताभिन्नप्रतियोगितायाः साध्ये सत्त्वात् । न च साध्यतावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना, एवं हेतुसमानाधिकरणाभावप्रतियोगित्वावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितप्रतियोगिताकाभावत्वेनात्राभावः उभयाभावत्वेन हेत्वधिकरणे विवक्ष्यते । उभयाभावप्रतियोगितया द्वित्वविशिष्टतत्तदधिकरणत्वद्वयं न विवक्ष्यते तदा नोक्तदोषः, धूमाभावप्रतियोगित्वावच्छिन्नाधिकरणत्व, हेत्वधिकरणवृत्त्यभावप्रतियोगित्वावच्छिन्नाधिकरणत्वघटितस्य तादृशोभयाभावस्य हेत्वधिकरणे अयोगोलके सत्त्वेन तादृशाभावप्रतियोगित्वस्यैव साध्ये सत्त्वात् तत्रातिव्याप्तेरभावादिति वाच्यम् । घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसंयोगान्यतरसंबन्धेन घटः पटवान् तद्-

व्यक्तित्वादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्धयाव्याप्त्यापत्तेः । घटाभावप्रतियोगित्वावच्छिन्नसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नाधिकरणत्वस्य घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वावच्छिन्नाधिकरणत्वस्य च द्वयोरधिकरणत्वयोः हेत्वधिकरणे भूतले सत्त्वेन तादृशाधिकरणत्वाभावस्यासत्त्वात् । घटाभावभिन्नाभावास्तु सर्वे घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन प्रतियोगिसमानाधिकरणा एवेति । न च यादृशप्रतियोगित्वावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वमात्रं यादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वनिष्ठप्रतियोगितायां निवेश्यं न तु साध्यतावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वमिति तदा नोक्तदोषः । घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्नघटत्वावच्छिन्नघटाभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्वस्यान्यत्र प्रसिद्धस्य हेत्वधिकरणेऽसत्त्वेन तादृशाधिकरणत्वप्रतियोगिकोभयाभावस्य हेत्वधिकरणे तद्भूतले सत्त्वेन घटाभावो भवति प्रतियोगिव्यधिकरणः तदीयप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वेन भूतलं घटत्वावच्छिन्नाप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन पटवत् तद्व्यक्तित्वादित्यत्र नाव्याप्तिरिति वाच्यम् । (साध्यतावच्छेदकसंबन्धावच्छिन्नत्वम् अधिकरणतायां न निवेश्यम् । तथा-चान्यसंबन्धेन घटाभावो लक्षणघटको भविष्यतीति तत्र नाव्याप्तिरिति शङ्कया भावः ।) यादृशप्रतियोगित्वावच्छिन्नाधिकरणतायां 'प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधेयतानिरूपितत्वस्य निवेशे (साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्याधेयतायामकथने) व्यधिकरणस्वरूपादिसंबन्धेन धूमाभावमादाय धूमवान् वह्नेरित्यादि व्यभिचारिणि अतिव्याप्त्यापत्तेः । व्यधिकरणसंबन्धेन साध्याभावीयप्रतियोगित्वावच्छिन्नस्य अधिकरणाप्रसिद्धया सा प्रतियोगिता न यादृशपदग्राह्या तदन्या या प्रतियोगिता तद्भिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । न च साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतानिरूपितत्वं यादृशप्रतियोगित्वावच्छिन्नतादृशाधिकरणत्वे निवेशनीयमिति नोक्तदोषः । हेत्वधिकरणे अयोगोलके धूमत्वावच्छिन्नप्रतियोगित्वावच्छिन्नसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्यान्यत्र पर्वतादौ प्रसिद्धस्य असत्त्वेन तादृशप्रतियोगित्वस्यैव साध्ये सत्त्वेन नातिव्याप्तिरिति वाच्यम् । एवं सति वह्निप्रतियोगिकसंयोगेन वह्निमान् धूमादित्यत्राव्याप्तेः । साध्यतावच्छेदक-

संबन्धावच्छिन्नयादृशप्रतियोगित्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्याप्रसिद्ध्या पारिभाषिकव्यधिकरणाभावस्याप्रसिद्धेः । सिद्धान्तेऽनवच्छेदकत्वघटितकल्पे तु नोक्तदोषः । साध्यतावच्छेदकसंबन्धे यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यस्य वक्ष्यमाणत्वेन साध्यभिन्नघटाद्यभावीयप्रतियोगित्वस्य लक्षणघटकत्वात् । न चास्मिन् कल्पेऽपि साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणत्वहेत्वधिकरणवृत्त्यभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वैतद्प्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः, तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणे नोक्तदोषः । वह्निप्रतियोगिकसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये पर्वतानुयोगिकत्वसत्त्वेऽपि प्रतियोगितावच्छेदकघटत्वावच्छिन्नाधिकरणत्वप्रतियोगिकत्वाभावेन घटाभावोऽत्र प्रतियोगिव्यधिकरणस्तदीयप्रतियोगिताभिन्नवह्नित्वावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वादिति वाच्यम् । एवं सति धूमवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः । साध्यतावच्छेदकधूमत्वावच्छिन्नाधिकरणत्व, हेत्वधिकरणीभूतायोगोलकवृत्त्यभावप्रतियोगित्वावच्छिन्नाधिकरणत्वयोरैक्येन द्वित्वाभावाद् धूमाभावो न लक्षणघटकस्तदन्याभावीयप्रतियोगिताभिन्नधूमत्वावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य वह्नौ सत्त्वात् । न च साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिकस्वरूपसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणाभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वैतद्द्वयप्रतियोगिकत्वहेत्वधिकरणीभू यत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरित्यत्राधिकरणतायां संबन्धविशेषस्यानिवेशेन विभिन्नसंबन्धावच्छिन्नाधिकरणताद्वयं प्रसिद्ध्यति, एकधर्मावच्छिन्नाधिकरणत्वानामपि विभिन्नसंबन्धावच्छिन्नानां संबन्धभेदेन परस्परभेदादिति वाच्यम् । एवंसति धूमवान् वह्नेरित्यत्रातिव्याप्तेस्तादवस्थ्यात् । साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वप्रतियोगिकस्वरूपसंबन्धसामान्ये तादृशाभाव-

प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्व, साध्यतावच्छेदकावच्छिन्नाधिकरणत्वैतद्द्वय-प्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयं नास्तीत्याकारकाभावस्यैव तादृशप्रतीतत्वेन तत्र द्वित्वस्य प्रतियोगितावच्छेदककोटौ एकधर्मावच्छेदेन (साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छिन्नाधिकरणत्वावच्छेदेन) भासमानतया साध्यतावच्छेदकावच्छिन्नाधिकरणतात्व हेत्वधिकरणवृत्त्यभावप्रतियोगित्वावच्छिन्नाधिकरणतात्व व्याप्यत्वविशिष्टपर्याप्तेरेव तद्गतद्वित्वसंबन्धत्वमिति तादृशसंबन्धेन तद्गतद्वित्वमेव तादृशोभयाभावप्रतियोगितावच्छेदकं न त्वधिकरणतात्वमिति तादृशोभयाभावप्रतियोगितावच्छेदकत्वस्य तादृशाधिकरणताद्वयनिष्ठाधिकरणतात्वेऽसत्त्वेन तादृशेतरवारकपर्याप्तिनिवेशेन धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणासंभवात् । साध्यतावच्छेदकावच्छिन्नाधिकरणतात्वतादृशाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतात्वगतद्वित्वस्याभावेन तादृशाभावस्याप्रसिद्ध्या धूमाभावभिन्नाभावस्यैव लक्षणघटकत्वेन तदीयप्रतियोगिताभिन्नप्रतियोगितायाः साध्ये धूमे सत्त्वात् । न चैवमपि साध्यतावच्छेदकावच्छिन्नाधिकरणतायां हेतुसमानाधिकरणाभावीयप्रतियोगित्वावच्छिन्नाधिकरणतायां च किञ्चित्संबन्धावच्छिन्नत्वं निवेश्यम् । तथा च विशेषाभावम् (संयोगसंबन्धावच्छिन्नसाध्यतावच्छेदकधूमत्वावच्छिन्नाधिकरणत्व, समवायसंबन्धावच्छिन्नतादृशधूमाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वैतद्द्वयप्रतियोगिकत्व, यत्किञ्चिद्धेत्वधिकरणव्यक्त्यनुयोगिकत्वोभयाभावम्) आदाय नोक्तदोषः । अत्राधिकरणतात्वस्यापि तादृशोभयाभावप्रतियोगितावच्छेदकत्वम् । तथा च तादृशाधिकरणतात्वस्यापि तादृशोभयाभावप्रतियोगितावच्छेदकत्वम् । तथा च तादृशाधिकरणताद्वयवृत्त्यधिकरणतात्वावच्छिन्नप्रतियोगिताकतादृशोभयाभावो भवतीति धूमाभावो लक्षणघटकस्तदीयप्रतियोगितायाः साध्ये सत्त्वान्नातिव्याप्तिः, आधेयतावच्छेदकयोः संबन्धयोर्भेदेन तादृशाधिकरणतयोर्भेद इति वाच्यम् । एवंसति धूमवान् वह्नेरित्यत्रातिव्याप्तिविरहेऽपि वह्नित्वावच्छिन्नप्रतियोगिकसंयोगेन वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः । अत्र विभिन्नसंबन्धावच्छिन्नतादृशाधिकरणताद्वयप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्य तादृशसंबन्धे सत्त्वेन पूर्वस्येव वह्न्यभावस्य लक्षणघटकत्वापत्त्या तदीयप्रतियोगित्वस्य साध्ये सत्त्वात्, अत्राव्याप्तेरेव ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणताप्रतियोगिकस्वरूप संबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणत्वप्रतियोगिकत्वहेतुसमानाधिकरण तादृशाभावप्रतियोगितावच्छिन्नाधिकरणत्वप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद् व्यक्त्यनु-ोगिकत्वैतत्त्रितयनिष्ठप्रतियोगिताकाभावो न निवेश्यः। न वा साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेतुसमाना-धिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद् व्यक्त्यनुयोगिकत्वैतत्त्रितयाभावो निवेश्यः। तन्निवेशे च साध्यतावच्छेदकसंबन्धा-वच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये तादृशत्रितयाभावः, तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिः। अथवा साध्यतावच्छेदकसंबन्धसामान्ये तादृशत्रितयाभावः, तादृशप्रतियोगिताभिन्नप्रतियोगिता-वत्साध्यसामानाधिकरण्यं व्याप्तिः। धूमवान् वह्नेरित्यत्र साध्यतावच्छेदकावच्छिन्ना-धिकरणत्व, हेतुसमाधिकरणाभावीयधूमत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरण-त्वयोरैक्यन तादृशाधिकरणतागतत्रित्वाभावेन त्रित्वस्य प्रतियोगितानवच्छेदकत्वेन साध्या-भावो न लक्षणघटकः, किन्तु घटाद्यभाव एव तदीयप्रतियोगिताभिन्नधूमत्वावच्छिन्न-प्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् तत्र भवत्यतिव्याप्तिः। अधि-करणतायां किञ्चित्संबन्धावच्छिन्नत्वनिवेशे विभिन्नसंबन्धावच्छिन्नतादृशाधिकरणत्व-द्वयप्रतियोगिकत्व, यत्किञ्चिद्धेत्वधिकरणव्यक्त्यनुयोगिकत्वैतत्त्रितयाभावस्य तादृश-संबन्धसामान्ये सत्त्वेन साध्याभावस्य लक्षणघटकत्वान्न तत्रातिव्याप्तिः। एवं सति वह्निप्रतियोगिकसंयोगेन वह्निमान् धूमादित्यत्र तादृशविभिन्नसंबन्धावच्छिन्नाधिकरणत्व-द्वयप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वैतत्त्रितयाभावस्य तादृशसंबन्धसामान्ये सत्त्वेन साध्याभावस्य लक्षणघटकत्वमिति तदीयप्रतियोगितायाः साध्ये सत्त्वात् तत्राव्याप्तिः। एवं साध्यतावच्छेदकसंबन्धसामान्ये तादृशत्रितयाभावस्य कथने धूमवान् वह्नेरित्यत्रातिव्याप्तिः। अधिकरणतायां किञ्चित्संबन्धावच्छिन्नत्व-निवेशे वह्निप्रतियोगिकसंयोगेन वह्निमान् धूमादित्यत्राव्याप्तिर्बोध्या। न च त्रित्व-मनिवेश्य चतुष्टयादेः तादृशाधिकरणत्वगतस्य वारणाय तन्निवेशः कर्त्तुं शक्यते। तथा हि साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेत्व-

धिकरणवृत्तितादृशाभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्व, यत्किञ्चिद्धेत्वधिकरण व्यक्त्यनुयोगिकत्वैतत्त्रितयनिष्ठत्रित्वनिष्ठावच्छेदकताभिन्ना या या अवच्छेदकता तदनिरूपिता या प्रतियोगिता तत्प्रतियोगितानिरूपकोऽभावः साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसंवन्धसामान्यवृत्तिः तादृशप्रतियोगिताभिन्नप्रतियोगितावत् साध्यसामानाधिकरण्यं व्याप्तिः । अथवा साध्यतावच्छेदकसंवन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणवृत्ति तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद् व्यक्त्यनुयोगिकत्वैतत्त्रितयनिष्ठत्रित्वनिष्ठावच्छेदकताभिन्ना तादृशाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना तादृशानुयोगिकत्वत्वनिष्ठावच्छेदकताभिन्ना या या अवच्छेदकता तत्तदवच्छेदकत्वानिरूपितप्रतियोगिताकाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति वाच्यम् । एवं सति धूमवान् वह्नेरित्यादावति व्याप्तेः । तादृशत्रित्वनिष्ठावच्छेदकताभिन्ना तादृशानुयोगिकत्वत्वनिष्ठावच्छेदकताभिन्ना या साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व हेत्वधिकरणवृत्तितादृशाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वगतैकत्व, हेत्वधिकरणीभूत यत्किञ्चिद्व्यक्त्यनुयोगिकत्वैतद्गतैकत्वैतदेकत्वद्वयवदधिकरणत्वद्वयगतद्वित्वं तन्निष्ठावच्छेदकता तन्निरूपितत्वस्य तादृशाधिकरणत्वद्वयाभावीयप्रतियोगितायां सत्त्वेन साध्याभावो न लक्षणघटकः किन्तु घटाद्यभावस्तदीयप्रतियोगिताभिन्नधूमत्वावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । एवं साध्यतावच्छेदकसंवन्धसामान्ये, किं वा साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसंवन्धसामान्ये तत्तत्प्रत्येकाभावो न निवेश्यः । तत्तत्प्रत्येकं तत्र तत्र सत्त्वेन तत्तत्प्रत्येकाभावस्य तत्र तत्रासत्त्वात् । तथा च धूमवान् वह्नेरित्यत्र साध्याभावो न लक्षणघटकः तदन्यघटाद्यभावप्रतियोगिताभिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् ।

अथ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना, हेत्वधिकरणाभावीयतादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितप्रतियोगिता-

वच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना प्रतियोगितात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपित यादृशप्रतियोगितानिष्ठावच्छेदकताभिन्ननिरूपकत्वनिष्ठावच्छेदकताभिन्नहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वनिष्ठावच्छेदकताभिन्नोभयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकोऽभावस्तादृशसंबन्धसामान्ये तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिः ।

तथा च साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणतादृशाभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वैतद्द्वयप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति व्याप्तिलक्षणघटकोभयाभावीयप्रतियोगितावच्छेदकतायां केवलेतरवारकपर्याप्तिनिवेशः । तथा च धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणप्रतियोगिव्यधिकरणधूमाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वयोरैक्येऽपि धूमाभावो भवति लक्षणघटकः । तादृशाधिकरणत्वोभयनिष्ठप्रतियोगितायां तत्तदधिकरणत्वगतद्वित्वनिष्ठावच्छेदकतानिरूपितत्वस्यासत्त्वेऽपि तत्तदवच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य सत्त्वात् । अथवा साध्यतावच्छेदकसंबन्धावच्छिन्नयादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावो हेत्वधिकरणवृत्तिः, तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणेऽपि धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । तादृशस्वरूपसंबन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाधिकरणत्वाभावस्य हेत्वधिकरणे अयोगोलके सत्त्वेन तदीयप्रतियोगित्वस्यैव धूमे सत्त्वाच्चेति चेन्न । प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपसंबन्धेन प्रमेयवान् वाच्यत्वादित्यत्र हेतुसमानाधिकरणानां सर्वेषाम् अभावानां पारिभाषिकप्रतियोगिव्यधिकरणत्वेन तदीयप्रतियोगिताभिन्नतादृशसंबन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तेः । तथाहि प्रमेयत्वावच्छिन्नस्वरूपेण, तादात्म्येन च प्रमेयस्य केवलान्वयित्वेन प्रमेयत्वावच्छिन्नतत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभावो न प्रसिद्धः । केवलान्वयितावच्छेदकसंबन्धेन तेन रूपेण केवलान्वयिनः सर्वत्र सत्त्वेन तेन-

रूपेण तेन संबन्धेन तदभावस्यासत्वात्। प्रतियोगिमति तदभावो न भवति। तं प्रति प्रतियोगिनः प्रतिबन्धकत्वात्। संयोगसमवायादिसंबन्धेन प्रमेयत्वेन प्रमेयाभावानां सर्वेषां, प्रतियोगिव्यधिकरणत्वेन हेतुसमानाधिकरणानां तेषां या प्रतियोगिता तद्भिन्नसाध्यनिष्ठ- प्रतियोगित्वाप्रसिद्ध्या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वात्। समवायेन प्रमेयत्वेन-प्रमेयाभावप्रतियोगितावच्छेदकं समवेतत्वं धर्मविधया अवच्छेदकं संसर्गविधया समवायः। संयोगेन प्रमेयाभावप्रतियोगितावच्छेदकं धर्मविधया द्रव्यत्वं संसर्गविधया संयोगः। कालिकसंबन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकं धर्मविधया समवेतप्रमेयत्वादिकम्। विषयित्वादीनां वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात्। तेन संबन्धेन प्रमेयत्वेन न प्रमेयाभावः। प्रतियोगिव्यधिकरणवृत्तिमदभावाप्रतियोगित्वं केवलान्वयित्वम्। तादात्म्य, स्वरूपाद्यवच्छिन्नप्रतियोगितायां प्रमेयत्वावच्छेद्यत्वाभावात् तादृशप्रतियोगिताभिन्नप्रतियोगित्वाऽप्रसिद्ध्या अव्याप्तेरेव। एतेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्न प्रतियोगितावच्छेदकं न प्रमेयवह्नित्वादि गुरुधर्मो भवति। संभवति लघौ गुरौ तदभावात्। तथा च प्रमेयवह्निमान् धूमादित्यत्राव्याप्तेर्वारणाय साध्यतावच्छेदकसंबन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना तादृशाधिकरणत्वगतद्वित्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितप्रतियोगित्वनिष्ठावच्छेदकताभिन्नानिरूपकत्वनिष्ठावच्छेदकताभिन्नोभयत्वनिष्ठा (तादृशाधिकरणत्वप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वनिष्ठोभयत्वनिष्ठा) वच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकाभावः, तादृशप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वोभयाभाववत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः।

एवं साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्व हेतुसमानाधिकरणाभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वैतदुभय, हेत्व-

धिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वोभयाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः।

प्रमेयवह्नित्वे तादृशाभावीयप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य सत्त्वेऽपि साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्याभावेन तादृशोभयाभावो वर्तते, प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिर्नभवति। वह्निमान् धूमादित्यत्र वह्नित्वे साध्यतावच्छेदसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽपि तादृशघटाद्यभावप्रतियोगिताभिन्नवह्नित्वावच्छिन्नप्रतियोगितानवच्छेदकत्वस्यासत्त्वेन तदुभयाभावो वर्तते। अथवा साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकावच्छिन्नयादृशप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वैतत्त्रितयाभावः, तादृशप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वोभयाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। अत्रापि साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वत्वनिष्ठावच्छेदकताभिन्ना, एवं हेत्व॰धिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वत्वनिष्ठावच्छेदकताभिन्ना एवं हेत्वधिकरणीभूतयत्किञ्चिद् व्यक्त्यनुयोगिकत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपित तत्त्रितयनिष्ठप्रतियोगिताकाभावः साध्यतावच्छेदकसंबन्धसामान्ये बोध्यः। तादृशप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वोभयाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। व्यभिचारिणि तादृशप्रतियोगिताभिन्नप्रतियोगिता साध्यनिष्ठा न भवतीति नातिव्याप्तिरित्यपि प्रत्युक्तम्। (प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपसंवन्धेन प्रमेयसाध्यकसद्धेतौ प्रमेयत्वादित्यत्राव्याप्तिरिति प्रत्युक्तम्)। नच प्रतियोगितावच्छेदकतायां द्वितीयायां साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यानिवेशनीयतया विषयित्वानुयोगित्वादिना प्रमेयविशिष्टाभावप्रतियोगिताया एव तादृशप्रतियोगिताभिन्नायाः संभवः प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकनिष्ठावच्छेदकतायां संबन्धावच्छिन्नत्वप्रवेशेन तादृशाभावस्य प्रतियोगिवैयधिकरण्यासंभवात् इति वाच्यम्।

(न च साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणाभावीय यादृश प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वैतद्द्वयप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः, इत्यत्रोभयाभावघटकयादृशप्रतियोगितातद्भिन्नप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यानिवेशेन तादृशप्रतियोगिताभिन्ना या विषयित्वसंबन्धावच्छिन्नावच्छेदकताकप्रमेयरूपसाध्यनिष्ठा प्रतियोगिता प्रसिद्धा तस्याः साध्ये सत्त्वात् प्रमेयप्रतियोगिकस्वरूपेण प्रमेयवान् वाच्यत्वादित्यत्र नाव्याप्तिः। प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकतायां (साध्यतावच्छेदकताघटक) संबन्धावच्छिन्नत्वस्य अप्रवेशे तु लक्षणघटकाभावे प्रतियोगिवैयधिकरण्यासंभवः। विषयित्वसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकलक्षणघटकाभावोऽपि स्वरूपसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगित्वाश्रयप्रतियोगि समानाधिकरण इति सर्वे लक्षणघटकाभावाः प्रतियोगिसमानाधिकरणा एवेति प्रतियोगिव्यधिकरणलक्षणघटकोऽभावोऽप्रसिद्धः स्यात्। अतो हेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वमवश्यं निवेश्यं तद्भिन्नप्रतियोगितावच्छेदकतायां संबन्धावच्छिन्नत्वं न निवेश्यमिति वाच्यम्। समवायसंबन्धेन प्रमेयाभावप्रतियोगितायाः स्व (प्रमेयत्व) समानाधिकरण तत्तद्धर्मवत्त्वरूपपरम्परासंबन्धेन लाघवेन (द्रव्यत्वाद्यनेकधर्मे प्रतियोगितावच्छेदकत्वकल्पनापेक्षया लाघवेन) प्रमेयत्वमेव प्रतियोगितावच्छेदकमिति प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसमवायसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावप्रतियोगित्वस्य साध्ये सत्त्वेन तद्भिन्नप्रतियोगितायाः साध्येऽसत्त्वात्। प्रमेयप्रतियोगिकस्वरूपेण प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तेः। एकधर्मावच्छिन्नैकसंबन्धावच्छिन्नप्रतियोगिताया ऐक्यात्। एवं संसर्गीयप्रतियोगितायां द्वित्वावच्छिन्नत्वस्यास्वीकारे साध्यतावच्छेदकावच्छिन्न साध्यतावच्छेकसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धसामान्ये साध्यतावच्छेकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणाभावीययादृशप्रतियोगितावच्छेकावच्छिन्नाधिकरणत्वैतद्द्वयप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चद्व्यक्त्यनुयोगिकत्वोभयाभावस्य विशेषणरूपेण संसर्गताया अस्वीकारे च कथयितुमशक्यत्वेन प्रमेयप्रतियोगिक-

स्वरूपेण प्रमेवान् वाच्यत्वादित्यत्राव्याप्तेः। व्याप्यवृत्तिसाध्यकसद्धेतौ वाच्यं ज्ञेयत्वादित्यत्र हेत्वधिकरणे समवायेन वाच्यत्वाभावमादायाव्याप्तिवारणाय हेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं निवेशनीयं तथा च धनी चैत्रत्वादित्यत्र वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षेऽव्याप्तिः स्वामित्वसंबन्धावच्छिन्नप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्धेः। सिद्धान्ते तु न दोषः। हेतुसमानाधिकरणप्रतियोगिव्यकरणाभाव प्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्व, यत्संबन्धावच्छिन्नत्वोभयाभावः, तेन संबन्धेन तद्धर्मावच्छिन्नसम्वन्धित्वं हेतौ व्याप्ति-प्रकारतायां प्रसिद्धस्य स्वामित्वसंबन्धावच्छिन्नत्वस्य धनत्वावच्छिन्नत्वस्योभयस्य हेतुसमानाधिकरणाभावीयप्रतियोगितायामभावेन तत्संबन्धावच्छिन्नत्वतद्धर्मा वच्छिन्न संबन्धित्वस्य हेतौ सत्त्वात्।

प्रतियोगिताभिन्नप्रतियोगिताकल्पे प्रतियोगितार्धामिकोभयाभावस्य कथयितुमशक्यत्वेन प्रमेयप्रतियोगिकस्वरूपेण प्रमेववान् वाच्यत्वात्, धनी चैत्रत्वादित्यत्र चाव्याप्तिर्दुर्वारा।

तथाहि स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावभिन्नाभावीयप्रतियोगितासामान्ये (स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नप्रतियोगितासामान्ये ;) साध्यतावच्छेकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वोभयाभावः। अथवा साध्यतावच्छेदकसंबन्धानवच्छिन्नत्व, साध्यतावच्छेदकधर्मावच्छिन्नत्वोभयाभावः। किं वा। साध्यतावच्छेदकसंबन्धावच्छिन्नत्व, साध्यतावच्छेकधर्मानवच्छिन्नत्वोभयाभावो निवेश्यः। तथा च तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। आद्ये, वह्निमान् धूमादित्यत्राव्याप्तिः। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसंयोगसंबन्धावच्छिन्नप्रतियोगिताक घटाद्यभावभिन्नकालिकसंबन्धावच्छिन्नघटत्वावच्छिप्रतियोगिताकाभावीय प्रतियोगितायां सामान्यान्तर्गतायां साध्यतावच्छेकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकधर्मातिरिक्तधर्मावच्छिन्नत्वोभयस्यैव सत्त्वेन तस्याः प्रतियोगितायाः लक्षणाघटकत्वात् (तत्रोभयाभावस्यासत्त्वेनोभयाभावस्य तादृशप्रतियोगित्वाव्यापकत्वापत्तेः।) न द्वितीयः,

संयोगेन वह्निमान् धूमादित्यत्रैवाव्याप्तेः । प्रतियोगिव्यधिकरणहेतुससमानाधिकरणाभावभिन्नाभावीयकालिकसंवन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितायां सामान्यान्तर्गतायां साध्यतावच्छेकसंवन्धानवच्छिन्नत्व, साध्यतावच्छेदकधर्मावच्छिन्नत्वोभयस्यैव सत्त्वात् । नान्त्यः, संयोगेन वह्निमान् धूमादित्यत्राव्याप्तेः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावभिन्नाभावीयसंयोगसंवन्धावच्छिन्नद्रव्यत्वावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदकसंवन्धावच्छिन्नत्व, साध्यतावच्छेदकधर्मानवच्छिन्नत्वोभयस्यैव सत्त्वात् । तादृशोभयाभावस्य तादृश प्रतियोगित्वाव्यापकत्वात् नच प्रतियोगितावच्छेदकसंवन्धेन-प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगिताभिन्नयत्किञ्चित्प्रतियोगितायां यत्साध्यतावच्छेदकसम्वन्धातिरिक्तसंवन्धावच्छिन्नत्व, यत्साध्यतावच्छेदकधर्मातिरिक्तधर्मावच्छिन्नत्वोभयाभावः तेन संवन्धेन तद्धर्मावच्छिन्नसामाधिकरण्यं हेतौ व्याप्तिरिति विवक्षायां नोक्तदोषः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसंयोगसंवन्धावच्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगिताभिन्नसंयोगसंवन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसंयोगातिरिक्तसंवन्धावच्छिन्नत्व,यत्साध्यतावच्छेदकवह्नित्वातिरिक्तघटत्वादिधर्मावच्छिन्नत्वोभयाभावस्य सत्त्वादिति वाच्यम् । एवं सति धूमवान् वह्नेरित्यत्राति व्याप्तेः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणधूमाभावीयप्रतियोगिताभिन्नसंयोगसंबन्धावच्छिन्नद्रव्यत्वावच्छिन्नयत्किञ्चित् प्रतियोगितायां यत्साध्यतावच्छेदकसंवन्धातिरिक्तसंबन्धावच्छिन्नत्व, यत्साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नत्वोभयाभावः तेन संयोगसंवधेन तद्धर्मावच्छिन्नसामानाधिरण्यस्य वह्नौ सत्त्वात् । न च गुरुधर्मावच्छिन्नसाध्यकप्रमेयवह्निमान् धूमादित्यत्र अव्याप्तिवारणाय प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगित्वावृत्तियत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। वृत्तिता च । स्वविशिष्टसंवन्धिनिष्ठाभाव प्रतियोगितानवच्छेदकावच्छिन्नप्रतियोगितातादात्म्यसंबन्धन । वह्निसमानाधिकरण प्रतियोगिव्यधिकरणधूमाभावप्रतियोगितायां साध्यतावच्छेदकं धूमत्वं वर्तत एवेति धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । धूमत्वविशिष्टधूमसंबन्धि पर्वतादिवृत्ति घटाद्यभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नप्रतियोगितातादात्म्यस्य धूमत्वावच्छिन्न

संयोगसंबन्धावच्छिन्नप्रतियोगितायां सत्त्वेन तत्र धूमत्वस्य वृत्तित्वमिति तत्र धूमत्वे साध्यतावच्छेदके अवृत्तित्वस्यासत्त्वात् । संयोगेन प्रमेयवह्निमान् धूमादित्यत्र नाव्याप्तिः। धूमसमानधिकरणप्रतियोगिव्यधिकरणघटाद्यभावप्रतियोगितायां धूमत्वविशिष्ट धूमसंबन्धिपर्वतादिवृत्तिघटाद्यभावीयप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न प्रतियोगितातादात्म्यस्यासत्त्वेन प्रमेयवह्नित्वस्य तत्र प्रतियोगितायामवृत्तित्वमिति संयोगेन प्रमेयवह्नित्वावच्छिसामानाधिकरण्स्य धूमे सत्त्वादिति वाच्यम् । एवंसति धूमवान् वह्नेरित्यत्रातिव्याप्तेः। वह्निसमानाधिकरणप्रतियोगिव्यधिकरणधूमाभावप्रतियोगितायां धूमत्वविशिष्टधूमसंबन्धिपर्वतादिवृत्त्यभावीययत्किञ्चित्प्रतियोगितानवच्छेदकद्रव्यत्वावच्छिन्नप्रतियोगितातादात्म्यस्यासत्त्वेन तेन संबन्धेन धूमत्वस्य तत्प्रतियोगितायाम् अवृत्तित्वात् तदवच्छिन्नसामानाधिकरण्यस्य वह्नौ सत्त्वात् ।

प्रतियोगिताभिन्नप्रतियोगिताकल्पे सिद्धान्तापेक्षया च यमेव विशेषम् आलोचयामः । प्रति योगिताभिन्नप्रतियोगिताकल्पे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकस्यावृत्तित्वम् स्वविशिष्टसंवन्धिनिष्ठाभाव प्रतियोतिानवच्छेदकावच्छिन्नप्रतियोगितातादात्म्यसंवन्धो गुरुभूतः परम्परासंबन्धः। सिद्धान्ते च कल्पे संसर्गविघयानुगमे लघूभूतस्य तादृशानवच्छेदकधर्मावच्छिन्नत्व मात्रस्य संसर्गत्वमिति ।

एतेन प्रतियोगितायां निविष्टस्य हेतुमन्निष्ठाभावीयप्रतियोगित्वावृत्ति यद्धर्मविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितानवच्छेकावच्छिन्नप्रतियोगितातादात्म्यम् तद्धर्मावच्छिन्नसामानाधिकण्यस्य व्याप्तित्वमिति निरस्तम् । सिद्धान्तकल्पापेक्षयाऽनतिविशेषात् । सिद्धान्ते प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता सामान्यनिष्ठस्य गुरुधर्मावच्छिन्नसाध्यकाव्याप्तिवारकोभयाभावस्य अत्र ( प्रयियोगिता भिन्नप्रतियोगिताकल्पे )साध्यप्रतियोगित्वावृत्तित्वस्य चैकपर्यवसायित्वादिति ध्येयम् । ( अनवच्छेदकत्वानुसरणसिद्धान्तकल्पापेक्षया अत्र कल्पे नातिविशेपाच्च । तथाहि सिद्धान्ते प्रमेयवह्निमान् धूमादित्यत्रातिव्याप्तेर्वारणायप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीप्रतियोगितासामान्ये यद्धर्मावछिन्नत्वमनिवेश्य यद्धर्मविशिष्टसंवन्धि निष्ठाभावप्रतियोगितानवच्छेदकानवच्छिन्नत्व, यत्संबन्धावछिन्नत्वोभयाभावस्तेन संबन्धेन

तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्युच्यते । अत्र कल्पे च प्रतियोगिव्यधिकरण-हेतुसमानाधिकरणाभावप्रतियोगित्वावृत्तियद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नप्रतियोगितातादात्म्यं तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विशेषः । सिद्धान्ते तादृशप्रतियोगितासामान्यनिष्ठस्य गुरुधर्मावच्छिन्नसाध्यकाव्याप्तिवारकोभयाभावस्य, अत्र कल्पे तादृशप्रतियोगित्वावृत्तित्वस्य तादृशप्रतियोगितातादात्म्यनिष्ठस्य चैकपर्यवसायित्वादिति ध्येयम् ।

यत्तु एतत्कल्पे प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिताभिन्नप्रतियोगितानवच्छेदकत्व, यत्किञ्चिद्धेत्वधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वोभयाभावस्तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । प्रमेयवह्नित्वे तादृशप्रतियोगितानवच्छेदकत्वस्य सत्त्वेऽपि तादृशनिरूपकतानवच्छेदकत्वस्याभावेन तादृशोभयाभाव इति न तत्राव्याप्तिः । निरूपकतावच्छेदकत्वाभावश्च साध्यतावच्छेदकसंबन्धावच्छिन्ननिरूपकतावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः । धूमवान् वह्नेरित्यत्र वह्निसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिताभिन्नसंयोगसंबन्धावच्छिन्नद्रव्यत्वावच्छिन्नयत्किञ्चित्प्रतियोगितानवच्छेदकत्वस्य हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्ययोगोलकनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वस्य च धूमत्वे सत्त्वेन तदुभयाभावस्य तत्रासत्त्वान्नातिव्याप्तिः । वह्निमान् धूमादित्यत्र नाव्याप्तिः । साध्यतावच्छेदके वह्नित्वे धूमसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिताभिन्नसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगितानवच्छेदकत्वाभावेन तादृशोभयाभावस्य सत्त्वात् ।

नन्वव्याप्त्यतिव्याप्त्योरभावेन तादृशस्वरूपेण तादृशनिरूपकतावच्छेदकत्वाभावः साध्यतावच्छेदके किमर्थमुच्यते ? अयोगोलकनिष्ठाधिकरणतानिरूपितकालिकसंबन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य धूमत्वे सत्त्वेन तादृशनिरूपकतानवच्छेदकत्वाभावात् तादृशोभयाभावस्य साध्यतावच्छेदके धूमत्वे सत्त्वेन तदवच्छिन्नसाध्यसामानाधिकरण्यस्य वह्नौ सत्त्वात् । धूमवान् वह्नेरित्यत्रातिव्याप्तिः । तदुक्तौ च नोक्तदोषः । कालिकसंबन्धा-

वच्छिन्न धूमनिष्ठनिरूपकतावच्छेदकतायाः साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नधूमनिष्ठनिरूपकतावच्छेदकत्वीयस्वरूपसंवन्धस्य व्यधिकरणत्वेन एतत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्य साध्यतावच्छेदके धूमत्वे सत्त्वेन तादृशोभयाभावस्य धूमत्वे-सत्त्वात्। तन्न। प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपेण प्रमेयवान् वाच्यत्वादित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रति ोगिताभिन्नप्रतियोगित्वस्याप्रसिद्धयाव्याप्त्यापत्तेः। तादात्म्यप्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपान्यतरसंवन्धेन प्रमेयस्य केवलान्वयित्वेन तयोरन्यतरेण प्रमेयत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। समवाय, संयोगादिसंवन्धावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगितायाश्च हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयत्वमिति तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वेन तत्राव्याप्तेः। न च हेत्वधिकरणे साध्यतावच्छेदकसंवन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व, तादात्म्यसंवन्धावच्छिन्नहेतुसमानाधिकरणाभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। एवं सति प्रमेयवह्निमान् धूमादित्यत्र नाव्याप्तिः। हेत्वधिकरणे पर्वते संयोगसंबन्धावच्छिन्नप्रमेयवह्नित्वावच्छिन्नाधिकरणत्वस्य सत्त्वेऽपि घटवान्नेतिभेदीयप्रतियोगित्वावच्छिन्नतादात्म्यसंबन्धावच्छिन्नसंवन्धितानिरूपितसंबन्धित्वस्य पर्वतेऽसत्त्वेन तत्र तदुभयाभावो वर्तत इति तत्प्रतियोगिताभिन्नसंयोगसंवन्धावच्छिन्नवह्नित्वावच्छिन्ना प्रतियोगिता तदवच्छेदकं वह्नित्वं प्रमेयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तादृशप्रमेयवह्नित्वावच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वात्। धूमवान् वह्नेरित्यत्र हेत्वधिकरणे अयोगोलके तादृशधूमाधिकरणत्वस्य तादृशप्रतियोगितावच्छेदक धूमत्वावच्छिन्नाधिकरणत्वस्य चासत्त्वेन तदुभयाभावो वर्तते तादृशप्रतियोगिताभिन्नसाध्यनिष्ठप्रतियोगिताया असत्त्वेन तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वात् नातिव्याप्तिरिति वाच्यम्। प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपेण प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तेः। तादृशप्रतियोगिताभिन्नप्रतियोगिताया असत्त्वेन तादृशप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वात्। प्रमेयत्वावच्छिन्नप्रतियोगिकस्वरूपेण प्रमेयत्वेन साध्याभावोऽप्रसिद्धः।

समवाय, संयोगादिसंवन्धेन प्रमेयाभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वेन तदीयप्रतियोगित्वस्यैव साध्ये सत्त्वात् ।

कश्चित्तु हेत्वधिकरणे साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणत्व, हेत्वधिकरणवृत्त्यभावीययादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावः तादृशप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यद्धर्मविशिष्टनिष्ठाभावप्रतियोगितानवच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र प्रमेयवह्निमान् धूमादित्यत्राव्याप्तिः । साध्याधिकरणत्वस्य गुरुधर्मावच्छिन्नत्वेन तद्घटितोभयाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकत्वेनाप्रसिद्धेः । संयोगेन प्रमेयधूमवान् वह्नेरित्यत्रातिव्याप्तेश्च । प्रमेयधूमत्वावच्छिन्नाधिकरणत्वस्य गुरुधर्मत्वेन तद्घटितोभयाभावस्याप्रसिद्धया साध्याभावीयप्रतियोगितायाः यादृशप्रतियोगितापदेनाग्राह्यतया तादृशघटत्वावच्छिन्नप्रतियोगिताभिन्नसाध्यनिष्ठधूमत्वावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् ।

संयोगसंवन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताविशिष्टवान् वह्नेरित्यत्रातिव्याप्तेश्च । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व, तादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वयोश्चैक्येन तादृशसाध्याभावघटिततादृशोभयाभावस्याप्रसिद्धया साध्याभावीयप्रतियोगिता न लक्षणघटकाभावीया किन्तु घटाभावीया तत्प्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । न च साध्यतावच्छेदकसंवन्धावच्छिन्न साध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणतात्वनिष्ठावच्छेदकताभिन्ना अथ च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीययादृशप्रतियोगित्वावच्छेदकावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना एवमुभयत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितावच्छेदकतानिरूपितप्रतियोगितानिरूपकाभावो हेत्वधिकरणवृत्तिः, तादृशप्रतियोगिताभिन्नप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणे नोक्तदोषः । साध्याधिकरणत्व, तादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वयोरैक्येऽपि ईदृशेतरवारकपर्याप्तिनिवेशेन धूमाभावप्रतियोगित्वाश्रयसाध्या

धिकरणत्व, हेतुमन्निष्ठसाध्याभावप्रतियोगित्वावच्छिन्नाधिकरणत्वघटितोभयाभावस्य लक्षणघटकत्वमिति तादृशप्रतियोगितायाः एव साध्ये सत्त्वेन तद्भिन्नसाध्यनिष्ठप्रतियोगिताया असत्त्वादिति वाच्यम् । एवं सति प्रमेयवह्नित्वावच्छिन्नाधिकरणत्वाभावस्य प्रमेयवह्नित्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वाभावस्य च तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वेन प्रमेयवह्नित्वावच्छिन्नाधिकरणतात्वावच्छिन्नप्रतियोगिताकत्वाभावात् तत्प्रतियोगितावच्छेदकत्वस्य तद्व्यक्तित्वे एव लाघवेन कल्पनीयत्वेन प्रमेयवह्नित्वावच्छिन्नाधिकरणतात्वे तत्प्रतियोगितावच्छेदकत्वाकल्पनात् प्रमेयवह्नित्वावच्छिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्ना या तद्व्यक्तित्वनिष्ठावच्छेदकता तन्निरूपितत्वस्य तादृशोभयाभावीयप्रतियोगितायां सत्त्वेन साध्याभावो न लक्षणघटक इत्यन्याभावप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वेन प्रमेयवह्निमान् प्रमेयत्वात्; प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । न च साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतात्वसमानाधिकरणतद्व्यक्तित्वनिष्ठावच्छेदकताभिन्ना अथ च हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीय यादृशप्रतियोगित्वावच्छिन्नाधिकरणतात्वसमानाधिकरण तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्ना उभयत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितप्रतियोगिताकाभावो हेत्वधिकरणे निवेश्यः, तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणे नोक्तदोषः । प्रमेयवह्निमान् धूमादित्यत्र तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । प्रमेयवह्निमान् प्रमेयत्वादित्यत्र प्रमेयधूमवान् वह्नेरित्यत्र च नातिव्याप्तिः । तादृशप्रतियोगिताभिन्नसाध्यनिष्ठ प्रतियोगिताया असत्त्वेन तादृशप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वादिति वाच्यम् । एवं महानसे पर्वतीयवह्नित्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वस्य तादात्म्यसंबन्धावच्छिन्नपर्वतीयवह्निमत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वाभावस्य वा सत्त्वेन, एवं पर्वते महानसीयवह्न्यभावं तद्वतो भेदञ्चादाय साध्याभावोऽपि लक्षणघटक इति तादृशप्रतियोगिताभिन्न साध्यनिष्ठ प्रतियोगिताया अप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः । न च साध्यसाध्यवतोरन्यतराभावस्य प्रतियोगिवैयधिकरण्य वारणाय तादृशाभावत्वा (साध्यसाध्यवतोरन्यतराभावत्वा) वच्छिन्ना-

नुयोगिताकपर्याप्तिप्रतियोगिभेदकूटत्वावच्छिन्नाधिकरणत्वं हेत्वधिकरणे निवेश्यमिति पर्वतीयवह्नित्वावच्छिन्नाभावोऽपि कूटान्तर्गतः । स च न हेत्वधिकणे पर्वते वर्तते इति वह्न्यभावो न लक्षणघटकः, तद्भिन्नाभाव एव लक्षणघटक इति तदीयप्रतियोगिताभिन्नप्रतियोगितावत् साध्यसामानाधिकरण्यस्य हेतौ सत्त्वेन वह्निमान् धूमादित्यत्र नाव्याप्तिरिति वाच्यम् । एवं सति साध्याधिकरणत्वाभावस्य हेत्वधिकरणेऽसत्त्वेन प्रतियोगिवैयधिकरण्याभावस्याप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्तेस्तादवस्थ्यात् । न च तादृशकूटं न निवेश्यं किन्तु साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वव्यक्तित्व, हेतुसमानाधिकरणाभावीययादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वव्यक्तित्वैतद्द्वयनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकोभयाभावो हेत्वधिकरणे निवेश्यः, तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणे वह्निमान् धूमादित्यत्र नाव्याप्तिरिति वाच्यम् । एवं सति वाच्यं ज्ञेयत्वादित्यत्राव्याप्त्यापत्तेः । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणत्व, हेतुसमानाधिकरणाभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्व व्यक्तिद्वयाभावीयप्रतियोगितावच्छेदकं लाघवात् तादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वगततद्व्यक्तित्वमेवेति तादृशाधिकरणत्वद्वयगतव्यक्तिद्वयं न प्रतियोगितावच्छेदकमिति तादृशाधिकरणत्वगतद्वयव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेः । न चात्रोभयाभावप्रतियोगितायां तादृशाधिकरणत्वद्वयगततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वं न निवेश्यं किन्तु हेत्वधिकरणवृत्त्यभावीयप्रतियोगित्वावच्छिन्नाधिकरणत्वगततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वमात्रं तादृशोभयाभावीयप्रतियोगितायां निवेश्यमिति वाच्यं ज्ञेयत्वा दित्यत्र नाव्याप्तिः । हेत्वधिकरणे पटे घटत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वाभावस्य तादृशस्य सत्त्वेन तदीयप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वादिति वाच्यम् । एवं सत्ति कूटानिवेशे तादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वनिष्ठतद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वमात्रस्य तादृशोभयाभावीयप्रतियोगितायां निवेशे धूमवान् वह्नेरित्यत्र द्रव्याभावमादायातिव्याप्त्यापत्तेः । हेत्वधिकरणे अयोगोलके संयोगेन धूमरूपद्रव्यत्वाधिकरणत्वाभावीयप्रतियोगितायां तादृशप्रतियोगित्वावच्छिन्नाधिकरणत्वगततद्व्यक्तित्वनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वेन

तादृशद्रव्यत्वावच्छिन्नप्रतियोगिताभिन्नधूमत्वावच्छिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । अवच्छेदकत्वयोः द्रव्यत्वधूमत्वयोः भेदेन तदवच्छिन्नप्रतियोगितयोर्भेदादित्याह तन्न युक्तम् ।

साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्ना हेतुसमानाधिकरणाभावीययादृशप्रतियोगित्वावच्छिन्नाधिकरणतात्वसमानाधिकरणोभयावृत्तिधर्मनिष्ठावच्छेदकताभिन्ना, उभयत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिततदुभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नवत्त्वस्य हेत्वधिकरणे विवक्षायां दोषाभावात् । तथा च तादृशभेदकूटवद् यद्धेत्वधिकरणं तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । प्रमेयवह्निमान् धूमादित्यत्र नाव्याप्तिः । गुरुधर्मावच्छिन्नाधिकरणतात्वसमानाधिकरणतद्व्यक्तित्व, हेत्वधिकरणवृत्त्यभावीययादृशघटत्वावच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणतात्वसमानाधिकरणतद्व्यक्तित्वोभयत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपित तत्तदवच्छेदकतानिरूपितप्रतियोगिताकाभावस्य हेत्वधिकरणवृत्तित्वेन तत्तदवच्छेदकतानिरूपितप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वात् । प्रतियोगितावच्छेदकं च पारिभाषिकं बोध्यम् ।

प्रमेयधूमवान् वह्नेरित्यत्र नातिव्याप्तिः । न वा धूमत्वावच्छिन्नप्रतियोगितावद्वान् वह्नेरित्यत्रातिव्याप्तिः । तादृशतत्तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य उभयत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य च हेतुसमानाधिकरणसाध्याभावीयप्रतियोगिताघटितोभयाभावीयप्रतियोगितायां सत्त्वेन साध्याभावप्रतियोगिता भवति लक्षणघटिका तत्प्रतियोगित्वस्य साध्ये सत्त्वात् तत्प्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वात् ।

यद्यपि प्रतियोगिताभिन्न प्रतियोगिताकल्पेऽपि गुरुधर्मस्य प्रतियोगितावच्छेदकत्व-

कल्पे, वृत्त्यनियामकसंबन्धस्य च प्रतियोगितावच्छेदकत्वकल्पे न पारिभाषिकावच्छेदकत्वविवक्षा प्रयोजनवती (हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मवत्समानाधिकरणाभावप्रतियोगितानवच्छेदकमिति विवक्षा न प्रयोजनवती)। प्रमेयधूमवान् वह्नेरित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावीयप्रतियोगितायाः साध्ये सत्त्वेन तादृशप्रतियोगिताभिन्नप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतावसत्त्वान्नातिव्याप्तिः। धनी प्रमेयत्वादित्यत्र व्याप्यवृत्तिसाध्यकव्याप्तिलक्षणस्य नातिव्याप्तिः। लक्षणघटकप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्यात्र निवेश आवश्यकः। अन्यथा प्रमेयत्ववान् वाच्यत्वादित्यत्र व्यधिकरणसंबन्धेन साध्याभावमादायाव्याप्त्यापत्तेः। तथापि स्वामित्वसंबन्धावच्छिन्नसाध्याभावीयप्रतियोगित्वस्य साध्ये सत्त्वेन तत्प्रतियोगिताभिन्नप्रतियोगितावत् साध्यसामानाधिकरण्यस्य हेतावसत्त्वात्। धूमवान् वह्नेरित्यत्र तादृशधूमाभावीयप्रतियोगिताभिन्नजातिमान् नास्तीत्यभावीयप्रतियोगितावत्साध्यसामानाधिकरण्यस्य हेतौ सत्त्वेनातिव्याप्तिः, तद्वारणाय तत्प्रतियोगिताभिन्नप्रतियोगिता विशिष्टा या साध्यता तद्वत्साध्यसामानाधिकरण्यं व्याप्तिरित्यपि न विवक्षणीयम्। वै०। स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्व स्ववृत्तित्वोभयसंबन्धेन। साध्यतायाः प्रतियोगितावृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धेन। उभयत्रवै० स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्ववृत्तित्वैतच्चतुष्टयसंबन्धेन। वृत्तित्वञ्चोभयत्र। स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन। गुरुधर्मस्य, वृत्त्यनियामकसंबन्धस्य च प्रतियोगितावच्छेदकत्वमिति कल्पे प्रमेयवह्निमान् धूमादित्यत्र धनी चैत्रत्वादित्यत्र च नाव्याप्तिः, नवाऽतिव्याप्तिः। उभयमतानुरोधेनानवच्छेदकत्वानुसरणं सिद्धान्तकल्पम्। पारिभाषिकवैयधिकरण्यस्य चिन्तामणिदीधित्यादिषु अलभ्यतया व्याख्यातृभिरनुपादेयत्वात्। प्रतियोगिताभिन्नप्रतियोगिताकल्पे च गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं वृत्त्यनियामकसंबन्धस्य च प्रतियोगितावच्छेदकत्वं चाङ्गीकरणीयमिति गौरवं प्रदर्शितं तदपि दोषतया ग्राह्यम्। न च गदाधरमते सिद्धान्ते अनवच्छेदकत्वानुसरणे वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिवारणाय तादृशाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वादिं

विशेषणम्, प्रतियोगिताभिन्नप्रतियोगिताकल्पे न तद्विशेषणमिति लाघवमिति वाच्यम् । प्रागुक्तप्रतियोगिता वच्छेदकतापर्याप्तेः, प्रागुक्तसाध्यतायां प्रतियोगिताविशिष्टत्वस्य वा-एकत्वादेः पर्याप्त्यनभ्युपगमपक्षे वह्निमान् धूमादित्यत्राव्याप्तिसंपादकत्वात् । सिद्धान्त-कल्पे प्रतियोगिताधर्मिकोभयाभावकल्पे निष्कृष्टविशेषणापेक्षया गुरुत्वाच्चेति दिक् ।

इति प्रतियोगिताभिन्नप्रतियोगिताकल्पः ।२।

## अथाभावभिन्नाभावकल्पः

अथ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावभिन्नाभावप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरस्तु किमर्थमनवच्छेदकत्वानुसरणेनेति चेन्न । व्यधिकरणसंवन्धेन साध्याभावमादाय वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेर्वारणायं व्याप्यवृत्तिसाध्यकव्याप्तौ हेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकसंवन्धावच्छिन्नत्वस्य निवेशेन तस्य लक्षणस्य धूमवान् वह्नेरित्यत्रातिव्याप्तेः । हेतुसमानाधिकरणसमवायसंवन्धावच्छिन्नप्रतियोगिताकाभावभिन्नसंयोगसंवन्धावच्छिन्नधूमत्वावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वे सत्त्वात् । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वपक्षे प्रमेयवह्निमान् धूमादित्यत्राव्याप्तेश्च । तादृशाभावभिन्नाभावप्रतियोगितावच्छेदकत्वस्य प्रमेयवह्नित्वेऽसत्त्वात् । यद्यपि अभावभिन्नाभावकल्पे पटो घटाभावभिन्नः पटत्वादित्यत्राव्याप्तिः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावस्तद्भेदस्य घटाभावभेदाभावे साध्याभावेऽसत्त्वात् । भेदाभावस्य प्रतियोगित्वरूपत्वमितिपक्षे घटाभावघटाभावभेदाभावयोरैक्यात् । न च तादृशाभाववृत्त्यनुयोगिताभिन्नानुयोगिताप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षणे नोक्तदोषः । निरूपकप्रतियोगितयोर्भेदेन घटाभावत्वघटाभावभेदाभावत्वयोरनुयोगितयोर्भेदादिति वाच्यम् । एवं सति पटः संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभिन्नो वाच्यत्वादित्यत्रातिव्याप्तेः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावत्वरूपानुयोगितानिरूपितत्वस्य साध्याभावीयप्रतियोगितायां सत्त्वात् । संयोगसंवन्धावच्छिन्नवाच्यत्वाभावभिन्नाभावस्य

(संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभेदाभावस्य) साध्याभावरूपस्य वाच्यत्वाभावत्वरूपतया तस्य च (वाच्यत्वाभावस्य च) तादृशानुयोगिता (हेतुसमानाधिकरण प्रतियोगिव्यधिकरणसाध्याभाववृत्त्यनुयोगिता) भिन्नत्वात्। भेदाभावस्य स्व (भेद) प्रतियोगितावच्छेदकरूपत्वात्। संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभेदस्य प्रतियोगितावच्छेदकं वाच्यत्वाभावत्वं तत्स्वरूपो वाच्यत्वाभावभेदाभाव इति बोध्यम्।

तथापि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभाववृत्त्यनुयोगिताभिन्नानुयोगिताविशिष्टा या प्रतियोगिता तदवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात्। वैं० स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन। भेदाभावश्च भेदप्रतियोगितारूप इति पञ्चलक्षण्यां मथुरानाथेन प्रतिपादितम्। (पटो घटान्योन्याभाववान् पटत्वात्, अयं घटः घटत्वादित्यत्र पञ्चलक्षण्याम्)। एवं च पटः संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभिन्नो वाच्यत्वादित्यत्र नातिव्याप्तिः। कश्चित्तु उक्तलक्षणानां व्यभिचारज्ञानाप्रतिबध्यत्वेन न व्याप्तित्वम्। व्यभिचारज्ञानप्रतिबध्यत्वस्यैव व्याप्तित्वात्। व्यभिचारो हि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकम्, किं वा हेतौ साध्याभाववदवृत्तित्वम्। तद्वत्ताबुद्धिं तदभाववत्तानिश्चयः प्रतिबध्नाति। अभावाभिन्नाभावघटितां बुद्धिं न प्रतिबध्नाति व्यभिचारबुद्धिरिति। तन्नयुक्तम्। व्यभिचारस्य व्याप्त्यनुसारेण निर्वाच्यत्वात्। असमानाकारकयोरपि व्याप्तिव्यभिचारज्ञानयोः प्रतिबध्यप्रतिबन्धकभावाङ्गीकाराच्च। कथमन्यथा प्रतियोगिताधर्मिकोभयाभावादीनां व्याप्तिघटकत्वं दीधितिकाराद्यनुमतं सङ्गच्छेत। कथं वा व्याप्तिग्रहविचारे चिन्तामणिकृता साध्याभाववद् वृत्तित्वस्य व्यभिचारत्वं व्यापकसामानाधिकरण्यस्य च व्याप्तित्वं वक्ष्यते। इत्यमेव व्याप्यवृत्तिसाध्यकस्थले हेत्वधिकरणनिरूपितवृत्तितावच्छेदकभिन्नवृत्तितावच्छेदकाभावत्वनिरूपितप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यपि निरस्तम् इत्यलंपल्लवितेन। वाच्यं ज्ञेयत्वादित्यत्राव्याप्तेः। स्वरूपसंबन्धावच्छिन्न वाच्यत्वत्वावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धेः। अन्येषामभावानां हेत्वधिकरणवृत्तित्वात्।

प्रमेयवह्न्यभावीयगुरुधर्मावच्छिन्नप्रतियोगिताया अप्रसिद्ध्या तादृशाभावीयसाध्यनिष्ठप्रतियोगित्वस्याप्रसिद्ध्याऽव्याप्तिरिति प्रतियोगिताभिन्नप्रतियोगिताकल्प इव सर्वे दोषा अनुसन्धेयाः । इत्यभावभिन्नाभावकल्पः ।

---

## अथ नञोऽन्तरार्थकत्वकल्पः ।

अथ नञोऽन्तरार्थकत्वेऽपि वह्निमान् धूमादित्यत्र तत्तद्व्यक्त्यभावमादाय प्रसञ्जिताया अव्याप्तेर्वारणसंभवात् नञ्व्यत्यासो नोचितः । तथा हि हेतुसमानाधिकरणप्रतियोगिव्यधिकरण भावप्रतियोगितावच्छेदकावच्छिन्नान्तरत्वञ्च तदवच्छिन्नाविषयकप्रतीतिविषयत्वम् । तदनवच्छिन्नप्रकारताश्रयत्वं वा । तस्य साध्यतावच्छेदकावच्छिन्ने साध्यतावच्छेदके लभ्यते तदवच्छेदकत्वम् । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतत्तद्व्यक्तित्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य बह्नित्वेसाध्यतावच्छेदके सत्त्वेनबह्निमान् धूमादित्यत्र नाव्याप्तिः । एवञ्चप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यंहेतौ व्याप्तिरिति फलितम् । धूमवान् वह्नेरित्यत्र तादृशाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य धूमत्वे साध्यतावच्छेदकेऽसत्त्वेन नातिव्याप्तिः । न चात्र तदवच्छिन्नान्तरत्वम् तद्वच्छिन्नाविषयकप्रतीतिविपयत्वमेवास्तु किमर्थं तदनवच्छिन्नप्रकारताश्रयत्वमिति द्वितीयकल्पानुसरणेनेति वाच्यम् । तथासति धूमवान्वह्नेरित्यत्र तादृशाभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाविषयिकाया द्रव्यमित्याकारिकाप्रतीतिः तत्प्रतीतिविषयतावच्छेदकत्वस्य धूमत्वेऽसत्वेनातिव्याप्तिविरहेऽपि यत्र सद्धेतुविशेषे साध्यज्ञानं हेत्वधिकरणावृत्तिपदार्थविषयकमेव भवति तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वेन तत्राव्याप्तेः । हेत्वधिकरणवृत्तिप्रतियोगिव्यधिकरणाभावः हेत्वधिकरणावृत्तिपदार्थस्याभावः तदीयप्रतियोगितावच्छेदकावच्छिन्नविषयिकैव साध्यविषयिका प्रतीतिः न तु तदविषयिकेति तादृशप्रतीतेरप्रसिद्धे । आदृते च द्वितीयकल्पे नोक्तदोषः । तादृशाभावप्रतियोगितावच्छेदकानवच्छिन्नप्रकारताश्रयत्वस्य साध्यतावच्छेदके सत्त्वात् । एवञ्च साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वमपि पर्वतो वह्निमान धूमादित्यत्र महानसीयवह्निर्नास्तीत्यभावमादायाव्याप्तिवारणाय विशेषणं लक्षणघटकाभावीयप्रतियोगितायामनुपादेयम् । तादृशमहानसीयवह्न्यभावप्रतियोगितावच्छेदकानवच्छिन्नप्रकारतावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न नञोऽन्तरार्थकत्वे

नञ्व्यत्यासकल्पापेक्षयाऽतिगौरवात् । न चात्र कल्पे लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं विशेषणं न देयं भवति; नञ्व्यत्यासकल्पे च देयमित्यत्र कल्पे लाघवमिति वाच्यम् । वह्निमान् धूमादित्यत्र वह्निघटोभयाभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नविषयकप्रतीतिविषयत्वस्य वह्नौ तदनवच्छिन्नप्रकारताश्रयत्वस्य असत्त्वेनाव्याप्तेर्वारणाय प्रकारान्तरस्योभयकल्पे आवश्यकत्वं तेनैवोभयाभावस्यवारणं भवतीति पृथक्तयासाध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्यलक्षणघटकाभावीयप्रतियोगितायाम् अनिवेशेन अस्मिन्कल्पेलाघवस्य सत्त्वात् । न च तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदक यत् यादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति वाच्यम् । पर्वतो वह्निमान् धूमादित्यत्रमहानसीयवह्न्यभावीयप्रतियोगितावच्छेदकता महानसीयत्ववह्नित्वोभयपर्याप्ता सैव वह्नित्ववृत्तित्वेन पर्याप्त्या वह्नित्वमात्रवृत्तिः । एवं यादृशप्रतीतिविषयतेत्यादिष्वपि बोध्यम्, तद्दोषवारणाय पर्याप्तिप्रतियोगितायां निरूपितत्वसंबन्धावच्छिन्नानुयोगित्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितत्वं वक्तव्यम् । एवमन्येष्वपि यादृशविषयतादिषु बोध्यम् । तथा च चतुर्षु पर्याप्तिप्रतियोगितासु अनुयोगित्वनिष्ठनिरूपितत्वसंबंधावच्छिन्नावच्छेदकताभिन्नाअवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या या अवच्छेदकता तदनिरूपितत्वचतुष्टयस्य तादृशानुयोगिताचतुष्टयस्य चैतत्कल्पे तत्रप्रविष्टत्वेन, एतत्कल्पे यद्यपि साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं लक्षणघटकाभावीयप्रतियोगितायां न प्रविष्टम् तथापि नञ्व्ययासकल्पापेक्षयाऽतिगौरवात । उभयपक्षे एकत्वादेः पर्याप्त्यभ्युपगमे एव पर्याप्तिनिवेशः संभवति । नञ्व्यत्यासकल्पे लक्षणघटकाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र पर्याप्तिप्रतियोगितायाम्, अनुयोगित्वनिष्ठनिरूपितत्वसंवन्धावच्छिन्नावच्छेदकताभिन्ना अवच्छेदकतात्वनिष्ठाच्छे

दकताभिन्ना या अवच्छेदकता तदनिरूपितत्वस्य द्विधा प्रवेशः । नञोऽन्तरार्थकत्वपक्षे तस्य चतुर्धा निवेशः, इत्येतत्कल्पापेक्षया नञ्व्यत्यासकल्पे लाघवेन गुरुमतस्यैतत्कल्पस्य हेयत्वात् । नचैतत्कल्पे साध्यतावच्छेदकगतरूपे यादृशप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं न निवेश्यं व्यर्थत्वात् । तथा च उभयपक्षेपर्याप्तिनिवेशः समान इति वाच्यम् । ज्ञानं विषयितया तार्णवह्निमत् तार्णविषयकवह्निविषयकसमूहालम्बनविषयकज्ञानत्वादित्यत्रातिव्याप्तेः । लक्षणघटकसाध्याभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदक रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयता केवलवह्निविषयता केवलतार्णविषयता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । तन्निवेशे च नोक्तदोषः । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तार्णत्ववह्नित्वगतद्वित्वम्, वह्निरिति प्रतीतिविषयता, तार्णं इति प्रतीतिविषयता तत्तद्विषयतानिरूपितावच्छेदतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितातावच्छेदकं च वह्नित्वगतमेकत्वम् तार्णत्वगतैकत्वमित्युभयोर्भेदात् । किं वा तादृशविषयताशून्यकेवलवह्निविषयकेवलतार्णविषयकज्ञानविषयतावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

यत्तु पर्याप्तिघटितकल्पस्योभयोः पक्षयोरसंभवः । हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकत्वादेरनेकपर्याप्ततया(हेतु-हेतुत्वाधिकरणाधिकरणत्वाभावाभावत्वधूमत्वाद्यनेकपर्याप्ततया ।) साध्यतावच्छेदकधूमत्वगतैकत्वादेः धूमसमानाधिकरणभावप्रतियोगितानवच्छेदकत्वात् (तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकप र्प्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्ति प्रतियोग्यवच्छेदकतावद्धर्मावच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । किं वा तादृशाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य साध्यतावच्छेदकधूमत्वगतैकत्वे सत्त्वाद् धूमवान्वह्नेरित्यत्रातिव्याप्तिरिति) तत्तुच्छम् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वादिनिष्ठपर्याप्तिप्रतियोगितायाः तद्व्यक्ति (धूमो नास्तीत्यत्राभावीयप्रतियोगितावच्छेदकधूमत्वादिव्यक्ति) निष्ठानुयोगित्वनिष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना, अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितप्रतियोगितात्वेन लक्षणघटकत्वमिति

धूमत्वादिव्यक्तिनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य धूमत्वादिगतैकत्वे सत्वान्नोक्तदोषः। धूम इति प्रतीतिविषयतावच्छेदकधूमत्वगतैकत्वम्, तादृशधूमाभावप्रतियोगितावच्छेदकावच्छिन्नविषयताशून्यप्रतीतिविषयतावच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्वेन धूमवान् वह्नेरित्यत्र नातिव्याप्तिः। अथवा हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतानिष्ठपर्याप्तीयप्रतियोगिताविशिष्टत्वेनरूपस्य(तादृशाभावप्रतियोगितावच्छेदकनिष्ठावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावाच्छेदकरूपस्य) लक्षणे निवेशात्। पर्याप्त्यनुयोगितावच्छेदकरूपे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिष्ठपर्याप्तीयप्रतियोगितावैशिष्टयञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। तथा च नोक्तदोषः। तादृशानुयोगितायाः किञ्चिद्तत्तद्धर्मरूपतद्व्यक्तिवृत्तित्वेन तदनुयोगितावच्छेदकत्वस्य किञ्चित्तत्तद्धर्मरूपतद्व्यक्तिगतैकत्वद्वित्वादिषु सत्वात्। संबन्धस्य व्यक्तिविशेष एक एव प्रतियोगी भवति। तथा च वक्ष्यमाणमहानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारकविशेषणघटितनञ् व्यत्यासकल्पापेक्षया नञोऽन्तरार्थकत्वपक्षे एव महद्गौरवं बोध्यम्। साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदनावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र पर्याप्तिरेकवारमपि न निवेशिता भवत्पक्षे द्विवारं निवेशिता।

अथ यत्तु प्रतियोगितावाच्छेदिकाविषयकप्रतीतिविषयसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यपेक्षयाऽपि नञोऽन्तरार्थकत्वपक्षे(तदवच्छिन्नाविषयकप्रतीतिविषय(त्वपक्षे) गौरवमिति भट्टाचार्येणोक्तम्। तदसमञ्जसम्। वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायास्य पक्षस्य दुष्टत्वेन दुष्टैतदवधिकगुरुत्वस्य नञोऽन्तरार्थकत्वपक्षे गौरवस्यादोषात्। तथाहि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमहानसीयवह्नित्वस्य साध्यतावच्छेदकवह्नित्वस्य च विशिष्टः शुद्धान्नातिरिच्यत इति नियमेनोभयोरैक्यात्, प्रतियोगितावच्छेदकमहानसीयवह्नित्वाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदके वह्नित्वेऽसत्त्वात् भवति वह्निमान् धूमादित्यत्राव्याप्त्याऽस्य पक्षस्य दुष्टत्वं स्पष्टम्। तदवच्छिन्नाविषयकप्रतीतिविषयत्वम्, किं वा तदनवच्छिन्नप्रकारताश्रय-

त्वम् नञोऽन्तरार्थकत्वमित्यत्र तद्धर्मावच्छिन्नधर्मिणो धर्मस्य च ग्रहणम् प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वमित्यत्रधर्ममात्रस्य ग्रहणमिति तदपेक्षया (नञोऽन्तरार्थकत्वापेक्षया) लाघवम्। एतदपक्षेया (प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वापेक्षया) गौरवमिति सुस्पष्टम्, तन्न। प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वं साध्यतावच्छेदके इति पक्षस्य दुष्टत्वेन दुष्टलक्षणापेक्षया नञोऽन्तरार्थकत्वपक्षे गौरवकथनं न युक्तमिति। पर्याप्तिघटितनिवेशश्चात्राशक्य एव। तथा हि हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीय प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविपयताशून्यप्रतीतिविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं साध्यतावच्छेदकगतरूपे विवक्षणीयम्। विषयताया रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। तथा च प्र.ियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयताशून्यप्रतितिविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्य वच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरितिफलितम्। एवं सति महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तिः। हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकमहानसीयत्व, वह्नित्वगतद्वित्ववृत्तिविषयत्वस्यासंभावात्। सावच्छिन्ननिरवच्छिन्नावच्छेदकतयोरेकपर्याप्तीया प्रतियोगिता न संभवति, इति तत्तत्प्रतियोगितानिरूपिताया एकस्या अनुयोगिताया अभावेन तदवच्छेदकत्वस्य महानसीयत्व वह्नित्वगतद्वित्वे वाधात्। महानसीयत्वे वह्नित्वे च या विषयता तस्या महानसीयवह्नित्वावच्छिन्नविषयतातोभेद इति। एवञ्च हेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं महानसीयत्वगतमेकत्वं बह्नित्वगतमेकत्वञ्च न तु महानसीयत्व बह्नित्वगतद्वित्वं भवितुमर्हति। सावच्छिन्ननिरवच्छिन्नावच्छेदकतयोर्भेदेन तन्निष्ठप्रतियोगितयोरपि भेद इति निरूपकभेदेनानुयोगितयोरपि भेद इति तादृशानुयोगितावच्छेदकं न महानसीयत्वबह्नित्वगत द्वित्वं भवति। अतो हेतुसमानाधिकरणप्रतियोगिव्यधिकरणभावो घटाभावएव लक्षणघटकोन तु महानसीयबह्न्यभाव-

स्तस्य प्रतियोगिसमानाधिकरणत्वात् इति तादृशप्रतियोगितावच्छेदकगतारूपवृत्तिविषयता घटत्वावच्छिन्नविषयतैव न तु महानसीयबह्लित्वावच्छिन्नाविषयतातच्छून्यप्रतीतिविषयता महानसीयबह्निनिष्ठा तद्विषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य धूमे सत्त्वात्।

महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्राव्याप्तिः। हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावः महानसीयो नास्ति वह्निर्नास्तीत्यभावः तदीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं न महानसीयत्वगतैकत्वं न वा-बह्नित्वगतैकत्वं किन्तु तद् विपरीतं तद्गतविषयताशून्याप्रतीतिः न महानसीयविषयिका न वा बह्निविषयिका किन्तु घटादिविषयिकैव तादृशविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं न महानसीयत्वगतैकत्वं न वा वह्नित्वगतैकत्वञ्चेति घटत्वगतैकत्ववृत्तिविषयतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकघटत्वगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्य हेतावसत्त्वात्। एवञ्च महानसीयबह्निमान् धूमादित्यत्र किं वा महानसीयवह्निमान् ज्ञानादित्यत्रेत्यन्तरस्मिन् दोषो वर्तत एवेति।

न च यत्किञ्चिज् ज्ञाननिष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना अथ च विषयतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितस्व (विषयता) निष्ठा प्रतियोगिता (पर्याप्तीया प्रतियोगिता) निरूपकपर्याप्त्यनुयोगितावच्छेदकत्व संबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त नुयोगितावच्छेदकरूपवृत्तिविषयता तादृशविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपा-वच्छिन्नानुयोगिताकर्याप्तिप्रतियोग्य वच्छेदकतावत्साध्यतावछेदकावच्छिन्नसमानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणीयमिति महानसीयबह्निमान् धूमादित्यत्र नातिव्याप्तिः। तादृशसंबन्धेन महानसीयबह्निविषयता तादृशमहानसीयबह्न्यभावप्रतियोगितावच्छेदकमहानसीयत्वबह्नित्वगतरूपे वर्तते तद्विषयताशून्या प्रतीतिः न महानसीयबह्निविषयिका किन्तु घटादिविषयिकैवेति घटत्वगतरूपवृत्तिर्न महान

सीयवह्निविषयतेति वाच्यम् । महानसीयत्ववह्नित्वोभयमात्रविषयकज्ञानासंभवात् । महानसीयत्वत्वादेः महानसादेर्वाऽवश्यमानादिति । (यत्किञ्चिज्ज्ञाननिष्ठनिरूपितत्व-संबन्धावच्छिन्नावच्छेदकताभिन्ना अथ च विषयतात्वनिष्ठावच्छेदकताभिन्ना या महासीयत्वत्वनिष्ठा अवच्छेदकता तन्निरूपितत्वस्यैव विषयतानिष्ठपर्याप्तिप्रतियोगितायां सत्त्वेन हेतु-समानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिविषयताया अप्रसिद्धया महानसीयवह्निमान् धूमादित्यत्र किं वा महानसीय-बह्निमान् तज्ज्ञानत्वादित्यत्र दोषस्य तादवस्थ्यात् इति चेत् अबोधजृम्भितमेतत् । मुख्य शेपाष्यतानिरूपितप्रकारतात्वेन निषयतां विवेश्य उक्तरीत्या निवेशे दोषाभावात् । तादृश-रूपाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदकगतरूपे निवेशेदोषाभावाच्चेति । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वाव च्छिन्नप्रतियोग ताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिः या मुख्यविशेष्यतानिरूपिता प्रकारता तच्छून्य-प्रतीतीया मुख्यविशेष्यतानिरूपितप्रकारता तादृशप्रकारतात्वावच्छिन्नप्रतियगिताक पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेकतावत्साध्यताव च्छेकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात् । तादृशरूपवृत्ति विषयता, तच्छून्यप्रीतिविषयता च मुख्यविशेष्यतानिरूपितप्रकारतात्वेन ग्राह्या ।

अथवा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक-तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु योगितावच्छेदकरूपाविषयकप्रतीतिविषयीभूतरूपा-वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतावत्साध्यतावच्छेदकावच्छिन्नसामानाधि-करण्यं हेतौ व्याप्तिरिति विवक्षणेऽपि महासीय वह्निमान् धूमादित्यत्र नातिव्याप्तिः । तादृशरूपशून्यप्रतीतिविषयत्वस्य साध्यतावच्छेदकगतरूपेऽसत्त्वात् महानसीयबह्निमान् तज्ज्ञानत्वादित्यत्र नाव्याप्तिः । तादृशरूपशून्यप्रतीतिविषयत्वस्य साध्यताच्छेदकगतरूपे सत्वात् । महानसीयबह्निमान् तज्ज्ञानत्वादित्यत्रवनाव्याप्तिः । तादृशरूपशून्यप्रतीति विषयत्वस्य साध्यतावच्छेदकगतरूपे सत्त्वादिति । महानसीयह्निनिष्ठमुख्यविशेष्यतानि रूपितप्रकारता बाह्नित्वनिष्ठा महानसीयत्वनिष्ठा च ते प्रकारते स्ववृत्तिप्रकार-तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन महानसीयत्वगतैकत्वे बह्नित्वगतैकत्वे च वर्तेते तादृशप्रकारताशून्या प्रतीतिः न महानसीयत्वगतैकत्व-विषयिका बह्नित्वगतैकत्व विषयका प्रतीतिरिति तादृशप्रकारताशून्यप्रतीतिविषयत्वस्य

साध्यतावच्छेदकगतरूपेऽसत्त्वात् न तत्रातिव्याप्तिः । महानसीयवह्निमान तज्ज्ञानत्वादित्यत्र नोक्तदोषः । तादृशविषयताशून्यप्रतीतिविषयत्वस्य साध्यतावच्छेदकरूपे सत्त्वात् ।

इति नञोऽन्तरार्थकत्वकल्पः

अथ साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकभेदकल्पः ।

अथोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकावच्छिन्नप्र ियोगिताकभेद एव सामानाधिकरण्यसंबन्धेन साध्यतावच्छेदके विशेषणमस्तु, किमनवच्छेदकत्वानुसरणेन ? तथा च प्रतियोगिव्यधिकरणहेतुसमानाकरणाभावीयप्रतियोगितावच्छेदकवच्छिन्ननिष्ठोभयावृत्तिधर्मावच्छिन्न प्रतियोगिताकभेदसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नसमानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । धूमत्वावच्छिन्नघटोभयभेदमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणाय उभयावृत्तीति । वह्नित्वे तादृशप्रतियोगितावच्छेदकतद्व्यक्तित्वावच्छिन्ननिष्ठतादृशाप्रतियोगिताकभेदस्य साध्यनिष्ठस्य सामानाधिकरण्यसबन्धेन सत्वेन वह्निमान्धूमादित्यत्र नाव्याप्तिः । पर्वतावच्छेदेन महानसीयवह्निरूपतद्व्यक्तिभेदस्य तादृशस्य वह्नौ सत्त्वेन समानाधिकरण्यसंबन्धेन वह्नित्वे सत्त्वात् । नच धूमवान् वह्नेरित्यत्रातिव्याप्तिः । महानसीयधूमरूपतद्व्यक्तिभेदस्य पर्वतीयधूमे सत्त्वेन सामानाधिकरण्यसंबन्धेन धूमत्वे सत्त्वादिति वाच्यम् । तादृशाभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नभेदवत्वस्य सामानाधिकरण्यसंबन्धेन साध्यतावच्छेदके धूमत्वेऽसत्त्वात् । पर्वतीयधूमव्यक्तिभेदोऽपि कूटन्तर्गतः, स च न पर्वतीयधूमव्यक्तौ वर्तते । वह्निनिष्ठतद्व्यक्तित्वावच्छिन्नभेदकटस्य प्रत्येकं वह्निषु सत्त्वेन सामानाधिकरण्यसंबन्धेन वह्नित्वे सत्त्वान्न तत्तद्व्यक्त्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिः । न वा महानसीयवह्न्यभावमादाय वक्ष्यमाणाव्याप्तिरिति किमर्थमनवच्छेदकत्वानुसरणेन किमिति नञ्व्यत्यासव्याख्यानुसरणेनेति चेन्न । धूमव्यक्तिभेदकटस्य स्वप्रतियोगिभिन्नतत्तद्व्यक्तिषु वृत्तित्वेन समानाधिकरण्यसंबन्धेन साध्यता-

वच्छेदके धूमत्वे सत्त्वमिति धूमवान् वह्नेरित्यत्रातिव्याप्तेः। पार्वतीयधूमे महानसीयधूमभेदस्य महानसीयधूमे पार्वतीयधूमभेदस्य च सत्त्वात्।

सत्तावान् जातेरित्यत्र हेत्वधिकरणे गुणे विशिष्टसत्ताभावमादायाव्याप्तेश्च। तादृशप्रतियोगितावच्छेदकावच्छिन्नसत्त्वेनिष्ठप्रतियोगिताकभेदकूटस्य साध्ये सत्त्वेऽसत्त्वेन सामानाधिकरण्यसंबन्धेन साध्यतावच्छेदके सत्तात्वेऽसत्त्वात्। नहि भवति विशेषभेदः सामान्ये। अन्यथा घटो न नीलघट इत्यापद्येत ननु। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकप्रतियोगिताकभेदत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्नभेद एव सामानाधिकरण्यसंबन्धेन साध्यतावच्छेदके निवेश्यः। तथा च धूमसामान्यभेदस्यापि तादृशकूटान्तर्गतत्वेन तस्य सामानाधिकरण्यसंबन्धेन धूमत्वेऽसत्त्वात्। धूमवान् वह्नेरित्यत्र नातिव्याप्तिः। भेदस्य स्वप्रतियोगितावच्छेदकेन सह विरोधात्। धूमसामान्याभावस्यापि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणत्वेन तदीयप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकप्रतियोगिताकत्वस्य धूमसामान्यभेदे सत्त्वात्। तदभेदसामानाधिकरण्यस्य साध्यतावच्छेदकेऽसत्त्वात्। न चैवमपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकमहानसीयत्ववह्नित्वनिष्ठावच्छेदकतासमानाधिकरणवह्नित्वनिष्ठावच्छेदकताकप्रतियोगिताकवह्निर्नेति भेदस्य वह्नौ असत्वेन वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम्। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां वक्ष्यमाणसाध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य निवेशेनैव तत्र महासीयवह्न्यभावो न लक्षणघटक इति तत्राव्याप्त्यभावोपपत्तेरिति चेन्न। गगनवान् तज्ज्ञानत्वादित्यत्र तत्तद्व्यक्त्यभावमादायाव्याप्तेः। सामान्ये विशेषभेदस्यासत्त्वेन सामानाधिकरण्यसंबन्धेन तस्य भेदस्य साध्यतावच्छेदके गगनत्वेऽसत्त्वात्। अनुयोग्यवृत्तिधर्मो हि भेदप्रतियोगितावच्छेदक इति नियमः। अन्यथा घटे द्रव्यभेदापत्तेः। एकस्मिन् गगने तत्तद्गगनभेदस्यासत्त्वेन सामानाधिकरण्यसंबन्धेन तस्य भेदस्य साध्यतावच्छेदके गगनत्वेऽसत्त्वात्। यद्यपि प्रतियोगितायः प्रतियोगितावच्छेदकरूपत्वेन साध्यतावच्छेदके तादृशाभावीयप्रतियोगिताभेद एव लाघवान्निवेशयितुंयुक्तः किं प्रतियोगितावच्छेदकभेदनिवेशन। तथापि प्रतियोग्यभावोभयरूपत्वे,

ग्रतिरिक्तत्वे वा व्यभिचारिमात्रेऽतिव्याप्तिः। धूमवान् वह्नेरित्यत्र संयोगेन धूमाभावीयतादृशप्रतियोगिताभेदस्य धूमत्वे साध्यतावच्छेदके सत्त्वेन तदवच्छिन्न-सामानाधिकरण्यस्य वह्नौ सत्त्वात्। तद्वारणाय तादृशाभावप्रतियोगिताभेदमुपेक्ष्य सकलमतसाधारण्याय तादृशप्रतियोगितावच्छेदकभेदः साध्यावच्छेदके ग्रादृतः।

यत्तु प्रतियोगितावच्छेदकावच्छिन्नं तादात्म्येन वाच्यम्। व्यभिचारिणि तु साध्यभेदमादायैव न दोष इति। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरण-भेदप्रतियोगितावाच्छेदकेन तादात्म्येनावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्येव सामञ्जस्ये साध्यतावच्छेदके प्रतियोगितावच्छेदकभेदो न निवेश्यो गौरवात्। धूमवान् वह्नेरित्यत्र हेत्वधिकरणे अयोगोलके धूमवान् नेति भेदप्रतियोगितावच्छेदकधूमेन तादात्म्येनावच्छिन्नो धूमः तस्य भेदो न साध्ये वर्तते इति नातिव्याप्तिः। घटवान् नेतिभेदं हेत्वधिकरणे ग्रादाय वन्हिमान् धूमादित्यत्र नाव्याप्तिरिति। तन्न युक्तम्। अवृत्तिगगनादेरपि व्यापकत्वापत्तेः। घटादौ गगनवान् नेति भेदो न लक्षणघटको गगनस्यावृत्तित्वेन गगनवतोऽप्रसिद्धेः। किन्तु पटवान् नेति भेदो लक्षणघटकस्तदीय-प्रतियोगितावच्छेदकेन पटेन तादात्म्येनावच्छिन्नः पटः तद्भेदस्य गगने सत्वात् गगनस्य पटव्यापकत्वापत्तेः। तदवच्छिन्नसामानाधिकरण्यस्य ( संबन्धित्वस्य ) प्रमेयत्वे सत्वेन तादात्म्येन गगनवान् प्रमेयत्वादित्यत्रातिव्याप्त्यापत्तेश्च। वह्निमान् धूमादित्यत्र हेत्व-धिकरणे पर्वते महानसीयवह्निरूपतद्व्यक्तिभेदं चालिनीन्यायेनादाय तदीयप्रतियोगिता-वच्छेदकतद्व्यक्त्या तादात्म्येनावच्छिन्ना सैव व्यक्तिः तदभेदस्य साध्येऽसत्वेनाव्याप्तेश्च ज्ञानं विषयितया जातिमत् तज्ज्ञानत्वादित्यत्राव्याप्तेः। हेत्वाधिकरणे तज्ज्ञाने जाति-मद्भेदस्य सत्वेन तदीयप्रतियोगितावच्छेदकजात्या तादात्म्येनावच्छिन्ना जातिः तस्या भेदो जातौ साध्येऽसत्वात्। एवं ज्ञानं विषयितया जातिमत् तज्ज्ञानत्वादित्यत्र हेत्व-धिकरणे तज्ज्ञाने द्रव्यं नेतिभेदमादायाव्याप्तेः। तादृशभेदीयप्रतियोगितावच्छेदिकया द्रव्यत्वजात्या तादात्म्येनावच्छिन्ना द्रव्यत्वजातिरेव तद्भेदस्य साध्ये जाते वसत्वेन तद्वत्साध्यसामानाधिकरण्यस्य हेतावसत्वात्।

इति साध्यतावच्छेदके तादृश प्रतियोगितावच्छेदकभेदकल्पः।

अथ वह्निमान् धूमादित्यत्र तत्तद्व्यक्त्यभावमादायाव्याप्तिवारणाय

साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकत्वाभावनिवेश आवश्यकः। परन्तु अवच्छेदकतात्वेनावच्छेदकताया निवेशो व्यर्थः। तादृशाभावप्रतियोगितानिरूपिताभाववत्साध्यतावच्छेदकावच्छिन्नसायानाधिकरण्यं हेतौ व्याप्तिरिति कथनेनैव निर्वाहात्। तथा च लाघवात् तादृशाभावप्रतियोगितानिरूपितत्वेनैव प्रतियोगितावच्छेदकता निवेश्यताम् अलमवच्छेदकतात्वेन तन्निवेशेनेति चेन्न। प्रमेयवान् घटत्वादित्यत्राव्याप्तेः। साध्यतावच्छेदकस्य प्रमेयत्वस्य केवलान्वयित्वेन तादृशप्रतियोगितायामपि वृत्तित्वमिति तादृशप्रतियोगितानिरूपितात्वस्य प्रमेयत्वनिष्ठाधेयतायामपि सत्त्वेन तादृशप्रतियोगितानिरूपपितत्वाभावस्य साध्यतावच्छेदके प्रमेयत्वेऽसत्त्वात्। तदुक्तौ तु नोक्तदोषः। तादृशप्रतियोगितावच्छेदकत्वस्य पटत्वादौ सत्त्वेन तदभावस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वात्।

यत्तु प्रतितोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्ननिरूपकाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्येवास्तु तादृशप्रतियोगितावच्छेदकतानिष्ठप्रतियोगिताया उपादानं किमर्थमिति। तत्तुच्छम्। आधेयत्वाधिकरणत्वयोः परस्परनिरूप्यनिरूपकभावेन तदवच्छेदकतयोरपि निरूप्यनिरूपकभावः। स्वस्य स्वाभावाभावरूपत्वमिति हेत्वधिकरणायोगोलकवृत्ति धूमाभावप्रतियोगितावच्छेदकतात्ववच्छिन्नाधेयतानिरूपकत्वेन तस्य धूमत्वात्वरूपाभावस्य धूमत्वे सत्त्वेन तादृशाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नाधेयत्वस्य निरूपकाभावः धूमत्वत्वरूपः तस्य साध्यतावच्छेदके धूमत्वे सत्त्वात्, तदवच्छिन्नसामानाधिकरण्यस्य वह्नौ सत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेः। तादृशाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगितानिरूपकाभावेतिकथने तु नोक्तदोषः। तादृशावच्छेदकतानिष्ठप्रतियोगितायाः निरूपकं न धूमत्वत्वं किन्तु तादृशावच्छेदकत्वाभाव एव तस्य प्रतियोगिना (अवच्छेदकत्वेन सह) सहानवस्थानेन धूमत्वेऽसत्वात्

ननु प्रतियोगिव्यधिकरणहेतुसनाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपकत्वेनाभावः प्रवेश्याताम् किमभावत्वेन, तस्य (अभावस्य) प्रवेशेन गौरवादिति चेन्न। प्रतियोगितातदवच्छेदकतयोः परस्परनिरूप्यनिरूपकभावेनावच्छेदक

त्वसाध्यकव्यभिचारिणि अतिप्रसङ्गादिति। धूमत्वं धूमाभावप्रतियोगितावच्छेदकतावत प्रमेयत्वादित्यत्रातिव्याप्तेः। धूमाभावप्रतियोगितावच्छेदकधूमत्वनिष्ठावच्छेदकतात्व निष्ठावच्छेदकतायां (तादृशावच्छेदकत्वाभावीयावच्छेदकत्व निष्ठप्रतियोगितावच्छेदक तायां) धूमाभावप्रतियोगितावच्छेदकतारूपसाध्यनिष्ठप्रतियोगितानिरूपितत्वस्य सत्त्वेन प्रतियोगितानिरूपकत्वस्यापि सत्त्वात्। तस्य च स्वाभावाभावरूपत्वात्। तथा च तादृशप्रतियोगितानिरूपकोऽभावः साध्यतावच्छेदकतारूपः तदवत्साध्यता-वच्छेदकावच्छिन्नमेंामानाधिकरण्यस्य हेतौ सत्त्वात्।

अथ यद्यपीत्यादि। न च पर्वते महानसीयवह्निर्नास्तीत्यादिप्रतीति-सिद्धस्येत्यादि। जा० टी०।

अत्र सामान्याभावस्य साधयिष्यमाणतया विशेषाभावकूटातिरिक्तसामानान्याभा-वस्य सिद्धत्वेन महानसीयवह्न्यभावमपहाय महानसीयवह्निर्नास्तीति प्रतीतिसिद्धस्येत्युक्तम्। तथा च सामान्याभावोऽतिरिक्तो भवतु नवोभयथाऽपि उक्तप्रतीतौ (महानसीय-वह्निर्नास्तीतिप्रतीतौ) महासीयवह्निमत्त्वाबुद्धिविरोधितायां प्रतियोग्यंशे महानसीयत्व वह्नित्वस्य च भासमानत्वेन तदवच्छिन्नप्रतियोगिताकाभावत्वेननैवाभावस्य भासमानतया तद्विषयाभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकतायः कथञ्चिदपि न वह्नित्वे क्षतिरिति भावः। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधि-करणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वेन तदभावस्यासत्त्वात् वह्निमान् धूमादित्यत्राव्याप्तिरिति भावः। ननु लक्षणघटकाभावीय प्रतियोगितायां निरवच्छिन्नसाध्यवच्छेदकतालीयव्याप्तिघटिकायाम् अग्रे वक्ष्य-माणं निरवच्छिन्नावच्छेदकतानिरूपितत्वं विशेषणम्। अन्यथा महानसीयवह्निवृत्तित्व विशिष्टजातिमान् नास्तीत्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः। तच्च-सावच्छिन्नावच्छेदकत्वानिरूपितत्वं वाच्यम्, तावतैव महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। महानसीयत्वत्वावच्छिन्नसावच्छिन्नमहानसीत्व-निष्ठावच्छेदकतानिरूपितत्वस्यापि महानसीयवह्न्यभावप्रतियोगितायां सत्त्वात्। सा-वच्छिन्नसाध्यतावच्छेदकस्थलीयव्याप्तावपि जातिमद्वान् घटत्वादित्यत्र घटे पटसमवे-तत्वविशिष्टजातिमान् नास्तीत्यभावमादायाव्याप्तिवारणाय लक्षणघटकाभावीयप्रति-

योगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वं साध्यतावच्छेकतावच्छेदकेतरावच्छिन्नावच्छेदकत्वानिरूपितत्वरूपमेव विवक्षणीयम्। तथा च वह्नित्वाश्रयवान् धूमादित्यत्रमहानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यभावमादाय साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वादिविशेषणसत्त्वेऽपि अव्याप्तिरिति निरस्तमिति चेन्न। निरवच्छिन्नसाध्यतावच्छेदकस्थलीयव्याप्तौ महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तेः। साध्याभावीयप्रतियोगितायां सावच्छिन्नावछेदकत्वानिरूपितत्वस्यासत्त्वेन साध्याभावस्य न लक्षणघटकत्वमिति तदन्याभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। एवञ्चास्यां व्याप्तौ प्रतियोगितायां निरवच्छिन्नावच्छेदकतानिरूपितत्वस्य साविच्छन्नावच्छेदकत्वानिरूपितत्वरूपत्वं विवक्षितुमशक्यमिति बह्निमान् धूमादित्यत्र महानसीयबह्न्यभावमादायाव्याप्तेस्तादवस्थ्यम्, तद्वारणाय साध्यतावच्छेदकतदितरोभयानवच्छिन्नं लक्षणघटकाभावीयप्रतियोगितायां विशेषणं वक्ष्यमाणमावश्यकमेव।

अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमते कालो गोत्ववान् कालत्वादित्यत्र सृष्टिकालवृत्तित्वविशिष्टघटत्वाद्यभावस्यैव प्रतियोगिव्यधिकरणतया तत्प्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपितत्वरूपविशेषणविरहेणाव्याप्तेः। साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वरूपविशेषणस्य तत्र सत्त्वेन तस्याः प्रतियोगितायाः लक्षणघटकत्वमिति तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् न तत्राव्याप्तिः। यस्याभावः स प्रतियोगी, तत्प्रागभावःतद्ध्वंसश्चेत्येतत्त्रितयप्रतियोगिकत्वम् अत्यन्ताभावस्य केचिन्यन्ते। सावच्छिन्नावच्छेदकतास्थलीयव्याप्तिलक्षणेऽपि लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नावच्छेकतानिरूपिता निरूपितत्वरूपविशेषणस्य साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्ननिरूपितत्वमर्थो युक्तः। इदमत्रावधेयम्। यत्र क्वचित् अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वम् उक्तम्, तत्प्रतियोगिन इव ध्वंसप्रागभावयोरत्यन्ताभावविरोधित्वेनोपचपितप्रतियोगित्वम् तयोर्मुख्यप्रतियोगित्वेऽपि घटनिष्ठप्रतियोगित्वात् तयोर्निष्ठं प्रतियोगित्वं भिन्नं भवतु वा मा भवतुप्रतियोगितावच्छेदकं तु घटत्वमेव। ध्वंसत्व, प्रागभावत्वयोरनुपस्थितावपि अभावबुद्ध्युपपत्तेः। घटत्वाद्यनुपस्थितौ न भवति घटात्यन्ताभावबुद्धिः। एवञ्च घटादिव्यक्त्यभावस्य न प्रतियोगिवैयधिकरण्यं दुर्लभम्। अन्यथा घटादिध्वं-

साभावघटादिप्रागभावयोरन्यतरस्य सर्वत्र विद्यमानत्वेन तदत्यन्ताभावे प्रतियोगिवैयधिकरण्यं दुर्लभं स्यात् (इदं कथनं घटध्वंसप्रागभावयोः समवायिकारणानिष्ठत्वमितिमतभिन्नमते बोध्यम्) घटाधिकरणे घटाभावस्यासत्त्वात् भवति घटाभावः प्रतियोगिव्यधिकरणः। न भवति तत्संबन्धेनतद्वति तेन संबन्धे तदभावोऽवृत्तां विनेति। अस्तु वा घटात्यन्ताभावबुद्धौ अभावांशे घटस्य घटत्वावच्छिन्नप्रतियोगित्वं घटध्वंसत्वघटप्रागभावत्वावच्छिन्नप्रतियोगित्वयोरेव भानम्। घटध्वंसत्वघटप्रागभावत्वयोः प्रतियोगितावच्छेदकत्वेऽपि घटाभावविशेषणतानवच्छेदकत्वादेवं न ध्वंसप्रागभावबुद्ध्यपेक्षा। तथापि अभावघटितनिरुक्तौ (व्याप्तौ) घटत्वावच्छिन्नप्रतियोगित्वस्य हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावीयत्वसंभवेन गोत्ववान् कालत्वादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिदोषावसरः।

यत्तु वह्निमान् धूमादित्यत्र सावच्छिन्नावच्छेदकताकप्रतियोगिताक महानसीयवह्न्यभावमादायाव्याप्तिविरहेऽपि तार्णवह्न्यभावमादायाव्याप्तिः। तदभावस्य सावच्छिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकत्वेन लक्षणघटकत्वं तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात्। तार्णत्ववह्नित्वनिष्ठयोरवच्छेदकतयोः निरवच्छिन्नत्वेन तदभावस्य लक्षणटकत्वम्। अतएव "न च पर्वते महानसीयवह्निर्नास्तीत्यादिप्रतीतिसिद्धस्य" इत्यत्रादिग्रहणमुपात्तम् अर्थवदिति। तत्तुच्छम्। वह्नित्वादिसांकर्येण तार्णवह्नितदितरसाधारणतार्णत्वजातेरभावात् तार्णत्वस्य तार्णवह्नि तदितरतृणसंन्ध्युभयवृत्तित्वेन वह्नित्वस्यापि तथात्वेन च परस्परात्यन्ताभावयोरेकत्र तार्णवह्नौ तार्णत्ववह्नित्वयोः समावेशेन वह्नित्वेन तार्णत्वस्य सांकर्यं स्यात्। वह्निवैजात्यतार्णत्वस्य प्रतियोगिप्रकारत्वे तु तार्णत्वमात्रस्य प्रतियोगितावच्छेदकत्वं न वह्नित्वस्य। तथा च तार्णवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। तत्प्रतियोगितावच्छेकत्वाभावस्य साध्यतावच्छेदके सत्त्वात्। यदि सांकर्यं न जातिबाधकं गुरुधर्मः प्रतियोगितावच्छेदक इदानीमभिमतः तदा तार्णवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिदानं समुचितमेव। परे तु, गोत्वेनेमं जानामीत्यनुव्यवसायान्यथानुपपत्त्या उल्लिख्यमानजातेः समवायान्यसंबन्धेनस्वरूपतो भानस्य व्यवस्थापितत्वेन कालिकेन गुणत्वविशिष्टरूपाभावमादाय वायुः

समवायेन गुणवान् वायुत्वादित्यत्राव्याप्तिः तत्रादिपदग्राह्या । नहि उक्ताभाव प्रतियोगितावच्छेदकं रूपत्वमात्रं जलीयपरमाणौ तादृशाभावस्य प्रतीत्यनुपपत्तेः। समवायेन रूपत्वविशिष्टस्य रूपस्य समवायेन जलीयपरमाणौ सत्त्वात्। यदि गुणत्वमपि प्रतियोगितावच्छेदकम् अंगीक्रियते तदा क लिकेन गुणत्वविशिष्टस्य रूपस्य जलायपरमाणौ समवायेनासत्त्वेन तत्र तदभावो भवति। कालिकसंबन्धावच्छिन्न-गुणनिष्ठावच्छेदकताकसमवायसंबन्धावच्छिन्नरूपत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रति-योगिताकाभावस्तत्र वर्तत इत्याहुः । कालिकेन रूपत्वविशिष्टस्य स्पर्शस्य वायुपर-माणौ सत्त्वेन कथं तत्र तदभावो भवेत् अतो रूपत्वमपि अवच्छेदकं मन्तव्यमिति।

अथ रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादायाव्याप्ति-वारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना-वच्छेदकतानिरूपितत्वस्य निवेशेन कथं वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाया व्याप्तिः। तस्यांप्रतियोगितायां साध्यतावच्छेदकतानवच्छेदकस्वरूपसंबन्धावच्छिन्नमहान-सीयत्वनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वात्। महानसरूपे, तद्वह्नौ तद्धर्मे च महानसीय त्वव्यवहारेण महानसीयत्वं महानसवृत्तित्वमेव वक्तव्यं तन्निष्ठ.वच्छेदकता स्वरूपसंबन्धा-वच्छिन्नैव न तु साध्यतावच्छेदकताघटकसमवायसंबन्धवच्छिन्ना। महानसीयत्वं कालिक-संबन्धान्यसंबन्धेन महानसवृत्तित्वमेव । न च वह्नित्वनिष्ठसाध्यतावच्छेदकताघटक-समवायसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्य प्रतियोगितायां सत्त्वेन तत्प्रतियोगिता-निरूपकमहानसीयवह्न्यभावः कथं न लक्षणघटक इति वाच्यम्। तादात्म्येन जलं जलवत् जलत्वादित्यत्र जलीयपरमाणौ हेत्वधिकरणे कालिकसलवायोभसंबन्धेन जलत्वविशिष्टा-भावमादायव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्ना-वच्छेदकत्वानिरूपितत्वस्यैव लक्षणघटकाभावीयप्रतियोगितायां विवक्षणीयत्वेन महा-नसीयवह्न्यभावप्रतियोगितायां तदसत्त्वेन तदभावस्य लक्षणाघटकत्वात्।

न च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टवान् धूमादित्यत्र लक्षणघटका-भावीप्रयतियोगितायां साध्यतावच्छेदकताघटकसंबन्धेतरसंबन्धावच्छिन्नावच्छेदकत्वा-निरूपितत्वस्यासत्त्वेन तादृशप्रतियोगिताकाभावस्य न लक्षणघटकत्वमिति तत्राव्याप्ति-वारणाय साध्यतावच्छेदकताघटकसंबन्धेतरसंबन्धावच्छिन्नावच्छेदकतायां साध्यता

वच्छेदकनिष्ठत्वस्य वाच्यतायां महानसीयवह्न्यभावमादायाव्याप्तिसंभवः । साध्यतावच्छेदकनिष्ठा या साध्यतावच्छेदकताघटकसंबन्धेतरसंबन्धावच्छिन्ना अवच्छेदकता तन्निरूपितत्वस्य महानसीयवह्न्यभावप्रतियोगितायां सत्त्वादिति वाच्यम् । साध्यतावच्छेदकताघटकसंबन्धेनतरसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वं स्वनिरूपितावच्छेदकतावत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकवृत्तित्वोभयाभावस्यैव तादृशप्रतियोगितायां वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टवान् धूमादित्यत्राव्याप्तिवारणाय वाच्यत्वात् । तथा च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य संयोगेन साध्यतायां संयोगेन धूमे हेतौ नाव्याप्तिः । लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकताघटकवह्नित्वप्रतियोगिकसमवायेतरशुद्धसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वेऽपि स्व (घटत्वावच्छिन्नप्रतियोगिता) निरूपितघटत्वनिष्ठावच्छेदकतावत्त्वसंबन्धावच्छिन्नसाध्यतावच्छेदकवह्नित्ववृत्तित्वस्यासत्त्वेन तादृशोभयाभावस्य घटत्वावच्छिन्नप्रतियोगितायां सत्त्वात् । महानसीयवह्न्यभावप्रतियोगितायां महानसीयत्वावच्छेदेन साध्यतावच्छेदकताघटकसंबन्धेतरस्वरूपसंबन्धावच्छिन्ना या अवच्छेदकता तन्निरूपितत्वस्य, वह्नित्वावच्छेदेन साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्ना या अवच्छेदकता तन्निरूपितत्वस्य (स्व—महानसीयवह्नित्वावच्छिन्नप्रतियोगिता—निरूपितसाध्यतावच्छेदकतावत्वसंबन्धावच्छिन्नवह्नित्ववृत्तित्वस्य) चोभयस्यैव सत्त्वेन तादृशोभयाभावस्य महानसीयवह्न्यभावप्रतियोगितायामसत्त्वात् तन्निरूपकमहानसीयवह्न्यभावो न लक्षणघटक इति महानसीयवह्निमान् धूमादित्यत्राव्याप्तिदानमसंगतमिति चेन्न । तत्संबन्धावच्छिन्नवृत्तितायाः तत्संबन्धरूपतया वह्निनिष्ठमहानसीयत्वस्य (महानसवृत्तत्वस्य) वह्निनिष्ठमहानससंयोगरूपत्वमिति तदवच्छेदकतायाः (संयोगनिष्ठावच्छेदकतायाः) साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नत्वमिति साध्यतावच्छेदकताघटकसंबन्धेतरसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्य महानसीयवह्न्यभावप्रतियोगितायामसत्त्वेन स्व (महानसीयवह्न्यभावप्रतियोगिता) निरूपितावच्छेदकतावत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकवह्नित्ववृत्तित्वस्य सत्त्वेऽपि तादृशोभयाभावस्या तत्र सत्वमितितत्प्रतियोगितानिरूपकमहानसीयवह्न्यभावस्य लक्षणघटकत्वेन वह्निमान् धूमादित्यत्राव्याप्तिकथनस्य संगतत्वात् । तत्राव्याप्तिवारणाय लक्षणगटकाभावीयप्रतियोगितायां

साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशः सार्थकः। तथा च साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितायां निवेशेऽपि वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य साध्यतायां धूमे साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्य विषयितया रूपत्वविशिष्टाभावमादाय रूपवान् पृथिवीत्वादित्यत्राव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितायां निविष्टत्वेन लक्षणघटकाभावाप्रसिद्ध्या अव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकताघटकसंबन्धेतरसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्व, स्वनिरूपितावच्छेदकतात्वसंबन्धावच्छिन्नसाध्यतावच्छेदकवृत्तित्वोभयाभावनिवेशोऽपि युक्त इति बोध्यम्। न च तादात्म्येन जलसाध्यकाव्याप्तिरनुपदोक्ता तत्र दोष इति वाच्यम्। उभयानवच्छिन्नत्वनिवेश एव हि तद्दोषवारणं भविष्यतीति। यद्यपीत्यादीति।

### अव्याप्तितादवस्थ्यमिति जा० टी०।

यद्यपि सर्वत्र सद्धेतौ उभयाभावादिकमादायासंभवसंभवेनाव्याप्तिदानमनुचितं जगदीशस्य, अव्याप्त्यपेक्षयाऽसंभवस्य प्रबलत्वात्। तथापि यथाश्रुते तादात्म्येन तद्रूपवान् तद्रसादित्यादौ लक्षणसमन्वयेनासंभवस्याभावात्। महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिदानं संगतम्।

केचित्तु घटत्वावच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन घटः पटवान् घटत्वादित्यत्र घटाभावान्याभावानां प्रतियोगिवैयधिकरण्यविरहेण घटाभावमादाय लक्षणसमन्वय इत्यसंभवाभावेन महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्ति कथनं समुचितमित्याहुः।

न च तादृशावच्छेदकतेत्यादि जा० टी० अयं पाठः वामाचरणशिवदत्तमिश्रीयमुद्रितसिद्धान्तलक्षणे नोपलभ्यते।

अयमाशयः। साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छेदेन लक्षणघटकाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिता-

कपर्याप्त्यनुयोगितावच्छेदकत्वाभावो विवक्षणीयः। तथा च महानसीयवह्न्यभावप्रतियोगितावच्छेदकतायाः प्रत्येकम् अव्यासज्यवृत्तित्वेऽपि (महानसीयत्वे वह्नित्वे च पर्याप्त्या अवृत्तित्वेऽपि) महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वेन व्यासज्यवृत्तितया (पर्याप्त्या महानसीयत्ववह्नित्वोभयवृत्तितया) सावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतायां वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतायां च पर्याप्तिप्रतियोगित्वस्यैकस्याभावेन तत्तन्निष्ठपर्याप्तिप्रतियोगितानिरूपितानुयोगिता महानसीयत्वनिष्ठा वह्नित्वनिष्ठा च भिन्नैव तदनुयोगितावच्छेदकं तत्तद्गतमेकत्वं न तु महानसीयत्ववह्नित्वोभयगतं द्वित्वम्। महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वेन व्यासज्यवृत्तितया (पर्याप्त्या महानसीयत्ववह्नित्वोभयवृत्तितया) व्यासज्यवृत्त्यवच्छेदकतात्वावच्छिन्नाभावस्य साध्यतावच्छेदकवह्नित्वगतैकत्वावच्छेदेन वह्नित्वे सत्त्वेन वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः। महानसीयवह्न्यभाव (साध्याभाव) प्रतियोगितावच्छेदकतात्वावच्छिन्नाभावस्य एकत्वावच्छेदेन वह्नित्वे सत्त्वेऽपि (महानसीयत्वे वह्नित्वे च सत्त्वेऽपि) स्वप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकमहानसीयत्ववह्नित्वगतद्वित्वरूपधर्मावच्छेदेन सत्त्वायोगान्न महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तिरिति।

**अथ प्रत्येकम् उभयत्र पर्याप्तिसंबन्धेनासतोऽवच्छेदकत्वस्योभयत्र पर्याप्तिसंबन्धेन सत्त्वायोगात् इति जा० टी०।**

एतच्चावच्छेदकत्वनिरुक्तो विवेचयिष्यामः। तथा चैकत्वावच्छेदेनापि (वह्नित्वादिगतैकत्वावच्छेदेनापि) तादृशाभावस्य (लक्षणघटकाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावस्य) वह्नित्वादौ (साध्यतावच्छेदकवह्नित्वादौ) असत्त्वेन वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तितादवस्थ्यमिति भावः। नन्वेवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेद एव साध्यतावच्छेदके निवेश्यः। तथा च महानसीयत्व वह्नित्ववृत्त्यवच्छेदकतावन्न वह्नित्वमिति भेदस्य साध्यतावच्छेदके वह्नित्वे सत्त्वेन महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र

नाव्याप्ति । व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वात् । कथमन्यथा अयमेको न द्वाविति प्रतीतिः । गदाधरभट्टाचार्येण तथैव निवेशितमपीति-चेन्न । जगदीशतर्कालङ्कारेण व्यासज्यवृत्तिधर्मावच्छिन्नात्यन्ताभावस्येव व्यासज्यवृत्ति धर्मावच्छिन्नभेदस्यापि इदन्त्वावच्छेदेन प्रत्येकस्मिन् अनभ्युपगमात् । तथा च महानसीयत्ववह्नित्वोभयपर्याप्तावच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य वह्नित्वमहानसीयत्वोभयपर्याप्तावच्छेदकतावान्नेत्याकारकस्य केवलवह्नित्वे साध्यता-वच्छेदके जगदीशेन न स्वीकृतमिति महानसीयवह्न्यभावमादाया-व्याप्तेर्वारणं नास्ति । अन्यथा यः प्रत्येकमात्रधर्मावच्छेदेन यदभाववान् स उभयत्वावच्छेदेन तदभाववानिति व्याप्त्या उभयत्वावच्छेदेन तदभेदापत्या इमौ न द्वाविति प्रतीत्यापत्तेः । न चायं न द्वावित्यस्य कथं प्रामाण्यम् । शुद्धपर्याप्तिसबन्धेन-द्वित्वस्य इदं पदार्थे सत्त्वेन तत्र द्वित्ववद्भेदस्यासत्त्वात् । इदन्त्वावच्छेद्यपर्याप्तेर-स्वीकृतत्वेन तत्संबन्धावच्छिन्नद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्याप्रसिद्धेः । द्वित्वस्य धर्मिणि विशेषणत्वेनानुयोगिवाचकपदोत्तरसप्तम्या अभावेन च शुद्धपर्याप्ति-संबन्धावच्छिन्नद्वित्वात्यन्ताभावस्य इदं पदार्थे बोधयितुमशक्यत्वादिति वाच्यम् । यः प्रत्येकमात्रवृत्तिधर्मावच्छेदेन यदभाववान् स उभयावच्छेदेन तदभाववानिति नियमानुरोधेन, अत्यन्ताभावबोधनियमस्य (यस्यात्यन्ताभावो वक्तव्यः तस्य न विशे-षणम् अनुयोगिवाचकपदस्य सप्तम्यन्तत्वमिति नियमस्य) सङ्कोचकल्पनेनादोषात् । क्वचिदिष्टानुरोधेनात्यन्ताभावबोधनियमस्य व्यभिचारेऽपि अत्यन्ताभावबोधः स्वीकार्यः । अयं न द्वावित्यत्र इदं पदार्थे पर्याप्त्या द्वित्वाभावबोधो भवति । न तु द्वित्ववद्भेदस्येति बोध्यम् । गदाधरभट्टाचार्येण यः प्रत्येकमात्रवृत्तिधर्मावच्छेदेन यदभाववान् स उभयत्वा-वच्छेदेन तदभाववानिति नियमस्याप्रयोजकत्वमङ्गीकृत्य इदन्त्वावच्छेदेन द्वित्वात्य-न्ताभावो द्वित्ववद्भेदश्चाङ्गीकृतः । तथा च इमौ न द्वौ इति प्रतीतिर्न भवति । अयं न द्वौ इति प्रतीतिरपि भेदविषयिण्येव नात्यन्ताभावविषयिणी । अत्यन्ताभावबोधनियमोऽपि न सङ्कोचनीय इति प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता-वच्छेदकतात्वावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य साध्यतावच्छेदके निवेशस्तेषां युक्त इति विवेकः ।

अथ साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छेद्यपर्याप्तिसंबन्धावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छेदेन (साध्यतावच्छेदके) निवेशे न कोऽपि दोषः। वह्निमान् धूमादित्यादौ वह्नित्वगतैकत्वावच्छेदेन तादृशसंबन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वादिति चेत् सत्यम्। अथवा साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके लक्षणघटकाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपस्य भेदो निवेश्यः। अत्यन्ताभावघटितव्याप्तौ दोषाभावेऽपि भेदघटितव्याप्तौ हेतुसमानाधिकरणभेदप्रतियोगितानवच्छेदकसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणे) तथानिवेशासंभवात्। अत्यन्ताभावघटितव्याप्तौ तादृशानुयोगितावच्छेदकं वह्नित्वगतैकत्वम्। भेदघटितव्याप्तौ च तादृशानुयोगितावच्छेदकं वह्नित्वादिकमिति तादृशैकनिवेशः उभयव्याप्तौ न संभवति। अतः कल्पद्वयसाधारण्याय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वविशेषणं वक्ष्यतीति बोध्यम्।

ननु लक्षणघटकाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत् साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तद्विशिष्टावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनैव महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणेन लक्षणघटकाभावीयप्रतियोगितायां तादृशोभयानवच्छिन्नत्वविशेषणं व्यर्थमिति चेन्न। एकत्वादेः पर्याप्त्यनभ्युपगमपक्षे वह्निमान् धूमादित्यत्राव्याप्तेः. वह्नित्वगतैकत्वस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वेन महानसीयवह्न्यभावस्य लक्षणघटकत्वात्। उभयपक्षसाधारण्याय लक्षणघटकाभावीयप्रतियोगितायां तदृशोभयानवच्छिन्नत्वं विशेषणं बोध्यम्।

ननु लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वसाध्यतासमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयाभावनिवेशेनैव महानसीयवह्न्य-

भावमदाय वह्निमान् धूमादित्यत्राव्याप्तिवारणसंभवे तत्रालं साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशेन तस्य गुरुतरत्वात्। पर्वतीयवह्नौ महानसीयवह्न्यभावप्रतियोगितावान्नेति भेदस्य सत्त्वेन तादृशोभयाभावस्यासत्त्वमिति तन्निरूपकमहानसीयवह्न्यभावस्य न लक्षणघटकत्वमिति चेन्न। वह्नौ वह्निघटोभयाभावीयप्रतियोगितावान्नेति भेदस्यासत्त्वेन तादृशोभयाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तेः। वह्निघटोभयाभावीय वह्निनिष्ठप्रतियोगितावान्नेति भेदस्य वह्नौ असत्त्वात्। एवं सत्तायां गुणकर्मान्यत्वविशिष्टसत्ताभावप्रतियोगितावान्नेतिभेदस्यासत्त्वेन विशिष्टसत्ताभावमादाय सत्तावान जातेरित्यत्राव्याप्तेश्च। अतो लघुरूपमपि तं परित्यज्य गुरुभूतमपि तादृशोभयानवच्छिन्नत्वं लक्षणघटकाभावीयप्रतियोगितायां निवेशितं जगदीशेन।

---

अनुवर्तमाना

## सिद्धान्तलक्षणजागदीशीतत्त्वालोकव्याख्या

### साध्यतावच्छेदकतदितरेति ।

यद्यपि साध्यतावच्छेदकावच्छिन्नत्वसाध्यतासमानाधिकरणभेदप्रतियोगिता वच्छेदकत्वोभयाभावनिवेशेन महानसीयवह्न्यभावमादायाव्याप्तिवारणसंभवस्तथापि वह्निघटोभयाभावस्य सत्तासाध्यकविशिष्टसत्त्वाभावस्य च वारणासंभवेनाव्याप्त्या तत् परित्यज्य गुरुभूतमप्युभयानवच्छिन्नत्वं तद्वारणायाह ।

### तथापि साध्यतावच्छेदकतदितरोभयेति

अथ किमुभयानवच्छिन्नत्वम् ? । एकावच्छिन्नत्वविशिष्टापरावच्छिन्नत्वाभावः । किं वा साध्यतावच्छेदकतदितरोभयनिष्ठावच्छेदकतानिरूपितत्वाभावः । किं वा साध्यतावच्छेदकतदितरोभयनिष्ठावच्छेदकतानिरूपितत्वद्वयाभावः । तत्र नाद्यः । प्रमेयवद्वान् वाच्यत्वादित्यत्र प्रमेयमात्रस्य साध्यतावच्छेदकत्वेन घटत्वादेरपि साध्यतावच्छेदकत्वम् । येन रूपेण साध्यतावच्छेदकता तदनवच्छिन्नप्रकारतावच्छेदकस्य तदितरपदेन विवक्षितत्वादिति वक्ष्यमाणरीत्या साध्यतावच्छेदकेतरत्वञ्चेति 'लक्षणघटकाभावीयघटत्वावच्छिन्नप्रतियोगितायां प्रमेयावच्छिन्नत्वविशिष्टतदितरावच्छिन्नत्वस्यैव सत्त्वेन तादृशप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्ध्याऽव्याप्तेः । न चात्र प्रतियोगितावच्छेदकावच्छिन्नत्वविशिष्टसाध्यतावच्छेदकेतरावच्छिन्नत्वाभावप्रतियोगितावच्छेदकत्वस्य प्रमेयेतरावच्छिन्नत्वे एव कल्पनीयतया साध्यतावच्छेदकावच्छिन्नत्वविशिष्ट साध्यतावच्छेदकेतरावच्छिन्नत्वस्य एकविशिष्टापरत्वस्य गुरुत्वेन प्रतियोगितानवच्छेदकत्वमिति तदवच्छिन्नाभावस्याप्रसिद्धेः । साध्यतावच्छेदकतासमानाधिकरणाधेयत्वसंबन्धावच्छिन्नावच्छेदकता (साध्यतावच्छेदकनिष्ठविशिष्टाभावीयप्रतियोगितावच्छेदकता) निरूपितावच्छेदकता (साध्यतावच्छेदकत्व) निष्ठावच्छेदकतानिरूपितसामानाधिकरण्यसंबन्धावच्छिन्नावच्छेदकता ( साध्यतावच्छेदकावच्छिन्नत्वनिष्ठावच्छेदकता ) निरूपिता-

केचित्तु सावच्छिन्नत्वनिरवच्छिन्नत्वोभयविरुद्धधर्माध्यासेन महानसीयवह्न्यभावप्रतियोगितावच्छेदकता महानसीयत्वनिष्ठा वह्नित्वनिष्ठा च नैका, किन्तु भिन्नैव। प्रतियोगिनिष्ठनानाविशेष्यतानिरूपितप्रकारतास्थले एवावच्छेदकताभेदः न तु एकविशेष्यतानिरूपितप्रकारतास्थलेऽवच्छेदकताभेदः। एवञ्च महानसीयवह्न्यभावप्रतियोगितावच्छेदकता महानसीयत्ववह्नित्वोभयनिष्ठैकैव न तु नानावच्छेदकता। महानसीयवह्निनिष्ठैकैव विशेष्यता तन्निरूपितावच्छेदकतोभयनिष्ठैकैव न तु नानावच्छेदकता। सावच्छिन्नत्वनिरवच्छिन्नत्वोभयविरुद्धधर्माध्यासेन महानसीयत्वे वह्नित्वे च नैकाऽवच्छेदकता किन्तु विभिन्नैवेत्युभयमतसाधारण्यानुरोधेन साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविशिष्टतदितरनिष्ठावच्छेदकतानिरूपितत्वाभावो लक्षणघटकाभावप्रतियोगितायां निवेश्यः। वै० ; स्वसाजात्य, स्वसामानाधिकरण्योभयसंबन्धेन। एवञ्च वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावो न लक्षणघटकः। तदीयप्रतियोगितायां तादृशोभयसंबन्धेन वह्नित्वनिष्ठसाध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविशिष्टतदितरमहानसीयत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तदभावासत्त्वात्। भवति च घटाभावो लक्षणघटकः। तदीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविरहेण तादृशविशिष्टाभावस्य तत्र सत्त्वात्। प्रमेयवद्वान् वाच्यत्वादित्यत्र नाव्याप्तिः। लक्षणघटकघटाभावप्रतियोगितायां साध्यतावच्छेदकप्रमेयनिष्ठसावच्छिन्नावच्छेदकताविशिष्टावच्छेदकतानिरूपित्वविरहेण साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविशिष्ट तदितरनिष्ठावच्छेदकतानिरूपितत्वाभावस्य तत्र सत्त्वात्।

न च वह्नित्ववद्वान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिः। तदीयप्रतियोगितानिरूपितसावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदक वह्नित्वनिष्ठसावच्छिन्नावच्छेदकतासामानाधिकरण्यस्य विरहेण साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविशिष्टतदितरनिष्ठावच्छेदकतानिरूपितत्वाभावस्य तदीयप्रतियोगितायां सत्त्वादिति वाच्यम्। साध्यतावच्छेदकतायां प्रतियोगितावच्छेदकताविशिष्टान्यत्वस्य विवक्षणेनादोषात्। वै०; स्वसाजात्य स्वसामानाधिकरण्योभयसंबन्धेन। एवञ्च प्रतियोगितावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वविशिष्टतदितरनिष्ठावच्छेदकतानिरूपितत्वा-

भाववती या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम् । वैशिष्ट्यञ्चोभयत्र स्वसामानाधिकरण्य स्वसाजात्योभयसंबन्धेन । तथा च वह्नित्ववद्वान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः । महानसीयत्व वह्नित्वोभयत्रैका प्रतियोगितावच्छेदकतेति पक्षे साध्यतावच्छेदकवह्नित्वनिष्ठसावच्छिन्नावच्छेदकतायां प्रतियोगितावच्छेदकमहानसीयत्वनिष्ठसावच्छिन्नावच्छेदकतासाजात्यस्य स्वसामानाधिकरण्यस्य चोभयस्य सत्त्वेन प्रतियोगितावच्छेदकताविशिष्टैव साध्यतावच्छेदकता न तु तदन्या । एवं महानसीयत्व, वह्नित्वोभयनिष्ठा भिन्नैवावच्छेदकता नत्वेकेति पक्षेऽपि महानसीयवह्न्यभावमादाय न तत्राव्याप्तिः । प्रतियोगितावच्छेदकमहानसीयत्वनिष्ठसावच्छिन्नावच्छेदकतासाजात्यस्य वह्नित्वनिष्ठसावच्छिन्नसाध्यतावच्छेदकतायां सत्त्वेऽपि स्वसामानाधिकरण्यस्य विरहेण साध्यतावच्छेदकता न प्रतियोगितावच्छेदकताविशिष्टा किन्तु तदन्येति महानसीयवह्न्यभावो न लक्षणघटक इति नोक्ताव्याप्तिः । अत एव (स्वसाजात्य स्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकतायां प्रतियोगितावच्छेदकताविशिष्टान्यत्वनिवेशादेव ) जातिमत्वान् घटत्वादित्यत्र हेत्वधिकरणे घटे पटसमवेतत्वविशिष्टजातिमदभावमादायाव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य वक्ष्यमाणस्य साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वार्थकताया आवश्यकताया घटत्ववदभावस्य लक्षणाघटकत्वम् । साध्यतावच्छेदकतावच्छेदकेतरघटत्वत्वावच्छिन्नावच्छेदकतानिरूपितत्वस्य हेतुसमानाधिकरण घटत्ववदभावप्रतियोगितायां सत्त्वेन साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नत्वस्य तत्रासत्त्वात् । साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नावच्छेदकतानिरूपितप्रतियोगितानिरूपकाभावस्यैव सावच्छिन्नावच्छेदकतास्थले लक्षणघटकत्वात् । घटाभावीयप्रतियोगितानिरूपितसावच्छिन्नावच्छेदकत्वाप्रसिद्धेः । सोऽभावो न लक्षणघटकः । सावच्छिन्नावच्छेदकताकसाध्यस्थले सावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वात् । प्रमेयवत्साध्यकाव्याप्त्या प्रतियोगितानिरूपितावच्छेदकतायां महानसीयवह्न्यभावमादायाव्याप्तिं वारयितुं सावच्छिन्नत्वनिवेशस्य कर्तुमशक्यत्वेऽपि न क्षतिरिति वदन्ति । (न च वह्नि-

मान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिवारणाय सावच्छिन्नावच्छेदकत्वा-निरूपितत्वं लक्षणघटकाभावीयप्रतियोगितायां निवेश्यम् । तथा च महानसीय-वह्न्यभावो न लक्षणघटकस्तदीयप्रतियोगितायां महानसीयत्वनिष्ठसावच्छिन्नावच्छेदकता-निरूपितत्वस्यैव सत्त्वादिति लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदक-तदितरोभयानवच्छिन्नत्वं न निवेश्यमिति वाच्यम् । एवं सति प्रमेयवद्वान् वाच्यत्वा-दित्यत्राव्याप्तेः । प्रतियोगितामात्रे प्रमेयावच्छिन्नत्वस्य सत्त्वेन तन्निष्ठावच्छे-दकतायाः प्रमेयत्वावच्छिन्नत्वेन सावच्छिन्नत्वात् । हेतुसमानाधिकरणघटाभावप्रतियो-गितायां सावच्छिन्नावच्छेदकता (प्रमेयत्वावच्छिन्नप्रमेयनिष्ठसावच्छिन्नावच्छेदकता) निरूपितत्वस्य सत्त्वेन तदनिरूपितत्वस्यासत्त्वाद् घटाद्यभावो न लक्षणघटक इति तादृशप्रतियोगितानिरूपकाभावस्याप्रसिद्धेः । अतो लक्षणघटकाभावीयप्रतियोगितायां सावच्छिन्नावच्छेदकत्वानिरूपितत्वं निवेश्यम् । किन्तु वह्निमान् धूमादित्यत्रमहानसीय वह्न्यभावमादायाव्याप्तिवारणायोभयसाधारण्याय साध्यतावच्छेदकताविशिष्टा वच्छेदकतानिरूपितत्वविशिष्टसाध्यतावच्छेदकेतरनिष्ठावच्छेदकतानिरूपितत्वाभावो लक्षणघटकाभावप्रतियोगितायां निवेश्य इति वदन्ति) ।

ननु लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छदेकतदितरोभयानवच्छिन्न-त्वस्य निवेशेन महानसीयवह्न्यभावं वह्निघटोभयाभावञ्चादाय वह्निमान् धूमादित्यत्रा व्याप्तिवारणेऽपि साध्यतावच्छेदकेतरस्याप्रसिद्ध्या प्रमेयवद्वान् वाच्यत्वादित्यत्रा-व्याप्तिस्तदवस्था । तद्वारणाय साध्यताच्छेदकेतरत्वं साध्यतावच्छेदकवृत्तिभेदप्रतियो-गित्वरूपं वाच्यम् । एवञ्च पटत्वरूपप्रमेये साध्यतावच्छेदके पटत्वं न घटत्वमिति भेदस्य सत्त्वेन भवति घटत्वं साध्यतावच्छदेकेतरदिति साध्यतावच्छेदकप्रमेय, तदितरघटत्वो-भयानवच्छिन्नत्वं लक्षणघटकघटाभावीयप्रतियोगितायां वर्तते तदनवच्छेदकत्वस्य साध्यता-वच्छेदके प्रमेये सत्वान्नाव्याप्तिरिति चेन्न । महानसीयवह्निभिन्नवह्निमान् धूमादित्यत्राति-व्याप्त्यापतेः । एकस्य साध्यतावच्छेदकस्य अपरसाध्यतावच्छेदकवृत्तिभेदप्रतियोगित्वेन तदि-तरत्वमिति साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयावच्छिन्नत्वस्य सत्त्वेन साध्याभावो न लक्षणघटक इत्यभावान्तरप्रतियोगितानवच्छेदकत्वस्य साध्यताव-

वच्छेदके सत्त्वात् । महानसीयत्वं न वह्नित्वम् किं वा वह्नित्वं न महानसीयत्वमिति भेदः परस्परसाध्यतावच्छेदके वर्तते, अत इतरपदस्यान्तरार्थकत्वमभ्युपेत्याह ।

**स्वानवच्छिन्नप्रकारतावच्छेदकस्य वा तदितरपदेन विवक्षितत्वादिति ।**

यद्यपि स्वानवच्छिन्नप्रकारताश्रयस्य तदितरत्वविवक्षणे वह्निमान् धूमादित्यत्र वह्निविशिष्टवह्न्यभावमादाय नाव्याप्तिः । वह्निविशिष्टवह्न्यभावप्रतियोगितायां वह्नित्वानवच्छिन्ना या द्रव्यत्वावच्छिन्ना वह्निनिष्ठा प्रकारता तदाश्रयवह्न्यवच्छिन्नत्वस्य साध्यतावच्छेदकवह्नित्वावच्छिन्नत्वस्य चोभयस्यैव सत्त्वात्, तत्प्रतियोगितानिरूपकाभावस्य लक्षणाघटकत्वमिति । तथापि महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तिः । साध्याभावीयप्रतियोगितायां वह्नित्वानवच्छिन्नप्रकारताश्रयमहानसीयत्वावच्छिन्नत्वस्य साध्यतावच्छेदकवह्नित्वस्य चोभयस्य सत्त्वेन साध्याभावो न लक्षणघटक इत्यन्याभावप्रतियोगितानवच्छदेकत्वस्य साध्यतावच्छेदके सत्त्वात् । स्वानवच्छिन्नप्रकारतावच्छेदकस्य साध्यतावच्छेदकेतरत्वेन विवक्षणे तु नोक्तदोषः । साध्यतावच्छदेकानवच्छिन्ना प्रकारता न वह्निनिष्ठा न वा महानसीयनिष्ठा किन्तु घटादिनिष्ठैव तदवच्छदेकघटत्व साध्यतावच्छेदकोभयानवच्छिन्नत्वयोः साध्याभावीयप्रतियोगितायां सत्त्वेन तन्निरूपकसाध्याभावस्य लक्षणघटकत्वात् ।

प्रकारतायां साध्यतावच्छेदकानवच्छिन्नत्वञ्च साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वम् । वै० स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्वोभय संबन्धेन । तेन प्रमेयवद्वान् वाच्यत्वादित्यत्र नाव्याप्तिः । अन्यथा प्रमेयवद्वान् वाच्यत्वादित्यत्र साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्याऽव्याप्त्यापत्तेः । साध्यतावच्छेदकेतरत्वञ्च स्वानवच्छिन्नप्रकारतावच्छेदकत्वम् । तच्च घटत्वादौ वर्तते । साध्यतावच्छेदकप्रमेयानवच्छिन्नघटनिष्ठप्रकारतावच्छेदकत्वस्य घटत्वे सत्त्वात् । एवञ्च साध्यताबच्छेदकप्रमेयतदितरघटत्वादिधर्मावच्छिन्नत्वोभयस्य लक्षणाघटकाभावीय प्रतियोगितायां सत्त्वेन लक्षणघटकाभावस्यैवाप्रसिद्धेः । घटत्वस्यात्र प्रमेयेतरत्वम् स्वानवच्छिन्नप्रकारतावच्छेदकत्वेन बोध्यम् । स्वानवच्छिन्नत्वस्य साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वरूपत्वे तु नोक्तदोषः । स्वसामानाधिकरण्य, स्वानच्छेदकानवच्छिन्नत्वाभ्यां साध्यतावच्छेदकताविशिष्टाऽवच्छेदकता प्रमेयनिष्ठैव

तदनिरूपितत्वस्य घटनिष्ठप्रकारतायां सत्त्वेन तदवच्छेदकघटत्वस्य प्रमेयेतरत्वमिति तदुभयानवच्छिन्नत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायां प्रसिद्धेः। वैशिष्ट्यघटक स्वसामानाधिकरण्यस्योपादानेन गुणवान् वायुत्वादित्यत्र नाव्याप्तिः। अन्यथा हेत्वधिकरणे वायौ कालिकेन गुणत्वविशिष्टं रूपं नास्तीत्यभावीया गुणत्वरूपत्वनिष्ठनिरवच्छिन्नावच्छेदकताद्वयनिरूपिता प्रतियोगिता तदवच्छेदकत्वस्यैव साध्यतावच्छेदके गुणत्वे सत्त्वेनाव्याप्त्यापत्तेः। प्रतियोगिता निरवच्छिन्ना रूपत्वनिष्ठनिरवच्छिन्नप्रतियोगितावच्छेदकतायां स्वानवच्छेदकानवच्छिन्नत्वस्य सत्त्वेन गुणत्वनिष्ठसाध्यतावच्छेदकताविशिष्टत्वेऽपि गुणत्वनिष्ठसाध्यतावच्छेदकतासामानाधिकरण्यस्यासत्त्वेन तादृशोभयसंबन्धेन गुणत्वनिष्ठ साध्यतावच्छेदताविशिष्टत्वाभावेन तादृशोभयसंबन्धेन स्वविशिष्टत्वाभावस्य (साध्यतावच्छेदकगुणत्वनिष्ठावच्छेदकताविशिष्टत्वाभावस्य) रूपत्वनिष्ठावच्छेदकतायां सत्त्वात्। तादृशगुणत्वनिष्ठावच्छेदकत्वानिरूपितरूपनिष्ठप्रकारतावच्छेदकरूपत्वावच्छिन्नत्वस्यैव तादृशाभावीयप्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वमिति तदभावस्य लक्षणाघटकत्वं स्वसामानाधिकरण्यस्योपादानेन भवति।

यत्तु साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतावच्छेदकं तदितरपदग्राह्यम्। वै० स्वसाजात्य स्वसामानाधिकरण्योभयसंबन्धेन। तन्न, समवायेन बह्निविशिष्टस्य संयोगेन साध्यतायां धूमे सद्धेतौ समवायेन वह्निविशिष्टमहानसीयविशिष्टाभावस्य हेत्वधिकरणे पर्वते सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वमिति तत्राव्याप्तेः। साध्यतावच्छेदकवह्निविशिष्टत्वनिष्ठावच्छेदकताविशिष्टावच्छेदकता सावच्छिन्नत्वेन सजातीया महानसीयविशिष्टत्वनिष्ठा स्वसमानाधिकरणा च तदनिरूपिता प्रकारता घटादिनिष्ठा तदवच्छेदकघटत्वादिनिष्ठावच्छेदकत्वानिरूपितत्वस्य तदभावीयप्रतियोगितायां सत्त्वेन तदभावस्य लक्षणघटकत्वात्। स्वानवच्छिन्नप्रकारतेत्यादेः मदुक्तसंबन्धाभ्यां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतेत्यर्थकरणे तु नोक्तदोषः। साध्यतावच्छेदकताविशिष्टावच्छेदकता स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन बह्निविशिष्टत्वनिष्ठसाध्यतावच्छेदकतैव तदनिरूपितप्रकारता महानसीयविशिष्टनिष्ठा तदवच्छेदकस्य महानसीयविशिष्टत्वस्य साध्यतावच्छेदकेतरत्वमिति साध्यतावच्छेदकबह्निविशिष्टत्वतदितर-

महानसीयविशिष्टत्वोभयावच्छिन्नत्वस्यैव तदीयप्रतियोगितायां सत्त्वेन तदभावस्य लक्षणाघटकत्वात् ।

नन्वेवमपि अवच्छेदकभेदेनावच्छेदकताया भेद इति नोक्तदोषः । वह्निविशिष्टत्वमहानसीयविशिष्टत्वनिष्ठावच्छेदकतयोरुभयोः सामानाधिकरण्याभावेन स्वविशिष्टत्वाभावान्न तदभावो लक्षणघटक इति जातिमद्वान् भावत्वादित्यत्र लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकजातितदितरघटत्वादिरूपजात्युभयावच्छिन्नत्वस्य सत्त्वेन साध्याभावो न लक्षणघटकः । किन्तु घटवान् नास्तीत्यभाव एव लक्षणघटकस्तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके जातौ सत्त्वेनातिव्याप्तिः । येन रूपेण साध्यतावच्छेदकता तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य घटत्वादिजातौ सत्त्वेन तस्याः साध्यतावच्छेदकेतरत्वादिति चेन्न । लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वरूपं साध्यतावच्छेदकानवच्छिन्नप्रकारतावच्छेदकावच्छिन्नत्वमिति कथनेनादोषात् । प्रकारतावच्छेदकता वै० अवच्छेदकतायाम् , स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन । तथा च साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपित प्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववती या लक्षणघटकाभावप्रतियोगिता तन्निरूपितावच्छेदकत्वाभाववत्साध्यता वच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । उभयत्र वै० स्व सामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन । तथा चावच्छेदकभेदेना वच्छेदकताभेद इति पक्षे जातिमद्वान् भावत्वादित्यत्र हेतुसमानाधिकरणसाध्याभावीय प्रतियोगितायां साध्यतावच्छेदकजात्यवच्छिन्नत्व साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपिता घटवानितिज्ञानीया घटनिष्ठा तदवच्छेदकघटत्वनिष्ठावच्छेदकता विशिष्टावच्छेदकतानिरूपितत्वोभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वमिति तत्र नातिव्याप्तिः । एवमवच्छेदकभेदेन नावच्छेदकताभेद इति पक्षेऽपि जातिमद्वान् भावत्वादित्यत्र नातिव्याप्तिः । साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतावच्छेदकता

विशिष्टावच्छेदकतानिरूपितत्वोभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वात् । वै० स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन । जातिनिष्ठघटत्व-निष्ठावच्छेदकतयोः स्वानवच्छेदकानवच्छिन्नत्वस्य सत्वात् । एवं समवायेन वह्नि-विशिष्टवान् धूमादित्यत्र बह्निविशिष्टमहानसीयविशिष्टाभावमादाय नाव्याप्तिः । तदीय प्रयोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारता महानसीय-विशिष्टनिष्ठा तदवच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य, साध्यतावच्छेदकता-विशिष्टावच्छेदकतानिरूपितत्वस्य च सत्त्वेन तदभावस्य लक्षणाघटकत्वात् । न चा-वच्छेदकभेदेनावच्छेदकताया भेदाभाव इति पक्षे महानसीयबह्निमान् धूमादित्यत्र हेतु-समानाधिकरण साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकता महानसीयत्वनिष्ठा सावच्छिन्ना, बह्नित्वनिष्ठा च निरवच्छिन्ना तदनिरूपिता प्रकारता वह्नित्वविशिष्टवानितिज्ञानीया बह्नित्वविशिष्टनिष्ठा तन्निरूपितबह्नित्वनिष्ठसावच्छि-न्नावच्छेदकतायां महानसीयत्वनिष्ठावच्छेदकतासामानाधिकरण्यस्य विरहेण बह्नि-त्वनिष्ठनिरवच्छिन्नसाध्यतावच्छेदकतानवच्छेदकबह्नित्वत्वानवच्छिन्नत्वस्य विरहेण च साध्यतावच्छेदकतावैशिष्टयस्य विरहात् तादृशप्रकारतानिरूपितबह्नित्वनिष्ठ-सावच्छिन्नावच्छेदकताविशिष्टनिरवच्छिन्ना बह्नित्वनिष्ठा अवच्छेदकता तन्निरूपितत्वस्य महानसीयबह्न्यभावीयप्रतियोगितायां सत्त्वेन तादृशोभयाभावस्यासत्वात् साध्याभावस्य लक्षणाघटकत्वेनाभावान्तरमादायातिव्याप्तिरिति वाच्यम् । साध्यतावच्छेदकता विशिष्टावच्छेदकत्वानिरूपितप्रकारतावच्छेदकतावैशिष्टयस्य स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतत्त्रितयसंबन्धेनावच्छेदकतायां विवक्षणेना-दोषात् । वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन । बह्नित्वनिष्ठसावच्छिन्नप्रकार-तावच्छेदकतायां वह्नित्वनिष्ठनिरवच्छिन्नप्रकारतावच्छेदकताया वृत्तित्वविरहेण तस्याः प्रकारतावच्छेदकतावच्छेदकताविशिष्टत्वाभावात्, निरवच्छिन्नप्रकारतानवच्छेदक बह्नित्वत्वावच्छिन्नत्वस्यैव प्रकारतायां सत्वात् । तथा च साध्यतावच्छेदकताविशिष्टा वच्छेदकत्वानिरूपितप्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व, साध्यतावच्छे-दकताविशिष्टावच्छेदकतानिरूपितत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियो-गिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलि-

तम्। अवच्छेदकतायां साध्यतावच्छेदकतावैशिष्ट्यञ्च स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन। अवच्छेदकतायां प्रकारतावच्छेदकतावैशिष्ट्यञ्च स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतत् त्रितयसंबन्धेन। वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन। तादृशप्रकारतावच्छेदकताविशिष्टावच्छेदकतेत्यत्र वैशिष्ट्यनियामकस्वसामानाधिकरण्यस्य निवेशात् महानसीयवह्निमान्-धूमादित्यत्र नाव्याप्तिः। अन्यथा हेतुसमानाधिकरणसाध्याभावीयप्रतियोगिताय साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितघटनिष्ठप्रकारतावच्छेदकता वह्नित्व निष्ठनिरवच्छिन्नावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकताविशिष्टावच्छेदकता-निरूपितत्वस्य च सत्त्वेन तादृशोभयाभावस्यासत्वात् साध्याभावस्य लक्षणा-घटकतया घटाद्यभाव एव लक्षणघटक इति तदीयप्रतियोगितानवच्छेदकत्वस्य-साध्यतावच्छेदके सत्त्वात् तत्रातिव्याप्त्यापत्तेः।

अथ कालिकेन महानसीयत्वविशिष्टं सत् समवायेन वह्नित्वविशिष्टवान् (महानसीय वह्निमान्) धूमादित्यत्राव्याप्तिः। हेत्वधिकरणे पर्वते समवायेन महानसीयत्व-विशिष्टः सन् कालिकेन वह्नित्वविशिष्टो नास्तीति प्रतीतिसिद्धाभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकताविशिष्टावच्छेद-कत्वानिरूपितप्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वोभयाभावस्य सत्त्वेन-भवति साध्याभावो लक्षणघटक इति तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यता वच्छेदकेऽसत्वात्। एवं गुणत्ववद्वान् द्रव्यत्वादित्यत्राव्याप्तिः। हेत्वधिकरणे जलीय-परमाणौ कालिकेन गुणत्वविशिष्टं सत् समवायेन गुणत्वविशिष्टं नास्तीति प्रतीति-सिद्धाभावस्य सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्। नित्येषु कालिकायोगात्। नचोक्ताभावयोः प्रतियोगिव्यधिकरणत्वासंभव इति वाच्यम्। एवं सति समवायेन महानसीयत्ववत् समवायेन वह्नित्ववद्वान् धूमादित्यत्र साध्याभावस्य पूर्वोक्तरीत्या परिष्क्रियमाणप्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वात्। अभावा-न्तरमादायातिव्याप्त्यापत्तेः। वह्नित्वस्य स्वरूपत एव साध्यतावच्छेदकत्वेन "येन रूपेण साध्यतावच्छेकता तदनवच्छिन्नप्रकारतावच्छेदकत्वस्य वह्नित्वविशिष्टवह्नित्वे सत्त्वेन वह्नित्वत्वविशिष्टस्य वह्नित्वस्य तदितरत्वमिति साध्यतावच्छेदकवह्नित्वाव च्छिन्नत्व, तादृशप्रकारतावच्छेदक वह्नित्वावच्छिन्नत्वयोरुभयोः प्रतियोगिव्य-

धिकरणहेतुसमानाधिकरणसाध्याभावीयप्रतियोगितायां सत्त्वेन साध्याभावो न लक्षणघटक इत्यन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न । स्वानवच्छिन्नेत्यस्य साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वमर्थः । तत्रावच्छेदकतायां साध्यतावच्छेदकतावैशिष्टयम् । स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्प्रसिद्धचतुष्टयसंबन्धेनोक्तौ दोषाभावात् । समवायेन महानसीयत्वविशिष्टस्य कालिकेन बह्नित्वविशिष्टस्य बह्नेरभावीयप्रतियोगितावच्छेदकतायां स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य विरहेण साध्यतावच्छेकताविशिष्टत्वाभावात् । कालिकेन महानसीयत्वविशिष्टः सन् समवायेन बह्नित्वविशिष्टो यत्र साध्यं तत्र समवायेन महानसीयत्वविशिष्टस्य कालिकेन बह्नित्वविशिष्टस्य बह्नेरभावमादाय नाव्याप्तिः । तदभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य, तादृशचतुष्टसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य च सत्त्वेन तादृशोभयाभावस्यासत्त्वेन तदभावस्य लक्षणाघटकत्वात् । बह्नित्वनिष्ठसाध्यतावच्छेदकतावच्छेदकसमवायभिन्नकालिकसंबन्धावच्छिन्नत्वस्य, कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठसाध्यतावच्छेदकतानवच्छेदकसमवायसंबन्धावच्छिन्नत्वस्य च सत्त्वेन-तादृशोभयाभावस्यासत्त्वात्, तदभावस्य लक्षणाघटकत्वात् । बह्नित्वनिष्ठसाध्यातावच्छेदकतावच्छेदकसमवायभिन्नकालिकसंबन्धावच्छिन्नत्वस्य] कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठसाध्यतावच्छेदकतानवच्छेदकसमवायसंबन्धावच्छिन्नत्वस्य च प्रतियोगितावच्छेदकतायां सत्त्वात् । तन्निष्ठाप्रकारता तदनिरूपिता भवति ।

एवम् उक्तसाध्यकव्यभिचारिणि समवायेन महानसीयत्वविशिष्टः सन् कालिकेन बह्नित्वविशिष्टो यो बह्निस्तद्वान् धूमादित्यत्र साध्याभावप्रतियोगितायां तादृशोभयाभावसंपत्यर्थं प्रकारतावच्छेदकतावैशिष्टयमपि अवच्छेदकतायां पूर्वोक्तचतुष्टयसंबन्धेन बोध्यम् । अन्यथा साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपिता कालिकेन महानसीयत्वविशिष्टः सन् समवायेन बह्नित्वविशिष्टः तद्वान् इति ज्ञानीया प्रकारता तन्निरूपितावच्छेदकताविशिष्टासाध्याभावीयप्रतियोगितावच्छेदकता तन्निरूपितत्वस्य साध्यता-

वच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य चोभयस्य हेतुसमानाधिकरणसाध्याभावीय प्रतियोगितायां सत्त्वेन तादृशोभयाभावस्यासत्त्वात्। साध्याभावो न लक्षणघटक इति घटाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनातिव्याप्तेः। तादृशप्रकारतावच्छेदकतायाः तादृशचतुष्टयसंबन्धेनावच्छेदकतायां वैशिष्ट्यविवक्षणे तु नोक्तदोषः। साध्याभावीयप्रतियोगितावच्छेदकतायां तादृशप्रकारतावच्छेदकतावच्छेदकसंबन्धावच्छिन्नत्वाभावेन तादृशप्रकारतावच्छेदकताविशिष्टत्वस्याभावात्। तादृशप्रकारतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य साध्याभावीयप्रतियोगितायां विरहेण तादृशोभयाभावस्य तत्र सत्वात् साध्याभावस्य लक्षणघटकत्वोपपत्तेरिति दिक्।

अथ यद्रूपेण साध्यतावच्छेदकस्य साध्यतावच्छेदकतेति क्वचित्पाठः।

यद्रूपावच्छिन्नसाध्यतावच्छेदकता तद्रूपानवच्छिन्नावच्छेदकताकप्रकारतावच्छेदकसाध्यतावच्छेदकोभयानवच्छिन्नप्रतियोगिताकहेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरितिफलितम्।

अथात्र महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तिः। साध्याभावस्य लक्षणाघटकत्वेनान्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। वह्नित्वस्यस्वरूपत एव साध्यतावच्छेदकत्वेन येन रूपेण साध्यतावच्छेदकता तादृशरूपानवच्छिन्नावच्छेदकताकप्रकारतावच्छेदकत्वस्य वह्नित्वत्वविशिष्टवह्नित्वे सत्त्वेन साध्यतावच्छेदकवह्नित्वावच्छिन्नत्व, तादृशप्रकारतावच्छेदकवह्नित्वावच्छिन्नत्वोभयस्य हेतुसमानाधिकरणसाध्याभावप्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वात्साध्यामात्रस्य लक्षणाघटकत्वेनान्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न। एतस्योक्तार्थे एव तात्पर्येणादोषात्।

तथा च साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितप्रकारतवाच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व भयाभाववती या हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। उभयत्र वैः पूर्वोक्तप्रसिद्धचतुष्टयसंबन्धेन। इयं व्याप्तिः सावच्छिन्ननिरवच्छिन्नसाध्यतावच्छेदकताकोभयसाधारणी। तथा चोभयस्थलीयलक्षणयोरेकोक्तिसंभवः।

केचित्तु स्वा ( साध्यतावच्छेदका ) नवच्छिन्नप्रकारतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकतानिरूपितत्वोभयाभाववती या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता तदनवच्छेदकसाध्यातावच्छेदकावच्छिन्न सामानाधिकरण्यं हेतौ व्याप्तिः । तथा च महानसीयवह्निमान् धूमादित्यत्र नातिव्याप्तिः लक्षणघटकाभावीयप्रतियोगितायां लक्षणघटकसाध्याभावीयप्रतियोगितायां तादृशोभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वात् । महानसीयवह्न्यभावमादाय बह्निमान् धूमादित्यत्र नाव्याप्तिः । महानसीयबह्न्यभावीयप्रतियोगितायां तदुभयस्यैव सत्त्वेन तदभावस्य लक्षणाघटकत्वादिति वदन्ति ।

तदसत् । गुणत्ववद्वान् वायुत्वादित्यत्र कालिकविशेषेण स्वरूपतो रूपत्वविशिष्टस्य समवायेन गुणत्ववतः (रूपस्य) हेत्वधिकरणे वायौ अभावः, तदीयप्रतिगितायां साध्यतावच्छेदकगुणत्वावच्छिन्नरूपनिष्ठप्रकारतावच्छेदकतायां सावच्छिन्नत्वविरहेण तादृशसावच्छिन्नावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकगुणत्वनिष्ठावच्छेदकतानिरूपितत्वोभयाभावस्य सत्त्वेन तन्निरूपकसाध्याभावस्य लक्षणघटकत्वेन तत्राव्याप्तेः । वस्तुतस्तु लाघवेन साध्यतावच्छेदकनिष्ठावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वोभयाभाव एव साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वपदार्थो वाच्यः । वै० प्रागुक्तचतुष्टयसंबन्धेन । (स्वसामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्प्रसिद्धचतुष्टयसंबन्धेन । वृत्तित्वञ्च । स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन ) इति । अथ साध्यतावच्छेदकताविशिष्टान्यसमवायनिष्ठावच्छेदकतानिरूपितत्वस्य समवायावच्छिन्नवह्न्यभावप्रतियोगितायां सत्त्वेन तस्य लक्षणघटकतया साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशो वक्ष्यमाणो व्यर्थः । साध्यतानिरूपितावच्छेदकतात्वस्य धर्मसंसर्गनिष्ठावच्छेदकतासाधारणस्य प्रवेशात् संसर्गतायां ( संसर्गतावच्छेदकतायाम् ) तादृशावच्छेदकताविशिष्टान्यत्वासंभवेनातिव्याप्त्यप्रसक्तेः । विशिष्टान्यावच्छेदकतायांसंबन्धावच्छिन्नत्वप्रवेशे प्रयोजनाभावात् । एवञ्च स्वावच्छेदकसंबन्धावच्छिन्नत्वं स्वानवच्छेदकानविच्छन्नत्वरूपं वाच्यम् । अन्यथा अतिव्याप्तेः । न च समवायस्यापि परंपरं । साध्यतावच्छेदकत्वमेवेति वाच्यम् । महानसीयकालीनबह्निमान् धूमादित्यत्र-

महानसीयत्वभह्न्यभावमादायाव्याप्तेस्साक्षात्साध्यतानिरूपितत्वस्यैव प्रवेश्यत्वात्। न चतत्र कालीनत्वरूपं साध्यतावच्छेदकम् अनवच्छेदकं तादृशप्रतियोगितया इति नाव्याप्तिरिति वाच्यम् । घटवृत्तिरूपविशिष्टस्य संयोगेन साध्यतायां तद्भूतलत्वे रूपवद् घटवृत्त्यभावमादायाव्याप्तेः। घटावृत्तितात्वेन घटवृत्तिमात्रस्य परम्परावच्छेदकत्वात्। एवञ्च विशिष्टान्यावच्छेदकतानिरूपितत्वमपि साक्षादेव ग्राह्यम्। अन्यथामहानसीयवह्निवृत्तित्वविशिष्टजातिमत्साध्यकव्यभिचारिणि अतिव्याप्तिरिति चेन्न। संयोगिनः कालिकेन साध्यतायां स्पन्दत्वे हेतौ संयोगिनः संयोगेनाभावमादायाव्याप्तेर्वारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य निवेश्यत्वात्।

साध्यतानिरूपितावच्छेदकत्वस्य धर्मसंसर्गनिष्ठावच्छेदकतासाधारण्ये संसर्गनिष्ठावच्छेदकतायाः संबन्धानवच्छिन्नत्वेन धर्मनिष्ठावच्छेदकतायाः संबन्धावच्छिन्नत्वेन च स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य संबन्धनिष्ठावच्छेदकतायां विरहेण संबन्धनिष्ठावच्छेदकतासाध्यतावच्छेदकताविशिष्टान्यैव भवति तन्निरूपितत्वस्यैव साध्याभावीयप्रतियोगितायां सत्त्वेन तन्निरूपकसाध्याभावस्य लक्षणाघटकत्वेन धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यात् तद्वारणाय स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य स्वानवच्छेदकसंबन्धानवच्छिन्नत्वरूपोऽर्थो बोध्य इति। एवञ्च साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वमित्यत्र अन्यावच्छेदकतानिरूपितत्वमपि साक्षादेव ग्राह्यम्।

अन्यथा महानसीयवह्निवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यत्रातिव्याप्तेः। साध्याभावीयप्रतियोगितायां साध्यतया साक्षान्निरूपितजातिनिष्ठावच्छेदकताविशिष्टान्यमहानसीयत्वनिष्ठावच्छेदकतायां परम्परानिरूपितत्वस्य, साध्यतावच्छेदकजातिनिष्ठावच्छेदकतानिरूपितत्वस्य चोभयस्य सत्त्वेन तदुभयाभावस्य तत्र विरहेण साध्याभावस्य लक्षणाघटकत्वापत्तेः। साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतायां साक्षान्निरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणे तु नोक्तदोषः। महानसीयत्वनिष्ठया साध्यतावच्छेदकताविशिष्टावच्छेदकत्वान्यया ऽवच्छेदकतया साक्षान्निरूपितत्वस्य साध्याभावीयप्रतियोगितायामसत्त्वेन तादृशोभयाभावस्य सत्त्वात्। साध्याभावस्य लक्षणघटकत्वोपपत्तेरिति चेन्न। संयोगिनः कालिकेन साध्ये स्पन्दत्वे

हेतौ कालिकेन कालः संयोगिमान् स्पन्दत्वादित्यत्र हेत्वधिकरणे संयोगेन संयोगिनोऽभावमादायाव्याप्तेर्वारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशस्यावश्यकत्वात् । अन्यथा तादृशसाध्याभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्यासत्वेन तादृशोभयाभावस्य सत्वात् साध्याभावो भवति लक्षणघटक इति तत्राव्याप्त्यापत्तेः । लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे तु न दोषः । तत्र तदसत्वात् ।

यत्तु अवच्छेदकभेदेनावच्छेदकताया भेदे सत्त्व. द्रव्यत्व. निष्ठप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यत्वसंभवेन वह्निमान् धूमादित्यत्र हेत्वधिकरणे पर्वते महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावमादाय नाव्याप्तिः । तदभावीयप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यसत्वद्रव्यत्वनिष्ठनिरवच्छिन्नावच्छेकतानिरूपितत्वस्य सत्वेन तादृशोभयाभावस्यासत्वात् । तदभावो न लक्षणघटक इत्यव्याप्त्यभावेन निरवच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वनिवेशो व्यर्थ इति तत्तुच्छम् । महानसीयवह्निवृत्तित्वविशिष्टवह्नित्ववदभावमादाय वह्निमान्धूमादित्यत्राव्याप्तेर्वारणाय निरवच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां निरवच्छित्वनिवेशस्यावश्यकत्वात् । साध्यतावच्छेदकताविशिष्टान्यघटत्वादिनिष्ठावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकतानिरूपितत्वस्य (साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य) चोभयस्य साध्याभावीयप्रतियोगितायामसत्त्वेन तादृशोभयाभावस्य सत्वात् भवति साध्याभावो लक्षणघटक इति तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वेन तत्राव्याप्त्यापत्तेः । प्रतियोगितावच्छेदकमहानसीयवह्निवृत्तित्वविशिष्टवह्नित्वनिष्ठावच्छेदकतायाः सावच्छिन्नत्वेन निरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वाभावेन तादृशाभावस्य न लक्षणघटकत्वमिति तत्राव्याप्त्यभावोपपत्तेः । अवच्छेदकतादेरवच्छेदकरूपतायामेवावच्छेदकभेदेनावच्छेदकताया भेदः संभवति । तस्य चासिद्धान्ततया यथाश्रुतेऽपि निर्वाहसंभवाच्चेति । महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावीयप्रतियोगितायां साध्यतावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकताविशिष्टावच्छेदकताभिन्नावच्छेदकतानिरूपितत्वोभयाभावस्य सत्त्वेन तदभावमादाय वह्निमान्धूमादित्यत्राव्याप्तिवारणाय निरवच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां

निरवच्छिन्नत्वनिवेश आवश्यकः । जातिनिष्ठप्रतियोगितावच्छेदकतायां वह्नित्वनिष्ठ-साध्यतावच्छेदकताभेदस्याभावेन तस्याः साध्यतावच्छेदकताविशिष्टान्यत्वाभावात् तादृशाभावमादाय तत्राव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितावच्छेदकतायां-निरवच्छिन्नत्वनिवेशः सार्थकः । तथा च सोऽभावो न लक्षणघटकः । तस्य निरवच्छिन्नावच्छेदकताकप्रतियोगिताकत्वाभावादिति दिक् ।

अथ साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाव एव लक्षणघटकाभावीयप्रतियोगितायां विशेषणमस्तु । अलं तत्र साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावनिवेशेन । एवञ्च प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वम्, प्रतियोगितायां निरवच्छिन्नावच्छेदकतानिरूपकत्वम् साध्यतावच्छेदकसंबन्धावच्छिन्नत्वञ्च न निवेश्यम्, प्रयोजनाभावात् ।

वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावम् विषयितया वह्नित्वविशिष्टाभावम् समवायेन वह्न्यभावञ्चादाय नाव्याप्तिः । तदीयप्रतियोगितायां तदुभयाभावासत्त्वेन तदभावानां लक्षणाघटकत्वात् । धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । तादृशोभयाभावस्य साध्याभावीयप्रतियोगितायां सत्त्वेन साध्याभावस्य लक्षणघटकत्वात् । साध्यतावच्छेदकत्वाभावमादाय सद्धेतौ लक्षणसमन्वयः । प्रतियोगिवैयधिकरण्यञ्च प्रतियोगितावच्छेदकसंबन्धेन बोध्यम् । तेन महानसीयवह्निशून्यकालावच्छेदेन पर्वते कालिकेन महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः । महानसे वह्निकालावच्छेदेन पर्वते कालिकेन तदभावस्य वृत्तित्वेन प्रतियोगिसामानाधिकरण्यमिति तदभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयस्य सत्त्वेन तदुभयाभावो न वर्तते इति तदभावस्य न लक्षणघटकतेति । न वा स्वरूपाधेयत्वान्यतरसंबन्धेन वह्निसाध्यके तादात्म्येन वह्नित्वहेतुके वह्नित्वं तादृशान्यतरसंबन्धेन वह्निमत् तादात्म्येन वह्नित्वादित्यत्र येन केनापि संबन्धेन साध्यतावच्छेदकत्वाभावस्य साध्यतावच्छेदकस्वरूपसंबन्धेन प्रतियोगिसामानाधिकरण्येन प्रतियोगिवैयधिकरण्याभावादव्याप्तिः । प्रतियोगितावच्छेदकतादात्म्यसंबन्धेन साध्यतावच्छेदकताभेदस्य प्रतियोगिवैयधिकरण्येन न दोषः । तादात्म्यसंबन्धावच्छिन्नप्रतियोतावच्छेदगिकत्वाभाववति साध्यतावच्छेदके साध्यतावच्छेदकस्वरूपसंबन्धेन

प्रतियोगिनः साध्यतावच्छेदकत्वस्य सत्त्वेऽपि प्रतियोगितावच्छेदकतादात्म्यसंबन्धेन तत्रासत्त्वात्, भवति सोऽपि प्रतियोगिव्यधिकरणः। व्यभिचारिणि अतिव्याप्तिवारणाय साध्यवद्वृत्त्यभावीयत्वस्य सद्धेतौ साध्यतावच्छेदकत्वाभावं ग्रहीतुं साध्यतावच्छेदकतात्वानवच्छिन्नत्वस्य च लक्षणघटकाभावप्रतियोगितायां निवेशः। न चावच्छेदकताया अवच्छेदकत्वरूपत्वनये तादात्म्येन प्रमेयविशिष्टस्य तादात्म्येन साध्यतायां घटत्वविशिष्टे घटत्वे वा प्रमेयावच्छिन्नसाध्यतानिरूपितावच्छेदकत्वे वा सद्धेतौ साध्यतानिरूपितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकसंबन्धमात्रेणैव तादात्म्यादिना स्वप्रतियोग्यधिकरणावृत्तित्वेन प्रतियोगिवैयधिकरण्याभावेन तस्य लक्षणाघटकत्वम्। व्यधिकरणसंबन्धेन साध्याभावस्य साध्यवद्वृत्तित्वञ्चेति लक्षणघटकाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावः, तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्ति रित्यत्राव्याप्तिः। प्रमेयत्वावच्छिन्नायाः प्रमेयावच्छिन्नसाध्यतानिरूपितावच्छेदकतायाः साध्यतावच्छेदकप्रमेयरूपतया केवलान्वयित्वमिति तस्य सर्वत्र वृत्तित्वेन साध्यतावच्छेदकत्वाभावस्य प्रतियोगिव्यधिकरणस्याप्रसिद्धेरिति वाच्यम्। साध्यतावच्छेदकतात्वनिष्ठसाध्यतावच्छेदकत्वाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकस्वरूपसंबन्धावच्छिन्नत्वनिवेशे प्रयोजनविरहेण हेतुसमानाधिकरणस्य विषयितया साध्यतावच्छेदकतात्वविशिष्टाभावस्य प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वमिति तत्राव्याप्त्यभावोपपत्तेः। तथा हि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणविषयित्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतात्वनिष्ठावच्छेदकताकसाध्यतावच्छेदकत्वाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वावच्छिन्नत्वोभयाभावस्य सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेये सत्त्वेन तत्राव्याप्त्यभावोपपत्तेः। हेतुसमानाधिकरणाभावस्य स्वप्रतियोगितावच्छेदकतात्वविषयकज्ञानसामानाधिकरण्याभावेन तदभावे प्रतियोगिवैयधिकरणस्य सत्त्वात्

एवं घटः स्व(पट) वृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासंबन्धेन पटवान् घटत्वादित्यत्र साध्यतावच्छेदकत्वाभावस्य साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यविरहेऽपि

प्रतियोगितावच्छेदकतादात्म्येन पूर्वोक्तदिशा प्रतियोगिवैयधिकरण्यसंभवात् ।

केचित्तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावः, तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेत्वधिकरणे द्रव्ये स्वरूपसंबन्धेन गुणाभावो नास्तीति प्रतीतिसिद्धगुणाभावाभावम्, संयोगसमवायाभ्यां हेत्वधिकरणे द्रव्ये गुणाधिकरणत्वात्मकाभावञ्चादाय (गुणाधिकरणत्वरूपमभावञ्चादाय) अभाववान् वाच्यत्वादित्यत्र स्वरूपसंयोगसमवायैः प्रत्येकं साध्याभावस्य प्रतियोगिवैयधिकरण्यात् अव्याप्त्या एवं समवायेन घटत्वाभावस्य कालिकेन योऽभावः तस्य स्वरूपसंबन्धेन साध्यतायां वाच्यत्वे घटत्वाभावाभाववान् वाच्यत्वादित्यत्र व्यभिचारिणि घटत्वाभावातिरिक्तस्य साध्याभावस्य स्वरूपेणात्मनि वृत्तित्वात् प्रतियोगिसामानाधिकण्यमिति अभावान्तरस्यैव लक्षणघटकत्वादतिव्याप्त्या, एवं स्वरूपसमवायसयोगान्यतमेन उक्तसाध्यकसद्धेतौ स्वरूपेण घटत्वात्यन्ताभावाभाववान् आत्मत्वादित्यत्र साध्यवत्ताबुद्धिविरोधिताघटककालिकसंबन्धेन साध्यवदात्मवृत्तित्वाप्रसिद्धया, एवं जात्यभाववान् सामान्यत्वादित्यत्र, (समवायत्वादित्यत्र वा) साध्यवन्निरूपितसमवायसंबन्धानच्छिन्नवृत्तित्वस्याप्रसिद्धया चाव्याप्त्या, साध्यवत्ताग्रहविरोधिताघटक संबन्धेन साध्यवद्वृत्तित्वस्य च विवक्षितुमशक्यतया, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन साध्यवद्वृत्तित्वं वाच्यमिति जात्यभावाभावरूपसाध्याभावस्य प्रतियोगिमत्ताग्रहविरोधिताघटकसमवायेन साध्यवद्वृत्तित्वाप्रसिद्धया अभावान्तरमादाय जात्यभाववान् वाच्यत्वादित्यत्रातिव्याप्तिरिति वदन्ति । तदसत् । यत्किञ्चित्साध्यवन्निरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्व भाववत् स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नाधिकरणत्वानिरूपकत्वस्य हेतुसमानाधिकरणाभावे विवक्षितत्वात् । तथा च यत्किञ्चित्साध्यवन्निरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभाववान् स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नाधिकरणत्वानिरूपको यो हेतुसमानाधिकरणाभावः, तदीयप्रतियोगितायां साध्यवद्वृत्यभावीयत्व, साध्यताच्छेदकतात्वानवच्छिन्नत्वोभयाभावः तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । एवञ्च

प्रतियोगिनः साध्यतावच्छेदकत्वस्य सत्त्वेऽपि प्रतियोगितावच्छेदकतादात्म्यसंबन्धेन तत्रासत्त्वात्, भवति सोऽपि प्रतियोगिव्यधिकरणः। व्यभिचारिणि अतिव्याप्तिवारणाय साध्यवद्वृत्त्यभावीयत्वस्य सद्धेतौ साध्यतावच्छेदकत्वाभावं ग्रहीतुं साध्यतावच्छेदकतात्वानवच्छिन्नत्वस्य च लक्षणघटकाभावप्रतियोगितायां निवेशः। न चावच्छेदकताया अवच्छेदकस्वरूपत्वनये तादात्म्येन प्रमेयविशिष्टस्य तादात्म्येन साध्यतायां घटत्वविशिष्टे घटत्वे वा प्रमेयावच्छिन्नसाध्यतानिरूपितावच्छेदकत्वे वा सद्धेतौ साध्यतानिरूपितावच्छेदकत्वाभावस्य हेतुसमानाधिकरणस्य प्रतियोगितावच्छेदकसंबन्धमात्रेणैव तादात्म्यादिना स्वप्रतियोग्यधिकरणवृत्तित्वेन प्रतियोगिवैयधिकरण्याभावेन तस्य लक्षणाघटकत्वम्। व्यधिकरणसंबन्धेन साध्याभावस्य साध्यवद्वृत्तित्वञ्चेति लक्षणघटकाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावः, तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्राव्याप्तिः। प्रमेयत्वावच्छिन्नायाः प्रमेयावच्छिन्नसाध्यतानिरूपितावच्छेदकतायाः साध्यतावच्छेदकप्रमेयरूपतया केवलान्वयित्वमिति तस्य सर्वत्र वृत्तित्वेन साध्यतावच्छेदकत्वाभावस्य प्रतियोगिव्यधिकरणस्याप्रसिद्धेरिति वाच्यम्। साध्यतावच्छेदकतात्वनिष्ठसाध्यतावच्छेदकत्वाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकस्वरूपसंबन्धावच्छिन्नत्वनिवेशे प्रयोजनविरहेण हेतुसमानाधिकरणस्य विषयितया साध्यतावच्छेदकतात्वविशिष्टाभावस्य प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वमिति तत्राव्याप्त्यभावोपपत्तेः। तथा हि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणविषयित्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतात्वनिष्ठावच्छेदकताकसाध्यतावच्छेदकत्वाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वावच्छिन्नत्वोभयाभावस्य सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेये सत्त्वेन तत्राव्याप्त्यभावोपपत्तेः। हेतुसमानाधिकरणाभावस्य स्वप्रतियोगितावच्छेदकतात्वविषयकज्ञानसामानाधिकरण्याभावेन तदभावे प्रतियोगिवैयधिकरण्यस्य सत्त्वात्

एवं घटः स्व(पट) वृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासंबन्धेन पटवान् घटत्वादित्यत्र साध्यतावच्छेदकत्वाभावस्य साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यविरहेऽपि

प्रतियोगितावच्छेदकतादात्म्येन पूर्वोक्तदिशा प्रतियोगिवैयधिकरण्यसंभवात्।

केचित्तु प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावः, तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र हेत्वधिकरणे द्रव्ये स्वरूपसंबन्धेन गुणाभावो नास्तीति प्रतीतिसिद्धगुणाभावाभावम्, संयोगसमवायाभ्यां हेत्वधिकरणे द्रव्ये गुणाधिकरणत्वात्मकाभावञ्चादाय (गुणाधिकरणत्वरूपमभावञ्चादाय) अभाववान् वाच्यत्वादित्यत्र स्वरूपसंयोगसमवायैः प्रत्येकं साध्याभावस्य प्रतियोगिवैयधिकरण्यात् अव्याप्त्या एवं समवायेन घटत्वाभावस्य कालिकेन योऽभावः तस्य स्वरूपसंबन्धेन साध्यतायां वाच्यत्वे घटत्वाभावाभाववान् वाच्यत्वादित्यत्र व्यभिचारिणि घटत्वाभावातिरिक्तस्य साध्याभावस्य स्वरूपेणात्मनि वृत्तित्वात् प्रतियोगिसामानाधिकण्यमिति अभावान्तरस्यैव लक्षणघटकत्वादतिव्याप्त्या, एवं स्वरूपसमवायसयोगान्यतमेन उक्तसाध्यकसद्धेतौ स्वरूपेण घटत्वात्यन्ताभावाभाववान् आत्मत्वादित्यत्र साध्यवत्ताबुद्धिविरोधिताघटककालिकसंबन्धेन साध्यवदात्मवृत्तित्वाप्रसिद्ध्या, एवं जात्यभाववान् सामान्यत्वादित्यत्र, (समवायत्वादित्यत्र वा) साध्यवन्निरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्याप्रसिद्ध्या चाव्याप्त्या, साध्यवत्ताग्रहविरोधिताघटक संबन्धेन साध्यवद्वृत्तित्वस्य च विवक्षितुमशक्यतया, स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन साध्यवद्वृत्तित्वं वाच्यमिति जात्यभावाभावरूपसाध्याभावस्य प्रतियोगिमत्ताग्रहविरोधिताघटकसमवायेन साध्यवद्वृत्तित्वाप्रसिद्ध्या अभावान्तरमादाय जात्यभाववान् वाच्यत्वादित्यत्रातिव्याप्तिरिति वदन्ति। तदसत्। यत्किञ्चित्साध्यवन्निरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्व भाववत् स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नाधिकरणत्वानिरूपकत्वस्य हेतुसमानाधिकरणाभावे विवक्षितत्वात्। तथा च यत्किञ्चित्साध्यवन्निरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभाववान् स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नाधिकरणत्वानिरूपको यो हेतुसमानाधिकरणाभावः, तदीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यताच्छेदकतात्वानवच्छिन्नत्वोभयाभावः तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। एवञ्च

अभाववान् वाच्यत्वादित्यत्र गुणाभावाभावरूपे साध्याभावे गुणे यत्किञ्चित्साध्यवद्-द्रव्यनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभावस्य प्रतियोगिमत्ताग्रहविरोधिताघटकसमवायसंबन्धावच्छिन्नाधिकरणतानिरूपकत्वस्य च सत्वेन (तादृशविशेषण-विशिष्टतादृशनिरूपकत्वस्यैव सत्वेन) तादृशनिरूपकत्वाभावस्य गुणाभावाभावे गुणेऽसत्वात् साध्याभावमादाय न तत्राव्याप्तिः। स्वरूपसंयोगसमवायान्यतमसंबन्धावच्छिन्नघटत्वाभावस्य यः कालिकेनाभावस्तस्य स्वरूपेण साध्यतायां घटत्वा-भावाभाववान् वाच्यत्वादित्यत्र नातिव्याप्तिः। घटत्वाभावरूपे साध्याभावे यत्किञ्चित्साध्यवदात्मनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य सत्वेन तादृशवृत्ति-त्वाभावस्यासत्वमिति स्वप्रतियोगिमत्ताग्रहविरोधिताघटककालिकसंबन्धावच्छिन्न-जन्यनिष्ठाधिकरणतानिरूपकत्वस्य सत्वेऽपि विशेषणाभावप्रयुक्तस्य तादृशनिरूपक-त्वाभावस्य तत्र सत्त्वेन साध्याभावस्य लक्षणघटकत्वात्।

तादृशघटत्वाभाववान् (स्वरूपसंयोगसमवायान्यतमसंबन्धावच्छिन्नघटत्वात्यन्ता-भावस्य यः कालिकेनाभावस्तस्य स्वरूपेण साध्यतायाम्) आत्मत्वे हेतौ अयमात्मा घटत्वात्यन्ताभावाभाववान् आत्मत्वादित्यत्र नाव्याप्तिः। घटत्वाभावाभावाभावरूपे साध्याभावे घटत्वाभावरूपेऽपि यत्किञ्चित्साध्यवदात्मनिरूपितसंबन्धावच्छिन्न-वृत्तित्वस्य स्वप्रतियोगिमत्ताग्रहविरोधिताघटककालिकसंबन्धावच्छिन्नजन्यनिष्ठाधिकर-णतानिरूपकत्वस्य च सत्त्वेन तत्र तादृशविशेषणविशिष्टनिरूपकत्वाभावस्यासत्त्वात् प्रतियोगिसमानाधिकरणत्वेन साध्याभावो न लक्षणघटकः किन्तु अभावान्तर एवेति-तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। तादृशघटत्वाभावस्य यः कालिकेनाभावः तस्य यः स्वरूपेणाभावः स लाघवेन प्रथमाभावरूप एव स्वीकार्यः। नातिरिक्तः। तदीयप्रतियोगितावच्छेदकसंबन्धः स्वरूप इव समवायादिरपि प्रथमाभाव-तृतीयाभावयोरैक्यात्।

एवं जात्यभाववान् सामान्यत्वात् समवायत्वाद्वेत्यत्र नाव्याप्तिः। प्रतियोगि-व्यधिकरणहेतुसमानाधिकरणजात्यभावाभावाभावस्य घटत्वाद्यभावरूपत्वेन तत्र साध्य-वत्सामान्यादिनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य, स्वप्रतियोगि (जात्यभावरूप-

प्रतियोगि)मत्ताग्रहविरोधिताघटकसमवायसंबन्धावच्छिन्नाधिकरणत्वानिरूपकत्वस्य च सत्त्वेन तादृशोभयत्वस्यैव सत्त्वात् तस्य लक्षणाघटकत्वेऽपि स्वरूपेण साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावमादाय लक्षणं संगच्छते ।

वह्निमान् धूमादित्यत्र लक्षणघटकघटाभावे विशेषणाभावप्रयुक्ततादृशविशिष्टाभावस्य सत्त्वेन तस्य लक्षणघटकत्वम् ।

वस्तुतस्तु स्वप्रतियोगिमत्ताग्रहेत्यत्र स्वपदं न लक्षणघटकाभावपरम् । किन्तु साध्यवद् वृत्त्यभावपरम् । एवञ्च यथाश्रुते (स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन साध्यवद्वृत्तित्वमभावस्येति कथनेऽपि) एव हि न दोषस्य संभवः । साध्यवद्वृत्त्यभाव प्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नवृत्तित्वस्यात्र प्रसिद्धेः । सामान्याभाववान् सामान्यत्वादित्यत्र हेत्वधिकरणवृत्तिप्रतियोगिव्यधिकरणघटाभावप्रतियोगितायां लक्षणघटकाभावप्रतियोगिघटवत्ताबुद्धिविरोधिताघटकस्वरूपसंबन्धावच्छिन्नवृत्तित्वं साध्यवज्जातिनिष्ठघटाभावे वर्तते । तथा च साध्यवद्वृत्त्यभावीयत्वस्य सत्त्वेऽपि साध्यतावच्छेदकतात्वानवच्छिन्नत्वस्य च सत्त्वेन तादृशोभयाभावस्यासत्त्वाद् घटाभावस्य लक्षणघटकत्वेऽपि साध्यतावच्छेदकत्वाभावमादाय लक्षणसमन्वयः । साध्यतावच्छेदकत्वाभावे साध्यवद्वृत्तित्वेऽपि साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगिताकत्वाभावेन तदीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्वस्य सत्त्वेऽपि साध्यतावच्छेदकतात्वानवच्छिन्नत्वाभावेन तादृशोभयाभावो वर्तते इति तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

यत्तु साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदनवच्छेदक साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र अभावे प्रतियोगिवैयधिकरण्यं न निवेश्यम् । कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्याभावीयप्रतियोगितायां तादृशोभयत्वस्यैव सत्त्वेन तादृशोभयाभावस्यासत्वात् साध्याभावो न लक्षणघटक इति । एवं वह्निमान् धूमादित्यत्र तत्तद्व्यक्त्यभावीयप्रतियोगितायां तदुभयस्यैव सत्वेन तदुभयाभावस्यासत्वमिति तत्तद्व्यक्त्यभावस्य लक्षणाघटकत्वेनानवच्छेदकत्वानु-

सरणं न कर्तव्यम् । तथा च साध्यवद्वृत्त्यभावीयत्वसाध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती या हेतुसमानाधिकरणाभावीया प्रतियोगिता तच्छून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति ।

तत् तुच्छम् । तद्वत्ताबुद्धिं प्रति अव्याप्यवृत्तित्वज्ञानाभावविशिष्टतदभाववत्तानिश्चयो विरोधीति अव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वपक्षेऽपि स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन शुद्धस्वरूपेण समवायावच्छिन्नप्रतियोगिताकसंयोगाभावस्य साध्यवद्वृत्तितया तदीयप्रतियोगितायां तदुभयाभावस्यासत्त्वेन संयोगाभावो न लक्षणघटक इति संयोगी सत्त्वादित्यत्र साध्यतावच्छेदकत्वाभावमादायातिव्याप्तिवारणाय निरवच्छिन्नत्वविशिष्टतादृशस्वरूपेणैव साध्यवद्वृत्तित्वमभावे विवक्षणीयमिति कपिसंयोगाभावस्य तेन निरवच्छिन्नस्वरूपेण साध्यवद्वृत्तित्वाभावात् । तादृशोभयाभावस्य तदीयप्रतियोगितायां सत्त्वेन साध्याभावो लक्षणघटक इति तत्राव्याप्तिवारणाय लक्षणघटकाभावे प्रतियोगिवैयधिकरण्यं निवेश्यम् । न च संयोगी सत्त्वादित्यत्र हेत्वधिकरणे गुणे गुणवृत्तित्वावच्छिन्नाभावमादाय नातिव्याप्तिः । तदीयप्रतियोगित्वस्य साध्ये सत्त्वात् । संयोगरूपसाध्यवति वृक्षे गुणावृत्तिनो द्रव्यत्वस्य संयोगस्य च सत्त्वेन न तदभावस्य साध्यवद् वृत्तित्वमिति तदुभयाभावस्य गुणावृत्तित्वावच्छिन्नाभावीयप्रतियोगितायां सत्त्वेन तदभावस्य लक्षणघटकत्वात् संयोगी सत्त्वादित्यत्रातिव्याप्तिविरहेण निरवच्छिन्नविशेषणं तादृशस्वरूपसंबन्धे न देयमिति वाच्यम् । संबन्धाविशेषावच्छिन्नत्वस्य (हेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य, एवं तादृशाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य चानिवेशे) अविशेषणत्वे स्ववृत्तिभेदीयवह्नित्वावच्छिन्नप्रतियोगितास्वरूपान्यतरसंबन्धेन (अत्र स्वपदं साध्यतावच्छेदकतात्वपरम्) साध्यतावच्छेदकतात्वविशिष्टवह्नेः समवायेनाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तेः तदीयप्रतियोगितायां तदुभयाभावस्य सत्त्वेन तत्प्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वात् । अतस्तत्राव्याप्तिवारणायानवच्छेदकत्वानुसरणस्यावश्यकतया गुणावृत्तित्वावच्छिन्नाभावमादाय संयोगी सत्त्वादित्यत्रातिव्याप्तिवारणासंभवात् । तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । यदि च हेत्वधिकरणे गुणे

स्व (संयोग) वृत्तिसंयोगत्वाश्रयाश्रयत्वसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाव-मादाय संयोगी सत्त्वादित्यत्रातिव्याप्तिवारणं संभवति । तदीयप्रतियोगितायाः साध्ये सत्वात् । तत्रातिव्याप्तिवारणायानवच्छेदकत्वानुसरणं न कर्तव्यम् । सोऽभावो न साध्यवति वृक्षे वर्तते स्ववृत्तिसंयोगत्वाश्रयाश्रयत्वसंबन्धेन संयोगस्य व्याप्यवृत्तितया स्वाधिकरणे स्वाभावस्यासत्त्वात् । तदा संबन्धविशेषेण लक्षणघटकाभावे हेतुसामाना-धिकरण्यस्य वाच्यतया यथासन्निवेशे न प्रतियोगिवैयधिकरण्यस्य वैयर्थ्यमिति गृहाण । अयं भावः, संयोगी सत्त्वादित्यत्र साध्यभावीयप्रतियोगितायां साध्यावद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयसत्त्वेन साध्याभावो न लक्षणघटक इति तत्रा-तिव्याप्तिवारणाय निरवच्छिन्नस्वरूपेण साध्यवद्वृत्तित्वमभावे वाच्यम् । तथा सति साध्याभावमादाय कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणाय लक्षणघटकाभावे प्रतियोगिवैयधिकरण्यं निवेश्यमिति ।

एतेन संयोगसाध्यकव्यभिचारिणि संयोगी सत्वादित्यत्रातिव्याप्तिवारणाय स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसंबन्धस्य (स्वरूपसंबन्धस्य) निरवच्छिन्नत्वविशे-षणत्वे तद्वृक्षवृत्तिकपिसंयोगाभावैतद्वृक्षवृत्तिकपिसंयोगाभावान्यतरस्य निरवच्छिन्न स्वरूपेण साध्यतायां वृक्षत्वे सद्धेतौ प्रत्येकाभावमादायाव्याप्तिवारणायानवच्छेदकत्वानु सरणम्, सति च तस्मिन् (अनवच्छेदकत्वानुसरणे) संयोगी सत्त्वादित्यत्रातिव्याप्ति-वारणाय तादृशस्वरूपसंबन्धे निरवच्छिन्नत्वविशेषणमिति परस्पराश्रयोऽपि अपास्तः । यथा सन्निवेशे प्रतियोगिवैयधिकरण्यनिवेशस्य न वैयर्थ्यमिति कथनेनापास्तः । साध्यवद् वृत्त्यभावीयत्वञ्च साध्यवन्निरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वं वाच्यम् । तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः । अन्यथा हेतुसमानाधिकरणसाध्या-भावीयप्रतियोगितायां साध्यवद् (गुण) वृत्त्यभावीयत्वस्य, साध्यतावच्छेदकतात्वान-वच्छिन्नत्वस्य च सत्त्वेन तदुभयाभावस्यासत्त्वात् । साध्याभावस्य लक्षणाघटकत्वेन साध्य तावच्छेदकत्वाभावमादाय तत्रातिव्याप्त्यापत्तेः । वै० स्वनिरूपितत्व, स्वनिष्ठानु-नुयोगित्वानिरूपितत्वोभयसंबन्धेन । एतदुक्तौ च नोक्तदोषः । साध्यवद्गुणनिरूपित वृत्तितावच्छेदकानुयोगित्वं न विशिष्टसत्ताभावाभावत्वं किन्तु शुद्धसत्ताभावाभावत्व मेव तन्निरूपितत्वस्य साध्याभावीयप्रतियोगितायामसत्त्वेन तादृशोभयाभावस्य तत्र

सत्त्वात् साध्याभावो लक्षणघटक इति तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात् । स्वनिष्ठानुयोगित्वानिरूपितत्वकथनेन संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभिन्नं वाच्यत्वादित्यत्र नातिव्याप्तिः । हेत्वधिकरणवृत्तिसंयोगसंबन्धावच्छिन्न प्रतियोगिताकवाच्यत्वाभावभेदरूपसाध्याभावीयप्रतियोगितायां साध्यवद्घटादि निरूपितवृत्तितावच्छेदकसंयोगसंबन्धावच्छिन्नवाच्यत्वाभावनिरूपितत्व, तन्निष्ठानुयोगितानिरूपितत्वयोः सत्त्वेन तन्निष्ठानुयोगित्वानिरूपितत्वस्यासत्त्वात् । साध्यवन्निरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वरूपसाध्यवद्वृत्त्यभावीयत्वस्यासत्त्वेन साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावस्य तत्र सत्त्वात् । तन्निरूपकसाध्याभावस्य लक्षणघटकत्वोपपत्तेः । भेदाभावस्य प्रतियोगितावच्छेदकरूपत्वेन संयोगसंबन्धावच्छिन्नवाच्यत्वाभावभेदाभावस्य संयोगसंबन्धावच्छिन्नवाच्यत्वाभावरूपत्वम् । तस्य च साध्यवन्निरूपिता या साध्यनिष्ठा वृत्तिता तदवच्छेदकत्वमपि तत्र वर्तते । अभावस्यानुयोगिताविशेषत्वात् अनुयोगित्वरूपत्व मिति चेन्नैवम् । अवच्छेदकतावान् वाच्यत्वादित्यत्र हेतुसमानाधिकरणाभावप्रतियोगितायां संबन्धविशेषावच्छिन्नत्वस्यानिवेशेन संयोगेन साध्याभावमादायाव्याप्तेः । साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकतात्वानवच्छिन्नत्वाभावेन तादृशोभयाभावो वर्तते । भवति च साध्याभावो लक्षणघटकस्तदीयप्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वेन साध्यतावच्छेदके तादृशप्रतियोगितानवच्छेदकत्वस्यासत्त्वात् । अवच्छेदकतावान् वाच्यत्वादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं वक्तव्यम् । तथा च नोक्तदोषः । साध्याभावस्य साध्यतावच्छेदकस्वरूपसंबन्धेन प्रतियोगिसामानाधिकरण्येनान्याभावमादाय लक्षणसमन्वय इति ।

# सिद्धान्तलक्षणजगदीशीव्याख्या



## पण्डित श्रीकृष्ण माधव झा

साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितकल्पे स्ववृत्तिभेदीय घटत्वावच्छिन्नप्रतियोगितासंबन्धेन घटः पटवान् घटत्वादित्यत्र तेन संबन्धेन हेत्वधिकरणवृत्तिसाध्यतावच्छेदकत्वाभावस्य प्रतियोगिवैयधिकरण्यविरहेणान्याभावप्रतियोगिनः साध्यतावच्छेदकसंबन्धेनाधिकरणाप्रसिद्धया तत्राव्याप्तिवारणाय साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदवच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदके विवक्षणीयः । एवञ्च घटः स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासंबन्धेन पटवान् घटत्वादित्यत्र साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावीयप्रयोगितावच्छेदकत्वस्य साध्यतावच्छेदके पटत्वे व्यधिकरण तादृशस्वरूपसंबन्धावच्छिन्नाभावसत्त्वान्नाव्याप्तिः । घटाभावीयप्रतियोगितायां संयोगसंबन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगिताकसाध्यवद्वृत्त्यभावीयत्वस्य विरहेण तादृशोभयाभावो वर्तते । स्ववृत्तिभेदीयप्रतियोगितासंबन्धेन तदभावप्रतियोगिनोऽधिकरणत्वं घटे प्रसिद्धम् । साध्यतावच्छेदकव्यधिकरणसंबन्धेन हेत्वधिकरणे घटाभावः प्रतियोगिव्यधिकरणश्च । एवं रीत्या स्थलान्तरेऽपि बोध्यमिति निरस्तम् । अवच्छेदकतावान् वाच्यत्वादित्यत्र साध्यतानिरूपितावच्छेदकत्वाभावीय प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्तेः । साध्यतावच्छेदकत्वाभावभिन्नाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयस्य सत्त्वेन तदुभयाभावात् अभावान्तराणां न लक्षणघटकत्वम् । साध्याभावीयप्रतियोगितायां साध्यतावच्छेदकतात्वानवच्छिन्नत्वाभावेन तादृशोभयाभावो वर्तत इति भवति साध्यभावो लक्षणघटक इति तत्राव्याप्तिरिति बोध्यम् ।

अथ प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं वाच्यम् । तथा च

प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्यतावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धस्य व्यधिकरणत्वेन तेन संबन्धेन साध्यतावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वाभावस्य केवलान्वयित्वेन न क्वापि अव्याप्तिसंभावना। अस्मिन् लक्षणे साध्यतावच्छेदकत्वानवच्छिन्नत्वं द्विधा प्रविष्टम्। संबन्धे, उभयाभावप्रतियोगिकोटौ च। उभयत्र प्रकृत-साध्यघटितावच्छेदकतात्वानवच्छिन्नत्वं बोध्यम्। यदि संबन्धे प्रकृतेत्यस्याप्रवेशः। तदा घटत्वावच्छिन्नसाध्यतावच्छेदकतावान् वाच्यत्वादित्यत्रातिव्याप्तिः। प्रतियोगिता-वच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटत्वावच्छिन्नसाध्यतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताया यदवच्छेदकत्वम् अवच्छेदकतात्वम् तदभावस्य साध्यता-वच्छेदकतात्वान्न प्रतियोगितावच्छेदकत्वीयस्वरूपरूपव्यधिकरणसंबन्धावच्छिन्नप्रति-योगिताकस्य घटत्वावच्छिन्नसाध्यतावच्छेदकतात्वे साध्यतावच्छेदके सत्त्वात्। संबन्धे प्रकृतत्वस्य निवेशे नोक्तदोषः। घटत्वावच्छिन्नसाध्यतावच्छेदकतात्वरूप प्रकृतसाध्यता-वच्छेदकनिष्ठ साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगिकस्वरूपसंबन्धेनप्रतियोगिता-वच्छेदकत्वस्यावच्छेदकतात्वस्य साध्यतावच्छेदके सत्त्वेन तस्य सामाना-धिकरण्यसंबन्धत्वमिति तेन संबन्धेन प्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदकेऽ-सत्त्वात्।

उभयाभावघटके साध्यतावच्छेदकतात्वानवच्छिन्नत्वेत्यत्र प्रकृतत्वस्यानिवेशे, अवच्छेदकतावान् वाच्यत्वादित्यत्राव्याप्तिः। घटत्वादिरूपहेत्वधिकरणवृत्तिप्रति-योगिव्यधिकरणाभावीया यः साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वान वच्छिन्नत्वोभयाभाववती घटत्वावच्छिन्न साध्यतावच्छेदकतानिष्ठा प्रतियोगिता तन्नि-रूपितघटत्वावच्छिन्नसाध्यतावच्छेदकतात्वनिष्ठावच्छेदकतायाः प्रकृतसाध्यतावच्छेद-कतात्वनिष्ठ साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगिकस्वरूपसंबन्धो न व्यधिकरण-संबन्धः, इत्येतत्स्वरूपसंबन्धेन तादृशप्रतियोगितावच्छेदकत्वाभावस्यावच्छेदकतात्वे साध्यतावच्छेदकेऽसत्त्वात्। प्रकृतसाध्यघटितावच्छेदकत्वस्य अवच्छेदकत्वस्य प्रतियोगिता-वच्छेदके घटत्वावच्छिन्नसाध्यतावच्छेदकतात्वे प्रविष्टत्वात्। तत्र प्रकृतत्वस्योपादाने तु नोक्तदोषः। घटत्वावच्छिन्नसाध्यतावच्छेदकतात्वे प्रकृतसाध्यतावच्छेदकतात्वपर्याप्ता-वच्छेदकताया अभावेन प्रकृतसाध्यतावच्छेदकतात्वानवच्छिन्नत्वस्य तत्र सत्त्वेन तादृश-

प्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपसंबन्धस्य साध्यतावच्छेदकत्वव्यधिकरणत्वेन तेन संबन्धेन तदभावस्य साध्यतावच्छेदके अवच्छेदकतात्वे सत्त्वेनाव्याप्तेरभावात्। प्रकृतसाध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्ध इत्यत्र, उभयाभावघटके प्रकृतसाध्यतावच्छेदकतात्वानवच्छिन्नत्वेत्यत्र च प्रकृतसाध्यतावच्छेदकनिष्ठावच्छेदकतात्वानवच्छिन्नत्वं न वक्तव्यम्। अन्यथा घटत्वनिष्ठावच्छेदकतावान् वाच्यत्वादित्यत्रातिव्याप्तेः। घटत्वनिष्ठावच्छेदकत्वे साध्ये घटत्वस्यापि साध्यतावच्छेदकतया साध्याभावप्रतियोगितायां साध्यतावच्छेदकघटत्वनिष्ठावच्छेदकतात्वानवच्छिन्नत्वविरहेण साध्याभावीयप्रतियोगितायां साध्यवद् वृत्त्यभावीयत्व, साध्यतावच्छेदकनिष्ठावच्छेदकतात्वानवच्छिन्नत्वोभयाभावस्य सत्त्वेन प्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके घटत्वनिष्ठावच्छेदकतात्वे सत्वात्। तादृशसंबन्धस्य व्यधिकरणत्वात्। उभयाभावघटकप्रकृतसाध्यतावच्छेदकत्वत्वानवच्छिन्नत्वस्योपादाने तु नोक्तदोषः। साध्याभावीयप्रतियोगितायां तदुभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वस्य समानाधिकरणतादृशस्वरूपसंबन्धेन साध्यतावच्छेदके सत्त्वेनातिव्याप्तिविरहोपपत्तेः। संबन्धकोटौ साध्यतावच्छेदकनिष्ठावच्छेदकतात्वानवच्छिन्नत्वस्योपादाने तु अवच्छेदकतावान् वाच्यत्वादित्यत्र साध्यतावच्छेदकतात्वनिष्ठावच्छेदकत्वाभावमादायाव्याप्तिः। प्रतियोगिव्यधिकरणहेतुसमानाधिकरण साध्यतावच्छेदकतात्वनिष्ठा (अवच्छेदकतात्वनिष्ठा)वच्छेदकत्वाभावीया साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती या अवच्छेदकतात्वनिष्ठावच्छेदकत्वाभावीयप्रतियोगिता तन्निरूपितावच्छेदकत्वस्य साध्यतावच्छेदकतात्वे सत्त्वात्। अतस्तत्राव्याप्तिवारणायोभयाभावकोटावपि साध्यतावच्छेदकनिष्ठावच्छेदकतात्वानवच्छिन्नत्वं तादृशप्रतियोगितायां न प्रवेश्यम्। एवञ्च साध्यतावच्छेदकत्वोभयाभावमादायातिव्याप्त्यसंभवेऽपि पूर्वकल्पवत् साध्यतावच्छेदकतात्वानवच्छिन्नत्वं साध्यतावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वरूपं न वाच्यमिति चेत् उच्यते। वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षे सः परमाणुः स्ववृत्तिभेदीयैतत्परमाणुत्वावच्छिन्नप्रतियोगितासंबन्धेन एतत्परमाणुमान् परमाणुत्वादित्यत्र व्यभिचारिणि साध्यतावच्छेदकवृत्त्यनियामकसंबन्धेन साध्य-

संबन्धिनि संबन्धान्तरावच्छिन्नसाध्याभावस्य वृत्तित्वेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्वस्य सत्त्वेन साध्यतावच्छेदकत्वाभावमादाय तत्रातिव्याप्तिः। तादृशसाध्यतावच्छेदकत्वाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावस्य सत्त्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। सिद्धान्ते तत्र नातिव्याप्तिः। साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावप्रतियोगितावच्छेदकत्वस्यैव सत्त्वात्। यदि सिद्धान्ते गगनादेः कालिकसंबन्धेन वृत्तित्वपक्षे कालो घटवान् महाकालत्वादित्यत्र प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः; तद्वारणाय प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति वक्तव्यम्। एवं सति धनी चैत्रत्वादित्यत्राव्याप्तिः। साध्यतावच्छेदकस्वामित्वसंबन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति हेतुसमानाधिकरणाभावीयप्रतियोगितायां यत्संबन्धावच्छिन्नत्वघटितोभयाभावस्याप्रसिद्धेः। तत्राव्याप्तिवारणाय वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वं स्वीकार्यम्। किं वा। स्वावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नावच्छेदकताकत्व, यत्संबन्धावच्छिन्नावच्छेदकत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिः। अस्मिन् कल्पे धनी चैत्रत्वादित्यत्राव्याप्तिवारणाय वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वं स्वीकार्यम्। किं वा। तादृशप्रतियोगितावच्छेदकतायां साध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावः। साध्यतावच्छेदकतात्वानवच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नतादृशावच्छेदकत्वाभावः साध्यतावच्छेदके विवक्षणीयः। प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकानधिकरणत्वघटितं प्रतियोगिवैयाधिकरण्यञ्च विवक्षणीयम्। महानसीयवह्निमद्भेदमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां सा० तावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावो न निवेश्यः। हेत्वधिकरणे समवायेन वह्निमद्भेदमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां

साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्व साध्यतावच्छेदकतावच्छेदकतदितरोभयान वच्छिन्नत्वोभयाभावो न विवक्षणीय इति सिद्धान्तकल्पापेक्षयाऽस्मिन् कल्पे लाघवम्। एवञ्चास्मिन् कल्पे तत्परमाणुः स्ववृत्तिभेदीयैतत्परमाणुत्वावच्छिन्नप्रतियोगितासंबन्धेन एतत्परमाणुमान् परमाणुत्वादित्यत्र घनी प्रमेयत्वादित्यत्र च नातिव्याप्तिः। हेत्वधिकरणे वृत्यनियामकसंबन्धेन साध्याभावस्य लक्षणघटकत्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादित्युच्यते। तदापि गगनादेरवृत्तित्वपक्षे तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकघटित यथाश्रुते साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वमेव लक्षणघटकाभावीयप्रतियोगितायां निवेशनीयम्। सिद्धान्तभिन्नेऽस्मिन् कल्पे प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावो निवेश्यते। सिद्धान्ते च प्रतियोगितायां तदुभयाभावो निवेश्यते इत्यणुरपि विशेषोऽध्यवसायकर इति न्यायाल्लाघवम्।

ननु गगनादेः कालिकेन वृत्तित्वपक्षे किमिति लघुभूतस्यानुपदोक्तव्याप्ति-लक्षणस्य न लक्षणत्वमिति चेच्छृणु। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावीया या साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती प्रतियोगिता तन्निरूपितावच्छेदकतात्वावच्छिन्ना प्रकृतसाध्यता वच्छेदकतात्वानवच्छिन्नप्रतियोगित वच्छेदकत्वप्रतियोगिकस्वरूपसंबन्धावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। साध्यवद्वृत्त्यभावीयत्वञ्च साध्यवन्निरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वम्। वै०। स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन। अस्य सद्धेतोः व्याप्तिलक्षणत्वं न वारयामः, किन्तु अनुमित्यनुकूलत्वव्याप्तित्वं वारयामः। अन्यथा विनिगमनाविरहेण साध्यतावच्छेदकतात्वानवच्छिन्नत्वघटितोभयाभावस्यैव प्रकृतानुमितित्वानवच्छिन्नत्वं, साध्यवद्वृत्त्यभावीयत्वोभयाभावघटितस्य साध्यतानिरूपित संसर्गत्व, तदवच्छेदकत्व, तदवच्छेदकत्वाद्यनवच्छिन्नत्व, साध्यवद्वृत्त्यभावीयत्वोभयाभावघटितस्य व्याप्तित्वापत्तेः।

साध्यवद्वृत्त्यभावीयत्वप्रकृतानुमितित्वावच्छिन्नत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तन्निरूपितावच्छेदकतात्वावच्छिन्ना साध्यतावच्छेदकतात्वानव-

च्छिन्नप्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपसंबन्धावच्छिन्ना प्रतियोगिता तन्निरूपका भाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। एवं साध्यतावच्छेदकत्वत्वानवच्छिन्नत्वादिघटितोभयाभावघटितं व्याप्तिलक्षणमूह्यम्।

ननु लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावघटितस्यैवानुमित्यनुकूलत्वम्; इतरेषां लक्षणघटकाभावीयप्रतियोगिताया-मुभयाभावसंपादनार्थत्वमित्यत्र किं विनिगमकमिति चेच्छृणु। मूलस्थसिद्धान्तव्याप्तिलक्षणपदै, प्रतियोगि,प्रतियोगितावच्छेदक, साध्यतावच्छेदकादीनाञ्चोपस्थितयः क्लृप्ताः तत्तत्पदेभ्य एव तेषामुपस्थितय इत्यक्लेशकल्पनञ्च भवति। साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभावघटितानां व्याप्तिलक्षणानाञ्च मूललक्षण प्रतिपाद्यत्वं नास्तीति क्लेशेनावक्लृप्तकल्पनं भवति। तथा च प्रकृतानुमितितद्विषेयत्वादेश्चोपस्थितिः सिद्धान्तलक्षणघटकपदैः भवति नवीनलक्षणपदैर्न भवति क्लेशाक्लेशयोर्विनिगमकत्वं गृहाण।

एतेन वृत्त्यनियामकसंबन्धसाध्यतावच्छेदकव्यभिचारिणि (साध्यतावच्छेदकवृत्त्यनियामकसंबन्धकव्यभिचारिणि, प्रमेयधनवान् चैत्रत्वादित्यादौ) साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नसंबन्धितात्वान्यतरविशिष्टा भावमादायातिप्रसक्त्यभावेऽपि न क्षतिः।

न च वह्निमतः तादात्म्येन साध्यतायां धूमे पर्वतः तादात्म्येन वह्निमद्वान् धूमादित्यत्र तादात्म्येन वह्निमतो वह्नेः तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकभेदः हेत्वधिकरणे पर्वते साध्यतावच्छेदकतादात्म्यसमवायान्यतरसंबन्धेन प्रतियोगिव्यधिकरणः तदीयवह्निनिष्ठप्रतियोगितायां साध्यतावच्छेदकवह्निवृत्तित्वेन साध्यतावच्छेदकावृत्तित्वाभावात् साध्यतावच्छेदकावृत्तित्व साध्यवद्वृत्त्यभावीयत्वोभयाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकवह्निनिष्ठावच्छेदकत्वस्य साध्यतावच्छेदके वह्नौ सत्त्वेन तदभावस्यासत्वादव्याप्तिरिति वाच्यम्। साध्यवद्वृत्त्यभावीयत्व, यत्किञ्चित्साध्यतावच्छेदकावृत्तित्वोभयाभाववतीं या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदवच्छेदकत्वाभावस्य लक्षणघटकाभावीयप्रतियोगितावृत्त्युभयाभावीयप्रतियोगिता-

निरूपितपरंपरावच्छेदकतावत्साध्यवताच्छेदकावृत्तिप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य साध्यतावच्छेदके विवक्षणेनादोषात्। तादात्म्येन बह्निमतो वह्नेर्भेदीयप्रतियोगितावच्छेदकवह्निवृत्त्यवच्छेदकत्वस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणवह्नि मद्वह्निभेदीयप्रतियोगितावृत्तितादृशाभावीयप्रतियोगितापरंपरावच्छेदकतावत्साध्यतावच्छेदकावृत्तिर्या प्रतियोगिता घटाद्युदासीननिष्ठा तदवच्छेदकत्वीयस्वरूपस्य व्यधिकरणतया तेन स्वरूपेण तादृशप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वात्। साध्यतावच्छेदकावृत्त्यवच्छेदकत्वप्रतियोगिकस्वरूपसंबन्धः साध्यतावच्छेदकावृत्त्यवच्छेदकत्वस्य व्यधिकरणः। धूमवान् बह्ने रित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसाध्याभावीयप्रतियोगितावृत्त्युभयाभावीयप्रतियोगितायाः परंपरावच्छेदकतावद्धूमत्वनिष्ठावच्छेदकत्वीयस्वरूपस्य समानाधिकरणसंबन्धत्वमिति तेन संबन्धेन तादृशोभयाभाववत् तादृशधूमाभावीयप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके धूमत्वेऽसत्त्वान्नातिव्याप्तिः। ननु वह्निमान् धूमादित्यत्र हेत्वधिकरणे पर्वते वह्निवह्नित्वोभयं नास्तीत्यभावभादायाव्याप्तिः। साध्यतावच्छेदकवह्नित्वनिष्ठायां तदीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकावृत्तित्वोभयाभावस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके बह्नित्वेऽसत्त्वादिति चेन्न। प्रतितोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकातिरिक्तवृत्तित्वोभयाभावविवक्षणेनादोषात्। वह्निवह्नित्वोभयाभावीयप्रतियोगितायां तदुभयस्य सत्त्वेन तदुभयाभावस्यासत्त्वात् बह्निवहित्वोभयाभावो न लक्षणघटक इति। एवं सामान्यधर्मविच्छिन्नाधिकरणत्वास्वीकारे साध्यवत्त्वस्य पारिभाषिकस्य (साध्यतावच्छेदके यन्निरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावस्तदेवसाध्याधिकरणम् (साध्यवदिति) इतिवक्तव्यतया नवीनलक्षणे सिद्धान्तलक्षणापेक्षया लाघवाभावोऽपि प्रत्युत गौरवम्। अस्य सिद्धान्तलक्षणेऽप्रवेशात्। हेत्वधिकरणत्वं तु उभयलक्षणसाधारणम्। अन्यथा साध्यवत्त्वाप्रसिद्धया नवीनलक्षणासंभवात्। विशेषरूपेणसंसर्गत्वास्वीकारपक्षे साध्यतावच्छेदकतात्वानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धो विशेषः। तस्यास्वीकारे, एतत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावः सध्यतावच्छेदके निवेशयितुमशक्य इति लक्षणमितितत्पक्षे न संभवतीति।

अतएव (विशेषरूपेण संसर्गत्वास्वीकारादेव) परिष्कृतसाध्यतावच्छेदका

तिरिक्तधर्मानवच्छिन्नप्रतियोगितावच्छेदकत्वीयस्वरूप संबन्धावच्छिन्ना प्रतियोगि व्यधिकरण हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकातात्वावच्छिन्नाप्रतियोगिता तन्निरूपकाभाववन्साध्यतावच्छवेकावच्छिभसामानाधिकरण्यं हेतौ व्याप्तिः। प्रतियोगिवैयधिकरण्यञ्च प्रतियोगितावच्छेदकसंम्बन्धेनैव ग्राह्यम्। नातः तादात्म्यसमवायान्यतरसंम्बन्वेन वह्निसाध्यके बह्निः वह्निमान् वह्नित्वादित्यत्र समवायरूपसाध्यतावच्छेदकसंम्बन्वेन तादात्म्यसंम्बन्धावच्छिन्न प्रतियोगिताकसाध्यतावच्छेदकाभावस्य हेत्वधिकरणे बह्नौ बह्नित्वस्य सत्त्वेन प्रतियोगिसमानाधिकरणत्वात् प्रतियोंगिवैयधिकरणत्वाभावेनाव्याप्तिः। तादात्म्यसंबन्धेन बह्नित्वं नेति प्रतीतिसिद्धाभावे हेत्वधिकरणे बह्नौ साध्यतावच्छेदकसमवायसंबन्धेन प्रतियोगिसामानाधिकरण्यं हेतुसमानाधिकरणाभावीयप्रतियोंगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेकावृत्तित्वोभयस्य सत्त्वेन न तदुभयाभावो वर्तते। समवायेन बह्नित्वं नास्तीत्यभावो न हेतुसमानाधिकरण इति लक्षणघटकस्तादृशोऽभावो न भवतीति हेतुसमानाधिकरणाभावस्याप्रसिद्धेः प्रतियोगितावच्छेदकसंम्बन्वेन प्रतियोगिवैयधिकरण्यविवक्षायां तु नोक्तदोषः। हेत्वधिकरणे बह्नौ वह्नित्वं नेत्यभावस्य प्रतियोगितावच्छेदक तादात्म्यसंबन्धेन प्रतियोगिव्यधिकरणस्य प्रसिद्धत्वात्।

वह्निमतस्तादात्म्येन साध्यतायां घूमे हेतौ पूर्वोक्तरीत्याऽव्याप्तिवारणाय तादृशप्रतियोगितावच्छेदकत्वस्य लक्षणघटकाभावीयप्रतियोगितावृत्तितादृशोभयाभावीयप्रतियोगितापरम्परावच्छेदकतावत्साध्यातावच्छेदकावृत्तिप्रतियोगितावच्छेदकताप्रतियोगिकस्वरूपसंबन्धेनाभावस्य साध्यतावच्छेदकेऽवश्यविवक्षणीयत्वेनास्यापि दोषस्य तेनैव वारणमिति न पृथक्तयाऽयं निवेश आवश्यक इति। संबन्धघटके साध्यतावच्छेदके लक्षणघटकाभावीयप्रतियोगितावृत्तितादृशोभयाभावीयप्रतियोगितापरंपरावच्छेदकतावत्वविशेषणात् तादात्म्येन प्रमेयवद्वान् वाच्यत्वादित्यत्र नाव्याप्तिः। लक्षणघटकाभावीय प्रतियोगितावृत्तिर्यस्तादृशोभयाभावीयप्रतियोगितापरम्परावच्छेदकतावत्साध्यतावच्छेदकावृत्तिप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्ना या लक्षणघटकाभावीयप्रतियोगितावच्छेदकतात्वावच्छिन्ना प्रतियोगिता तत्प्रतियोगितानिरूपकाभाववत्साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। अन्यथा सर्वासां प्रतियोगितानां साध्यतावच्छेदके सत्त्वेन तदवृत्तिप्रतियोगिताया अप्रसिद्धया साध्यतावच्छेदकावृत्ति प्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपस्याप्रसिद्धया तेन स्वरूपेण तादृशप्रतियोगिता-

वच्छेदकत्वाभावोऽप्रसिद्ध इति प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्त्यापत्तेः। लक्षण-घटकाभावीयप्रतियोगितावृत्तितादृशोभयाभावीयप्रतियोगितानिरूपितावच्छेदकतावत्त्वस्य साध्यतावच्छेदके विशेषणत्वे तु नोक्तदोषः। प्रतियोगिव्यधिकरणधूमसमाना-धिकरणघटाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, साध्यतावच्छेदकावृत्ति-त्वोभयाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावद्घटरूपसाध्यतावच्छेदकावृत्ति-प्रतियोगितावच्छेदकताप्रतियोगिकस्वरूपसंबन्धेन तादृशप्रतियोगितावच्छेदकघटत्व-निष्ठावच्छेदकत्वाभावस्य पटरूपप्रमेयरूपसाध्यतावच्छेदके सत्त्वेन तत्रा-व्याप्त्यभावोपपत्तेरिति परास्तम्। विशेषरूपेण संसर्गत्वानभ्युपगमेन लक्षणघटका-भावीयप्रतियोगिता तादृशोभयाभावीयप्रतियोगितापरंपरानिरूपितावच्छेदकता-प्रतियोगिकस्वरूपस्यासंबन्धत्वेन तेन संबन्धेन तादृशावच्छेदकत्वाभावस्य साध्यता-वच्छेदके कथयितुमशक्यत्वेन तादाम्येन प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तेस्ताद-वस्थ्यात्। यत्तु तादात्म्येन धूमविशिष्टधूमवान् वह्नेरित्यत्रातिव्याप्तिः। प्रति-योगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकावृत्तित्वोभयाभाववत्प्रतियोगितानिरूपितावच्छेदकधूमनिष्ठावच्छेदकत्व-स्य लक्षणघटकाभावप्रतियोगितावृत्त्युभयाभावीयप्रतियोगितानिरूपितपरम्परावच्छेदक-तावत्साध्यतावच्छेदकधूमावृत्तिप्रतियोगितावच्छेदकत्वप्रतियोगिकस्वरूपरूपव्यधिकरण-संबन्धेनाभावः साध्यतावच्छेदके धूमे वर्तते व्यधिकरणसंबन्धा-वच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वादिति। तन्न। विषयितास्वरूपान्यतर-संबन्धेन प्रागुक्तान्यतरवदभावमादायातिव्याप्तिवारणात्।

अतएव (अस्या व्याप्तेरनुमित्यनुयोगित्वादेव) साध्यवद्वृत्त्यभावीयत्व जगन्निरूपितवृत्तितानवच्छेदकानुयोगितानिरूपितत्वोभयाभावो लक्षणघटकाभावीय-प्रतियोगितायां लाघवाद् विवक्षणीयः। धूमवान् वह्नेरित्यत्र तादृशधूमाभावप्रतियोगि-तायां साध्यवद्वृत्त्यभावीयत्वविरहेण तदुभयाभावो वर्त्तते इति साध्याभावो लक्षण-घटक इति न दोषः। वह्निमान् धूमादित्यत्र समवायादि व्यधिकरणसंबन्धेन वाच्यत्वा भावमादाय लक्षणसंगतिः। तादृशवाच्यत्वाभावीयप्रतियोगितायां जगन्निरूपित वृत्तितानवच्छेदकघटाद्यभावत्वरूपानुयोगितानिरूपितत्वविरहेण तादृशोभयाभावः।

न च लाघवाल्लक्षणघटकाभावे एव साध्यवद्वृत्तित्वजगद्वृत्तिभिन्नत्वोभयाभाव-विशेषणमस्त्विति वाच्यम् । अभावस्याधिकरणस्वरूपपक्षे तदभिन्नाभिन्नस्य तदभिन्नत्वमिति हेत्वधिकरणपर्वतवृत्तिमहानसीय बह्न्यभावोऽपि गगनाभाव एव । समानाधिकरणानामभावानामधिकरणरूपत्वेनैक्यमिति बह्निमान् धूमादित्यत्र महानसीय बह्न्यभावे तादृशोभयाभावो वर्तत इति भवति महानसीयबह्न्यभावो लक्षणघटक इति तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्त्यापत्तेः । लक्षणघटकाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्व, जगन्निरूपितवृत्तितानवच्छेदकानुयोगितानिरूपितत्वोभयाभावस्य निवेशे तु नोक्तदोषः । अनुयोगित्वस्य वैलक्षण्येन समानाधिकरणाभावानामैक्येऽपि तत्तदभावगतानुयोगित्वानां भिन्नत्वमिति जगन्निरूपितवृत्तितानवच्छेदक महानसीयबह्न्यभावत्वरूपानुयोगितानिरूपितत्वस्य साध्यवद्वृत्त्यभावीयत्वस्य च सत्त्वेन तदुभयाभावस्य महानसीय बह्न्यभावप्रतियोगिताया मसत्त्वात् तदभावस्य न लक्षणघटकत्वमिति । अभावाधिकरणकोऽभावोऽधिकरण-स्वरूप इति पक्षेऽपि गगनाभावे यो महानसीयवह्न्यभावस्तस्य गगनाभावरूपत्व-मिति पक्षेऽपि लक्षणाघटकाभावे तदुभयाभावनिवेशेऽपि उक्तदोषो बोध्यः । यदि चा-भावाधिकरणकोऽभावप्रतियोगिकोऽभावोऽधिकरणस्वरूपः । अभावस्य नाधिकरण स्वरूपत्वमिति तर्हि महानसीयबह्न्यभावो न गगनाभावरूप इति महानसीयवह्न्यभावे साध्यवद्वृत्तित्व, जगद्वृत्तिभिन्नत्वोभयाभावस्यासत्त्वेन न तदभावमादाय बह्नि-मान् धूमादित्यत्राव्याप्तिरित्युच्यते । तदाऽभावस्याधिकरणानात्मकत्वपक्षे लक्षणघटका-भावे साध्यवद्वृत्तित्व, जगद्वृत्तिभिन्नत्वोभयाभावो निवेश्यताम् । प्रतियोगि वैयधिकरण्यञ्चात्र प्रतियोगितावच्छेदकसंबन्धेनैव वाच्यम् । घटः स्ववृत्तिवाच्यत्ववत्त्व संबन्धेन पटवान् घटत्वादित्यत्र स्वरूपसंबन्धावच्छिन्नघटाभावं केवलान्वयिनमादाय लक्षणसंगतिः कार्या । न च बह्निगगनोभयाभावस्य, विषयितया बह्नित्वविशिष्टस्य स्वरूपेणाभावस्य च केवलान्वयित्वेन तत्तदभावमादाय वह्निमान् धूमादित्यत्रा व्याप्तिः । एतेष्वभावेषु जगद्वृत्तिभिन्नत्वाभावेन तादृशोभयाभावस्य सत्त्वादिति वाच्यम् । जगन्निरूपितवृत्तितानवच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकत्वीय-स्वरूपसंबन्धेन तादृशोभयाभाववद्धेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वा भावस्य साध्यतावच्छेदके विवक्षणीयतयाऽत्राव्याप्त्यभावोपपत्तेः । अस्य स्वरूप

संबन्धस्य तादृशप्रतियोगितावच्छेदकत्वव्यधिकरणत्वादित्यपि परास्तम् । विशेषरूपेण संसर्गस्वानभ्युपगमात् । अतएव (विशेषरूपेण संसर्गस्यानभ्युपगमादेव) लक्षणघटकाभावे साध्यवद्वृत्तित्व, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयाभावो विवक्षणीयः । प्रतियोगिव्यधिकरणाभावस्य प्रमेयरूपसाध्यप्रतियोगिकत्वात् तादृशाभावाप्रसिद्धया प्रमेयवान् घटत्वादित्यत्राव्याप्तिरतः साध्यतावच्छेदकावच्छिन्नेति। तथा च हेत्वधिकरणे घटे यः पटाभावः तस्य साध्यवद्वृत्तित्वेऽपि प्रमेयत्वावच्छिन्नप्रतियोगिताकत्वविरहेण तादृशोभयाभावस्य तत्र सत्त्वात् लक्षणघटकत्वमुपपद्यते । न च प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तिः । लक्षणघटकाभावीयप्रतियोगितामात्रस्य साध्यतावच्छेदकप्रमेयावच्छिन्नत्वेन तन्निरूपकाभावे तादृशोभयाभाव विरह इति तादृशलक्षणघटकाभावस्याप्रसिद्धेरिति वाच्यम् । साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेनादोषात् । तथा च साध्यवद्वृत्तित्व, साध्यतावच्छेदकताव्यापकावच्छेदकताकप्रतियोगिताकत्वोभयाभाववान् यः लक्षणघटकाभावस्तदीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति पर्यवसितम् । अत्र साध्यवद्वृत्त्यभावीयप्रतियोगितानिरूपितसाध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितप्रतियोगिताकत्वमस्य पर्यवसितार्थ इत्यपि हेयम् । (तथा च साध्यवद्वृत्तित्व, तादृशप्रतियोगिताकत्वोभयाभाववान् यो लक्षणघटकोऽभावस्तदीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । बह्निमान् धूमादित्यत्र लक्षणघटकघटाभावे साध्यवद्वृत्तित्वस्य सत्त्वेऽपि साध्यतावच्छेदकताव्यापकावच्छेदकताकप्रतियोगितानिरूपकत्वस्यासत्त्वेन तादृशोभयाभावो वर्तते इति तादृश घटाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद् भवति लक्षणसंगतिः । धूमवान् बह्नेरित्यत्र लक्षणघटकधूमाभावे साध्यवद्वृत्तित्वाभावेन तादृशोभयाभावो वर्तते । भवति साध्याभावो लक्षणघटक इति नातिव्याप्तिरित्यपि हेयम् ) ।

केचित्तु अत्र गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकावच्छिन्नत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं-

हेतो व्याप्तिरिति लाघवाद् वक्तव्यम्। बह्निमान् धूमादित्यत्र च घटाभावमादाय लक्षणसंगतिः। धूमवान् बह्ने रित्यत्र धूमाभावीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरणा-योगोलकनिरूपितसंबन्धितावच्छेदकवह्नित्वावच्छिन्नत्वाभावेन तादृशोभयाभावो वर्तते इति तत्प्रतियोगितानवच्छेदकत्वस्यसाध्यत ावच्छेदकेऽसत्त्वेन नातिव्याप्तिः। भनी मनुष्यत्वादित्यत्र संबन्धान्तरसंयोगादिसंबन्धावछिन्नसाध्याभावप्रतियोगितायां व्यभिचार निरूपकाधिकरणानिरूपितसंवन्धितावच्छेदकावच्छिन्नत्वविरहेण , तादृशोभयाभावो वर्तते तदनवच्छेदकत्वस्य साध्यतावच्छेदके विरहेण नातिव्याप्तिः। न च धूमत्वा वच्छिन्नप्रतियोगिकसंयोगेन धूमवान् वह्ने रित्यत्रातिव्याप्तिः। अयोगोलकनिरू-पितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वाप्रसिद्धयाऽभावान्तरीयप्रतियोगितानवच्छेद कत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम्। साध्यतावच्छेदकसंबन्धातिरिक्त संबन्धावच्छिन्नत्वसाध्यतावच्छेदकावछिन्नत्वोभयाभाववती या संबन्धितेति कथनेना दोषात्। तथा च साध्यतावच्छेदकसंबन्धातिरिक्तसबन्धावच्छिन्नत्व, साध्यतावच्छे-दकावच्छित्वोभयाभाववती या यत्किञ्चद्धेत्वधिकरणनिरूपितसंबन्धिता तादृश संबन्धितावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववती लक्षणघटका-भावीयप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतो व्याप्तिरिति फलितम्। तथा चोभयोः प्रसिद्धत्वेनायोगोलकनिरूपितवह्निनिष्ठ संयोगसंबन्धावच्छिन्नसंबन्धितायां साध्यतावच्छेदकधूमत्वावच्छिन्नत्वविरहेण साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्वोभया भावो वर्तते इति तादृशसंबन्धितावच्छेदकबह्नित्वावच्छिन्नत्वसाध्यतावच्छेदक धूमत्वावच्छिन्नत्वोभयाभाववती या लक्षणघटकधूमाभावीया प्रतियोगिता तदनवच्छे-दकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्त्वेनातिव्याप्त्यभावोपपत्तेः। न च विषयितया बह्निमत् बह्निविषयक, बह्निविशिष्टविषयक, बह्नित्वविशिष्टविषयकज्ञानान्यतमत्वा दित्यत्रातिव्याप्तिः। वह्नित्वस्य हेत्वधिकरणनिरूपितसंबन्धितावच्छेदकत्वमिति हेत्वधिकरणनिरूपितसंबन्धितायां साध्यतावच्छेदकविषयित्वातिरिक्तसंबन्धावच्छिन्नत्व-विरहेण हेत्वधिकरणज्ञाननिरूपितविषयित्वसंबन्धावच्छिन्नबह्निनिष्ठसंबन्धिता साध्यतावच्छेदक संबन्धातिरिक्त संबन्धावच्छिन्नत्व, साध्यतावच्छेदक बह्नित्वावच्छिन्न-

त्व, साध्यतावच्छेदकबह्नित्वावच्छिन्नत्वोभयाभाववती भवतीति तादृशसंबन्धितावच्छेदक बह्नित्वावच्छिन्नत्व, साध्यतावच्छेदकबह्नित्वावच्छिन्नत्वोभयस्यैव साध्याभावीयप्रतियोगितायां सत्त्वेन तदुभयाभाववत्या अभावान्तरीयप्रतियोगिताया अनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् । यत्किञ्चिद्धेत्वधिकरणनिरूपिततादृशोभयाभाववत्संबन्धितावच्छेदकताविशिष्टावच्छेदकतानिरूपित्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेनादोषात् । वै० स्वसाजात्य स्वसामानाधिकरण्योभयसंबन्धेन । तथा च साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत् यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्व , साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववती लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । वै० स्वसाजात्य, स्वसामानाधिरण्योभयसंवन्धेन । एवञ्च बह्निमान् धूमादित्यत्र नाव्याप्तिः । तादृशघटाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धातिरिक्त संबन्धावच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववती या यत्किञ्चिद्धेत्वधिकरणपर्वत निरूपित बह्निनिष्ठसंयोगसंबन्धावच्छिन्नसंबन्धिता तदवच्छेदक बह्नित्वनिष्ठावच्छेदकता विशिष्टावच्छेदकता तादृशोभयसंबन्धेन बह्नित्वनिष्ठैव तन्निरूपितत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके बह्नित्वे सत्वात् ।

ज्ञानं विषयितया बह्निमत् वह्निविषयकवह्निविशिष्टविषयकबह्नित्वविशिष्टवह्निविषयकज्ञानान्यतमत्वादित्यत्र नातिव्याप्तिः । यत्किञ्चिद्धेत्वधिकरण बह्नित्वविशिष्टवह्निविषयकज्ञान वृत्तिसाध्याभावीयप्रतियोगितायां साध्यता वच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वविरहप्रयुक्ततादृशोभयाभाववती बह्नित्वविशिष्ट बह्निविषयकज्ञाननिष्ठा संबन्धिता तदवच्छेदकबह्नित्वनिष्ठा सावच्छिन्नावच्छेदकता तद्विशिष्टा स्वसाजात्यस्वसामानाधिकरण्योभयसंबन्धेन सैव तन्निरूपितत्व विरहेण तादृशावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्वात् । साध्यतावच्छेदकबह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतायां साध्यतावच्छेदकबह्नित्वनिष्ठसावच्छिन्नावच्छेदक

तासामानाधिकरण्यस्य सत्वेऽपि स्वसाजात्यविरहेण तद्वैशिष्ट्यविरहात् तद्विशिष्टत्वाभावोपपत्तेरिति वदन्ति। तदसत्। महानसीयवह्निमान् धूमादित्यत्रातिव्याप्तेः। प्रतियोगितावच्छेदकवह्नित्वस्य निखिलहेत्वधिकरणनिरूपितसंबन्धितावच्छेदकत्वेन साध्यतावच्छेदकवह्नित्वावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदक वह्नित्वावच्छिन्नत्वयोः हेत्वधिकरणवृत्तिसाध्याभावीयप्रतियोगितायां सत्वेन तदुभयाभाववत्या अभावान्तरीयप्रतियोगितया अनवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्। न च लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व यत्किञ्चिद्धेत्वधिकरणनिरूपित संबन्धितावच्छेदकातिरिक्तधर्मानवच्छिन्नत्वोभयाभावो निवेश्यते इति नोक्तदोषः। महानसीयवह्न्यभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसंबन्धितावच्छेदकातिरिक्तमहानसीयत्वानवच्छिन्नत्वोभयाभावस्य सत्वेन महानसीयवह्न्यभावस्य लक्षणघटकत्वेन महानसीयवह्निमान् धूमादित्यत्र नातिव्याप्तिरिति वाच्यम्। एवंसति वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्त्यापत्तेः। यत्किञ्चिद्धेत्वधिकरण पर्वतनिरूपितसंबन्धितावच्छेदकवह्नित्वातिरिक्तमहानसीयत्वानवच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्वोभयाभावस्य सत्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वेऽसत्वात्। न च यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धिताविशेषणोभयाभावघटक साध्यतावच्छेदकावच्छिन्नत्वं स्वा(साध्यत्वा)नवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यताविशिष्टत्वरूपं वाच्यम्। तथा सति महानसीयवह्नित्वावच्छिन्नकालिक संबन्धावच्छिन्न यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसंबन्धितायां साध्यतानवच्छेदकमहानसीयत्वावच्छिन्नत्वस्य सत्वेन साध्यताविशिष्टत्वरूपसाध्यतावच्छेदकावच्छिन्नत्वविरहाद् विशेषणाभावप्रयुक्ततदुभयाभावस्य सत्वेन तादृशसंबन्धितावच्छेदकमहानसीयत्ववह्नित्वनिष्ठावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नत्वस्य चोभयस्यैव महानसीयवह्न्यभावप्रतियोगितायां सत्वेन तादृशोभयाभावस्यासत्वात् महानसीयवह्न्यभावो न लक्षणघटक इति घटाभावमादाय लक्षणसमन्वय इति वाच्यम्। ज्ञानं विषयितया वह्निमत् वह्निविषयकमहानसीयवह्निविषयकज्ञानान्यतरत्वादित्यत्रातिव्याप्तेः। हेत्वधिकरणे महानसीयवह्निविषयकज्ञाने यो विषयितया वह्निर्नास्तीत्यभावः, तदीयप्रतियोगितायां

यत्किञ्चिद्धेत्वधिकरणमहानसीयवह्निविषयकज्ञाननिरूपितसंबन्धितायाः यत्किञ्चि-द्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकातिरिक्तधर्मानवच्छिन्नत्व, साध्यतावच्छेदका-नवच्छिन्नत्वरूप साध्यतावच्छेदकावच्छिन्नत्वोभयाभाववत्याः अवच्छेदकं यद् वह्नित्वं तन्निष्ठनिरवच्छिन्नावच्छेदकताविशिष्टः स्वसाजात्यस्वसामानाधिकरण्योभयसंबन्धेन स्वैव तन्निरूपितत्व, साध्यतावच्छेदकावच्छिन्नत्वयोरुभयोः वह्न्यभावप्रतियोगितायां सत्त्वेन साध्याभावो न लक्षणघटक इत्यभावान्तरीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । वह्निमान् धूमादित्यत्र तन्महानसीयवह्न्यभावमादायाव्या-प्तिरपि भवति । तादृशतन्महानसीयवह्न्यभावप्रतियोगितायां तन्महानससमानकालिक-यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकावच्छिन्नत्वविरहेण स्वानवच्छेदका-नवच्छिन्नत्वरूप साध्यतावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धि-तावच्छेदकावच्छिन्नत्वोभयाभावसत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छे-दके सत्त्वात् ।

इह पुनरिदमवधेयम्, विभिन्नकालीनयोरपि परम्परासंबन्धस्वीकारे वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः । हेत्वधिकरणपर्वतवृत्तिमहानसीय-वह्न्यभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व, स्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छि-न्नयत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदका ( महानसीयवह्नित्वा ) वच्छिन्न-त्वयोरुभयोः सत्त्वेन तादृशोभयाभावस्यासत्त्वात् सोऽभावो न लक्षणघटकः घटाद्य-भावमादाय लक्षणसमन्वयः ।

महानसीयवह्निमान् धूमदित्यत्रातिव्याप्तिवारणाय लक्षणघटकाभावीयप्रति-योगितायां साध्यतावच्छेदकावच्छिन्नत्वयत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धिता-विशिष्टत्वोभयाभावो निवेश्यः । प्रतियोगितायां संबन्धितावैशिष्ट्यञ्च स्वानवच्छेदका-नवच्छिन्नत्व संबन्धावच्छिन्नस्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्वोभयसंबन्धेन । प्रति-योगिवैयधिकरण्यञ्च प्रतियोगितावच्छेदकसंबन्धेनैव वाच्यम् । तथा च साध्यतावच्छे-दकावच्छिन्नत्व, यत्किञ्चद्धेत्वधिकरणनिरूपितसंबन्धिताविशिष्टत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिक-

रण्यं हेतौ व्याप्तिरिति फलितम् । प्रतियोगितायां संबन्धितावैशिष्टयश्च । स्वानवच्छेदकानवच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्वोभयसंबन्धेन । बह्निमान् धूमादित्यत्र लक्षणघटकघटाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वाभावेन तादृशोभयाभावो वर्तते । महानसीयबह्निमान् धूमादित्यत्र साध्याभावीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरण ( पर्वत ) निरूपितबह्निनिष्ठसंबन्धिताविशिष्टत्वाभावेन साध्यतावच्छेदकावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरण ( पर्वत ) निरूपितसंबन्धिताविशिष्टत्वोभयाभावो वर्तते तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वेनातिव्याप्त्यभावोपपत्तेरिति । महानसीयबह्न्यभावीयप्रतियोगितायां तादृशबह्निनिष्ठसंबन्धितानवच्छेदकमहानसीयत्वावच्छिन्नत्वस्य सत्त्वेन स्वा ( संबन्धित्वा ) नवच्छेदकानवच्छिन्नत्वाभावात् स्वा ( प्रतियोगित्वा ) नवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्न स्व ( तादृशबह्निनिष्ठसंबन्धिता ) वृत्तित्वस्य तादृशप्रतियोगितायां सत्त्वेऽपि तादृशोभयाभावस्य सत्त्वात्साध्याभावो भवति लक्षणघटकः । एवञ्च संबन्धधर्मिकोभयाभावो वक्ष्यमाणो नादरणीयः । गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेऽपि साध्यतावच्छेदकावच्छिन्नत्वस्य पर्याप्त्यघटितत्वेन न दोषः । साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्याभावः तादृप्रतियोगितानवच्छेदकीभूतसाध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यं हेतौ व्याप्तिः । प्रमेयबह्निमान् धूमादित्यत्र साध्यतावच्छेदकसंबन्धसामान्ये प्रमेयबह्न्यभावीयप्रतियोगितावच्छेदकबह्नित्वावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावो न वर्तते । किन्तु घटसामान्याभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतपर्वतानुयोगिकत्वोभयाभावो वर्तते तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयबह्नित्वे सत्त्वम् । साध्यतावच्छेदकसंयोगे अपर्याप्त्या साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य सत्त्वेऽपि तादृशहेत्वधिकरणीभूतायोगोलकत्वावच्छिन्नानुयोगिकत्वाभावेन तादृशोभयाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयधूमत्वेऽपर्याप्त्या सत्त्वात् प्रमेयधूमवान् बह्नेरित्यत्र नातिव्याप्तिः । तादृशप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिवेशस्य प्रयोजनाभावेन विषयितया साध्यतावच्छेदकविशिष्टाभाव-

प्रतियोगितायां ( विषयितया धूमत्वविशिष्टाभावीयप्रतियोगितायां विषयितया प्रमेय-बह्नित्वविशिष्टाभावीयप्रतियोगितायां वा ) साध्यतावच्छेदकपर्याप्तावच्छेदकतानिरूपितावच्छेद्यत्वस्य प्रसिद्धेश्च ) एतादृशस्थले गुरुधर्मस्य प्रतियोगितावच्छेदकत्वं सर्वसंमतम्। अन्यथा प्रमेयवह्निं जानामीतिवत् प्रमेयवह्न्यभावं जानामीत्यनुपपत्तेश्च। वह्न्यभावं जानामीत्यापत्तेश्च। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यानिवेशे कालो घटवान् महाकालत्वादित्यत्र विषयितया घटत्वविशिष्टाभावो न प्रतियोगिव्यधिकरणः। तत्र समवायेन घटत्वविशिष्टप्रतियोगिसामानाधिकरण्यात् किन्तु गगनमवृत्तिमिति पक्षे गगनाभावमादाय लक्षणसंगतिः।

यत्तु सध्यतावच्छेदकावच्छिन्नत्वञ्च यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वरूपं विवक्षितम्। यत्किञ्चित्त्वनिवेशात् तादात्म्येन प्रमेयवान् द्रव्यत्वात्, वाच्यत्वाद्वेत्यत्र नाव्याप्तिः। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया या यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकावच्छिन्नत्वोभयाभाववती प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। यत्किञ्चिद्धेत्वधिकरणे पटाभावीयप्रतियोगितायां यत्किञ्चित्साध्याधिकरणघटनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकघटत्वावच्छिन्नत्वविरहेण तदुभयाभावस्य सत्त्वात्, तदनवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वान्नाव्याप्तिः। तन्न, ज्ञानं विषयितया घटवत् नित्यज्ञानत्वादित्यत्राव्याप्तेः। प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणसमवायसंबन्धावच्छिन्नप्रतियोगिताकघटाभावीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरणपटज्ञाननिरूपितसंबन्धितावच्छेदकपटत्वावच्छिन्नत्वविरहेण तादृशोभयाभावो वर्तते, तदवच्छेदकत्वस्यैव साध्यतावच्छेदके घटत्वे सत्त्वात्। न च हेत्वधिकरणघटज्ञाननिरूपिततादृशसंबन्धितावच्छेदकघटत्वावच्छिन्नत्वस्य तादृशघटाभावीयप्रतियोगितायां सत्त्वेन तदुभयस्यैव सत्त्वात् तदुभयाभावासत्त्वान्नोक्तदोष इति वाच्यम्। हेत्वधिकरणे यत्किञ्चित्त्वनिवेशेन यत्किञ्चिद्धेत्वधिकरणपटज्ञाननिरूपितसंबन्धितावच्छेदकपटत्वावच्छिन्नत्वविरहेण तदुभयाभावस्य घटाभावीयप्रतियोगितायां सत्त्वात्।

अन्यथा धूमवान् वह्नेरित्यत्रातिव्याप्त्यापत्तेः । तादृशधूमाभावीयप्रतियोगितायां यत्किञ्चित्साध्याधिकरणमहानसनिरूपित साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नसंबन्धितावच्छेदकधूमत्वावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसंबन्धितावच्छेदक - धूमत्वावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसंबन्धितावच्छेदकधूमत्वाव - च्छिन्नत्वोभयस्यैव सत्त्वेन तदुभयाभावासत्त्वात् साध्याभावस्य लक्षणाघटकत्वापत्तेः । यत्किञ्चित्वस्य हेत्वधिकरणे निवेशे तु नोक्तदोषः । तादृशयत्किञ्चिद्धेत्वधिकरणत्वेनायोगोलकस्यैव ग्रहणात् तन्निष्ठसंबन्धितावच्छेदक वह्नित्वावच्छिन्नत्वस्य साध्याभावीयप्रतियोगितायां विरहेण साध्याभावस्य लक्षणघटकत्वोपपत्तेः । हेत्वधिकरणे यत्किञ्चि - त्वनिवेशात् तादात्म्येन प्रमेयवान् वाच्यत्वादित्यत्र नाव्याप्तिः । अन्यथा घटरूपप्रमेयस्य यत्किञ्चिद्धेत्वधिकरणे पटेऽभावमादायाव्याप्त्यापत्तेः । घटरूपप्रमेयाभावीयप्रतियोगितायां पटरूपसाध्याधिकरणनिरूपिततादात्म्यरूपसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकपटत्वावच्छिन्नत्वविरहेण तदुभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वापत्तेः । यत्किञ्चित्त्वस्येष्टपरत्वेन यत्किञ्चित्साध्याधिकरणत्वेन घटरूपप्रमेयरूपसाध्यस्य तादात्म्येनाधिकरणं घट एव गृह्यते इति नोक्तदोषः । साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वकल्पे च प्रतियोगिताधर्मिकोभयाभावघटितकल्पानुसरणे नोक्तदोष इति बोध्यम् । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । यद्यपि प्रतियोगिव्यधिकरणहेतुसमाना - धिकरणाभावीया या यत्किञ्चित् साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धिता वच्छेदकावच्छिन्नत्वोभयाभाववती प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र समवायेन घटाभावमादाय ज्ञानं घटवत् नित्यज्ञानत्वादित्यत्राव्याप्तिः । यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धितावच्छेदकपटत्वावच्छिन्नत्वोभयाभावस्य समवायेन घटाभावीयप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । प्रतियोगिवैयधि-

करणयच्च प्रतियोगितावच्छेदकसंबन्धेन, तस्या अव्याप्तेर्वारणाय लक्षणघटकाभावीय-प्रतियोगितायां साध्यविकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपनिरूपित स्वा ( साध्यता ) वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धावच्छिन्नवृत्तित्व, यत्किञ्चिद्धेत्वधिकरणनिरूपित संबन्धितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकानुयोगिकस्वरूपसंबन्धावच्छिन्न स्वा ( प्रतियोगित्वा ) वच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धावच्छिन्नवृत्तित्वोभयाभावस्य निवेशः । समवायेन वह्न्यभावीयप्रतियोगितायां तदुभयस्यैव सत्त्वेन तदभावो न लक्षणघटक इति ज्ञानं विषयितया घटवत् नित्यज्ञानत्वादित्यत्र नाव्याप्तिः । एकत्वादेः पर्याप्त्यनभ्युपगमे समवायेन वह्न्यभावमादाय ज्ञानं विषयितया वह्निमत् नित्यज्ञान-त्वादित्यत्राव्याप्तिर्न वारयितुं शक्यते । साध्यतावच्छेदकवह्नित्वगतैकत्वस्य तादृश-पर्याप्त्यनुयोगितानवच्छेदकत्वेन तादृशैकत्वनिरूपितवृत्तित्वस्याप्रसिद्धया तथा कथयि-तुमशक्यत्वात् । तथापि पुनः प्रतिविधीयते । वह्न्याधेयत्वपर्याप्त्यन्यतरसंबन्धेन साध्यतायां वह्नित्वत्वेऽव्याप्तेः । वह्नित्वगतैकत्वाभावस्य प्रतियोगिवैयधिकरण्या-संभवात् । न च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं वाच्यम् । समवाय-संबन्धावच्छिन्नवह्न्यभावमादायाव्याप्तेः ।

यत्त्वेकत्वसाध्यकवाच्यत्वे साध्यतावच्छेदकगतैकत्वाभावमादायाव्याप्तिरिति । तन्न । स्वरूपेण तादृशरूपावृत्तिप्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रति-योगिताकाभावविवक्षायां दोषाभावादिति ।

ये तु लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्व, साध्य-तावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभावस्तदनवच्छेदकसाध्यतावच्छेदका वच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र साध्यतावच्छेदकभिन्नसंबन्धेन साध्याभावो न लक्षणघटकस्तदीयप्रतियोगितायां तदुभयस्यैव सत्त्वेन तदुभयाभावस्यासत्त्वात् । तथा च वह्निमान् धूमादित्यत्र समवायेन वह्न्यभावमादाय नाव्याप्तिः । न च वृत्त्यनियामक-संबन्धस्य प्रतियोगितानवच्छेदत्वेन तेन संबन्धेन साध्याभावो न लक्षणघटकः । अन्यसंबन्धेन साध्याभावीयप्रतियोगितायां तदुभयस्यैव सत्त्वेन तदुभयाभावस्यासत्त्वात्

अन्यसंबन्धेनापि साध्याभावस्य न लक्षणघटकत्वमित्यन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात् धनी मनुष्यत्वादित्यत्रातिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात्। धनी मनुष्यत्वादित्यत्र अन्यसंबन्धेन साध्याभावो लक्षणघटकः। तदीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरणेति दलाभावेन तदुभयाभावस्य सत्त्वात्। न चैवमपि साध्यतावच्छेदकावच्छिन्नप्रतियोगिकवृत्त्यनियामकसंबन्धसाध्यकव्यभिचारिणि धनत्वावच्छिन्नप्रतियोगिकस्वामित्वसंबन्धेन धनवान् मनुष्यत्वादित्यत्रातिव्याप्तिः। साध्यतावच्छेदकसंबन्धेन साध्याभावस्याप्रसिद्धया न लक्षणघटकत्वम्। अन्यसंबन्धेन साध्याभावीयप्रतियोगितायां तदुभयाभावस्यासत्वान्न तदभावस्य लक्षणघटकत्वमित्यन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्वात्। तत्रातिव्याप्तिरणाय साध्यतावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभावस्य संबन्धितायां निवेशनीयतया वृत्त्यनियामकसंबन्धसाध्यकसद्धेतौ अयं धनी चैत्रत्वादित्यादौ अव्याप्तिः। प्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकस्यापि उक्तसंबन्धितावच्छेदकत्वादिति वाच्यम्। (तथा च साध्यतावच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभाववती या यत्किञ्चिद्धेत्वधिकरण निरूपित "साध्यतावच्छेदकसंबन्धावच्छिन्न" संबन्धिता तदवच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभाववती या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। तथा च साध्यतावच्छेदकावच्छिन्न-। प्रतियोगिकवृत्त्यनियामकसंबन्धेन साध्ये धनी मनुष्यत्वादित्यत्र नातिव्याप्तिः व्यभिचारनिरूपकयत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नसंबन्धितायां साध्यतावच्छेदकावच्छिन्नत्वस्य विरहेण साध्यतावच्छेदकावच्छिन्नत्व साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभावस्य सत्वेन तादृशसंबन्धितावच्छेदकावच्छिन्नत्वविरहेण साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धा-

वच्छिन्नप्रतियोगिताकलक्षणघटकसाध्याभावीयप्रतियोगितायां साध्यतावच्छेदक-संबन्धातिरिक्तसंबन्धावच्छिन्नत्व, यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदक-संबन्धावच्छिन्नत्वोभयाभावस्य सत्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्वात्। एवं सति वृत्त्यनियामकसंबन्धसाध्यकसद्धेतौ धनी चैत्रत्वादित्यत्राव्याप्तिः। लक्षण-घटकघटाभावीयप्रतियोगितायां साध्यतावच्छेदकधनत्वावच्छिन्नत्वविरहेण साध्यता-वच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभाववती संबन्धिता हेत्वधिकरणनिरूपिता कालिकसंबन्धावच्छिन्ना घटनिष्ठा तदवच्छेदकघटत्वा वच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयत्वस्य लक्षणघटक-संयोगसंबन्धावच्छिन्नघटाभावीयप्रतियोगितायां सत्वेन न कोऽप्यभावो लक्षणघटक इति तादृशप्रतियोगिताकहेतुसमानाधिकरणाभावस्याप्रसिद्धेरिति वाच्यम्)। साध्यता-वच्छेदकताव्यापकावच्छेदकताघटितत्रितयाभावस्य हेतुसमानाधिकरणाभावीयप्रति-योगितायां विशेषणत्वेनादोषात्। तथा च साध्यतावच्छेदकावच्छिन्नत्व, साध्यता-वच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभाववद् यत्किञ्चिद्धेत्वधिकरणनिरूपित-साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नसंबन्धिता वच्छेदकावच्छिन्नत्व, साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वेतत्त्रितयाभाववती या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदनवच्छेदकसाध्यता-वच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्।

तथा च धनी चैत्रत्वादित्यत्र नाव्याप्तिः। लक्षणघटकसंयोगसंबन्धावच्छिन्न-घटाभावीयप्रतियोगितायां साध्यतावच्छेदकधनत्वावच्छिन्नत्वस्य साध्यतावच्छेदक-धनत्वनिष्ठावच्छेदकताव्यापकावच्छेदकताकत्वस्य चासत्वेन यत्किञ्चिद्धेत्वधिकरण-निरूपितसाध्यतावच्छेदकसंबन्धातिरिक्तकालिकसंबन्धावच्छिन्नचैत्रनिरूपितघटनिष्ठ -संबन्धितावच्छेदकघटत्वावच्छिन्नत्वस्य सत्वेऽपि तादृशत्रितयाभावस्य सत्वात्। तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके धनत्वे सत्वादिति वदन्ति।

तेऽनाकलन्तो लाघवगौरवं पूर्वपक्षरसिकाः। साध्यतावच्छेदकतदितरोभयान-वच्छिन्नत्वोभयाभावस्य लक्षणघटकाभावीयप्रतियोगितायामिति कल्पापेक्षयाऽस्मिन् नवीनकल्पे गौरवमिति ध्येयम्।

अथ वक्ष्यमाणयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र हेत्वधिकरणे साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभाव एव (वक्ष्यमाण) प्रतियोग्यनधिकरणत्वशब्देन विवक्षणीयः। तावतैव सर्वदोषाभावात् वक्ष्यमाणप्रतियोगिताधर्मिकोभयाभावो न वक्तव्यः। (प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति न वक्तव्यम्)। हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यत्र प्रतियोगितावच्छेदकावच्छिन्नत्वं न पर्याप्तिघटितम्। तथा च महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। तदीयप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नाधिकरणत्वस्य हेत्वधिकरणमात्रे सत्वात्। प्रतियोगितावच्छेदकनिष्ठनिरूपकतावच्छेदकतायां (हेत्वधिकरणनिष्ठाधिकरणतानिष्ठनिरूप्यतानिरूपितनिरूपकतावच्छेदकतायां) साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गतानिरूपितत्वमेव वक्तव्यम्। तेन रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादाय नाव्याप्तिः। संसर्गतावच्छेदकतायां पर्याप्त्यनिवेशाद् वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकधूमे नाव्याप्तिः। साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकसमवायत्वावच्छिन्नसंसर्गतानिरूपितत्वस्य लक्षणघटकाभावप्रतियोगितावच्छेदकघटत्वनिष्ठावच्छेदकतायां सत्वात् महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वक्ष्यमाणरीत्या (निरूपकतावच्छेदकतायां पर्याप्तिर्न निवेश्यते इति रीत्या) हेत्वधिकरणे महानसीयवह्निविषयकज्ञाने महानसीयो नास्ति, वह्निर्नास्तीत्यभावप्रतियोगितावच्छेदकनिष्ठपर्याप्तावच्छेदकताकनिरूपकताकाधिकरणत्वस्य सत्वेन तदभावस्य प्रतियोगिव्यधिकरणत्वाभावान्न तमादायाव्याप्तिः। हेत्वधिकरणतानिरूपित निरूपकतायां प्रतियोगितावच्छेदकावच्छिन्नत्वस्य व्यापकत्वसंबन्धेन प्रतियोगितावच्छेदकत्ववृत्त्यवच्छेदकत्वार्थत्वे (प्रतियोगितानिरूपितावच्छेदकतावृत्त्यवच्छेदकता-निरूपितनिरूपकतेति कथने)। विषयितया वह्निमान् तज्ज्ञानत्वादित्यत्र वह्नित्वविशिष्टाभावम्, विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र वह्न्यभावञ्चादाय

नाव्याप्तिः। प्रतियोगितावच्छेदकतासाध्यतावच्छेदकतयोः सावच्छिन्ननिरवच्छिन्नत्वेन भिन्नत्वेऽपि तयोः व्याप्यव्यापकभावस्य सत्वेन व्यापकतासंबन्धेन प्रतियोगितावच्छेदकतायां निरूपकतावच्छेदकताया वृत्तित्वात् हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य सत्वेन तत्र प्रतियोगिव्यधिकरणत्वाभावेन लक्षणाघटकत्वादिति चेत्। अत्यन्ताभावस्य ध्वंस.प्रागभाव.घटादित्रितयप्रतियोगिकत्वमते कालो गोत्ववान् कालत्वादित्यत्र लक्षणघटकत्वेन संप्रतिपन्नः सृष्टिकालवृत्तित्वविशिष्टघटत्वाद्यभावो न प्रतियोगिव्यधिकरणो भवितुमर्हति। प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र पर्याप्तेरनिवेशेन घटत्वरूपप्रतियोग्यधिकरणत्वस्य साध्याधिकरणत्वस्य चोभयस्य हेत्वधिकरणे काले सत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धया यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्य वाऽप्रसिद्धयाऽव्याप्तेः। अतः प्रतियोगिताधर्मिकोभयाभावकल्प आवश्यक इति। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्येव युक्तः। तत्र महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नोभयाभावनिवेश आवश्यकः। (प्रतियोगिव्यधिकरणत्वं पर्याप्त्या बोध्यम्। अन्यथा महानसीयवह्न्यभावस्य प्रतियोगिव्यधिकरणत्वानुपपत्तेः)। न चाभावाघटितकल्पे (यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति कल्पे) कालो गोत्ववान् कालत्वादित्यादावव्याप्तेरसंभवेन लक्षणघटकयादृशप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावनिवेशोऽस्यां व्याप्तौ नोचितः, पर्याप्त्या प्रतियोगितावच्छेदकानवच्छिन्नत्वस्य हेत्वधिकरणेऽनिवेशादिति वाच्यम्। लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वोभयाभावनिवेशस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यभावघटितकल्पाभिप्रायकत्वेन ग्रन्थसामञ्जस्यात्। प्रतियोगितावच्छेदकावच्छिन्नत्वं पर्याप्तिघटितमेव। अन्यथा तद्वह्निमान् धूमादित्यत्र साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन लक्षणा-

घटकत्वेनातिव्याप्त्यापत्तेः। एतेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया या धर्मविशिष्टान्याप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति कथनेनैव वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः। महानसीयवह्न्यभावीयप्रतियोगितायां धर्मविशिष्टत्वस्यैव सत्त्वेन तदभावस्य लक्षणाघटकत्वात्। धर्मवैशिष्ट्यं च स्वावच्छिन्नत्वस्वेतरानवच्छिन्नत्वोभयसंबन्धेन। समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं बोध्यम्। महानसीयवह्निमान् धूमादित्यत्र साध्याभावीय-प्रतियोगितायां वह्नित्वरूपधर्मवैशिष्ट्यस्य स्वावच्छिन्नत्व, स्वेतरधर्मानवच्छिन्नत्वोभय-संबन्धेन सत्वात् तदन्यत्वाभावेन साध्याभावो न लक्षणघटक इत्यभावान्तरमादायाति व्याप्तेर्वारणाय साध्यवृत्यभावीयत्वधर्मविशिष्टान्यत्वोभयाभावस्य लक्षणघटकाभावीय-प्रतियोगितायां निवेशे न कोऽपि दोषः। वै० स्वावच्छिन्नत्व, स्वेतरावच्छिन्नत्वोभय-संबन्धेनेति निरस्तम्। कालो गोत्ववान् कालत्वादित्यत्र सृष्टिकालवृत्तित्वविशिष्ट-घटत्वाद्यभाव एव लक्षणघटकः संपन्नः। तदीयप्रतियोगितायां स्वा (घटत्वत्वा) वच्छिन्नत्व, स्वेतर"सृष्टिकाल"वृत्तित्वोभयसंबन्धेन धर्मविशिष्टत्व, साध्यवद्वृत्यभावी यत्वोभयस्य सत्त्वेन तस्याभावस्य लक्षणाघटकत्वमिति लक्षणघटकतादृशाभावा-प्रसिद्धयाऽव्याप्तेः। अतो लक्षणघटकाभावीयप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व यद्धर्मावच्छिन्नत्वोभयाभाव एव निवेश्य इति दिक्।

अत्र (यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृश प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामान्याधिकरण्यं हेतौ व्याप्तिरित्यत्र च) कालस्य जगदाधारत्वेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्या-प्रसिद्धया कालो घटवान् महाकालत्वादित्यत्राव्याप्तेर्वारणाय प्रतियोगितावच्छेदक साध्यतावच्छेदकान्यतरसंबन्धावच्छिन्नत्वस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नान-धिकरणत्वस्य हेत्वधिकरणे विशेषणत्वे न कोऽपि दोषः। (तथा च प्रतियोगिता-वच्छेदकसंबन्ध, साध्यतावच्छेदकसंबन्धान्यतरसंबन्धावच्छिन्नयादृशप्रतियोगितावच्छेद-कावच्छिन्नाधिकरणत्वाभाववद्धेत्वधिकरणं स्वावच्छिन्नत्वस्वेतरधर्मावच्छिन्नत्वोभय संबन्धेन धर्मविशिष्टत्व, साध्यवद्वृत्यभावीयत्वोभयाभाववती तादृशप्रतियोगिता तदन

वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र कालो घटवान् महाकालत्वादित्यत्र नाव्याप्तिः । लक्षणघटकसृष्टिकालवृत्तित्वविशिष्टगोत्वाभावीयप्रतियोगितायां तादृशोभयाभावस्य तादृशप्रतियोगितावच्छेदकतापर्याप्त्यनधिकरणत्वस्य साध्यतावच्छेदके गोत्वे सत्त्वेन कालो गोत्ववान् कालत्वात्, कालो घटवान् महाकालत्वादित्यादौ नाव्याप्तिः । न च स्व (घट)वृत्तिभेदीयमहाकालत्वावच्छिन्नप्रतियोगिता संबन्धेन महाकालो घटवान् महाकालत्वादित्यत्र समवायादिसंबन्धेन पटाभावीय प्रतियोगितायां तदुभयस्यैव सत्त्वेन सृष्टिकालवृत्तित्वविशिष्टघटत्वाद्यभावीयप्रतियोगितायां तादृशोभयत्वस्य (साध्यवद्वृत्त्यभावीयत्वधर्मविशिष्टत्वोभयत्वस्य) सत्त्वेन च लक्षणघटकतादृशप्रतियोगिताकाभावस्याप्रसिद्ध्याऽव्याप्तिरिति वाच्यम् । घटानुयोगिककालिक, प्रतियोगित्वादिसंबन्धावच्छिन्नप्रतियोगिताकमहाकालाभावमादाय लक्षणसमन्वयात् । एतत्संबन्धेन (घटानुयोगिककालप्रतियोगिकघटानुयोगिककालिकेन) स्ववृत्तिभेदीयकालत्वावच्छिन्नप्रतियोगित्वादिकालस्य घटवृत्तित्वेऽपि कालेऽवृत्तित्वात् घटादेः कालेऽवृत्तित्वात्) भवति कालाभावो लक्षणघटकः । एतत्संबन्धेन प्रतियोगिनः कालस्य घटवृत्तित्वेऽपि हेत्वधिकरणे कालेऽवृत्तित्वात् । यदि च विशेषरूपेण न संसर्गत्वादिः, प्रतियोगित्वादीनां वृत्त्यनियामकतया न प्रतियोगितावच्छेदकत्वमिति कालो घटवान् महाकालत्वादित्यत्र का गतिरित्युच्यते । तदा त्वयापि (एतादृशव्याप्तिवादिनाऽपि) संबन्धधर्मिकोभयाभावघटितकल्पोऽनुसरणीयः । तत्रैवोक्तरीत्यनुसरणे विफलमेव प्रतिभाति उभयानवच्छिन्नत्वादिकमिति चिन्त्यम् ।

अयं भावः, प्रतियोगिताधर्मिकोभयाभावकल्पे अभावे हेत्वधिकरणवृत्तित्वस्यानिवेशे साध्यतावच्छेदकसंबन्धेन साध्याभावीयप्रतियोगितातायां तदुभयत्वस्यैव सत्त्वेन लक्षणेऽसंभवः । तत्र प्रतियोगिव्यधिकरणत्वानिवेशे कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः । हेत्वधिकरणवृत्तिसाध्याभावीयप्रतियोगितायां तदुभयस्यैव सत्त्वात् । प्रतियोगितायां सामान्यत्वस्या निवेशे धूमवान् वह्नेरित्यत्रातिव्याप्तिः । तादृशघटाभावीयप्रतियोगितायां तदुभयाभावस्य सत्त्वात् । महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय धर्मविशिष्टान्यत्वं लक्षणघटकाभावीयप्रतियोगितायां निवेशनीयम् । वै. स्वावच्छिन्नत्व, स्वेतरधर्मावच्छिन्नत्वोभयसंबन्धेन । महानसीयवह्निमान्

धूमादित्यत्र साध्याभावीयप्रतियोगितायां धर्मविशिष्टान्यत्वाभावेन साध्याभावो न लक्षणघटक इत्यभावान्तरमादायातिव्याप्तिवारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यवद्वृत्यभावीयत्व, धर्मविशिष्टत्वोभयाभावो निवेश्यः। वै. स्वावच्छिन्नत्व, स्वेतर-धर्मानवच्छिन्नत्वोभयसंवन्धेन। एवञ्चानया रीत्यैव दोषवारणसंभवे लक्षणघटकाभावीय-प्रतियोगितायां साध्यतावच्छेदक तदितरोभयानवच्छिन्नत्वनिवेशो जगदीशस्य विफल इति।

न च साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशापेक्षया साध्यवद्वृत्तित्व धर्मविशिष्टत्वोभयाभावनिवेशे लाघवाभाव इति विनिगमकाभावेन निवेशान्तरेण निवेशान्तरस्यावैयर्थ्येन च लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदि-तरोभयानवच्छिन्नत्वोभयाभावनिवेशो न विफल इति वाच्यम्। सामान्यनिवेशापेक्षया विशेषनिवेशे गौरवमिति धर्मविशिष्टान्यत्वस्य सामान्यत्वेन साध्यतावच्छेदकतदित रेत्यस्य विशेषत्वात्।

अत्र चिन्ताबीजन्तु साध्यवद्वृत्यभावीयत्वस्योभयाभावघटकत्वं सामान्य-धर्मावच्छिन्नाधिकरणत्वस्यास्वीकारपक्षे साध्यतावच्छेदके यद्वृत्तितानवच्छेदकत्व, सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावस्तदेव पारिभाषिकं साध्यवत्वमिति कथनीयमिति गौरवं बोध्यम्।

परन्तु अत्र (लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयान-वच्छिन्नत्वनिवेशे) न पश्यामो दूषणलेशमपि दीधितिव्याख्याकर्तुर्जगदीशस्य। नापि दीधितिकारस्य दूषणलेशमपि। तस्य मार्गप्रदर्शकत्वात्। प्रतियोगितानवच्छेदकत्व-घटकावच्छेदकतायाः पर्याप्तिविवक्षायां तत्तात्पर्यस्य वक्तुं शक्यत्वात्। (लक्षणघटका भावीयप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणभिन्नत्वं साध्यतावच्छेदके निवेश्यमिति बोधयितुं लक्षणघटकाभावीयप्रतियोगितायां धर्मविशिष्टान्यत्वं न निवेशितं दीधिति कारेण। महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। तादृश-प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमहानसीयत्ववह्नित्वोभयभेदस्य साध्यतावच्छेदके वह्नित्वे सत्वात्,। अतो लक्षणघटकाभावीयप्रतियोगितायां धर्मविशिष्टान्यत्वं न निवेश्यम्। महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्त्यभावात्।

जगदीशेन चैकत्वादेः पर्याप्त्यनभ्युपगमेन बह्निमान् धूमादित्यत्र महानसीयवह्न्यभाव-मादायाव्याप्तिवारणं पर्याप्तिनिवेशेन न संभवति, शिष्यबुद्धिवैशद्याय कथञ्चिल्लक्षण-घटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वं निवेशितम्। इति सूक्ष्मापराधान्वेषणेऽपि नापराध्यति सोऽपि आशयविदां मन्तव्यम्।

परे तु रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादायाव्याप्ति वारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेश-नीयमिति तन्न युक्तम्। हेत्वधिकरणे साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, यादृश-प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकसाध्यता वच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति कथनेनैव तत्राव्याप्तिवारणसंभवेन तन्न निवेश्यम्। रूपवान् पृथिवीत्वादित्यत्र हेत्वधिकरणे तादृशोभयस्यैव सत्त्वेन तदुभया-भावस्यासत्वात्। विषयितया रूपत्वविशिष्टाभावस्य लक्षणाघटकत्वेन तत्राव्याप्त्यभा-वादिति यदुक्तं तन्न समीचीनम्। स्ववृत्तिवाच्यत्ववत्त्वसमवायोभयसंबन्धेन बह्नित्व विशिष्टसाध्यकसद्धेतौ बह्नित्वविशिष्टवान् धूमादित्यत्र सर्वेषां पदार्थानां साध्यता वच्छेदकप्रतियोगितावच्छेदकसंबन्धाभ्यां हेत्वधिकरणे वृत्तित्वेन प्रतियोगिव्यधिकरणा भावस्याप्रसिद्ध्याऽव्याप्तेर्वारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटक संसर्गतावच्छेदकावच्छिन्नत्वं पर्याप्त्या निवेशनीयम्। तथा च स्ववृत्तिवाच्यत्ववत्त्वसमा-वायोभयसंबन्धेन साध्यतावच्छेदक बह्नित्वपटत्वोभयावच्छिन्नानधिकरणे पटाद्यभावः प्रतियोगिव्यधिकरणः प्रसिद्ध इति न तत्राव्याप्तिः। तथा च प्रतियोगितावच्छेदकतायां पूर्वोक्तपरिष्कृतस्य साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्यावश्यनिवेशनीयत्वम्। एवञ्च तदनिवेशे प्रयुक्तं लाघवं दूरापेतम्। एवञ्च बह्नित्वप्रतियोगिकसमवायेन बह्नित्वविशिष्टस्य संयोगेन साध्यतायां धूमे संयोगेन बह्नित्वविशिष्टवान् धूमादित्यत्र लक्षणघटकाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंसर्गतावच्छेदक पर्याप्तावच्छेदकताकसंसर्गतानिरूपितत्वस्य विरहेण तादृशावच्छेदकताकप्रतियोगिताक प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्ध्याऽव्याप्तिस्तद्वारणाय स्वान-वच्छेदकसंबन्धावच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टा वच्छेदकत्वानिरूपकत्वं प्रतियोगितायां निवेशनीयमिति परिष्कृतस्य तस्य निवेशनीयत्वम्

रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावो न लक्षणघटकस्तदीय-प्रतियोगितायां तदुभयसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वस्यैव सत्त्वात् । एवञ्च तदनिवेशप्रयुक्तलाघवं दूरापेतम् । सामान्यधर्मावच्छिन्नाधिकरणत्वा-स्वीकारे साध्यतावच्छेदकवृत्त्यभावीयप्रतियोगितानिरूपितपरंपरावच्छेदकत्वस्यैव साध्य-तावच्छेदकावच्छिन्नाधिकरणत्वं वाच्यम् । स्वाश्रयवन्निष्ठाधिकरणतानवच्छेदकत्व सामान्याधिकरणतावच्छेदकत्वोभयाभावः साध्यतावच्छेदके तदेव पारिभाषिकं साध्या-धिकरणम् (साध्यवत्) । तथा चैतत्कल्पे साध्यतावच्छेदकतदितरोभयानवच्छिन्नं लक्षण घटकाभावीयप्रतियोगितायां वक्तव्यमिति कल्पापेक्षया क्व लाघवम्, प्रत्युत गौरवमेव । अस्मिन् कल्पे लक्षणघटकाभावीयप्रतियोगितायां साध्यवद्वृत्त्यभावीयत्वधर्मविशिष्ट-त्वोभयाभावस्य निवेशः । साध्यवत्वं साध्याधिकरणत्वं सामान्यधर्मावच्छिन्नाधिकरण त्वस्यास्वींकारे उक्तपरिष्कृतरूपं वाच्यमिति लाघवोऽपि नास्ति ।

एवमेकत्वादेः पर्याप्त्यनभ्युपगमपक्षे एव लक्षणघटकाभावीयप्रतियोगितायां बह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतदि-तरोभयानवच्छिन्नत्वविशेषणस्यादरणीयतया स्वसाजात्य, स्वसामानाधिकरण्य स्वा-वच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितयसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वा-निरूपितत्व, एतत्संबन्धावच्छिन्नस्ववृत्तित्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितय संबन्धेन साध्यताविशिष्टनिरूपकताकाधिकरणत्वस्यैव साध्यतावच्छेदकावच्छिन्ना-धिकरणत्वं वक्तव्यम् । तथा च लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदक तदितरोभयानवच्छिन्नत्वनिवेशापेक्षया तादृशोभयाभाव (साध्यवद्वृत्त्यभावीयत्वधर्म-विशिष्टत्वोभयाभाव) घटितैतन्नवीनलक्षणे किं लाघवं प्रत्युत गौरवमेवास्ति ।

न च पूर्वोक्तसंबन्धैः प्रतियोगिताविशिष्टनिरूपकताकाधिकरणत्वस्य भवत्कल्पे-ऽपि प्रतियोगिवैयधिकरण्यघटकत्वं वक्ष्यमाणमेवेति वाच्यम् । अतिगुरुभूतव्यापकत्व-संबन्धेन प्रतियोगितावच्छेदकतावृत्त्यवच्छेदकताकनिरूपकताकाधिकरणत्वस्य गौरव-संपादकस्य युष्मत्पक्षे प्रवेशादित्याहुः ।

तदपि केवलसाध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वमात्रनिवेशम् अवलम्ब्य

परिचिन्तितं बोध्यम्। तत्पक्षे स्थितानां दोषवारणविशेषणानाम् अनुसन्धाने अस्मिन् प्राचीनपक्षे जगदीशकृतोभयाभावपक्षे एव लाघवं प्रतिभाति।

केचित्तु नित्यानुयोगिकत्वविशिष्टमहानसीयवह्नित्वावच्छिन्नप्रतियोगिकत्वाभाववद् विषयितासंबन्धेन ज्ञानं घटवत् नित्यज्ञानत्वादित्यत्र प्रतियोगिव्यधिकरण हेतुसमानाधिकरणत्वेनाभिमतो यो महानसीयवह्न्यभावः तदीयप्रतियोगितावच्छेदक वह्नित्वावच्छिन्नाधिकरणत्वस्य साध्याधिकरणत्वस्य च हेत्वधिकरणे नित्यज्ञाने सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः। प्रतियोगिव्यधिकरणत्वेन हेत्वधिकरणे यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्व साध्यतावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावः तदेव प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणमित्यत्र विवक्षितम्। तथा च महानसीयत्ववह्नित्वोभयानवच्छिन्नाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन महानसीयवह्न्यभावो भवति प्रतियोगिव्यधिकरणोऽत्र नोक्तदोष इति वदन्ति। तन्नातिरमणीयम्। विशेषरूपेण संसर्गताया इदानीमनभ्युपगमात्। अन्यथा नित्यज्ञानानुयोगिकत्वविशिष्टमहानसीयवह्नित्वावच्छिन्नप्रतियोगिकत्वाभाववद्विषयिता संबन्धेन वह्निमान् नित्यज्ञानत्वादित्यत्र हेत्वधिकरणे नित्यज्ञाने अभिमतहेतुसमानाधिकरणमहानसीयवह्न्यभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नाधिकरणत्व, वह्नित्वरूपसाध्यतावच्छेदकावच्छिन्नाधिकरणत्वयोरुभयोः सत्त्वेन तदुभयाभावस्यासत्त्वात्। प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या तत्राव्याप्तिर्दुर्वारा स्यादिति। अथ विशेषरूपेण संसर्गताऽभ्युपगमस्याऽपि दृष्टत्वेन त्पक्षे नित्यज्ञानानुयोगिकत्वविशिष्टमहानसीयवह्नित्वावच्छिन्नप्रतियोगिकत्वाभाववद् विषयितासंबन्धेन घटवान् ज्ञानत्वादित्यत्र पूर्वरीत्या सिद्धान्तेऽपि अव्याप्तिर्दुर्वारेति चेत्। दीधितिकारोक्तव्यधिकरणधर्मावच्छिन्नाभावखण्डनाभासग्रन्थस्य प्रतियोगितावच्छेदकतापर्याप्तिनिवेश एव गदाधरेण परिगृहीतस्तद्वारणायादरणीयः। तथा च यादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणं महानसीयत्ववह्नित्वोभयं तद्भिन्नं वह्नित्वमिति वह्निमान् धूमादित्यत्र नाव्याप्तिः। उभयभेदस्यैकस्मिन् सत्त्वात्। एतेन उभयाभावस्य लक्षणघटकाभावीयप्रतियोगिताविशेषणस्यैकत्वादेः पर्याप्त्यभ्युपगमानभ्युपगमोभयनिर्दुष्टतया पर्याप्तिघटितकल्पानुसरणं गदाधरभट्टाचार्यानुमतमिति परास्तम्। अन्यथा नित्यज्ञानानुयोगिकत्वविशिष्टमहा-

नसीयवह्निप्रतियोगिकत्वाभाववद् विषयितासंबन्धेन वह्निमान् नित्यज्ञानत्वादित्यत्र तादृशमहानसीयवह्न्यभावमादाय सिद्धान्ते प्रतियोगिताधर्मिकोभयाभावघटिकल्पेऽप्यव्याप्तेर्दुर्वारत्वापत्तेः। तादृशमहानसीयवह्न्यभावप्रतियोगितायां साध्यतावच्छेदकवह्नित्वावच्छिन्नत्व, साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वोभयस्य सत्त्वेन तादृशोभयाभावस्यासत्त्वात्। अवच्छेदकत्वानुसरणेऽप्यव्याप्तिः। तादृशप्रतियोगितावच्छेदकवह्नित्वभेदस्य साध्यतावच्छेदकेऽसत्त्वात्।

जगदीशस्य लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदक तदितरोभयावच्छिन्नत्वाभावनिवेशश्च शिष्यबुद्धिवैशद्याय। न च पर्याप्त्यनभ्युपगमेन यदवच्छेदकत्वविचारग्रन्थे ( अवच्छेदकत्वनिरुक्तौ ) एकत्वादेः पर्याप्त्यनभ्युपगमे तु आहेत्युक्तम् तस्याभासग्रन्थत्वेन न मतनिर्णायकत्वमिति गृहाणेति दिक्।

इदन्तु चिन्त्यते। यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकतावत्त्व, साध्याधिकरण यत्किञ्चिद्व्यक्तिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकताविशिष्टान्यावच्छेदकतावत्त्वोभयाभाववत्त्वमेव लक्षणघटकाभावीयप्रतियोगिताविशेषणम्। वै० स्वसजातीयत्व, स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितयसंबन्धेन। तादृशावच्छेदकतावत्ता च निरूपितत्वसंबन्धेन। तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया या यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकतावत्त्व, यत्किञ्चित्साध्याधिकरणव्यक्तिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकताविशिष्टान्यावच्छेदकताकत्वोभयाभाववती प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। वै०। स्वसजातीयत्व स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत् त्रितयसंबन्धेन। वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः। अस्यां प्रतियोगितायां यत्किञ्चित्साध्याधिकरणपर्वतव्यक्तिनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नसंबन्धितावच्छेदकताविशिष्टान्यमहानसीयत्वावच्छिन्नावच्छेदकताकत्वस्य साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकताव्यापकप्रतियोगितावच्छेदकवह्नित्वनिष्ठावच्छेदकताकत्वस्य चोभयस्य सत्त्वेन न तदुभयाभावो वर्तते

इति महानसीयवह्न्यभावो न लक्षणघटक इति लक्षणघटकघटाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् । एवं विषयितासंबन्धेन वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादाय नाव्याप्तिः । न वा विषयितासंबन्धेन वह्निमान् तज्ज्ञानत्वादित्यत्र वह्नित्वविशिष्टाभावमादायाव्याप्तिः । तादृशसंवन्धितावच्छेदकतयोः साजात्यस्य प्रतियोगितावच्छेदकतयोरभावेन साध्याधिकरणयत्किञ्चिद्व्यक्तिनिरूपितसाध्यतावच्छेकसंबन्धावच्छिन्नसंवन्धितावच्छेदकताविशिष्टान्यावच्छेदकताकत्वस्य यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य चोभयस्यैव हेतुसमानाधिकरणाभावीयप्रतियोगितयोः सत्त्वेन तदुभयाभावस्यासत्त्वात् तत्तदभावो न लक्षणघटक इत्यन्यघटाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । नापि रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादायाव्याप्तिः । स्वावच्छेदक (समवायसंबन्ध ) संबन्धावच्छिन्नत्वविरहेण प्रतियोगितावच्छेदकतायाः साध्याधिकरणयत्किञ्चिद्व्यक्तिनिरूपितसाध्यतावच्छेदकसंवन्धावच्छिन्नसंवन्धितावच्छेदकताविशिष्टान्यत्वेन तन्निरूपितत्वस्य ( तत्कत्वस्य ) यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य चोभयस्यैव तादृशप्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वात् तदभावो न लक्षणघटक इति तादृशघटाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । अतस्तत्तद्दोषवारकविशेषणानि (निरवच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वम् । सावच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां सावच्छिन्नत्वञ्च, प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदक तदितरोभयानवच्छिन्नत्वञ्च प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंवन्धावच्छिन्नत्वमित्येतानि) विशेषणानि नोपादेयानि ।

-

यद्वा उक्तदोषाणां वारणाय यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकतावत्त्व, साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतावत्त्वोभयाभाव एव लक्षणघटकाभावीयप्रतियोगितायामुपादेयः । वै० स्वसाजात्य, स्वसमानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत् त्रितयसंबन्धेन । अवच्छेदकतावत्त्वं प्रतियोगितायां निरूपितत्वसंबन्धेन उभयत्र ( साध्याधिकरणयत्किञ्चिद्व्यक्तिनिरूपितेतिपूर्वलक्षणे पद्धेति लक्षणे च ) व्यापकत्वनिवेशः, प्रमेयवान् वाच्यत्वादित्यत्र हेतुसमानाधिकरणाभावीय तादृशप्रतियो-

गिताप्रसिद्ध्यर्थः। अन्यथा व्यधिकरणसंयोगादिसंबन्धेन हेतुसमानाधिकरणाभावीयतादृशप्रतियोगितायां साध्यतावच्छेदकतावत्त्व एव तादृशसंबन्धितावच्छेदकताविशिष्टान्यावच्छेदकतावत्त्वस्य चोभयस्य सत्त्वेन तत्राव्याप्तेः। एतदुभयाभावस्य तादृशप्रतियोगितायामप्रसिद्धत्वात् सर्वेषां पदार्थानां प्रमेयत्वेन साध्यतावच्छेदकनिष्ठावच्छेदकताकत्वस्य, तादृशसंबन्धितावच्छेदकताविशिष्टान्यावच्छेदकताकत्वस्य चोभयस्य सर्वस्यां प्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वात्। व्यापकत्वनिवेशे च नोक्तदोषः। प्रमेयत्वावच्छिन्नप्रमेयनिष्ठावच्छेदकताव्यापिका स्वैव नान्या घटत्वनिष्ठा निरवच्छिन्नाऽवच्छेदकतेति तादृशावच्छेदकताविशिष्टान्यघटत्वनिष्ठावच्छेदकतावत्त्वस्य सत्त्वेऽपि यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकतावत्त्वस्य विरहेण तादृशोभयाभावस्य तादृशघटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। तादृशप्रतियोगितायामवच्छेदकताकत्वं विहायावच्छेदकतावत्त्वोपादानेन रूपवान् पृथिवीत्वादित्यत्र हेत्वधिकरणे विषयितया रूपत्वविशिष्टाभावीयप्रतियोगितायां साध्यतावच्छेदकताव्यापकावच्छेदकतावत्त्वस्य साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतावत्त्वस्य चोभयस्य सत्वेन तदुभयाभावो न वर्तते इति तदभावो न लक्षणघटक इति न तत्राव्याप्तिः। समवायसंबन्धावच्छिन्नरूपत्वनिष्ठसाध्यतावच्छेदकताविशिष्टान्य रूपत्वनिष्ठविषयित्वसंबन्धावच्छिन्नावच्छेदकता भवति। तत्र स्वा (साध्यतावच्छेदकता) वच्छेदकसमवायसंबन्धावच्छिन्नत्वं नास्ति। यत्किञ्चित्त्वनिवेशेन महानसीयवह्निमान् तद्धूमादित्यत्र महानसीयवह्निघटोभयाभावमादाय नाव्याप्तिः। अन्यथा तदुभयाभावीयप्रतियोगितावच्छेदकतायाः साध्यतावच्छेदकमहानसीयत्ववह्नित्वोभयनिष्ठसाध्यतावच्छेदकताव्यापकत्वविरहेण तदीयप्रतियोगितायां तदुभयाभावसत्त्वेन साध्यतावच्छेदके महानसीयत्वे वह्नित्वे च तत्प्रतियोगितावच्छेदकत्वस्य सत्त्वादव्याप्त्यापत्तेः। यत्किञ्चित्त्वनिवेशे तु नोक्तदोषः। यत्किञ्चित्साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकताव्यापकतादृशप्रतियोगितावच्छेदकवह्नित्वनिष्ठावच्छेदकतावत्त्व, साध्यतावच्छेदकताविशिष्टवह्नित्वनिष्ठावच्छेदकत्वान्यघटत्वनिष्ठावत्त्वस्य चोभयस्य तदभावीयप्रतियोगितायां सत्त्वेन तदुभयाभावस्य तत्रासत्त्वात्। महानसीयवह्निघटोभयाभावो न लक्षणघटक इति तदन्यघटाभावमादाय लक्षणसमन्वय इति। अथ महानसीयवह्निमान् तज्-

ज्ञानत्वादित्यत्र महानसीयाभाववह्न्यभावप्रतियोगितयोः साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य सत्त्वेन साध्यतावच्छेदके तत्प्रतियोगितावच्छेदकत्वस्यैव सत्त्वादव्याप्तिः। अत्र केचित् साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदक, यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्तित्वं लक्षणघटकाभावीयप्रतियोगितायां विशेषणान्तरं प्रवेश्यमित्यदोषः। तादृशप्रतियोगितायाः साध्यतावच्छेदकमहानसीयत्ववह्नित्वोभयनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं महानसीयत्ववह्नित्वगतद्वित्वं तदनवच्छेदकं महानसीयत्वगतैकत्वं वह्नित्वगतैकत्वं यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं महानसीयत्वगतैकत्वं वह्नित्वगतैकत्वञ्च तत्र वृत्तित्वमस्ति इति तदवृत्तित्वाभावेन सा प्रतियोगिता न लक्षणघटिका तादृशघटाभावीय प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्न तत्राव्याप्तिः। प्रतियोगितायां रूपवृत्तित्वञ्च स्वावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। न च प्रतियोगिताविशेषणीभूततादृशरूपवृत्तित्वघटकयत्किञ्चित्त्वं न निवेश्यमिति वाच्यम्। तादात्म्येन प्रमेयविशिष्टस्य साध्यत्वे वाच्यत्वेऽव्याप्तेः। लक्षणघटकघटाद्यभावप्रतियोगितायाः तादृशानुयोगितानवच्छेदके तादृशानुयोगितावच्छेदके च घटत्वगतैकत्वे वृत्तित्वेन तादृशरूपावृत्तिप्रतियोगिताया अप्रसिद्धेः। यत्किञ्चित्त्वस्य निवेशे च नोक्तदोषः। तादृशपटत्वगतैकत्वे घटाद्यभावप्रतियोगिताया अवृत्तित्वेन घटाभावमादाय लक्षणसमन्वय इति। न च हेतुसमानाधिकरणघटगगनोभयाभावप्रतियोगितायाः तादृशानुयोगितानवच्छेदक हेत्वधिकरणनिरूपित तादात्म्यसंबन्धावच्छिन्नवृत्तिता (संबन्धिता) वच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकघटत्वगतैकत्वावृत्तित्वेन तदभावमादाय लक्षणसमन्वयः। द्वित्वावच्छिन्नप्रतियोगिताकभेदस्य केवलान्वयित्वेन ( घटगगनोभयत्वस्य ) द्वित्वस्य तादात्म्यसंबन्धावच्छिन्न वृत्तितायाः (संबन्धितायाः) अनवच्छेदकत्वादिति वाच्यम्। अस्यां प्रतियोगितायां साध्यतावच्छेदकप्रमेयतदितरघटत्वाद्युभयावच्छिन्नत्वस्य सत्त्वेन तदभावस्य लक्षणाघटकत्वात्। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशस्य वक्ष्यमाणत्वेन तदभावे न तदभावानां लक्षणघटकत्वात् तत्राव्याप्तेः। एवं च घटाभावीयप्रतियोगितायां हेत्वधिकरणा

योगोलकानिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्व-वृत्तित्वस्य विरहेण धूमाभावमादाय धूमवान् वह्नेरित्यत्रातिव्याप्तिविरहेऽपि विष-यितासंबन्धेन वह्निमान् वह्निविषयकःमहानसी वह्निविषयकज्ञानान्यतरत्त्वादित्यत्राति-व्याप्तिः स्यादिति तादृशावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपे साध्यता-वच्छेदकतात्वावच्छिन्नप्रतियोगिकपर्याप्त्यनुयोगितानवच्छेदकत्वविशेषणम् । अन्यथा हेत्वधिकरणमहानसीयवह्निविषयकज्ञाननिरूपितवृत्तितावच्छेदक वह्नित्वनिष्ठावच्छेदक-ताप्रतियोगिक पर्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्ववृत्तित्वस्य सत्त्वेन वह्न्यभावो न लक्षणघटक इति तादृशघटाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वे-नातिव्याप्त्यापत्तेः । तन्निवेशे च नोक्तदोषः । तादृशवह्न्यभावप्रतियोगितायां साध्यता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकद्वित्वादौ घटत्वगतैकत्वे वाऽवृत्तित्वस्य सत्त्वेन भवति साध्याभावो लक्षणघटक इति समादधति । तन्मतं च (केचित्मतं) तादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्वं साध्यतावच्छेदकगतरूपे न निवेश्यमित्यकारणप्रतिज्ञेति जानीमहे । एतन्निवेशेनैव तद्दोषवारणसम्भवे तद्विशेषणं न देयमिति भावः । अन्ते रण्डाविवाहः स्यादादावेव कुतो नहीति न्यायात् ।

———

किञ्चात्र (केचिन्मते) प्रमेयवतः तादात्म्येन साध्यतायां वाच्यत्वे हेतौ हेत्वधिकरणनिरूपितप्रमेयावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तत्तद्धर्मं (घटत्वपटत्वादिधर्म) वृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकेषु घटत्वपटत्वादिगतेषु एकत्वेषु सत्त्वेन तादृशैकत्वावृत्तिप्रतियोगिताया अप्रसिद्ध्या तन्निरूपकाभावोऽपि अप्रसिद्ध इति तत्राव्याप्तिः। प्रमेयरूपसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव सर्वत्र सत्त्वेन तादृशपर्याप्त्यनुयोगितानवच्छेदकत्वस्य यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकेऽप्रसिद्धेः। अवच्छेदकभेदेनावच्छेदकताया भेद इति पक्षे तु सुतरामेवाव्याप्तिः। उक्तयुक्त्या द्वित्वादीनामपि अवच्छेदकत्वेन तदनवच्छेदकत्वस्याप्रसिद्धेः। वह्निमान् धूमादित्यदावप्यव्याप्तिः। अवच्छेदकभेदेनावच्छेदकताया भेद इति पक्षे वह्निघटोभयाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिः। तदभावीया प्रतियोगिता एका वह्नित्वावच्छिन्ना अपरा घटत्वावच्छिन्ना सा च प्रतियोगिता साध्यतावच्छेदकवह्नित्वतदितरघटत्वोभयानवच्छिन्नैव या प्रतियोगिता वह्नित्वनिष्ठावच्छेदकतानिरूपिता सा न वह्नित्वेतरघटत्वनिष्ठावच्छेदकतानिरूपिता अवच्छेदकतयोर्वह्नित्वत्वघटत्वत्वयोर्भेदेन तन्निष्ठावच्छेदकतयोर्भेदात्। सा च वह्निनिष्ठा प्रतियोगिता साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकघटत्वगतैकत्वे न वर्तते तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। किञ्च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं वह्नित्वघटत्वद्वित्वं तच्च यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नसंबन्धितावच्छेदक वह्नित्वनिष्ठावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकमपि पर्याप्तावितरवारकस्यानिवेशात्, तस्मिन् द्वित्वे वह्निघटोभयाभावीया वह्निनिष्ठा प्रतियोगिता स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन न वर्तते तादृशप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। न च यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियो-

गिताकपर्याप्त्यनुयोगितावच्छेदकं यत् साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिता कपर्याप्त्यनुयोगितानवच्छेदकं तदवृत्तिः अथ च साध्यतावच्छेदकतदितरोभयानवच्छिन्ना प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति न पूर्वोक्ताव्याप्तिः । वै० स्वतादात्म्यस्वनिरूपितत्वान्यतरसंबन्धेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रमेयगतरूपं तद्भिन्नं च यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रमेयत्वविशिष्टप्रमेयगतरूपं तदवृत्तिघटत्वावच्छिन्नप्रतियोगितानवच्छेदकस्य साध्यतावच्छेदके प्रमेये सत्वात् तादृशप्रमेयनिष्ठा वृत्तितावच्छेदकता तादात्म्यसंबन्धेन स्वनिष्ठा स्वनिरूपितत्वसंबन्धेन प्रमेयत्वनिष्ठावच्छेदकतानिष्ठा उभयप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं प्रमेयत्वविशिष्टप्रमेयगतरूपमेव न प्रमेयगतमिति वाच्यम् । वह्निमान् धूमादित्यत्र वह्निघटोभयाभावमादायाव्याप्तिः । साध्यतावच्छेदकभिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगितायां निवेशेन वारणीया । तथापि यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्वघटत्वादिगतैकत्वान्यतरत्वेनैव कल्पनेन दोषाभाव इति पूर्वोक्तरीत्या तादात्म्येन प्रमेयवतः तादात्म्येन साध्यत्वे वाच्यत्वहेतावव्याप्तेस्तादवस्थ्यात् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं यत् यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तदवृत्तिः प्रतियोगिता तस्याः अप्रसिद्धया लक्षणघटकाभावस्याप्रसिद्धेः । सर्वस्यां प्रतियोगितायां तादृशरूपवृत्तित्वेन तदवृत्तित्वस्य सत्त्वात् हेतुसमानाधिकरणघटाभावीयप्रतियोगितायाः यत् किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वेन तादृशरूपाया वृत्तिप्रतियोगिताया अप्रसिद्धया तन्निरूपकहेतुसमानाधिकरणाभावोऽप्रसिद्ध इत्यप्रसिद्धनिबन्धनाव्याप्तिर्बोध्या ।

तच्छुक्लमहानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र हेत्वधिकरणे तच्छुक्ला-

भावं महानसीयवह्न्यभावं चादायाव्याप्तेश्च । साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकत्वस्य सत्त्वात् । समूहालम्बनज्ञानीयविषयितावितविशिष्टविषयितयोः प्रत्येकज्ञानीयविषयितायाश्च परस्परभेदेन तच्छुक्लमहानसीयवह्निज्ञाने केवलतच्छुक्लस्य केवलमहानसीयवह्नेश्च विषयितासंबन्धेनासत्त्वात् । तत्त्वशुक्लत्वगतमहानसीयत्ववह्नित्वगतद्वित्वादीनां यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विरहात् । यदि चात्र हेत्वधिकरणनिरूपितवृत्तितायाः अवच्छेदकत्वम् ( यदि चात्र तादात्म्येन प्रमेयवतः तादात्म्येन साध्यतायां वाच्यत्वे हेतावित्यत्र हेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तिताया अवच्छेदकत्वम्) प्रमेयत्वरूपप्रमेयस्यैव लाघवात् कल्पनीयम् न तु प्रमेयत्वभिन्नघटत्वादिरूपस्य प्रमेयस्येति हेतुसमानाधिकरणप्रतियोगिव्यधिकरणघटाद्यभावप्रतियोगितायाः यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपा( प्रमेयत्वगतैकत्वा )वृत्तित्वेन घटाद्यभावमादाय तादात्म्येन प्रमेयवतः तादात्म्येन साध्यत्वे वाच्यत्वे हेतौ लक्षणसमन्वयेन न तत्राव्याप्तिरिति यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताविशिष्टा पर्याप्तीया प्रतियोगिता न निवेश्या । एवञ्च विषयितासंबन्धेन वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादाय नाव्याप्तिः प्रतियोगितावच्छेदकगतरूपसाध्यतावच्छेदकगतरूपयोरैक्येन तत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणवह्न्यभावीयप्रतियोगितायाः वृत्तित्वेन तदभावस्य लक्षणघटकत्वादिति विभाव्यते तदापि हेत्वधिकरणनिरूपितायाः घटत्वादिकालीनवह्नित्वावच्छिन्नवृत्तितायाः स्ववृत्तिवाच्यत्ववत्त्वादिसंबन्धेन घटत्वाद्यवच्छिन्नवृत्तितायाश्चावच्छेदकत्वस्यैव घटत्वादिषु सत्त्वेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितायाः साध्यतावच्छेदकगतरूपभिन्नयत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यानुयोगितावच्छेदकघटत्वादिगतरूपवृत्तित्वेन तादृशरूपावृत्तिप्रतियोगिताया अप्रसिद्धया घटत्वादिकालीनवह्निमान् धूमादित्यत्र लक्षणसमन्वयाभावेनाव्याप्तिः । न च यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तितायाः

साक्षान्निरूपितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदके साध्यतावच्छेदकगत-रूपभिन्ने लक्षणघटकाभावीयप्रतियोगितायां विवक्षणे नोक्तदोषः, घटत्वादि-कालीनवह्नित्वावच्छिन्नवृत्तितया साक्षान्निरूपितत्वस्य वह्नित्वनिष्ठवृत्तितावच्छेद-कताप्रतियोगिकपर्याप्त्यानुयोगितावच्छेदकवह्नित्वगतैकत्ववृत्तित्वस्य लक्षणघटकघटा-द्यभावीयप्रतियोगितायामसत्त्वेन घटाद्यभावस्य लक्षणघटकत्वमिति घटत्वादि-कालीनवह्निमान् धूमादित्यत्र नाव्याप्तिः, घटत्वादिनिष्ठावच्छेदकतायां घटत्वादि-कालीनवह्निनिष्ठवृत्तितया परंपरानिरूपितत्वस्य सत्त्वेऽपि साक्षान्निरूपित्वस्या-सत्त्वात् । हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धा-वच्छिन्नत्वस्य हेत्वधिकरणनिरूपितवृत्तितायाः साक्षान्निरूपितत्वस्य च निवे-शेऽपि स्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्नावच्छेदकतायां साध्यतावच्छेदकताघटक-समवायसंबन्धावच्छिन्नत्वस्य विरहेण तादृशावच्छेदकताकवृत्तितामादाय न दोषः । साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नावच्छेदकताकघटनिष्ठवृत्तिता न हेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नहेत्वधिकरणपर्वतनिरूपिता । पर्वतादौ संयोगेन घटस्यावृत्तित्वात् तादृशप्रतियोगितावच्छेदकवह्नित्वगतैकत्वे घटाभावीया प्रति॰ योगिता न वर्तते इति भवति घटाभावो घटकालीनवह्निमान् धूमादित्यत्र लक्षणघटक इति न तत्राव्याप्तिरिति वाच्यम् । एवमपि स्ववृत्तिवाच्यत्ववत्त्व संबन्धे-न वह्नित्वविशिष्टसाध्यकधूमेऽव्याप्तेः लक्षणघटकाभावीयप्रतियोगितायां साध्य-तावच्छेदकताघटकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकपर्वतादि-रूपहेत्वधिकरणनिरूपितवह्निनिष्ठवृत्तितावच्छेदकघटत्वगतैकत्वरूपे वृत्तित्वस्य सत्त्वेन न तत्रावृत्तित्वमिति तादृशप्रतियोगिताकहेतुसमानाधिकरणाभावस्या-प्रसिद्धेः । न च हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतायां प्रतियोगितावच्छेदकता-घटकसंबन्धावच्छिन्नत्वं विवक्षणीयं तदा नोक्तदोषः । यत्किञ्चिद्धेत्वधिकरण-निरूपितवृत्तितावच्छेदकघटत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकस्ववृ-त्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि प्रतियोगितावच्छेदकताघटकसमवाय-संबन्धावच्छिन्नत्वस्य विरहात् प्रतियोगितावच्छेदकताघटकसमवायसंबन्धाव-च्छिन्ना हेत्वधिकरणपर्वतनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नवृत्तितावच्छेदक-

वह्नित्वगतैकत्वेऽवृत्तित्वस्य तादृशघटाभावीयप्रतियोगितायां सत्त्वेन तत्प्रतियोगिताकघटाभावो लक्षणघटक इति स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन वह्नित्वविशिष्टवान् धूमादित्यत्र नाव्याप्तिरिति वाच्यम्। एवमपि वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टविषयितानिरूपितविषयितया साध्यतायां तज्ज्ञानत्वे हेत्वधिकरणनिरूपितवृत्तितानिरूपितप्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकत्वस्याप्रसिद्ध्याऽव्याप्तेः। हेत्वधिकरणतज्ज्ञाननिरूपितवृत्तितावच्छेदकतायां वह्नित्वप्रतियोगिकसमवायसंबन्धित्वस्यैव सत्त्वेन हेत्वधिकरणवृत्तिघटाभावप्रतियोगितावच्छेदकताघटकसमवायसंबन्धावच्छिन्नत्वस्य विरहात्। एवञ्च प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्ना हेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकता न प्रसिद्ध्यति इति तादृशावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकगतरूपस्याप्रसिद्ध्या तद्रूपवृत्तित्वस्य हेतुसमानाधिकरणाभावप्रतियोगितायामप्रसिद्ध्या तत्राव्याप्तेः। यदि च प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वं न्यूनवारकपर्याप्तिमात्रमेव विवक्षणीयं नेतरवारकम्। उक्तस्थले समवायेन घटत्वविशिष्टाभावमादाय लक्षणसमन्वयो भवति। हेत्वधिकरणवृत्तिघटाभावीयप्रतियोगितायां यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकतायां प्रतियोगितावच्छेदकताघटकशुद्धसमवायसंबन्धावच्छिन्नत्वस्य सत्त्वेन तादृशावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् तत्र नाव्याप्तिरित्युच्यते तदाऽपि समवायसंबन्धावच्छिन्नावच्छेदकताकविषयितासंबन्धेन वह्निमान् नित्यज्ञानत्वादित्यत्राव्याप्तिः। शुद्धसमवायेन विशिष्टसमवायेन वा धर्मविशिष्टाभावस्य हेतुसमानाधिकरणस्य प्रतियोगिवैयधिकरण्यविरहात्। नित्यज्ञाने विषयितया लक्षणघटकाभावप्रतियोगिनां सर्वेषां सत्त्वात् स्वरूपादिना किञ्चिद्धर्मविशिष्टाभावस्य प्रतियोगिवैयधिकरण्येऽपि तत्प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकसाध्यतावच्छेदकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तित्वस्य प्रसिद्धेः नित्यज्ञाने सर्वे भावा वर्तन्ते न त्वभावाः, ईश्वरज्ञानस्य सन्मात्रविषयकत्वात्।

यत्तु बह्निमान् तज्ज्ञानत्वादित्यत्र हेत्वधिकरणे तज्ज्ञाने विषयितया बह्निमात्रस्य वृत्तित्वेन साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वविशिष्ट यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतावद्रूपाप्रसिद्धयाऽव्याप्तिरिति तन्न स्वा(साध्यता)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्वकालीनकिञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन साध्यत्वाभाववद्रूपवृत्तित्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षितत्वात् प्रतियोगितायाः रूपवृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । एवञ्च विषयितया बह्निमान् तज्ज्ञानत्वादित्यत्र नाव्याप्तिः एतादृशव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकसाध्यत्वाभाववति घटत्वगतरूपलक्षणघटकाभावीयप्रतियोगिताया वृत्तित्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । यदि च वह्नित्वप्रतियोगिकसमवायसंबन्धावच्छिन्नावच्छेदकताकविषयित्वादीनामिदानीं संसर्गत्वं न स्वीक्रियते । विशेषरूपेण संसर्गताया इदानीमस्वीकारात् । केवलविषयित्वादीनामेव संसर्गत्वमिति चेद् भवतु भवतामनुशासनम् । तदोक्तप्रकारकस्य सदोषत्वं को नाम ब्रूयात् । अयं भावः स्वावच्छेदकतात्वावच्छिन्नेत्यादीनां संबन्धत्वं न स्वीक्रियते तदा बह्नित्वप्रतियोगिकसमवायस्य तत्संबन्धावच्छिन्नावच्छेदकताकविषयतानिरूपितविषयित्वस्यापि संबन्धत्वं न स्वीक्रियताम् विशेषरूपेण संसर्गताया उभयत्राविशेषात् । एवञ्च विशेषरूपेण संसर्गतां स्वीकृत्य दोषो दीयते । तदा विशेषरूपेण संसर्गतां स्वीकृत्य तस्य दोषस्योद्धारोऽस्तु । नो चेत् विशेषरूपेण संसर्गः तदा न पूर्वोक्तदोषः संभवति । न च शङ्का न समाधानमिति । ये तु यत्किञ्चित्साध्यतावच्छेदकत्व(त्वा)वृत्तिर्या यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टावच्छेदकता (तन्निरूपिता या) तदनिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । अवृत्तिताघटकवृत्तित्वं स्वनिरूपितप्रतियोगितावच्छे-

दकत्ववत्त्वसंबन्धेन । स्वं—यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टावच्छेदकता वै. स्वसाजात्य, स्वसामानाधिकरण्य,-स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितयसंबन्धेन । अवच्छेदकतावत्ता च स्वसाजात्य,-स्वसामानाधिकरण्योभयसंबन्धेन । वह्निमान् धूमादित्यत्र लक्षणघटकाभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकत्व(त्वा)वृत्तिर्यायत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नवृत्तितावच्छेदकताविशिष्टावच्छेदकता तदनिरूपिता लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वं साध्यतावच्छेदके वह्नित्वे इति लक्षणसमन्वयः । महानसीयवह्न्यभावप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकत्ववृत्तिः (त्वावृत्तिः) यत्किञ्चिद्धेत्वधिकरणमहानसनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकताविशिष्टावच्छेदकता तदनिरूपितत्वस्यासत्त्वेन महानसीयवह्न्यभावो न लक्षणघटकः । धूमवान् वह्नेरित्यत्र लक्षणघटकाभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तिः या यत्किञ्चिद्धेत्वधिकरणायोगोलकनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नवह्निनिष्ठवृत्तितावच्छेदकताविशिष्टावच्छेदकता वह्नित्वनिष्ठा तदनिरूपितत्वस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्त्वान्नातिव्याप्तिः । यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तित्वघटकवृत्तित्वम् स्वसाजात्य, स्वसामानाधिकरण्योभयसंबन्धेन न वक्तव्यम् । किन्तु स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसंबन्धेनैव वक्तव्यम् । अन्यथा तार्णवह्निसाध्यकव्यभिचारिणि तार्णवह्निमान् धूमादित्यत्रातिव्याप्त्यापत्तेः । हेत्वधिकरणवृत्तितार्णवह्न्यभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकतार्णत्वावृत्तिः वह्नित्वनिष्ठप्रतियोगितावच्छेदकता एवं यत्किञ्चित्साध्यतावच्छेदके वह्नित्वेऽवृत्तिः तार्णत्वनिष्ठप्रतियोगितावच्छेदकता सा च यत्किञ्चिद्धेत्वधिकरणमहानसनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकताविशिष्टावच्छेदकता स्वसाजात्य स्वसामानाधिकरण्योभयसंबन्धेन न वर्तते तन्निरूपितत्वस्य सत्त्वेन तन्निरूपकसाध्याभावस्य लक्षणाघटकत्वात् स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसंबन्धेन वृत्तित्वस्योपादाने तु नोक्त-

दोषः । साध्यतावच्छेदकतायां प्रतियोगितावच्छेदकतायाः तेन संबन्धेन वृत्तित्वात् । तत्रावृत्त्यवच्छेदकत्वानिरूपितत्वस्य साध्याभावीयप्रतियोगितायां सत्त्वात् सामानाधिकरण्यमात्रोक्तौ तु (तादृशावच्छेदकतावत्त्वस्य सामानाधिकरण्यमात्रोक्तौ) प्रमेयवद्वान् वाच्यत्वादित्यत्राव्याप्तिः । तादृशवृत्तितावच्छेदकत्वस्य साध्यतावच्छेदकतायां वृत्तित्वेन तदवृत्तितादृशावच्छेदकत्वस्याप्रसिद्धेः । अतः साजात्येति । तथा च नोक्तदोषः । यत्किञ्चिद्धेत्वधिकरणीभूतभूतलनिरूपिततादृशवृत्तितावच्छेदकघटत्वनिष्ठनिरवच्छिन्नावच्छेदकतासाजात्यस्य यत्किञ्चित्साध्यतावच्छेदकप्रमेयनिष्ठसाच्छिन्नावच्छेदकतायामसत्त्वेन स्वसामानाधिकरण्यस्वसाजात्योभय-संबन्धेन तादृशवृत्तितावच्छेदकघटत्वनिष्ठावच्छेदकतायाः यत्किञ्चित्साध्यतावच्छेदकप्रमेयनिष्ठसावच्छिन्नावच्छेदकतायां 'स्वनिरूपितप्रतियोगितावत्त्वाभावेनावृत्तित्वमिति तादृशप्रमेयनिष्ठावच्छेदकताविशिष्टप्रमेयनिष्ठावच्छेदकत्वानिरूपितत्वस्य तादृशघटाभावीयप्रतियोगितायां सत्त्वेन तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । अवच्छेदकतावत्त्वनियामकस्य स्वसामानाधिकरण्यस्यानुपादाने साजात्यस्योपादाने कालिकसंबन्धेन रूपत्वविशिष्टो यः समवायेन गुणत्वविशिष्टः तदवान् वायुत्वादित्यत्राव्याप्तिः । यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकता कालिकसंबन्धावच्छिन्ना रूपत्वनिष्ठा गुणनिष्ठवृत्तितानिरूपितसमवायसंबन्धावच्छिन्ना रूपत्वनिष्ठावच्छेदकता च साध्यतावच्छेदके गुणत्वे रूपत्वे च स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वनियमाकेन स्वसाजात्यसंबन्धेन वर्तते । उभयोः निरवच्छिन्नत्वेन साजात्यमपि अस्ति तादृशप्रतियोगितावच्छेदकत्वयोः स्वनिरूपितप्रतियोगितावच्छेदकत्ववत्त्वसंबन्धेन साध्यतावच्छेदकतायां वृत्तित्वमिति तद्वृत्तित्वस्याप्रसिद्धया लक्षणघटकाभावीयप्रतियोगितायां तादृशावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वस्याप्यप्रसिद्धेः । स्वसामानाधिकरण्यस्य स्वनिरूपितप्रतियोगितावत्तानियामकस्योपादाने तु नोक्तदोषः । गुणनिष्ठसाध्यतावच्छेदकतायां रूपत्वनिष्ठतादृशवृत्तितावच्छेदकतायाः, रूपत्वनिष्ठसाध्यतावच्छेदकतायां गुणत्वनिष्ठतादृशवृत्तितावच्छेदकतायाश्च परस्परसामानाधि-

करण्याभावेन स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसंबन्धेनावृत्तित्वमिति तद-निरूपितत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्, कालिकेन गुणत्वविशिष्टपरमाणौ सत्त्वात्। अवच्छे-दकातायाम् अवच्छेदकतावैशिष्टचनियामकस्वसाजात्योपादानेन वह्निमान् धूमादित्यत्र नाव्याप्तिः। अन्यथा यत्किञ्चित्साध्यतावच्छेदकवह्नित्व-निष्ठनिरवच्छिन्नावच्छेदकत्वावृत्तियत्किञ्चिद्धेत्वकरणनिरूपितसाध्यतावच्छेदकसंबन्धा-वच्छिन्नवृत्तितावच्छेदकप्रमेयनिष्ठसावच्छिन्नावच्छेदकताविशिष्टघटत्वनिष्ठावच्छेदकता तन्निरूपितत्त्वस्य लक्षणघटकाभावीयप्रतियोगितायां सत्त्वेन (लक्षणघटकघटाभावीय-प्रतियोगितायां सत्त्वेन) तदनिरूपितप्रतियोगित्वस्याप्रसिद्धचा तन्निरूपकस्य लक्षण-घटकाभावस्याप्रसिद्धेः। तादृशप्रमेयनिष्ठावच्छेदकत्वस्य स्वसामानाधिकरण्य स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन घटत्वनिष्ठप्रतियोगितावच्छेदकतायां सत्त्वात्। स्वसाजात्यस्योपादाने तु नोक्तदोषः। सावच्छिन्नप्रमेयनिष्ठतादृश-वृत्तितावच्छेदकतायाः निरवच्छिन्नघटत्वनिष्ठप्रतियोगितावच्छेदकतायां साजात्य-विरहेण वैशिष्टचस्यापि विरहात्। किन्तु प्रमेयनिष्ठसावच्छिन्नावच्छेदकता-विशिष्टस्यैव तदनिरूपितत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। यदि च यत्किञ्चिद्धेत्वधि-करणपर्वतादिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितानिरूपितप्रमेयत्वावच्छिन्नाऽव्य वच्छेदकता वह्नित्वादिष्वेवेत्यूरीक्रियते न तु हेत्वधिकरणपर्वताद्यवृत्तिघटादिषु तदा तत्फलं (साजात्यफलम्) मृग्यम्। लक्षणघटकघटाभावीयप्रतियोगितायां तादृशप्रतियोगितावच्छेदकप्रमेयत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकत्वानिरूपितत्वस्य सत्वात्। वैशिष्टचनियामक स्वसामानाधिकरण्यस्योपादानेन वह्निमान् धूमादित्यत्र नाव्याप्तिः। अन्यथा यत्किञ्चित्साध्यतावच्छेदकत्वावृत्ति यत्किञ्चिद्धेत्वधिकरणपर्वत-निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकतायाः वैशिष्टचं स्वसाजात्यस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन घटत्वनिष्ठावच्छेदकतायां वर्तते तदनिरूपितत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायामसत्त्वेन तादृशप्रति-योगिताकलक्षणघटकाभावाप्रसिद्धचा तत्राव्याप्त्यापत्तेः। स्वसामानाधिकरण्यस्यो-

पादाने तु नोक्तदोषः । तादृशवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकता-सामानाधिकरण्यस्य लक्षणघटकघटाभावप्रतियोगितावच्छेदकघटत्वनिष्ठावच्छेदकतायामसत्त्वेन घटत्वनिष्ठावच्छेदकता न तद्विशिष्टा किन्तु वह्नित्वनिष्ठावच्छेदकतैव तदनिरूपितत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् । विशेषरूपेण संसर्गताया अस्वीकारे एव स्वसामानाधिकरण्यनिवेशस्य सार्थक्यम् । विशेषरूपेण संसर्गतास्वीकारे तु घटत्वप्रतियोगिकसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकता न यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकताविशिष्टा भवति घटत्वनिष्ठप्रतियोगितावच्छेदकतायां स्वसाजात्यस्य सत्त्वेऽपि स्वावच्छेदकसमवायसंबन्धावच्छिन्नत्वस्य पर्याप्तिघटितस्यासत्वात् । किन्तु वह्नित्वनिष्ठावच्छेदकतैव तदनिरूपितत्वस्य लक्षणघटकघटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् वैशिष्ट्यनियामकस्वावच्छेदकसंबन्धावच्छिन्नत्वं तु स्ववृत्तिवाच्यत्ववत्त्वादिसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेकतामादायातिव्याप्तिवारणायोपादेयमेव । तथाहि धूमवान् वह्नेरित्यत्र यत्किञ्चित्साध्यतावच्छेदकधूमत्वनिष्ठसमवायसंबन्धावच्छिन्नावच्छेदकत्वावृत्तिर्या यत्किञ्चिद्धेत्वधिकरणायोगोलकनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नवह्निनिष्ठवृत्तिता स्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्ना धूमत्वनिष्ठावच्छेदकता सा न समवायसंबन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकतायां वर्तते स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेनधूमत्वविशिष्टस्य संयोगेन सर्वत्र हेत्वधिकरणे सत्त्वेन तत्र संयोगसंबन्धावच्छिन्नप्रतियोगिताकतदभावस्यासत्त्वात् । स्वनिरूपितप्रतियोगिताया अप्रसिद्ध्या स्वनिरूपितप्रतियोगितावच्छेदकतावत्त्वसंबन्धेन साध्यतावच्छेदकतायां सा न वर्तते तदविशिष्टा स्वैव तदनिरूपिता न साध्याभावीयप्रतियोगितेति साध्याभावो न लक्षणघटक इत्यन्याभावमादाय तत्रातिव्याप्तिः । तदुपादाने तु नोक्तदोषः । यत्किञ्चित्साध्यतावच्छेदकधूमत्वनिष्ठावच्छेदकत्वावृत्तिर्या यत्किञ्चिद्धेत्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकताविशि-

ष्टवह्नित्वनिष्ठावच्छेदकता तदनिरूपितत्वस्य लक्षणघटकधूमाभावीयप्रतियोगितायां सत्त्वेन भवति साध्याभावो लक्षणघटक इति वदन्ति तेऽपि शुद्धपटत्वावच्छिन्न-प्रतियोगिककालिकसंयोगान्यतरसंबन्धेन घटवान् महाकालत्वादित्यत्र लक्षण-घटकपटाभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकत्वावृत्तिः यत्किञ्चिद्धे-त्वधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्न शुक्लपटत्वावच्छिन्नवृत्तिता-वच्छेदकताविशिष्टावच्छेदकता पटत्वनिष्ठा तदनिरूपितत्वस्यासत्त्वेन तन्नि-रूपकपटाभावोऽपि न लक्षणघटकः । अन्ये सर्वेऽभावाः प्रतियोगिसमानाधिकरणा एवेति लक्षणघटकाभावाप्रसिद्ध्याऽव्याप्त्यापत्तिरेव निरस्ता वेदितव्याः । यदि चोक्तदोषवारणाय हेत्वधिकरणनिरूपितयत्किञ्चिन्मठवृत्तितावच्छेदकमठत्वनिष्ठा-वच्छेदकताविशिष्टा मठत्वनिष्ठा अवच्छेदकता सा च यत्किञ्चित्साध्यतावच्छेदक-घटत्वनिष्ठावच्छेककत्वावृत्तिरपि तदनिरूपितत्वस्य पटाभावीयप्रतियोतितायां सत्त्वेन तन्निरूपकघटाभावो भवति लक्षणघटको न तत्राव्याप्तिरित्युच्यते । तदा स्वविशिष्टमुख्यविशेष्यताशून्यज्ञानीयविषयतावच्छेदकावच्छिन्ननिरूपितविषयिताविलक्षण-विषयितासंबन्धेन महानसीयवह्निमान् वह्निविषयक, महानसीयवह्नि-विषयकज्ञानान्यतरत्वादित्यत्र वह्निविषयकज्ञानात्मकहेत्वधिकरणनिरूपितयत्किञ्चिद्-वृत्तितावच्छेदकवह्नित्वनिष्ठावच्छेदकताविशिष्टवह्नित्वनिष्ठावच्छेदकतैव सा यत्किञ्चित्साध्यतावच्छेदकमहानसीयत्ववह्नित्वोभयनिष्ठावच्छेदकत्वावृत्तिः तदनिरू-पितत्वस्य यत्किञ्चिद्धेत्वधिकरणवह्निविषयकज्ञानवृत्तिप्रतियोगिव्यधिकरणसाध्या-भावीयप्रतियोगितायां सत्त्वादव्याप्तिर्नेति वदन्ति । तत्समुचितं बालानाम् । परे त्वत्र (साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वकल्पे) लक्षणघटकाभावप्रतियोगिताविशिष्टान्यद् यत्साध्यत्वं तदवच्छेदकावच्छिन्नसामा-नाधिकरण्यं हेतौ व्याप्तिः । वै० स्वानवच्छेदकानवच्छिन्नत्व, स्वसामा-नाधिकरण्योभयसंबन्धेन । तथा च महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वह्न्य-भावमादाय नाव्याप्तिः प्रतियोगितानवच्छेदकमहानसीयत्वावच्छिन्नत्वस्य साध्य-तायां सत्त्वेन साध्यतायाः प्रतियोगिताविशिष्टान्यत्वादिति वदन्ति । ते च लक्षणघटकाभावप्रतियोगिताविशिष्टान्या या साध्यता तदवच्छेदकावच्छिन्नसामा-

नाधिकरण्यं हेतौ व्याप्तिः । वै० । स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्व-स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्वैतत्त्रितयसंबन्धेन, तावतैव बह्निमान् धूमादित्यत्र महानसीयबह्न्यभावमादायाव्याप्तिवारणसंभवेन साध्यतावच्छेदक-तदितरोभयानवच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगिताविशेषणस्य वैफल्यापत्तेः ।

परे तु कल्पे स्वानवच्छेदकानवच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन लक्षण-घटकाभावीयप्रतियोगिताविशिष्टान्या साध्यता तदवच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्व स्वानवच्छेदकान-वच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्वैतत्त्रितयसंबन्धेन वैशिष्टयस्य कथनेन महान-सीयबह्न्यभावस्य तत्र वारणं भवति । स्ववृत्तित्वस्यानुपादाने महानसीयवह्न्य-भावमादायाव्याप्तेर्न परिहारः । तथाहि महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र महानसीयो नास्ति वह्निर्नास्तीत्यभावमादायाव्याप्तिर्भवति, लक्षणघटकतत्तदभाव-प्रतियोगिताविशिष्टा महानसीयवह्निनिष्ठा साध्यता न भवति । प्रतियोगितान-वच्छेदकमहानसीयत्वावच्छिन्नत्वस्य साध्यतायां सत्त्वात् । न वा महानसीयाभावप्रति-योगिताविशिष्टा साध्यता भवति, स्वानवच्छेदकवह्नित्वावच्छिन्नत्वस्य साध्यतायां सत्वात् इति प्रतियोगिताविशिष्टान्या साध्यता भवति इति नाव्याप्तिः । अतो लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्व-स्य न वैयर्थ्यम् । बह्निमान् धूमादित्यत्र महानसीयबह्न्यभावमादायाव्याप्ते-र्वारणाय तद्विशेषणस्य सार्थक्यात् । लक्षणघटकाभावप्रतियोगिताविशिष्टान्यसाध्य-तेत्यत्र वै० स्वानवच्छेदकानवच्छिन्नत्व स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्न-त्वसंबन्धावच्छिन्नस्ववृत्तित्व स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपित-त्वैतच्चतुष्टयसंबन्धेन । अवच्छेदकता वै० स्वसाजात्य स्वसामानाधिकरण्य स्वावच्छेदक-संबन्धावच्छिन्नत्वैतत् त्रितयसंबन्धेन । तथा च लक्षणघटकाभावीयप्रतियोगितायां साध्य-तावच्छेदक तदितरोभयानवच्छिन्नत्वं न निवेश्यम् । साध्यतानवच्छेदकमहानसीयत्वा-वच्छिन्नत्वस्य प्रतियोगितायां सत्त्वेन साध्यतायाः प्रतियोगित्वावृत्तित्वात् प्रतियोगिता-वच्छेदकतायां निरवच्छिन्नत्वं साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वं साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं च न निवेश्यम् । बह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावम्, जातिमद्वान् घटत्वादित्यत्र पट-

समवेतत्वविशिष्टजातिमदभावम्, रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावञ्चादायाव्याप्तीनामभावेन तत्तन्निवेशानां वैयर्थ्यापत्तिरिति एतादृशनिवेशकर्तारो जगदीशस्यानुग्रहकर्तार इति मन्यामहे । तन्न युक्तम् मूलोच्छेदव्याख्यानस्यायुक्तत्वात् ।

अथोक्तविशेषणानामत्रैव तात्पर्यमिति चेत् साध्यतावच्छेदके लक्षणघटकाभावप्रतियोगितानवच्छेदकत्वघटितत्वानुपपत्तिः । (साध्यवद्वृत्त्यभावीयत्व साध्यतावच्छेदकतात्वानवच्छिन्नत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तच्छून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरित्यादिक्रमेणैव निर्वाहे साध्यतावच्छेदके तादृशप्रतियोगितानवच्छेदकत्वकथनस्य वैफल्यापत्तेः ।

ननु प्रयोजनाभावात् तद्वैफल्यमिष्टमेवेति चेत् । प्रकृतानुमितेः पूर्वं प्रकृत्यनुमितिविधेयतायाः (साध्यतायाः) प्रायशोऽनुपस्थितत्वेन तद्(साध्यता) घटितव्याप्तेः (त्वदभिमतव्याप्तेः) दुर्ग्रहतयाऽनुमितेरनुपपत्तिः । अनुमितेः पूर्वं साध्यताया अज्ञानेन त्वदभिलषितव्याप्तेः विशेषणाज्ञानात् ज्ञानाभावेनानुमित्यनुपपत्तिः । कारणाभावेन कार्याभावः सर्वमान्यः । साध्यतावच्छेदकस्य तद्व्याप्तौ अघटकतया अनुपस्थितौ विशेषणाज्ञानेन वह्नित्वविशिष्टानुमित्यनुपपत्तिः । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात् । विषयितया महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमादायाव्याप्तिश्चैते दोषा भवन्ति । अतस्तव नवीना व्याप्तिर्न युक्ता ।

अत्र ब्रूमः सर्वेषां निरवच्छिन्नत्व, साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकतावच्छेदक तदितरोभयानवच्छिन्नत्वादीनां विशेषणानां यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकत्व, साध्यतावच्छेदकतात्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतावत्त्वोभयाभाववत्त्व एव तात्पर्यम् । प्रतियोगितावच्छेदकतावत्ता च स्वनिरूपितावच्छेदकतावत्त्व स्वनिरूपितावच्छेदकतात्व व्यापकत्वोभयसंबन्धेन । व्यापकता च स्वनिरूपितसाध्यतावच्छेदकतावत्त्वसंबन्धेन । द्वितीयव्यापकता च प्रतियोगितावच्छेदकतावत्त्वसंबन्धेन । उभयत्रावच्छेदकतावत्ता च प्रसिद्धचतुष्टयसंबन्धेषु यावदेव तावद्भिः । तथा

च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता यत्किञ्चित्-साध्यतावच्छेदकताव्यापकावच्छेदकताकत्व, साध्यतावच्छेदकतात्वसमानाधि-करणभेदीयप्रतियोगिताविशिष्टावच्छेदकताकत्वोभयाभाववती तत्प्रतियोगिता नवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । अवच्छेदकतायां यत्किञ्चित्साध्यतावच्छेदकताव्यापकता च स्वनिरूपितसाध्यतानिरूपितावच्छेदकतावत्त्वसंबन्धेन । भेदीयप्रतियोगिता वैशिष्टयञ्चावच्छेदकतायाम् स्वनिरूपितावच्छेदकतावत्त्व, स्वनिरूपितावच्छेदकता व्यापकत्वोभयसंबन्धेन । अत्र व्यापकता स्वनिरूपितप्रतियोगितावच्छेदकता-वत्त्वसंबन्धेन । उभयत्रावच्छेदकतावत्ता च स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्प्रसिद्धचतुष्टयसंबन्धेन । बह्निमान् धूमादित्यत्र लक्षणघटकघटाभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदक वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताव्यापकावच्छदेकता स्वनिरूपितसाध्यतानिरू-पितावच्छेदकतावत्त्वसंबन्धेन स्वैव त त्कत्वाभावेन साध्यतावच्छदेकतात्व-समानधिकरणो भेदः वह्नित्वनिष्ठसाध्यतावच्छेदकता घटाभावीय प्रति-योगितावच्छेदकतावती नेत्याकारकः तदीयप्रतियोगिताविशिष्टावच्छेदकता अत्यन्ताभावीयप्रतियोगितानिरूपिता घटत्वनिष्ठावच्छेदकता तत्कत्वोभयाभावो वर्तते । एकसत्त्वेऽपि द्वयं नास्तीति सिद्धान्तात् । तादृशप्रतियोगिता-विशिष्टावच्छेदकता स्वनिरूपिता (स्वनिरूपितप्रतियोगितानिरूपिता)बच्छेदकता-वत्त्व स्वनिरूपिता(स्वनिरूपितप्रतियोगितानिरूपिता)वच्छेदकताव्यापकत्वोभय संबन्धेन घटत्वनिष्ठैव । अत्र व्यापकता स्व ( घटत्वनिष्ठात्यन्ताभावीय प्रतियोगितानिरूपितावच्छेदकता)निरूपितभेदीयप्रतियोगितानिरूपितावच्छेदकतावत्त्व-संबन्धेन घटत्वनिष्ठावच्छेदकता भेदीयप्रतियोगितावच्छेदकता तादृशचतुष्टयसंबन्धेन लक्षणघटकात्यन्ताभावीयप्रतियोगितावच्छदेकतायां वर्तते । तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः । धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । लक्षणघटकधूमाभावीयप्रतियोगितायां साध्यता-

वच्छेदकतात्वसमानाधिकरणो भेदः धूमत्वनिष्ठ साध्यतावच्छेदकता घटाभावीयप्रतियोगितावच्छेदकतावती नेत्याकारकः, तदीयप्रतियोगिता घटाभावीयप्रतियोगितावच्छेदकघटत्वनिष्ठावच्छेदकतावन्निष्ठा तद्विशिष्टा अत्यन्ताभावीयप्रतियोगितानिरूपितघटत्वनिष्ठावच्छेदकता तत्कत्वाभावेन यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वघटितोभयाभावो वर्तते । तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्त्वात् । तादृशविलक्षणविषयितासंबन्धेन महानसीयवह्निमान् वह्निविषयक, महानसीयवह्निविषयकज्ञानान्यतरस्यादित्यत्र नातिव्याप्तिः । महानसीयत्वनिष्ठसावच्छिन्नावच्छेदकतायां हेत्वधिकरणे वह्निविषयकज्ञाने महानसीयवह्न्यभावीयप्रतियोगितावच्छेदकत्वनिष्ठावच्छेदकता भेदस्य, एवं साध्यतावच्छेदकत्वनिष्ठसाध्यतावच्छेदकतायां तादृशाभावप्रतियोगितावच्छेदकमहानसीयत्वनिष्ठप्रतियोगितावच्छेदकताया भेदस्य च सत्त्वेन हेतुसमानाधिकरणसाध्याभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य, साध्यतावच्छेदकतात्वसमानाधिकरणभेदीयप्रतियोगितावच्छेदकत्वस्य चोभयस्य सत्त्वेन तादृशोभयाभावस्यासत्त्वात् साध्याभावस्य लक्षणाघटकत्वात् ।

यद्वा यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्व, साध्यताविशिष्टान्यत्वोभयाभाववती या, लक्षणघटकाभावप्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । साध्यतावैशिष्ट्यं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपकत्व, स्ववृत्तित्वोभयसंबन्धेन । वृत्तित्वं च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वसंबन्धेन । उभयत्रावच्छेदकतावैशिष्टयञ्च । स्वसाजात्य, स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितयसंबन्धेन । तथा च यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्व, साध्यताविशिष्टान्यत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । वह्निमान् धूमादित्यत्र लक्षणघटकाभावीयप्रतियोगितायां साध्यताविशिष्टान्यत्वस्य सत्त्वेऽपि यत्किञ्चित्साध्यतावच्छेदकता

व्यापकावच्छेदकताकत्वाभावेन तादृशोभयाभावस्य सत्त्वात्, लक्षणसंगतिः। धूमवान् वह्नेरित्यत्र नातिव्याप्तिः। लक्षणघटकधूमाभावीयप्रतियोगितायां यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्वस्य सत्त्वेऽपि साध्यताविशिष्टान्यत्वस्यासत्त्वेन तदुभयाभावस्य सत्त्वात्। उक्तविलक्षणविषयिता स्वविशिष्टमुख्यविशेष्यताद्वयशून्यज्ञानीयविषयतावच्छेदकावच्छिन्नविषयतानिरूपितविषयितासंबन्धेन महानसीयवह्निमान् वह्निविषयकमहानसीयवह्निविषयकज्ञानान्यतरत्वादित्यत्र वह्न्यभावमादाय महानसीयवह्न्यभावमादाय वा नाव्याप्तिः। तादृशोभयाभावस्य तत्तत्प्रतियोगितायामसत्त्वात्। वह्न्यभावीयप्रतियोगितावच्छेदकताविशिष्टान्यावच्छेदकता महानसीयत्वनिष्ठा तन्निरूपितत्वस्य, एवं महानसीयाभावप्रतियोगितावच्छेदकताविशिष्टान्यवह्नित्वनिष्ठावच्छेदकता तन्निरूपितत्वस्य च साध्यतायां सत्त्वात्। विषयितया वह्नित्ववद्वान् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादाय नाव्याप्तिः। प्रतियोगितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य साध्यतायां सत्त्वेन प्रतियोगितायाः साध्यतायामवृत्तित्वात्। प्रतियोगितायां प्रतियोगिताविशिष्टान्यत्वस्य सत्त्वेन तादृशोभयाभावो न वर्तते इति तन्निरूपकाभावस्य लक्षणाघटकत्वात्। प्रतियोगितावच्छेदकता निरवच्छिन्ना, साध्यतावच्छेदकता च सावच्छिन्नेति साध्यतावच्छेदकतायां स्वानवच्छेदकवह्नित्वत्वावच्छिन्नत्वस्यैव सत्त्वात्। न चास्य व्याप्तिलक्षणस्य साध्यताघटितत्वेन प्रकृतानुमितेः पूर्वं प्रकृतानुमितिविधेयतारूपसाध्यताया प्रायशोऽनुपस्थितत्वेन तद्घटितव्याप्तेर्दुर्ग्रहतया अनुमितेरनुपपत्तिरिति दोषः परे तु कल्प इव तदवस्थ इति वाच्यम्। पूर्वोक्तोभयाभाववत्प्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदकनिष्ठस्य व्याप्तिघटकत्वाङ्गीकारेणानुपस्थितस्यापि संसर्गतया भानं भवतीति व्याप्तिग्रहसंभवात्। तथा च यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्व साध्यताविशिष्टान्यत्वोभयाभाववत्प्रतियोगितावच्छेदकत्वीय स्वरूपसंबन्धावच्छिन्ना या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्साध्यतावच्छेका-

वच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । अत्र यद्वक्तव्यं तत्पूर्वं द्रष्टव्यम् । नन्वत्रापि महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमादायाव्याप्तिरिति चेन्न । स्वा(साध्यत्वा)वच्छेद्यविशेष्यताविशिष्टविशेष्यत्वावच्छेद्यप्रमीयप्रकारतावच्छेदकत्वस्य वैशिष्ट्यघटकत्वाङ्गीकारात् । वै. स्वावच्छेदकीभूतधर्मावच्छिन्नत्वस्ववृत्तिनिरवच्छिन्नत्ववत्त्वान्यतरसंबन्धेन । तथा च साध्यत्वावच्छेद्यविशेष्यत्वस्य वह्नित्वादिसाध्यतावच्छेदकावच्छेद्यत्वम् अभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसंबन्धावच्छिन्नप्रकारतावच्छेदकविशेष्यतायाश्च महानसीयत्वावच्छिन्नत्वमिति नाव्याप्तिरिति । तथा च यत्किञ्चित्साध्यतावच्छेदकताव्यापकावच्छेदकताकत्व, साध्यताविशिष्टान्यत्वोभयाभावात् प्रतियोगितावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्ना या प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्ना प्रतियोगिता तन्निरूपकाभाववत्साध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । साध्यतावै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व, स्ववृत्तित्व, स्वावच्छेद्यविशेष्यताविशिष्टविशेष्यत्वावच्छेद्यप्रमीयप्रकारतावच्छेदकत्वैतत्त्रितयसंबन्धेन । प्रतियोगितायाः साध्यतायां वृत्तित्वञ्च स्व(प्रतियोगिता)निरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धेन । विशेष्यतायां विशेष्यतावैशिष्ट्यञ्च स्वावच्छेदकीभूतधर्मावच्छिन्नत्व, स्वनिरूपितनिरवच्छिन्नत्ववत्त्वान्यतरसंबन्धेन । अवच्छेदकतायामवच्छेदकतावैशिष्ट्यञ्च स्वसजातीयत्व, स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व स्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंबन्धेन । तथा चाभावनिष्ठविशेष्यतानिरूपितप्रतियोगित्वसंबन्धावच्छिन्नमहानसीयनिष्ठप्रमीयप्रकारतायां स्व( साध्यता ) निरूपितनिरवच्छिन्नत्ववत्त्वसंबन्धेन साध्यत्वावच्छिन्नवह्नित्वनिष्ठविशेष्यताविशिष्टविशेष्यत्वं वर्तते तदवच्छिन्नत्वस्याभावेन तादृशप्रकारतावच्छेदकत्वस्य महानसीयत्वावच्छिन्नप्रतियोगितायाममावेन साध्यताविशिष्टत्वाभावाभावात् । साध्यताविशिष्टान्यत्वस्य सत्त्वेन तादृशोभयाभाववती महानसीयत्वावच्छिन्ना प्रतियोगिता न भवति । तन्निरूपकाभावो न लक्षणघटक इत्यन्याभावीयप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वात् नाव्याप्तिः । इदं च महानसीयवह्नित्वावच्छिन्नप्रति-

योगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य वह्निमहानसीयत्वावच्छिन्नप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य च भेदपक्षे समानं बोध्यम् । उभयोरपेक्षाबुद्धिविशेषविषयत्वेन तादृशबुद्ध्योः परस्परं भेदात् । न चोभयत्रानुयोगितावच्छेदकं द्वित्वमेवेति तयोः कथं भेदः । भेदस्य प्रतियोगितावच्छेदकेन सह विरोधात्, द्वित्वस्योभयत्राविशेषादिति वाच्यम् । प्रतियोगित्वभेदस्यान्यथानुपपत्त्योभयोर्द्वित्वयोः परस्पर भेदकल्पनात् । न च भेदकाभाव इति वाच्यम् । महानसीयधर्मिकवह्निज्ञानोत्तरापेक्षाबुद्धिरेकस्य द्वित्वस्य सामग्री, वह्निधर्मिक महानसीयज्ञानोत्तरापेक्षा बुद्धिः अपरस्य द्वित्वस्य सामग्रीत्यपेक्षाबुद्ध्योः भेदकयोः परस्परभिन्नत्वेनोभयोः कार्ययोः परस्परभेदः ।

वस्तुतस्तु संयोगसंबन्धावच्छिन्नमहानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वस्य लाघवेन महानसीयत्व वह्नित्वयोः सिद्धावपि, विषयित्वसंबन्धावच्छिन्नमहानसीयवह्नित्वावच्छिन्नप्रतियोगितावच्छेदकत्वं सामानाधिकरण्यसंबन्धेन महानसीयत्वविशिष्टवह्नित्वे एव । एवं वह्निमहानसीयाभावप्रतियोगितावच्छेदकत्वं सामानाधिकरण्यसंबन्धेन वह्नित्वविशिष्टमहानसीयत्वमेव कल्पनीयमिति पक्षे च उक्तसंबन्धः (स्वावच्छेद्यविशेष्यताविशिष्टविशेष्यत्वावच्छेद्यप्रमीयप्रकारतावच्छेदकत्वसंबन्धः) साध्यत्ववैशिष्ट्यनियामकतया निवेश्यः । स्वनिरूपितावच्छेदकताविशिष्टान्यत्वनियामकसंबन्धस्य स्वानवच्छेदकानवच्छिन्नत्वोक्तावेवोक्ताभावस्य (महानसीयाभावस्य) वारणात् । स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धघटकवैशिष्ट्यनियामक, स्वसाजात्य, स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्वैतच्चतुष्टयसंबन्धस्य वक्तव्यमिति विषयितासंबन्धेन महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमादाय नाव्याप्तिः । प्रतियोगितावच्छेदकवह्नित्वविशिष्टमहानसीयत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकमहानसीयत्वविशिष्टवह्नित्वनिष्ठावच्छेदकतावैशिष्ट्यस्यासत्त्वेन साध्यतावच्छेदकताविशिष्टान्यवह्नित्वविशिष्टमहानसीयत्वनिष्ठावच्छेदकतानिरूपकत्वस्यैव वह्निमहानसीयाभावप्रति-

योगितायां सत्त्वेन तदभावो न लक्षणघटकः । साध्यतानवच्छेदकवह्नित्व-विशिष्टमहानसीयत्वत्वावच्छिन्नत्वस्य प्रतियोगितावच्छेदकतायां सत्त्वेन तस्याः साध्यतावच्छेदकताविशिष्टान्यत्वाभावात् ।

यद्वा महानसीयवह्न्यभावप्रतियोगितावच्छेदकत्वं महानसीयत्ववह्नित्वयो-रेवाङ्गीकरणीयम् । महानसीयत्वञ्च वह्नित्वावच्छिन्नानुयोगिकसमवायेनैव प्रति-योगितावच्छेदकं न तु शुद्धसमवायेन । वह्नित्वावच्छिन्नानुयोगिकसमवाय एव महानसीयत्वनिष्ठप्रतियोगितावच्छेदकताघटकसबन्धः । एवञ्च महानसीयत्वा-वच्छिन्नानुयोगिकसमवायसंबन्धेनैव वह्नित्वस्य वह्निमहानसीयाभावप्रतियोगिता-वच्छेदकत्वमिति प्रतियोगितयोर्भेदाय कल्पनीयमिति कल्पे विशेष्यताघटित-वैशिष्ट्यनियामकसंबन्धो न निवेश्यः । साध्यतावच्छेदकवैशिष्ट्यनियामक-स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य पर्याप्तिघटितस्य निवेशेनैव विषयितासंबन्धेन महानसीयवह्निमान् तज्ज्ञानत्वादित्यत्र वह्निमहानसीयाभावमादायाव्याप्तेर्वारणात् । साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतावच्छेदकपर्याप्तिघटितसमवायावच्छिन्नत्वस्य प्रतियोगितावच्छेदकवह्नित्वमहानसीयत्वनिष्ठायां वह्नित्वावच्छिन्नानुयोगिक समवायावच्छिन्नावच्छेदकतायामसत्त्वेन तस्याः साध्यतावच्छेदकताविशिष्टा-न्यत्वमिति तन्निरूपितस्यैव वह्निमहानसीयाभावप्रतियोगितायां सत्त्वेन तदभावो न लक्षणघटक इति । अथ संयोगसंबन्धावच्छिन्नमहानसीयवह्न्यभावप्रतियो-गित्वसंयोगसंबन्धावच्छिन्नवह्निमहानसीयत्वावच्छिन्नप्रतियोगित्वयोर्भेदाभावेऽपि सत्य-भावेन भेदकल्पना न युक्ता । वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेद-कत्वपक्षे विषयितया महानसीयवह्नेः साध्यतायां महानसीयवह्निविषयक वह्निमहानसीयविषयकज्ञानान्यतरत्वे व्यभिचारिणि अतिव्याप्तिः । साध्याभावस्य प्रतियोगिवैयधिकरण्यविरहेण लक्षणाघटकत्वादिति चेन्न । समनियतनानाधर्मा-वच्छिन्नप्रतियोगित्वानां भेदपक्षे साध्याभावस्य प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वात् । वह्निमहानसीयविषयकज्ञाने हेत्वधिकरणे महानसीयवह्निरूप-प्रतियोगिनो विषयितयाऽसत्त्वेन साध्याभावस्य प्रतियोगिव्यधिकरणत्वम् अन्यथा तत्र तदभावो न भवेत् । प्रतियोगिमति तदभावस्यासत्त्वात्

समनियतनानाधर्मावच्छिन्नप्रतियोगित्वानामभेदपक्षे महानसीयवह्न्यभावप्रतियोगिता वह्निमहानसीयेऽपि वर्तते इति हेत्वधिकरणे वह्निमहानसीयविषयकज्ञाने साध्याभावभिन्नाभावमादाय विषयितासंबन्धेन महानसीयवह्निमान् महानसीयवह्निविषयकवह्निमहानसीयविषयकज्ञानान्यतरत्वादित्यत्रातिव्याप्तिवारणाय साध्यतावच्छेदकावच्छिन्नाधिकरणत्व, प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावस्यैव प्रतियोगिव्यधिकरणत्वं स्वीकरणीयम्। साध्यतावच्छेदकावच्छिन्नाधिकरणत्वञ्च साध्यताविशिष्टनिरूपकताकाधिकरणत्वम्। निरूपकतायां साध्यता वै० स्वनिरूपितावच्छेदकताविशिष्टविशिष्टान्यावच्छेदकत्वानिरूपितत्व, तत्सम्बन्धावच्छिन्नवृत्तित्वोभयसंबन्धेन। उभयत्रावच्छेदकतावै० स्वसाजात्य, स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत् त्रितयसंबन्धेन (स्वानवच्छेदकानवच्छिन्नत्वैतच्चतुष्टयसंबन्धेन वा)। एवञ्च हेत्वधिकरणे वह्निमहानसीयवह्निविषयकज्ञाने साध्यतावच्छेदकमहानसीयत्वविशिष्टवह्नित्वावच्छिन्नाधिकरणत्वप्रयुक्त तदुभयाभावस्य सत्त्वेन भवति तत्र साध्याभावो लक्षणघटक इति न तत्रातिव्याप्तिः। वह्निमान् धूमादित्यत्र समवायेन वह्न्यभावस्य, रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावस्य च प्रतियोगिवैयधिकरण्यविरहेण तत्तदभावानां न लक्षणघटकत्वमिति न तत्र तत्राव्याप्तिः।

यत्तु, नीलान्यघटपीतान्यपटोभयसाध्यकपीतघटनीलपटोभयवत्वादित्यत्र हेत्वधिकरणे पीतघटे पीतान्यघट, नीलान्यपटोभयाभावमादायाव्याप्तिः। तादृशप्रतियोगितावच्छेदकस्य साध्यतावच्छेदके सत्त्वादिति तदपि निरस्तम्। प्रतियोगितावच्छेदकोभयत्व, साध्यतावच्छेदकोभयत्वयोरपेक्षाबुद्धिविषययोः परस्परभिन्नत्वेन प्रतियोगितावच्छेदकभेदस्य साध्यतावच्छेदके सत्त्वात्। न चोभयत्वस्य प्रयोगितावच्छेदकत्वं न स्वीकरणीयं प्रयोजनाभावादिति वाच्यम्। प्रतियोग्यंशे उभयत्वभानं विना तादृशोभयाभावप्रतीतेरनुदयेन तस्य प्रतियोगितावच्छेदकत्वात् प्रमेयत्वं विना प्रतियोग्यंशे घटत्वादिभानस्य घटो नास्तीत्यादौ दृष्टत्वेन प्रमेयघटो नास्तीति प्रतीतिसिद्धाभावप्रतियोगितावच्छेकत्वस्य प्रमेयत्वे परित्यक्तुं शक्यत्वादिति दिक्।

**अथ साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदवच्छिन्ना प्रतियोगिता न निवेश्येति जा० टी० ।**

साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकसमानाधिकरणधर्मवृत्त्यवच्छेदकत्वानिरूपितत्वं लक्षणघटकाभावीयप्रतियोगितायां तत् पर्यवसितम् । तेन प्रमेयसाध्यतावच्छेदकस्थले साध्यतावच्छेदकेतरस्याप्रसिद्धावपि न क्षतिः । वै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन तादृशविशिष्टान्यत्वस्य साध्यतावच्छेदकसमानाधिकरणधर्मवृत्त्यवच्छेदकत्वेऽन्वयः । एवञ्च प्रमेयवद्वान् धूमादित्यत्र साध्यतावच्छेदकप्रमेयसमानाधिकरणघटत्वनिष्ठावच्छेदकतायाः साध्यतावच्छेदकताविशिष्टान्यत्वेन तदनिरूपितत्वस्य हेतुसमानाधिकरणपटाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य (तदवच्छेदकत्वाभावस्य) साध्यतावच्छेदके प्रमेये सत्त्वात् । अन्यथा साध्यतावच्छेदकप्रमेयेतरस्याप्रसिद्धया तत्राव्याप्त्यापत्तेः । वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावप्रतियोगितायां साध्यतावच्छेदकताविशिष्टान्यत्वस्य साध्यतावच्छेदकवह्नित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमहानसीयत्वनिष्ठावच्छेदकतायां सत्त्वेन तदनिरूपितत्वस्यासत्त्वात्, तन्निरूपकमहानसीयवह्न्यभावो न लक्षणघटक इति नाव्याप्तिरिति । यद्यपि साध्यतावच्छेदकभिन्नो यः साध्यनिष्ठो धर्मस्तदनवच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगितायां निवेशनेव महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः तथापि तादृशप्रतियोगिताशून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरित्यस्यैव सम्यक्त्वे दीधितिकृता कृतस्य अनवच्छेदकत्वानुसरणस्य वैयर्थ्यापत्तिरिति तद्ग्रन्थविरोधात् तदुपेक्ष्यमिति बोध्यम् ।

ननु युक्तिसिद्धे वस्तुनि कस्यापि लेशो न बाधक इति अनवच्छेदकत्वानुसरणस्य वैयर्थ्यमिष्टमिति चेदत आह **अपि प्रमेयवान् वाच्यत्वादित्यादावव्याप्तिरिति० जा० टी० ।** प्रमेयवान् वाच्यत्वादित्यत्र साध्यतावच्छेदकप्रमेयत्वभिन्न प्रमेयरूपसाध्यवृत्तित्वस्य सर्वेषु घटत्वादिधर्मेषु सत्त्वेन तदनवच्छेद्यप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्धयाऽव्याप्तिः ।

यत्तु अत्र (साध्यतावच्छेदकभिन्नसाध्यनिष्ठेत्यत्र) साध्यतावच्छेदकताघटकसंबन्धेन साध्यवृत्तित्वस्य धर्मे विवक्षणीयतया घटत्वादेस्तादृशस्वरूपसंबन्धेन प्रमेयावृत्तित्वेन घटाभावमादाय प्रमेयवान् वाच्यत्वादित्यत्र लक्षणसंगत्या नाव्याप्तिरिति तत्तुच्छम्। वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टवान् धूमादित्यत्राव्याप्तेः। साध्यतावच्छेदकभिन्ने साध्यनिष्ठधर्मे तेन संबन्धेन साध्यवृत्तित्वस्याप्रसिद्धेः। न च साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य पर्याप्तिघटितस्यानुपादेयत्वेन नाप्रसिद्धिः। वह्नौ समवायेन महानसीयत्वस्य महानसानुयोगिकसंयोगस्य द्रव्यत्वादेश्च वृत्तित्वात्। एवञ्च साध्यतावच्छेदकताघटकसमवायेन वह्निवृत्तिधर्मः द्रव्यत्वादिः महानसीयत्वञ्च साध्यतावच्छेदकवह्नित्वभिन्नो धर्मः तदनवच्छिन्ना तद्वह्न्यभावीया प्रतियोगिता तच्छून्यत्वस्य वह्निरूपसाध्ये सत्त्वात्। एवं साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकसमानाधिकरणधर्मवृत्त्यवच्छेदकत्वानिरूपितत्वार्थे (पर्यवसितार्थे) निरवच्छिन्नसाध्यतावच्छेदकस्थले सावच्छिन्नसाध्यतावच्छेदकनिष्ठा अवच्छेदकतैव तादृशी साध्यतावच्छेदकताविशिष्टान्या। सावच्छिन्नसाध्यतावच्छेदकस्थले च निरवच्छिन्ना साध्यतावच्छेदकनिष्ठावच्छेदकतैव तादृशी साध्यतावच्छेदकताविशिष्टान्येति वाच्यम्। तादात्म्यस्वरूपान्यतरसंबन्धेन प्रमेयत्वविशिष्टसाध्यके वाच्यत्वेऽव्याप्तेस्तथाप्यनुद्धारात्। सर्वेषामेव धर्माणां तादात्म्यस्वरूपान्यतरसंबन्धेन प्रमेयरूपसाध्यवृत्तित्वेन साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या तन्निरूपकहेतुसमानाधिकरणाभावाप्रसिद्धेः। अवच्छेदकताधर्मिकसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वपरिष्कारे तद्वह्न्यभाववारणासंभवाच्च। तथा हि साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितसंसर्गतावत्त्वं साध्यतावच्छेदकताघटकसंसर्गत्वम्। तथा च वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टवान् धूमादित्यत्र तेन संबन्धेन साध्यतावच्छेदकभिन्नः साध्यवृत्तिधर्मो न प्रसिद्ध्यति। यदीतरवारकपर्याप्तिर्न निवेश्यते, न वा न्यूनवारिकां तदा

नोक्तदोषः । शुद्धसमवायेन महानसीयत्वस्य द्रव्यत्वादेश्च साध्ये वृत्तित्वमित्युच्यते, तदा तद्वह्न्यभावप्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वेन वह्निमान् धूमादित्यत्राव्याप्तिः स्यात् । तत्त्वस्य साध्यतावच्छेदकताघटकसमवायेन साध्ये वह्नौ अवृत्तित्वात् । स्वरूपेण साध्ये तस्य वृत्तित्वमिति । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया या साध्यतानिरूपितावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्व, साध्यतावच्छेदकताव्यापकत्वोभयाभाववत्स्वरूपसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती प्रतियोगिता तच्छून्यसाध्यसमानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । अथवा साध्यतानिरूपितावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्व, साध्यतावच्छेदकताव्यापकत्वोभयाभाववत्त्वं प्रतियोगितावच्छेदकतायां साध्यातावच्छेदकताघटकसंबन्धावच्छिन्नत्वं वाच्यम् । वै० स्वनिरूपितसंसर्गतावच्छेदकतावद्धर्मावच्छिन्नत्व, स्वसमानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्वोभयसंबन्धेन । तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीया या साध्यनिरूपितावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्वसाध्यतावच्छेदकताव्यापकत्वोभयाभाववत्स्वरूप, साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्ववती प्रतियोगिता तच्छून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । तद्वह्न्यभावप्रतियोगितावच्छेदकतत्त्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यस्वरूपनिष्ठसंसर्गतानिरूपितत्वस्य सत्त्वेऽपि साध्यतावच्छेदकतावच्छेदकसमवायनिष्ठ साध्यतावच्छेदकताव्यापकत्वस्यासत्त्वेन तदुभयाभावो वर्तते । भवति तत्त्वनिष्ठप्रतियोगितावच्छेदकता पारिभाषिकसाध्यतावच्छेदकताघटकसबन्धावच्छिन्ना । वह्नित्वनिष्ठ प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्वविरहेण तदुभयाभाववत्त्वं वर्तते तादृशावच्छेदकताकप्रतियोगिताशून्यत्वस्य वह्न्यावसत्त्वेन वह्निमान् धूमादित्यत्राव्याप्तिरिति ।

ननु साध्यतावच्छेदकतातिरिक्ते साध्यनिष्ठधर्मे गगनत्वातिरिक्तत्वमस्तु विशेषणम् । तथा च साध्यतावच्छेदकभिन्नः यो गगनत्वभिन्नः साध्यनिष्ठो धर्मस्तदनवच्छिन्नत्वं लक्षणघटकाभावीयप्रतियोगितायामुच्यतामिति प्रमेयवान्

साध्यत्वादित्यत्र गगनाभावमादाय लक्षणसंगत्या नोक्तदोषः । तादृशप्रतियोगिताशून्यत्वस्य साध्ये सत्त्वात् । न च गगनं प्रमेयवत् गगनत्वादित्यत्राव्याप्तिः । साध्यतावच्छेदकतादात्म्यसंबन्धेन गगनाभावस्य प्रतियोगिसामानाधिकरण्येनान्याभावस्य च साध्यतावच्छेदकभिन्नगगनत्वभिन्नसाध्यनिष्ठधर्मावच्छिन्नप्रतियोगिताकत्वेन च तादृशप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्धिरिति वाच्यम् । अवृत्ति वृत्तिधर्मातिरिक्तत्वस्य साध्यतावच्छेदकभिन्ने साध्यनिष्ठधर्मे विवक्षयाऽऽत्माभावमादाय तत्र लक्षणसंगतेः । आत्मत्वस्यावृत्तिवृत्तित्वात् । तथा चावृत्तिवृत्तिधर्मातिरिक्तो यः साध्यतावच्छेदकभिन्नः साध्यनिष्ठो धर्मस्तदनवच्छिन्ना या प्रतियोगिव्याधिकरणहेतुसमानाधिकरणाभावप्रतियोगिता तच्छून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । हेत्वधिकरणे तादात्म्येनात्मभेदस्य प्रतियोगिव्यधिकरणस्य साध्यतावच्छेदकाभिन्नावृत्तिवृत्तिधर्मभिन्नसाध्यनिष्ठधर्मानवच्छिन्नप्रतियोगिताकस्य लक्षणघटकत्वात् न चायं तादात्म्येनात्मगगनान्यतरवान् समवायेनात्मगगनगतद्वित्ववत्त्वादित्यत्र हेत्वधिकरणे गगने तादात्म्येनात्माभावः प्रतियोगिव्यधिकरणः, एवं हेत्वधिकरणे आत्मनि तादात्म्येन—

— — —

गगनाभावः प्रतियोगिव्यधिकरणस्तादृश इति तत्तदभावीयप्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वादव्याप्तिरिति वाच्यम् । तादृशप्रतियोगितानवच्छेदकं साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात् । तथा चावृत्ति-वृत्तिधर्मातिरिक्तो यः साध्यतावच्छेदकभिन्नः साध्यनिष्ठो धर्मस्तदनवच्छिन्ना या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामाना-धिकरण्यं हेतौ व्याप्तिरिति फलितम् । यदि चायं तादात्म्येनात्मवान् ज्ञानत्वादित्यत्र हेत्वधिकरणे तदात्मनि अपरात्मरूपतद्व्यक्त्यभावं प्रतियोगिव्यधिकरणमा-दायाव्याप्तिः । अपरात्मनि तत्प्रतियोगिताशून्यत्वस्यासत्त्वात् एवमपरात्मनि हेत्वधिकरणे तादात्म्येन तदात्मरूपतद्व्यक्त्यभावं प्रतियोगिव्यधिकरणमादायाव्याप्तिः, तत्प्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वात् । तद्व्यक्तित्वस्यावृत्तिवृत्तिधर्मत्वात् । तद्व्यक्तित्वस्य गगनेऽपि सत्त्वेन साध्यतावच्छेदकभिन्नावृत्तिवृत्तिधर्मभिन्न साध्यनिष्ठधर्मानवच्छिन्नत्वस्य प्रतियोगितायां सत्त्वेन तादृशप्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वात्। आत्ममहानसीयगतद्वित्वविशिष्ट वह्न्यभावमादाय बह्निमान् धूमादित्यत्र नाव्याप्तिः संभवति । अवृत्तिमात्रवृत्तिधर्मभिन्नत्वस्य साध्यतावच्छेदकभिन्ने साध्य-निष्ठधर्मे विवक्षणेनास्य द्वित्वस्यातथात्वात्। यदि च तद्व्यक्तित्वस्य वृत्तिघटवृत्ति धर्मत्वेनावृत्तिमात्रवृत्तिधर्मभिन्नत्वमिति तादात्म्येनात्मवान् ज्ञानवत्त्वादित्यत्र पूर्वो-क्तरीत्याऽव्याप्तिरित्युच्यते । तदा साध्यतावच्छेदकातिरिक्तसाध्यधर्मनिष्ठा या गगनत्वनिष्ठावच्छेदकताभिन्ना सती महाकालत्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकता तदनिरूपितत्वमेव लक्षणघटकाभावीयप्रतियोगितायां विशेषणीयम् । तथा च नोक्तदोषः। प्रमेयवान् वाच्यत्वादित्यत्र गगनाभावमादाय लक्षणसमन्वयात् । तत्तदात्मगततद्व्यक्तिनिष्ठावच्छेदकता साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मनिष्ठा गगनत्वकालत्वनिष्ठावच्छेदकताभिन्ना च तन्निरूपितप्रतियोगितानिरूपकाभावस्य लक्षणाघटकत्वेन गगनाभावमादाय लक्षणसमन्वयः ।

तथा च साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मनिष्ठा या गगनत्वनिष्ठावच्छेद-कताभिन्ना महाकालत्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकता तदनिरूपिता या प्रति-योगिव्यधिकरणहेतुसमानाधिकरणाभावीया प्रतियोगिता तदनवच्छेदकसाध्यता-

वच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । न चैवमपि द्वित्वत्वेन द्वित्वविशिष्टवह्निसाध्यके सद्धेतौ द्वित्ववद्वह्निमान् धूमादित्यत्र वह्नि-गगनोभयाभावमादायाव्याप्तिः । साध्यतावच्छेदकद्वित्ववह्नित्वभिन्नसाध्यवृत्ति धर्मनिष्ठा या गगनत्वनिष्ठावच्छेदकताभिन्ना महाकालत्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकता तन्निरूपितवह्निगगनोभयाभावीयवह्निनिष्ठा प्रतियोगिता तच्छून्य-त्वस्य साध्येऽसत्त्वात् । एवं घटमहाकालयोर्यः संयोगः तद्व्यक्तिमतः तादात्म्येन साध्यतायां घटत्वे च तादात्म्येन घटमहाकालसंयोगव्यक्तिमत्त्वान् घटत्वादित्यत्रा-व्याप्तिः । प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटमहाकालगतसंयोगव्यक्ति-मन्महाकालभेदीयायाः साध्यतावच्छदेकभिन्नसाध्यनिष्ठधर्मनिष्ठा या गगनत्वनिष्ठा-वच्छदेकताभिन्ना महाकालत्वनिष्ठावच्छदेकताभिन्ना अवच्छेदकता तया निरूपितत्वा-भाववत्याः प्रतियोगितायाः साध्ये (घटमहाकालगतसंयोगसंयोगव्यक्तिमान् घटो महाकालश्च स एव तादात्म्येन साध्यः तस्मिन् साध्ये) सत्त्वादिति वाच्यम्। लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मावच्छेद्यत्व, गगनत्वातिरिक्तमहाकालत्वातिरिक्तधर्मावच्छेद्यत्वोभयाभावस्य विवक्षितत्वेनादोषात् । तथा च साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मावच्छेद्यत्व गगनत्वातिरिक्तमहाकालत्वा-तिरिक्तधर्मावच्छेद्यत्वोभयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तदन-वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । साध्यतावच्छेदकघटमहाकालगतसंयोगव्यक्तिभिन्नसाध्यनिष्ठमहाकालत्वावच्छेद्यत्व, गगन-त्वातिरिक्तमहाकालत्वातिरिक्तघटमहाकालगतसंयोगव्यक्तित्वावच्छेद्यत्वोभयोस्तादृश-प्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वात् तदभावो न लक्षणघटक इति तादृशगगनाभावप्रतियोगिताशून्यत्वस्य साध्ये सत्त्वेन तत्राव्याप्त्यभावोपपत्तेः । (सर्वेषां जन्यानां कालोपाधित्वेन कालत्वमिति तेषु महाकालत्वस्य सत्त्वेन तस्य साध्यवृत्तित्वं बोध्यम्) । एतादृशोभयाभावस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेन घटमहाकालगतसंयोगव्यक्तिमन्महाकालभेदीयप्रतियोगितावच्छेदकं महा-कालत्वमात्रं स्वीकरणीयमिति तदीयप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यनिष्ठ-धर्मनिष्ठा या गगनत्वनिष्ठावच्छेदकताभिन्ना महाकालत्वनिष्ठावच्छेदकताभिन्ना

अवच्छेदकता तदनिरूपितत्वस्य सत्त्वेन तादृशप्रतियोगिताशून्यत्वस्य साध्येऽसत्वेन तत्राव्याप्तिरिति परास्तम् । तादृशभेदस्याव्याप्यवृत्तित्वेन तादृशप्रतियोगिमति घटे महाकाले च सत्त्वेन न महाकालत्वमात्रस्य तत्प्रतियोगितावच्छेदकत्वमिति महाकालत्वतादृशसंयोगव्यक्तिश्चेत्युभयस्य तद्भेदप्रतियोगितावच्छेदकत्वात् । तथा च तादृशभेदीयप्रतियोगितायां साध्यतावच्छेदकतत्संयोगभिन्नसाध्यनिष्ठमहाकालत्वरूप धर्मावच्छेद्यत्वगगनत्वातिरिक्तमहाकालत्वातिरिक्त (तादृशसंयोगरूप) धर्मावच्छेद्यत्वोभयस्यैव सत्त्वेन तन्निरूपकाभावस्य घटे घटमहाकालगतसंयोगरूपतद्व्यक्तित्ववन्महाकालो नेति भेदस्य लक्षणाघटकत्वात् । (साध्यतावच्छेदकघटमहाकालगत संयोगव्यक्तिभिन्नसाध्यनिष्ठमहाकालत्वावच्छेद्यत्व, गगनत्वातिरिक्तमहाकालत्वातिरिक्तघटमहाकालगतसंयोगव्यक्तित्वावच्छेद्यत्वोभयस्यैव सत्त्वेन तन्निरूपकतादृशभेदस्य लक्षणाघटकत्वात्) । वह्निमान् धूमादित्यत्र तादृशघटाभावीयप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यनिष्ठद्रव्यत्वादिधर्मावच्छेद्यत्वाभावेन तादृशोभयाभावो वर्तते तच्छून्यत्वं साध्ये वर्तते। एतेन गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे प्रमेयगगनाभावमादाय प्रमेयवान् वाच्यत्वादित्यत्राव्याप्तिः । साध्यतावच्छेदकभिन्नसाध्यनिष्ठद्रव्यत्वादिधर्मनिष्ठा गगनत्वनिष्ठावच्छेदताभिन्ना महाकालत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितत्वस्य प्रमेयगगनाभावीयप्रतियोगितायां सत्त्वेन तच्छून्यत्वस्य साध्येऽसत्त्वादिति परास्तम् । साध्यतावच्छेदकभिन्नसाध्यवृत्ति गगनत्वावच्छिन्नत्वगगनत्वातिरिक्तमहाकालत्वातिरिक्तप्रमेयत्वधर्मावच्छिन्नत्वस्यैव प्रमेयगगनाभावीयप्रतियोगितायां सत्त्वेन तदुभयाभावस्यासत्त्वात् तन्निरूपकाभावस्य लक्षणाघटकत्वेन तादृशगगनाभावीयप्रतियोगिताशून्यत्वस्य साध्ये सत्त्वात् ।

यत्तु तत्क्षणविशिष्टकालिकविशेषणतासंबन्धेन गगनत्वविशिष्टसाध्यकतत्कालत्वे तत्क्षणविशिष्टकालिकेन गगनत्वविशिष्टवान् तत्कालत्वादित्यत्र गगनत्ववन्महाकालाभाव (भेद) मादायाव्याप्तिः । तत्प्रतियोगितायां साध्यतावच्छेदकगगनत्वभिन्नसाध्यवृत्तिमहाकालत्वरूपधर्मावच्छेद्यत्व गगनत्वातिरिक्तमहाकालत्वातिरिक्तद्रव्यत्वादिधर्मावच्छेद्यत्वोभयाभावस्य सत्त्वेन तत्प्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वादिति । तत्तुच्छम् । साध्यतावच्छेदकातिरिक्तसाध्यवृतिधर्मावच्छेद्यत्व-

गगनत्वातिरिक्तधर्मावच्छेद्यत्वमहाकालत्वातिरिक्तधर्मावच्छेद्यत्वैतत्त्रितयाभावस्य लक्षणघटकाभावप्रतियोगितायां विवक्षितत्वेनादोषात्। तथा च साध्यतावच्छेदकातिरिक्त-साध्यवृत्तिधर्मावच्छेद्यत्वगगनत्वातिरिक्तधर्मावच्छेद्यत्व महाकालत्वातिरिक्तधर्मावच्छेद्यत्वै-तत्त्रितयाभाववती या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छदेका-वच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। गगनत्ववन्महाकालभेदीयप्रतियोगि-तायां साध्यतावच्छेदकगगनत्वातिरिक्तमहाकालत्वावच्छिन्नत्वस्य गगनत्वातिरिक्तमहा-कालत्वावच्छिन्नत्वस्य महाकालत्वातिरिक्तगगनत्वावच्छिन्नत्वस्य च सत्त्वेन तादृशत्रितया-भावः तादृशप्रतियोगितायां न वर्तते। तादृशप्रतियोगितानिरूपकाभावस्य लक्षणाघटकत्वेन महाकालभेदमादाय लक्षणसंगतेः। तत्क्षणविशिष्टकालिकसवन्धेन गगनत्वविशिष्टः तत्-क्षणात्मकः कालः स तादात्म्येन स्वस्मिन् वर्तते तत्र महाकालत्वं न वर्तते साध्यतावच्छदेक-गगनत्वभिन्नश्च महाकालः तादात्म्येन महाकाले स्वस्मिन्नेव वर्तते न तु क्षणात्मककाले तत्र महाकालभेदस्य सत्त्वात्। तथा च महाकालभेदमादाय तत्र लक्षणसंगतिर्बोध्या। एवं विषयितासंवन्धेन प्रमेयवान् प्रमेयविषयकगगनादिविषयकज्ञानत्वादित्यत्रापि ना-व्याप्तिः गगनाद्यभावस्य प्रतियोगिवैयधिकरण्यविरहेऽपि घटाद्यभावस्य तादृशप्रति-योगिताकस्य लक्षणघटकत्वसंभवात्। हेत्वधिकरणे गगनविषयकज्ञाने प्रतियोगि-व्यधिकरणघटाभावीयप्रतियोगितायां साध्यतावच्छेदकप्रमेयत्वभिन्नप्रमेयरूपघटत्वा-वच्छेद्यत्व गगनत्वातिरिक्तधर्मावच्छेद्यत्वमहाकालत्वातिरिक्तधर्मावच्छेद्यत्वैतत् त्रितयाभावस्य सत्त्वेन तन्निरूपकघटाभावस्य लक्षणघटकत्वेनाव्याप्त्यभावोपपत्तेः। तादृशधर्मो घटत्वमेकमेव तदवच्छिन्नत्वमेकमेवेति तस्मिन् त्रित्वाभावेन तादृशत्रितया-भावस्य लक्षणघटकाभावीयप्रतियोगितायां सत्त्वात्। वह्निमान् धूमादित्यत्र महान-सीयबह्न्यभावमादायाव्याप्तिः। साध्यतावच्छदेक वह्निभिन्नत्वसाध्यनिष्ठमहानसी-यावच्छेद्यत्व, गगनत्वातिरिक्तधर्मावच्छेद्यत्व महाकालत्वातिरिक्तधर्मावच्छेद्यत्वैतत् त्रितयाभावस्य सत्त्वेन तत्प्रतियोगिताशून्यत्वस्य साध्येऽसत्त्वादिति वाच्यम्। अवच्छेद्यत्वसंबन्धेन तादृशधर्मवद् (द) घटितत्रितयाद्यभावस्य विवक्षितत्वेनादोषात्। तथा चावच्छेद्यतासंबन्धेन साध्यतावच्छदेकभिन्नसाध्यनिष्ठधर्म, गगनत्वधर्म, महाकालत्वधर्मवद् (द) घटितत्रितयाद्यभाववती या लक्षणघटकाभावीया प्रति-

योगिता तच्छून्यसाध्यसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । तथा च वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाय नाव्याप्तिः । तदीयप्रतियोगितायाम् अवच्छेद्यतासंबन्धेन साध्यतावच्छेकभिन्नसाध्यनिष्ठमहानसीयत्वरूपधर्मस्य प्रतियोगितायां वृत्तित्वेन तादृशतृतीयाभावस्यासत्त्वात् । महानसीयवह्न्यभावस्य लक्षणाघटकत्वात् (महानसीयत्ववह्नित्वधर्मद्वयावच्छेद्यत्वेन तृतीयधर्मावच्छेद्यत्वाभावस्यासत्त्वात्) । महानसीयवह्न्यभावीयप्रतियोगितायां साध्यतावच्छेदकवह्नित्वभिन्नसाध्यनिष्ठ महानसीयत्वस्यावच्छेद्यतासंबन्धेन प्रतियोगितायां वृत्तित्वेनावच्छेद्यतासंबन्धेन महानसीयत्वगगनत्वमहाकालत्वैतत्धर्मवदघटितत्रितयाभावस्यासत्त्वात् । प्रमेयवान् वाच्यत्वादित्यत्र गगनाभावो लक्षणघटकः । तदीयप्रतियोगितायां गगनत्वस्यावच्छेद्यतासंबन्धेन वृत्तित्वेन तदघटिततृतीयाभावस्य तत्प्रतियोगितायां सत्त्वात्, तत्प्रतियोगिताशून्यस्य साध्ये सत्त्वात् । स्ववृत्ति (प्रमेयवृत्ति) भेदीयघटत्वावच्छिन्नप्रतियोगितासंबन्धेन घटः प्रमेयवान् वाच्यत्वादित्यत्र हेत्वधिकरणे घटे घटाभावमात्रस्य प्रतियोगिव्यधिकरणस्य तादृशप्रतियोगिताकत्वेन (अवच्छेद्यतासंबन्धेन साध्यतावच्छेदक प्रमेयत्वभिन्न साध्यवद्वृत्तिधर्मगगनत्वमहाकालत्ववद्घटितत्रितयाभावस्य तत्प्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वेन नाव्याप्तिः। स्ववृत्ति (प्रमेयवृत्ति) भेदीयनीलघटत्वावच्छिन्नप्रतियोगितासंबन्धेन नीलघटः प्रमेयवान् नीलघटत्वादित्यत्राव्याप्तिः । हेत्वधिकरणे नीलघटे घटावच्छेदेन नीलप्रमेयो नेति भेदस्य नीलावच्छेदेन घटप्रमेयो नेति भेदस्य च सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वादिति तु न साधुः । (प्रतियोग्यवृत्तिधर्मस्यैव भेदानुयोगितावच्छेदकत्वेन स्ववृत्तिनीलघटत्वावच्छिन्नप्रतियोगितासंबन्धस्यासत्त्वेन तत्संबन्धेन प्रमेयस्य साध्यस्यासत्त्वात् तत्साध्यकहेतावव्याप्तिरिति कथयितुमशक्यत्वात्) उक्तभेदानुयोगितानवच्छेदकधर्मविशिष्टस्यापि उक्तभेदघटितसंबन्धेन, व्यापकत्वाङ्गीकारे स्ववृत्तिभेदीयमहानसीयवह्नित्वावच्छिन्नप्रतियोगितासंबन्धेन वह्निसाध्यकमहानसीयवह्नित्वे सद्धेतौ महानसीयवह्न्यभावमात्रस्य लक्षणघटकतया तत्प्रतियोगितायाम् उक्तोभयानवच्छिन्नत्वविरहेणाव्याप्तेर्दुरुद्धरत्वादिति चेन्न । (साध्यतावच्छेदकवह्नित्वभिन्नसाध्यनिष्ठमहानसीयत्वगगनभिन्नमहाकालत्व भिन्नधर्मोभया-

नवच्छिन्नविरहेण) तादृशोभयाभावसत्त्वात् ज्ञानं घटवत् नित्यज्ञानत्वादित्यत्र नित्यज्ञानान्यत्वविशिष्टपटाद्यभावस्यैव लक्षणघटकतायाः संभावितत्वेन तदीयप्रतियोगितायाम् उक्तत्रितयाभावस्य (साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मावच्छेद्यत्वगगनत्वातिरिक्तधर्मावच्छेद्यत्व,महाकालत्वातिरिक्तधर्मावच्छेद्यत्वैतत् त्रितयाभावस्य) विरहात् तादृशप्रतियोगितानिरूपकलक्षणघटकाभावस्यासिद्धयाऽव्याप्तेरनिवार्यत्वादिति।

अथ साध्यतावच्छेदकभिन्नधर्मे साध्यवद्वृत्तित्वं साध्यतावच्छेदकवृत्तित्वरूपं वाच्यम्। तेन प्रमेयवान् वाच्यत्वादित्यत्र घटाभावमादाय लक्षणसमन्वयो भवति। एवं च लक्षणघटकाभावाप्रसिद्धयाऽव्याप्तिकथनमयुक्तम्। तथा हि स्वसामानाधिकरण्यस्वाभाववत्त्वोभयसंबन्धेन साध्यतावच्छेदकधर्मे साध्यतावच्छेदकभिन्नस्य साध्यतावच्छेदकवृत्तिधर्मस्य वृत्तित्वम्। तादृशधर्मानवच्छिन्ना या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। स्वाभावश्च (साध्यतावच्छेदकभिन्नधर्माभावश्च) साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाभावप्रतियोगिताविशिष्टस्वाभाववद्वृत्तित्वाभाववत्त्वसंबन्धावच्छिन्नप्रतियोगिताकः। तथा च साध्यतावच्छेदके प्रमेयत्वे साध्यतावच्छेदकप्रमेयत्वभिन्नो वाच्यत्वादि धर्मो वर्तते न तु घटत्वादिः। साध्यतावच्छेदकताघटकस्वरूपसंबन्धेन वाच्यत्वाभावो न भवति, स्वरूपसंबन्धेन तस्य केवलान्वयित्वात्। किन्तु घटाभावो व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकः, तदभावप्रतियोगिताविशिष्टघटत्वाभाववद्वृत्तित्वं पटत्वादौ वाच्यत्वेन घटत्वे वर्तते, तादृशवृत्तित्वाभाववत्त्वरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावः प्रमेये वर्तते। तादृशव्यधिकरणसंबन्धावच्छिन्नवाच्यत्वाभाववत्त्वसंबन्धेन वाच्यत्वं प्रमेयत्वे वर्तते न तु घटत्वादिकम्। साध्यतावच्छेदकभिन्नसाध्यतावच्छेदकवृत्तिवाच्यत्वानवच्छिन्ना लक्षणघटकाभावीया या प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वान्नाव्याप्तिरिति चेच्छृणु। साध्यवृत्तित्वरूपपूर्वकल्पापेक्षया साध्यतावच्छेदकवृत्तित्वकल्पे गौरवात्। साध्यवृत्तित्वस्य साध्यतावच्छेदकवृत्तित्वार्थे जघन्यवृत्तिकल्पना भवति। शब्दस्य तत्र न स्वारस्यमिति धीधनैर्विज्ञेयम्। गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे प्रमेयवान् घटत्वादित्यत्र हेत्वधिकरणे पटे प्रमेय-

घटाभावमादायाव्याप्तिः । वाच्यत्वे साध्यतावच्छेदकप्रमेयत्वसामानाधिकरण्यं तादृशसंबन्धावच्छिन्नस्वाभाववत्त्वं च (वाच्यत्वाभाववत्त्वं) वर्तते एवञ्च साध्यतावच्छेदकप्रमेयत्वभिन्नो साध्यतावच्छेदकवृत्तिश्च धर्मो वाच्यत्वादिः, तदनवच्छिन्नत्वस्य साध्याभावीय (प्रमेयविशिष्टघटाभावीय) प्रतियोगितायां सत्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेयत्वेऽसत्त्वात् । साध्यतावच्छेदकताघटकस्वरूपसंबन्धेन प्रमेयत्वाभावो वाच्यत्वाभावश्च न भवति, स्वरूपसंबन्धेन तयोः केवलान्वयित्वात् । किन्तु घटाभावस्तदीयप्रतियोगिताविशिष्टघटाभाववद्वृत्तित्वाभाववत्त्वरूपव्यधिकरण संबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभाववत्त्वस्य वाच्यत्वसामानाधिकरण्यस्य चोभयस्य साध्यतावच्छेदके प्रमेयत्वे सत्त्वेन भवति वाच्यत्वं साध्यतावच्छेदके प्रमेयत्वे वृत्तीति साध्यतावच्छेदकप्रमेयत्वभिन्नसाध्यतावच्छेदकवृत्तिवाच्यत्वानवच्छिन्नत्वस्य हेतुसमानाधिकरणप्रमेयविशिष्टघटाभावीयप्रतियोगितायां सत्त्वात् । एवं प्रमेयवान् वाच्यत्वादित्यत्र लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यतावच्छेदकवृत्तित्वस्य धर्ममात्रे स्वसामानाधिकरण्यस्वाभाववत्त्वोभयसंबन्धावच्छिन्नत्वस्य सत्त्वेन साध्यतावच्छेदकभिन्नसाध्यतावच्छेदकप्रमेयत्ववृत्तिघटत्वधर्मावच्छिन्नत्वस्य सत्त्वेन तादृशधर्मानवच्छिन्नप्रतियोगिताकस्याप्रसिद्ध्याऽव्याप्तेस्तादवस्थ्यात् । पूर्वक्षणवृत्तित्वविशिष्टसाध्यतावच्छेदकप्रमेयत्वाभावप्रतियोगित्वविशिष्टप्रमेयत्वाभाववति द्वितीयक्षणे घटे घटत्वस्य वृत्तित्वेन तादृशवृत्तित्वाभाववत्त्वं नास्तीति तत्संबन्धावच्छिन्न प्रतियोगिताकघटत्वाभाववत्त्वस्य घटे, घटत्वसामानाधिकरण्यस्य च साध्यतावच्छेदके प्रमेयत्वे सत्त्वेन साध्यतावच्छेदके प्रमेयत्वे घटत्वस्य वृत्तित्वमिति स्व (साध्यतावच्छेदक) सामानाधिकरण्य, स्वाभाववत्त्वोभयसंबन्धेन घटत्वस्य साध्यतावच्छेदके प्रमेयत्वे वृत्तित्वमिति साध्यतावच्छेदकप्रमेयत्वभिन्नसाध्यतावच्छेदकप्रमेयत्ववृत्तित्वस्य घटत्वे सत्त्वात् । एवं पटत्वादिकमपि प्रमेयत्ववृत्तीति बोध्यम् । यद्यपि कथंचित् प्रमेयत्वे प्रतियोगित्ववारणसंभवेऽपि (साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नप्रतियोगिताकाभावे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वस्य वैशिष्ट्यानवच्छिन्नप्रतियोगिताकत्वस्य च निवेशेन पूर्वक्षणवृत्तित्वविशिष्टप्रमेयत्वाभावस्य वारणसंभवान्नोक्तदोषः), तथापि घटान्यप्रमेयसाध्यकभूतलत्वादौ (भूतलं घटान्यप्रमेयवत् भूतलत्वा-

दित्यत्र) घटाभावस्य प्रतियोगिवैयधिकरण्यविरहेणाभावान्तरस्य च तादृशप्रतियोगिताकत्वविरहेणाव्याप्तेश्च । तथा हि भूतले घटस्य सत्त्वेन घटाभावश्च प्रतियोगिसमानाधिकरणः । पटाद्यभावस्य साध्यतावच्छेदकभिन्नसाध्यतावच्छेदकवृत्तिरूप साध्यवृत्तिधर्माविच्छिन्नप्रतियोगिताकत्वेन न लक्षणघटकत्वमिति लक्षणघटकाभावाप्रसिद्ध्याऽव्याप्तेः ।

अथ साध्यतावच्छेदकातिरिक्तधर्मे व्यासज्यवृत्त्यन्यत्वं विशेषणं देयम् । तथा च साध्यतावच्छेदकाभिन्नो यो व्यासज्यवृत्तिभिन्नः साध्यवृत्तिधर्मः तदनवच्छिन्ना या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छदेकसाध्यतावच्छदेकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । एवञ्च प्रमेयवान् वाच्यत्वादित्यत्र हेत्वधिकरणे पटे घटपटद्वयो नास्तीत्यभावमादाय लक्षणसंगतिः । द्वित्वे व्यासज्यवृत्तिभिन्नत्वविशिष्टसाध्यवृत्तित्वाभावात् । न चैवं वह्निमान् धूमादित्यत्र वह्निघटोभयाभावमादायाव्याप्तिः । वह्निघटोभयत्वस्य व्यासज्यवृत्तित्वेन घटत्वस्य च साध्यावृत्तित्वेन तदुभयाभावीयप्रतियोगितायां साध्यतावच्छदेकभिन्नव्यासज्यवृत्तिभिन्न साध्यवृत्तिधर्मानवच्छिन्नत्वस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वेऽसत्त्वादिति वाच्यम् । इदानीं साध्यतावच्छेदकभिन्ने धर्मे साध्यवृत्तित्वनिवेशस्य प्रयोजनाभावेन सर्वत्र सद्धेतौ द्वित्वमात्रावच्छिन्नाभावम् (द्वयं नास्तीत्यभावम्) आदाय लक्षणसंगतेः । तथा च साध्यतावच्छेदकभिन्नव्यासज्यवृत्तिधर्मभिन्नधर्मानवच्छिन्ना या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । एवञ्च प्रमेयवान् वाच्यत्वादित्यत्र द्वयं नास्तीत्यभावमादाय लक्षणसंगतिः । न चैव रूपवान् घटत्वादित्यत्र हेत्वधिकरणे घटे रूपद्वयं नास्तीत्यभावमादायाव्याप्तिः । तदीयप्रतियोगिताया रूपत्व द्वित्वयोरेवावच्छदकत्वेन साध्यतावच्छेदकभिन्नव्यासज्यवृत्तिधर्मभिन्न धर्मावच्छिन्नत्वस्य तत्र सत्त्वेन तदवच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वादिति वाच्यम् । लक्षणघटकाभावप्रतियोगितायां साध्यतावच्छेदकातिरिक्तधर्माविच्छेद्यत्व, व्यासज्यवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वोभयाभावस्य विशेषणत्वेनोक्तदोषाभावात् । उक्ताभावीयप्रतियोगितायां साध्यतावच्छेदकेतरद्वित्वावच्छेद्यत्व व्यासज्यवृत्तिधर्मभिन्नरूपत्वावच्छेद्यत्वस्य च सत्त्वेन

तदभावस्य लक्षणाघटकत्वादिति चेन्न । द्वित्वविशिष्टस्य साध्यतायां यत्र घटगतगुणे एकस्मिन् द्वयोर्वा द्वित्वमुत्पन्नं न तु त्रिषु तद्घटनिष्ठतद्व्यक्तित्वे सद्धेतौ अयं घटः द्वित्वविशिष्टगुणवान् तद्व्यक्तित्वादित्यत्र हेत्वधिकरणे घटे द्वित्वत्रयं नास्तीत्यभावमादायाव्याप्तिः । तदीयप्रतियोगितायां साध्यतावच्छेदकेतरावच्छेद्यत्व, व्यासज्यवृत्तिधर्मातिरिक्तधर्मावच्छेद्यत्वोभयाभावस्य सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात् । विषयितया प्रमेयस्य साध्यतायां नित्यज्ञानत्वे ज्ञानं विषयितया प्रमेयवत् नित्यज्ञानत्वादित्यत्र नित्यज्ञानान्यत्वविशिष्टाभावमात्रस्य लक्षणघटकतया तदीयप्रतियोगितायां साध्यतावच्छेदकप्रमेयत्वेतरघटत्वावच्छेद्यत्व, व्यासज्यवृत्तिधर्मेतरनित्यज्ञानान्यत्वविशिष्टचावच्छेदकयोर्द्वयोः सत्त्वेनैतदुभयाभावस्यासत्त्वात् । तादृशप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्ध्याऽव्याप्तेश्च ।

कश्चित् एतस्य ग्रन्थोक्तविशेषणस्य (साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मानवच्छिन्नत्वस्य लक्षणघटकाभावप्रतियोगिताविशेषणस्य) तादात्म्येन जातिमत्साध्यकसत्त्वे अयं तादात्म्येन जातिमत्वान् सत्त्वादित्यत्र घटाभावं सद्घटाभावञ्चादायाव्याप्तिस्तद्वारणाय साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकसाध्यवृत्तिवृत्तिरूपा वृत्तित्वार्थकतामाह । प्रतियोगितायाः रूपावृत्तित्वघटकवृत्तित्वञ्च स्व (प्रतियोगिता) निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । तथा च साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकसाध्यवृत्तिवृत्तिरूपावृत्तिर्या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः। प्रकृते घटाभावीयप्रतियोगितायाः जातिमद्रूपसाध्यवृत्ति (जातिमद्घटवृत्ति) घटत्ववृत्तिरूपं घटत्वगतैकत्वं तद्वृत्तित्वेन सा प्रतियोगिता न लक्षणघटिका किन्तु गगनाभावीया प्रतियोगिता तादृशरूपावृत्तिः तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्न तत्राव्याप्तिरिति । तन्न युक्तम् । एकत्वादेः पर्याप्त्यनभ्युपगमपक्षे एवोक्तकल्पादरात् । (लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकभिन्नसाध्यवृत्तिधर्मानवच्छिन्नत्वविशेषणकल्पस्यादरात् । पर्याप्तिघटितकल्पे तु महानसीयवह्न्यभावीयप्रतियो-

गितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन वह्निमान् धूमादित्यत्र तदभाव-मादायाव्याप्त्यभावेन न तद्विशेषणं सार्थकमिति। तथा चैकत्वादेः पर्याप्त्यनभ्यु-पगमपक्षमाश्रित्योक्तविशेषणस्य एकत्वादेः पर्याप्त्यभ्युपगमरूपपक्षान्तरेण समाधानं न युक्तम् । एतद्दोषसदृशस्य दण्डादिसाध्यकस्थलेऽव्याप्तेः ग्रन्थकृतैव वक्ष्यमाणत्वात्। प्राक्परिष्कृतकल्पे दोषासंभवाच्च ।

### हेतुसमानाधिकरणाभावस्याप्रसिद्धेरिति

यद्यपि प्रथमोपस्थितत्वात् तादृशधर्मानवच्छिन्न (साध्यतावच्छेदकभिन्नसाध्यनिष्ठ धर्मानवच्छिन्न) प्रतियोगित्वाप्रसिद्धिरेव दातुमुचिता (प्रमेयसाध्यकस्थले साध्यता-वच्छेदकेतराप्रसिद्ध्या तादृशप्रतियोगित्वाप्रसिद्धिरेव दातुमुचिता) तथापि संयोग-संबन्धावच्छिन्नप्रमेयाभावप्रतियोगित्वस्य, विषयितया प्रमेयत्ववदभावप्रतियोगित्वस्य, ध्वंसप्रतियोगित्वस्य च साध्यतावच्छेदकभिन्नसाध्यनिष्ठधर्मानवच्छिन्नप्रतियोगित्वस्य प्रसिद्धेः अभावाप्रसिद्धिपर्यन्तानुधावनम् । तथा च साध्यतावच्छेदकसंबन्धेन प्रतियोगि-व्यधिकरणस्य साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकस्य हेतुसमानाधिकरणस्यात्यन्ताभावस्य न प्रसिद्धिरिति ।

### द्रव्यत्वादिरूपेण धूमे वह्निव्याप्यत्वस्येत्यादि

अत्र तृतीयाया (अवच्छिन्नत्वमर्थः) धूमे इति सप्तम्यन्तस्य च धूमनिष्ठलिंगत्वं वह्निव्याप्यत्वञ्च (अर्थः) । तच्च वह्निविधेयताकानुमितिजनकतायां विषयितयाऽवच्छे-दकीभूतो धर्मः । तदेकदेशेऽनुमितौ द्रव्यत्वावच्छिन्नधूमनिष्ठलिङ्गताकत्वस्यान्वयः। धूमसामान्ये इति सप्तम्यर्थो धूमत्वावच्छिन्नलिंगताकत्वम् । तस्य तत्तद्वह्निव्याप्यत्व-शब्दार्थीभूततत्तद्वह्निविधेयताकानुमितिजनकतावच्छेदकघटकानुमितावन्वयः । उक्तावच्छेदकताद्वयोश्चेतरभेदानुमित्युद्देश्यतावच्छेदकाभावसंपादनरूपप्रकृतवारणशब्दार्था-भावे आधेयतासंबन्धेनान्वयः। चतुर्थ्या इच्छाधीनत्वमर्थः। विशेष्येत्यस्य विशिष्ट-त्वमर्थः । क्त्वाप्रत्ययार्थस्याविवक्षितत्वात् । विशिष्टता च साध्यतावच्छेदका-वच्छिन्नविधेयत्वहेतुतावच्छेदकावच्छिन्नलिङ्गताघटितत्वम् लक्ष्यम् । इतरभेदानुमित्यु देश्यम् निर्दिशति बोधयतीत्यर्थः ।

अयमाशयः, तद्धर्माश्रयनिष्ठलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदकं पक्षीकृत्य तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नसामानाधिकरण्येन हेतुना इतर(अनुमितीतर)भेदसाधने धूमत्वाश्रयनिष्ठ लिङ्गतात्वस्य द्रव्यत्वावच्छिन्नलिङ्गतायां वह्नित्वावच्छिन्नविधेयतात्वस्य च तत्तद् वह्नित्वावच्छिन्नविधेयतायां सत्त्वेन उद्देश्यतावच्छेदकस्य द्रव्यत्वावच्छिन्नलिङ्गताक वह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदके धूमत्वावच्छिन्नलिङ्गताकतत्तद् वह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकेऽपि सत्त्वात् तत्रोक्तावच्छेदकद्वये धूमत्वावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यस्य विरहात् भागासिद्धिः । विशिष्य लक्ष्यनिर्देशे च उद्देश्यतावच्छेदकस्य (धूमत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकत्वस्य तत्र (द्रव्यत्वाश्रयलिङ्गताकतत्तद्वह्नित्वाश्रयनिष्ठविधेयताकानुमितिजनकतावच्छेदके) असत्वेन न भागासिद्ध्यवकाशः । अथ द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकतावच्छेदिकायाः व्याप्तेरप्रसिद्धतया कथं तदन्तर्भावेन भागासिद्धिः । धूमवदनुयोगिकसंयोगरूपप्रकृतहेतुतावच्छेदक संवन्धावच्छिन्नद्रव्यत्वावच्छिन्नलिङ्गताकतादृशानुमितिजनकतावच्छेदिकायाः व्याप्तेः प्रसिद्धत्वेऽपि तस्याः उक्तसामानाधिकरण्याभिन्नत्वेन (धूमत्वावच्छिन्नसंयोग संबन्धावच्छिन्नाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्याभिन्नत्वेन) भागासिद्ध्यासंभव एवेति चेन्न । भ्रमप्रमासाधारण्यानुरोधेन हि विषयितासंबन्धेन व्याप्तिविशिष्टनिश्चयत्वेन कारणत्वं परित्यज्य निरूप्यनिरूपकभावापन्नविषयिताकनिश्चयत्वेन कारणत्वं वाच्यमिति नाप्रसिद्धिः । द्रव्यं वह्निव्याप्यमिति भ्रमात्मकज्ञानेन वह्न्यनुमितेः संभवात् । तादृशानुमितिजनकतावच्छेदिकायां व्याप्तौ तादृशवह्नित्वावच्छिन्नसामानाधिकरण्यस्य विरहेण भागासिद्ध्युपपत्तेः। विषयविधेयेत्यादिग्रन्थस्तु आपाततो विषयविशिष्टनिश्चयत्वेन कारणत्वपक्षीयः ।

वस्तुतस्तु व्याप्तिरित्यस्य उक्तजनकत्वानतिरिक्तवृत्तिविषयितानिरूपक इत्यर्थः । अनतिरिक्तवृत्तित्वञ्च स्वव्यापकतत्कत्वम् । तथा च यादृशरूपा-

वच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताविषयिताव्यापिकोक्तजनकता तादृशरूपम्, उक्तजनकतावृत्त्यभावीयप्रतियोगितानिरूपितपरम्परावच्छेदकतावत्-पर्यवसायि पक्षीकृत्य, उक्तसामानाधिकरण्यगतसमुदायत्वहेतुकानुमाने, तादृशजनकत्व-पक्षकोक्तसामानाधिकरण्यत्वावच्छिन्नविषयित्वावच्छिन्नत्वहेतुकानुमाने वा विशिष्य-लक्ष्यानिवेशे भागासिद्धौ तात्पर्यमिति ।

परे तु व्याप्यत्वस्य व्याप्यत्व व्यवहारस्येत्यर्थः । लक्ष्यम् इतरभेदानुमित्युद्देश्यरूपव्याप्यत्वपदार्थम् । अयंभावः । तद्धर्मा-वच्छिन्नहेतुसाध्यबोधकपदसमभिव्याहृतव्याप्यत्वपदार्थः तद्धर्मघटित एव तत्र व्याप्यत्वं यदि तद्धर्माश्रयनिष्ठलिङ्गताकतद्धर्माश्रयनिष्ठविधेयताकानु-मितिजनकतावच्छेदकरूपम् । तदा द्रव्यं वह्निव्याप्यमिति व्यवहारापत्तिः स्यात् । तत्प्रयोजकस्य द्रव्यत्वाश्रय (धूम) निष्ठलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानु-मितिजनकतावच्छेदकस्य धूमत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगिता-नवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यरूपविषयत्वस्य सत्त्वात् । विशिष्य लक्ष्य-निर्देशे तु द्रव्यत्वावच्छिन्नलिङ्गताकवह्नित्वावच्छिन्नविधेयताकानुमितिजनकता-वच्छेदकरूपविषयस्याप्रसिद्धेः (द्रव्यत्वावच्छिन्नसमानाधिकरणात्यन्ताभाव प्रतियोगितावच्छेदकत्वस्य वह्नित्वे सत्वेन तादृशप्रतियोगितानवच्छेदकवह्नित्वा-वच्छिन्नसामानाधिकरण्यस्य द्रव्यनिष्ठस्य विषयस्यानुमितिजनकतावच्छेदकस्य व्याप्तिरूपस्याप्रसिद्धेः) नापत्तिरित्याहुः ।

केचित्तु व्याप्यत्वस्येत्यनन्तरम् उक्तसामानाधिकरण्यरूपताया इति पूरणीयम् । तथा च व्याप्तिरित्येतावदुक्तौ अविशेषात् तद्धर्मावच्छिन्नसमानाधि-करणात्यन्ताभावप्रतियोगितानवच्छेदकतद्धर्मावच्छिन्नसामानाधिकरण्यस्य (व्याप्ति-रूपस्य) तद्धर्मावच्छिन्नलिङ्गताकतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेद-कस्येव धर्मान्तरा (साध्यतावच्छेदकभिन्नधर्मा) वच्छिन्नविधेयताकानुमितिजनकता-वच्छेदकत्वस्य प्रसङ्गेन तादृशव्याप्तिज्ञानविरहदशायां तद्धर्मावच्छिन्नलिङ्गताकतद्धर्मा-वच्छिन्नविधेयताकानुमित्यनुपपत्तिः । तद्रूपविशिष्टस्येत्युक्तौ चान्यधर्मावच्छिन्न लिङ्गताकानुमितिजनकतावच्छेदकस्य तद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रति-

योगितानवच्छेदकतद्धर्मावच्छिन्नसामानाधिकरण्यरूपताविरहात् न परामर्शानुमित्योः कार्यकारणभावे व्यभिचारसंभव इति वदन्ति ।

## सामान्यरूपतालाभायेति

येन रूपेणेति वह्नित्वाश्रयनिखिलव्यक्तिगमकताप्रयोजकतालाभायेत्यर्थः। यत्किञ्चित्व्यक्तिसामानाधिकरण्ये यावत्प्रतियोगिकत्वविरहात् । यावदित्यादेः यथाश्रुतार्थताव्यवच्छेदाय लक्षणयोक्तार्थबोधकत्वं सूचयितुं लाभायेति।

## निरवच्छिन्नत्वमिवेति

यत्किञ्चिद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वमिवेत्यर्थः । अवच्छेदकता मात्रस्य संबन्धावच्छिन्नत्वेन निरवच्छिन्नत्वाप्रसिद्धेः । ननु विशिष्टसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविवक्षया पटसमवेतत्वविशिष्ट-जातिमदभावमादाय जातिमत्त्वान् द्रव्यत्वादित्यत्र यद्यपि अव्याप्तिवारणं संभवति दण्डिमान् द्रव्यत्वादित्यादौ दण्डस्य निरवच्छिन्नावच्छेदकताविरहेण साध्याभावो न लक्षणघटक इत्यन्याभावमादायातिव्याप्तिः स्यादित्यत आह--

## येन रूपेणेत्यादि

साध्यतावच्छेदकनिष्ठावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्व, साध्यता वच्छेदकनिष्ठावच्छेदकतानिरूपितत्वोभयाभाववदित्यर्थः । वै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व स्वसजातीयत्वैतत्त्रितयसंबन्धेन । साजात्यञ्च निरवच्छिन्नत्वसावच्छिन्नत्वान्यतरसंबन्धेन । एवञ्च प्रमेयस्य साध्यतावच्छेदकता-वच्छेदकत्वे तदितराप्रसिद्धावपि न क्षतिः (नाव्याप्तिः) । अत्रोभयानवच्छिन्नेति संपातायातम् । (साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नेत्यत्रोभयान-वच्छिन्नेति संपातायातम्) । उक्तविशिष्टान्यावच्छेदकत्वानिरूपितत्वं लाघवाद् विवक्षणीयम् । (साध्यतावच्छेदकतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वं लक्षणघटकाभावीयप्रतियोगितावच्छेदकतावच्छेदकतायां लाघवाद् विवक्षणीयम्) । वै० पूर्वोक्तसंबन्धैः । कथमन्यथा जातिमद्वान् (जातिमत्त्वान्) घटत्वादित्यत्रा-व्याप्तिवारणायोक्तविशेषणम् (साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वं तादृशप्रतियोगितावच्छेदकताविशेषणम्) उपादीयेत । पटसमवेतत्वविशिष्टवदभाव-

मादायाव्याप्तितादवस्थ्यात् । पटसमवेतत्वविशिष्टनिष्ठावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकजातित्वतदितरोभयानवच्छिन्नत्वस्य सत्त्वात् । कथं वा तद्व्यक्तिमदभावं तत्ताविशिष्टदण्डत्वविशिष्टवदभावञ्चादाय दण्डिमान् दण्डिसंयोगादित्यत्राव्याप्तिसद्भावे तत्राव्याप्तिविरहप्रतिपादकम् यदि चेत्यादिकमन्यथोच्येत । (तद्दण्डी नास्तीत्यादि प्रतीत्या तत्ताविशिष्टदण्डव्यक्तेरेवावच्छेदकत्वं युक्तम् । तथा च कथमुक्ताव्याप्तिरित्युच्यते । )

अयं भावः, दण्डिमान् दण्डिसंयोगादित्यत्र तत्ताविशिष्टवदभावमादायाव्याप्तिसत्त्वेन स्थलान्तरानुधावनं व्यर्थं स्यात् । तदीयप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकदण्डत्वतदितरोभयानवच्छिन्नावच्छेदकत्वानिरूपितत्वस्य सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । उभयानवच्छिन्नत्वस्य संपातायातत्वे तु (प्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्व' कथनेन तद्भ्रमादत्रापि उभयानवच्छिन्नमापतितमिति कथने तु) नोक्तदोषः (नोक्ताव्याप्तिः) । साध्यतावच्छेदकनिष्ठावच्छेदकताविशिष्टान्यतादृशवैशिष्ट्यनिष्ठावच्छेदकतानिरूपितत्वस्य तदभावीयप्रतियोगितायां सत्त्वेन तदभावो न लक्षणघटक इति तत्राव्याप्त्यभावेन स्थलान्तरानुधावनं सार्थकमिति तस्य संपातायातत्वं युक्तं बोध्यम्)

यत्तु वह्नित्वत्वेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तज्ज्ञानत्वे सद्धेतौ ज्ञानं विषयितया वह्नित्वविशिष्टवत् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादायाव्याप्तिः । तादृशाभावीयप्रतियोगितायां साध्यतावच्छेदकतावच्छेदकवह्नित्वतदितरोभयानवच्छिन्नवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितत्वस्य सत्त्वेन तदवच्छेदकत्वाभावस्य साध्यतावच्छेदके वह्नित्वेऽसत्त्वात् । अतो विशिष्टसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां सावच्छिन्नत्वं विवक्षणीयम् । तथा च बह्न्यभावो न लक्षणघटकः । तदीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वेन तदभावीयप्रतियोगितायां सावच्छिन्नावच्छेदकतानिरूपितत्वाभावेन तन्निरूपकाभावो न लक्षणघटक इति न तत्राव्याप्तिः । तथा च विशिष्टसाध्यतावच्छेदकस्थले, साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्ना या सावच्छिन्ना अवच्छेदकता तन्निरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं

हेतौ व्याप्तिरिति फलितम् । न च साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्ना या सावच्छिन्ना अवच्छेदकता तन्निरूपितत्वमेव लक्षणघटकाभावीयप्रतियोगितायां निवेश्यतां तावतैव तत्र वह्न्यभावमादायाव्याप्तेर्वारणं तदीयप्रतियोगितावच्छेदकतायाः सावच्छिन्नत्वाभावेन तदभावस्य लक्षणाघटकत्वात्, किं प्रतियोगितावच्छेदकतायां तादृशोभयानवच्छिन्नत्वनिवेशेनेति वाच्यम् । वह्नित्वाश्रयवान् धूमादित्यत्र लक्षणघटकाभावीयप्रतियोगितानिरूपिततादृशावच्छेदकत्वाप्रसिद्ध्याऽव्याप्तेः । साध्यतावच्छेदकतावच्छेदकवह्नित्वत्वेतरानवच्छिन्नायाः सावच्छिन्नायाः प्रतियोगितावच्छेदकताया अप्रसिद्धेः । सावच्छिन्नप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकेतरावच्छिन्नत्वस्यैव सत्त्वेन तादृशेतरानवच्छिन्नत्वस्यासत्वात् इति । तत्तुच्छम् उक्तग्रन्थासङ्गतेः । जातिमान् घटत्वादित्यत्र हेत्वधिकरणे घटे पटसमवेतत्वविशिष्ट जातिमान् नास्तीत्यभावमादायाव्याप्तेर्वारणाय प्रतियोगितावच्छेदकतायां विशिष्ट साध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वं जगदीशेन निवेशितं तदसंगतं स्यात् । साध्यतावच्छेदकतावच्छेदकजातित्वेतरपटसमवेतत्ववैशिष्ट्यन प्रतियोगितावच्छेदकजातिनिष्ठावच्छेदकताया अवच्छिन्नत्वेन तादृशसावच्छिन्नावच्छेदकताया अप्रसिद्धिरिति तावतैव तत्राव्याप्तिवारणेन तदव्याप्ति वारणाय जगदीशस्य तन्निवेशोऽसङ्गतः स्यात् । जगदीशस्योभयानवच्छिन्नत्वनिवेशापेक्षया तव निवेशे लाघवस्य नियामकस्य सत्त्वेन विनिगमनाविरहस्यानवसरात् । तथा च लाघवात् तादृशोभयानवच्छिन्नत्वस्याविवक्षणीयत्वात् । साध्यतावच्छेदकताघटक संबन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धेन तादृशप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षणीयम् । तत्र संबन्धघटकावच्छेदकतायां सावच्छिन्नत्वं वक्तव्यमिति ज्ञानं विषयितया वह्नित्वविशिष्टवत् तज्ज्ञानत्वादित्यत्र विषयितया वह्न्यभावमादाय नाव्याप्तिः । साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धस्य निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताया व्यधिकरणत्वेन तादृशस्वरूपेण तादृशप्रतियोगितावच्छेदकत्वाभावस्य केवलान्वयित्वेन तदभावस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् । एवञ्च रूपत्वन्यूनवृत्तिजातिपदेन नीलत्वत्वपीतत्वत्वाद्यन्यतमविशिष्टा जातिर्ग्राह्या । नीलाद्यभावस्य नीलत्वादिमदभावे

(नीलत्वत्वविशिष्टनीलत्वादिमदभावे) तात्पर्यम् । नातस्तदा दण्ड्यादावित्यादि ग्रन्थविरोधः । अन्यथा साध्यतावच्छेदकताघटकसंबन्धावच्छिन्न सावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धेन लक्षणघटकाभावप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षायां नीलो नास्ति पीतो नास्तीत्याद्यभावप्रतियोगितानिरूपितनिरवच्छिन्ननीलत्वादिनिष्ठावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्त्वेन तत्राव्याप्तेरभावात्, अव्याप्तिकथनस्यासंगतत्वापत्तेः । नीलाद्यभावस्य नीलत्वत्वादिविशिष्टनीलत्वादिजातिमदभावे तात्पर्यमिति कथने तु नोक्तदोषः । नीलत्वादिनिष्ठप्रतियोगितावच्छेदकतायाः सावच्छिन्नत्वेन तादृशस्वरूपसंबन्धेन तदभावस्य साध्यतावच्छेदकेऽसत्त्वेन तत्राव्याप्तिकथनं संगतम् । तादृशस्वरूपसंबन्धो न प्रतियोगितावच्छेदकताया व्यधिकरणसंबन्ध इति ।

प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वकल्पे साध्यतानिरूपितावच्छेदकताविशिष्टान्यसंसर्गतानिरूपितत्व, साध्यतावच्छेदकता व्यापकत्वोभयाभावरूपम् उक्तावच्छिन्नत्वम् (साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वम्) वाच्यम् । वै० स्वनिरूपितसंसर्गतानिरूपितावच्छेदकतावद्धर्मावच्छिन्नत्व, स्वसमानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्वोभयसंबन्धेन । तथा च विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र हेत्वधिकरणे विषयितया वह्न्यभावस्य वारणं ग्रन्थासंगत्यभावश्चेति परमार्थः । वह्न्यभावीय प्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकतायां सावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितसमवायनिष्ठसंसर्गतानिरूपितावच्छेदकतावत्समवायत्वावच्छिन्नत्वस्य- समवायनिष्ठसंसर्गतायां सत्त्वेऽपि स्वसमानाधिकरणसावच्छिन्नावच्छेदकतानिरूपितत्वस्य वह्न्यभावीयप्रतियोगितानिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकता निरूपितसमवायनिष्ठसंसर्गतायामसत्त्वेन साध्यतानिरूपितावच्छेदकताविशिष्टान्यत्वं गतमिति तादृशसंसर्गतानिरूपितत्वस्य साध्यतावच्छेदकवह्नित्वनिष्ठसावच्छिन्नावच्छेदकताव्यापकत्वस्य च निरवच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकतायां सत्त्वेन तदुभयाभावस्यासत्त्वाद् वह्न्यभावमादाय विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र नाव्याप्तिः । ग्रन्थासंगत्यभावश्च पूर्वोक्तरीत्याः बोध्यः ।

ये तु समवायेन वह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय

प्रतियोगिवैयधिकरण्यं साध्यतावच्छेदकावच्छिन्नाधिकरणवृत्तित्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणवृत्तित्वोभयाभावरूपं वाच्यम् । तथा च विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र विषयितया वह्न्यभावमादाय नाव्याप्तिः। अस्मिन् अभावे तदुभयत्वस्य सत्त्वेन तदुभयाभावस्यासत्त्वात् प्रतियोगिवैयधिकरण्याभावेन तस्य लक्षणाघटकत्वादिति वदन्ति ।

तेऽपि हेयाः प्रतियोगिताश्रयनिष्ठनिरूपकतानिरूपिताधिकरणताश्रयवृत्तित्वप्रवेशे प्रमेयावच्छिन्ननिरूपकतामादाय घटाभावस्यापि प्रतियोगिवैयधिकरण्यासंभवः । हेत्वधिकरणे पर्वते घटाभावे साध्याधिकरणपर्वतवृत्तित्वस्य प्रतियोगित्वाश्रयघटनिष्ठप्रमेयत्वरूपप्रमेयावच्छिन्नवह्निनिष्ठनिरूपकतानिरूपिताधिकरणताश्रयपर्वतवृत्तित्वस्य च सत्त्वेन तदुभयाभावस्यासत्त्वात् । प्रतियोगित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रयवृत्तित्वप्रवेशे न दोषः । घटनिष्ठतादृशप्रतियोगित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रयघटवद्भूतलवृत्तित्वस्य घटाभावेऽसत्त्वेन तादृशोभयाभावस्य सत्वात् तस्य प्रतियोगिवैयधिकरण्यमुपपन्नम् ।

एवमपि विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र विषयितया वह्न्यभावमादायाव्याप्तिः । वह्न्यभावप्रतियोगित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रयवह्निविषयकज्ञानवृत्तित्वस्य वह्न्यभावेऽसत्त्वेन तदुभयाभावस्य वह्न्यभावे सत्त्वमिति प्रतियोगिवैयधिकरण्यमिति तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् । प्रतियोगितावच्छेदकनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणताश्रयवृत्तित्व, साध्यतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताश्रयवृत्तित्वोभयाभाववत्त्वं प्रतियोगिवैयधिकरण्यमिति विवक्षणेऽपि उक्तदोषस्तदवस्थ एव। विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र विषयितया वह्निर्नास्तीत्यभावमादायाव्याप्तिः। प्रतियोगितावच्छेदकवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणताश्रयवह्निविषयकज्ञाने विषयितया वह्न्यभावस्यासत्त्वेन तदुभयाभावस्य वह्न्यभावे सत्त्वेन तदभावस्य प्रतियोगिवैयधिकरण्यमिति तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । तन्निवेशस्य हेयत्वात् ते हेयाः ।

केचित्तु साध्यतावच्छेदकतावच्छेदकातिरिक्तानवच्छिन्नावच्छेदकतायां

निरवच्छिन्नत्व, साध्यतावच्छेदकताव्यापकत्वोभयाभावरूपसावच्छिन्नत्वनिवेशात् विषयितया वह्नित्वविशिष्टवान् तज्ज्ञानत्वादित्यत्र न वह्न्यभावमादायाव्याप्तिः। निरवच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकतायां तदुभयस्यैव सत्त्वेन तदुभयाभावस्यासत्त्वात्, तस्य प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वात्। पारिभाषिकसावच्छिन्नस्य तत्रासत्वेन तस्य विशिष्टसाध्यकस्थले लक्षणाघटकत्वात्। न वा वह्नित्वाश्रयवान् धूमादित्यत्राव्याप्तिः। समवायेन साध्याभावीयप्रतियोगितायां निरवच्छिन्नत्वसाध्यतावच्छेदकताव्यापकत्वोभयवदवच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तदुभयाभाववदवच्छेदकतानिरूपितत्वस्यासत्त्वेन तन्निरूपकाभावस्य प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वादित्याहुः।

अथ विशिष्टसाध्यतावच्छेदकस्थले, शुद्धसाध्यतावच्छेदकस्थले च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकत्वानिरूपितत्वमेव लक्षणघटकाभावीयप्रतियोगितायां निवेश्यम्, तावतैव महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावस्य, जातिमत्वान् घटत्वादित्यत्र पटसमवेतत्वविशिष्ट जातिमदभावस्य च वारणसंभवः। महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावीयप्रतियोगितायां स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकवह्नित्वनिष्ठनिरवच्छिन्नसाध्यतावच्छेदकताविशिष्टा स्वैव तदन्या साध्यतावच्छेदकवह्नित्वरूपजातिनिष्ठा सावच्छिन्नाऽवच्छेदकता तदनिरूपितत्वस्य तदभावीयप्रतियोगितायामसत्त्वेन, तद भावस्य न लक्षणघटकत्वम्। एवं पटसमवेतत्वविशिष्टजातिमदभावस्य न लक्षणघटकत्वम्। तदीयप्रतियोगितायां स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकजातिनिष्ठावच्छेदकताविशिष्टा स्वैव तदन्या साध्यतावच्छेदकजातिनिष्ठा पटसमवेतत्ववैशिष्ट्यावच्छिन्नावच्छेदकता तन्निरूपितत्वस्यैव तदीयप्रतियोगितायां सत्त्वेन तदनिरूपितत्वस्यासत्त्वात्, तदभावस्य लक्षणाघटकत्वात्। तदन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन तत्र तत्राव्याप्त्योरभाव इति। न च दण्डिमान् दण्डिसंयोगादित्यत्र तत्ताविशिष्टदण्डत्वविशिष्टवदभावस्य न वारणं भवति। स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकदण्डनिष्ठावच्छेदकताविशिष्टा स्वैव तदन्या साध्यतावच्छेदकदण्डनिष्ठा द्रव्यत्वावच्छिन्नाऽवच्छेदकता तदनिरूपितत्वस्य

तद्दण्डी नास्तीत्यभावीयप्रतियोगितायां सत्त्वात्, तत्ताया उपलक्षणत्वेन तस्यानवच्छेदकत्वादिति वाच्यम् । स्वानवच्छेदकानवच्छिन्नत्वस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसंबन्धावच्छिन्नस्वाभाववत्त्वरूपस्य प्रतियोगितायां वाच्यत्वात् । स्वं (साध्यतावच्छेदकता) एवं च निरवच्छिन्नसाध्यतावच्छेदकतायाः स्वावच्छेदकस्याप्रसिद्धत्वेऽपि न क्षतिः । वै० स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन । तथा च दण्डिमान् दण्डिसंयोगादित्यत्र तत्ताविशिष्टदण्डत्वविशिष्टवदभावमादाय नाव्याप्तिः । तदीयप्रतियोगितायां साध्यतावच्छेदकदण्डनिष्ठावच्छेदकतानिरूपितदण्डत्वनिष्ठावच्छेदकताविशिष्टा स्वैव तदन्यावच्छेदकता दण्डनिष्ठा तन्निरूपितत्वस्य प्रतियोगितायां सत्त्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकत्वाभावस्य तदीयप्रतियोगितायामसत्त्वेन तदभावस्य लक्षणाघटकत्वात् । तादृशघटाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । न च निरवच्छिन्नसाध्यकस्थले (शुद्धसाध्यतावच्छेदकस्थले) वह्निमान् धूमादित्यत्र स्वनिरूपितावच्छेदकत्वाप्रसिद्ध्या (साध्यतावच्छेदकतानिरूपितावच्छेदकत्वाप्रसिद्ध्या) दण्डिमान् दण्डिसंयोगादित्यत्र विशिष्टसाध्यतावच्छेदकस्थले च स्वनिरूपितावच्छेदकतायाः स्वावच्छेदकाप्रसिद्ध्या (साध्यतावच्छेदकतानिरूपिताया दण्डत्वनिष्ठावच्छेदकतायाः' स्वावच्छेदकाप्रसिद्ध्या) चोक्तसंबन्धस्य स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य दण्डनिष्ठसाध्यतावच्छेदकतानिरूपितदण्डत्वनिष्ठावच्छेदकतावच्छेदकस्याप्रसिद्ध्या स्वानवच्छेदकानवच्छिन्नत्वं वैशिष्ट्यनियामकसंबन्धोऽप्रसिद्ध इति तेन संबन्धेन स्वनिरूपितावच्छेदकताविशिष्टत्वाप्रसिद्ध्या च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसंबन्धेन साध्यतावच्छेदकताया व्यधिकरण इति तत्संबन्धावच्छिन्नप्रतियोगिताकस्वावच्छेदकत्वाभावस्य केवलान्वयित्वेन सर्वत्र सत्त्वात् सर्वासां प्रतियोगितावच्छेदकतानां स्वाभाववत्त्वेन साध्यतावच्छेदकताविशिष्टत्वमिति स्व (साध्यतावच्छेदकता) निरूपितावच्छेदकताविशिष्टान्यावच्छेदकताया अप्रसिद्ध्या (तादृशावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्याप्रसिद्ध्या) तत्संबन्धावच्छिन्नसाध्यतावच्छेदकत्वाभावस्याप्रसिद्ध्या तद्वत्वं लक्षणघटकाभावप्रतियोगितायामप्रसिद्धमित्यव्याप्तिः स्यात् । एवं प्रमेयस्य साध्यतावच्छेदकतावच्छेदकतायामवच्छेदकत्वे (प्रमेयावच्छिन्नसाध्यता-

वच्छेदकतावच्छेदकतास्थले) प्रमेयावच्छिन्नावच्छेदकतायाः स्वानवच्छेदकाप्रसिद्ध्या तत्संबन्धावच्छिन्नस्वाभावस्य केवलान्वयित्वात् सर्वासामवच्छेदकतानां साध्यतावच्छेदकताविशिष्टत्वेन तदन्यत्वस्य (साध्यतावच्छेदकताविशिष्टान्यत्वस्य) अप्रसिद्ध्याव्याप्तिः। निरवच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले (दण्डिमान् दण्डिसंयोगादित्यत्र) प्रमेयावच्छिन्नसाध्यतावच्छेदकतावच्छेदकतास्थले च (प्रमेयदण्डत्वविशिष्टदण्डिमान् दण्डिसंयोगादित्यत्र। तादात्म्येन प्रमेयविशिष्टप्रमेयवत्वस्य साध्यत्वे वाच्यत्वे च हेतौ) अव्याप्तिवारणाय स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसंबन्धावच्छिन्नस्वाभाववत्त्वस्योपादानेऽनवस्थापीति (प्रमेयस्य साध्यतावच्छेदकतावच्छेदकतावच्छेदकत्वसंभवेन पूर्वोक्तरीत्याऽव्याप्तिवारणायेयं रीतिरनुसरणीयेत्यनवस्थापत्तिरिति) चेत्। अत्र स्ववृत्तित्वस्य स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्नस्वाभाववत्वसंबन्धावच्छिन्नस्य स्वानवच्छेदकानवच्छिन्नत्वपदेन वाच्यत्वाददोष इति वयं ब्रूमः। स्वानिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वघटकवृत्तित्वञ्च स्वनिरूपितावच्छेदकतासामानाधिकरण्येन वाच्यम्। निरूपितत्वञ्च साक्षात्परंपरासाधारणं ग्राह्यम्।

ज्ञानं विषयितया वह्नित्वाश्रयवत् तज्ज्ञानत्वादित्यत्र वह्न्यभावमादायाव्याप्तिः। स्वनिरूपितयत्किञ्चिद्वह्नित्वनिष्ठावच्छेदकतायां स्वनिरूपितावच्छेदकतासामानाधिकरण्यसंबन्धेन साध्यतावच्छेदकता वर्तते तदवृत्तित्वं नास्तीति स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वरूपव्यधिकरणसंबन्धावच्छिन्नस्वाभाववत्त्वसंबन्धेन मावच्छिन्नवह्नित्वनिष्ठावच्छेदकतायामिव निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकतायामपि साध्यतावच्छेदकता वर्तते इति भवति साध्यतावच्छेदकताविशिष्टा वह्नित्वनिष्ठा निरवच्छिन्ना अवच्छेदकता तदन्या महानसीयवह्नित्ववृत्तित्वविशिष्टजातित्वावच्छिन्नावच्छेदकता तदनिरूपितत्वस्य वह्न्यभावीयप्रतियोगितायां सत्त्वादिति तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात्। तत्राव्याप्तिवारणाय स्वनिरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्नाभाववत्त्वमपि वैशिष्ट्यघटकतयोपादेयम्। तथा च साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकवृत्त्यवच्छेदकत्वानिरूपितलक्षणघटकाभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्ति

रिति फलितम् । वै० स्वनिरूपितयत्किञ्चित् साध्यतावच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्न-स्वाभाववत्त्वसंबन्धावच्छिन्नस्ववृत्तित्व, यत्किञ्चित् अवच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्न-स्वाभाववत्त्वोभयसंबन्धेन । अवृत्तित्वघटकवृत्तित्वञ्च । स्व (साध्यतावच्छेदकता) निरूपितावच्छेदकतासामानाधिकरण्येन । एवञ्च नोक्तदोषः । तथा हि वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकतायां स्व (साध्यतावच्छेदकता) निरूपितयत्कि-ञ्चिदवच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्नस्वाभाववत्त्वस्य स्वस्मिन् (साध्यतावच्छेदकत्वे) सत्त्वेऽपि अन्यत्र (वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकत्वे) असत्त्वात् । तथा च तादृशोभयसंबन्धेन साध्यतावच्छेदकताविशिष्टा स्वैव तदन्या साध्यतावच्छेदकवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकता तन्निरूपितत्वस्यैव वह्निर्नास्ती-त्यभावीयप्रतियोगितायां सत्त्वेन तदभावस्य लक्षणाघटकत्वात् । स्ववृत्तित्व, स्वानव-च्छेदकानवच्छिन्नत्वयोः सर्वत्रैवायमेव निष्कर्षो बोध्यः । न चैवं प्रमेयवद्वान् वाच्यत्वादित्यत्र प्रमेयत्वावच्छिन्नावच्छेदकत्वान्यावच्छेदकतामात्रस्य साध्यतावच्छेद-कताविशिष्टान्यत्वादव्याप्तिः । स्व (साध्यतावच्छेदकता) निरूपितयत्किञ्चिदवच्छेद-कत्वावृत्तित्वव्यधिकरणसंबन्धावच्छिन्नस्वाभाववत्त्वस्य प्रमेयरूपघटत्वनिष्ठनिरवच्छिन्न सावच्छिन्नावच्छेदकतायां सत्त्वेन घटत्वादिनिष्ठावच्छेदकता प्रमेयनिष्ठसाध्यतावच्छेद-कताविशिष्टैवेति साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकताया अप्रसक्तिरिति तदनिरूपकप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः। स्व (प्रमेयनिष्ठसाध्यतावच्छेदकता) निरूपितप्रमेयत्वनिष्ठावच्छेदकता तदवृत्तित्वरूप व्यधिकरणसंबन्धावच्छिन्नस्वाभाववत्त्वसंबन्धावच्छिन्नस्ववृत्तित्वरूपस्वानवच्छेदकानव-च्छिन्नत्वसंबन्धेन विशिष्टा स्वैव तदन्या साध्यतावच्छेदकप्रमेयरूपघटत्वादिधर्मिनिष्ठा-वच्छेदकता तन्निरूपितत्वस्यैव लक्षणघटकाभावीयप्रतियोगितायां सत्त्वेन तदनिरूपित (साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपित) प्रतियोगितानिरूपकलक्षणघट-काभावाप्रसिद्ध्या तत्राव्याप्तिरिति वाच्यम् । विशिष्टान्यावच्छेदकतायां (साध्य तावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकतायां) स्वसजातीयावच्छेदकतावत्त्वसंबन्धेन स्वरूपसंबन्धेन वा साध्यतावच्छेदकताव्यापकत्वस्योक्तौ दोषाभावात् । तथा च स्व (साध्यतावच्छेदकता) निरूपितयत्किञ्चिदवच्छेदकत्वावृत्तित्वसंबन्धावच्छिन्न-

स्वाभाववत्त्वसंबन्धावच्छिन्नस्ववृत्तित्व, स्वनिरूपितावच्छेदकत्वावृत्तिसंबन्धावच्छिन्न-स्वाभाववत्त्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतत्त्रितयसंबन्धेन साध्यतावच्छेदकता-वच्छेदकता विशिष्टान्या या स्वसजातीयावच्छेदकतावत्त्वसंबन्धेन स्वरूपसंबन्धेन वा व्यापिका साध्यतावच्छेदकनिष्ठा अवच्छेदकता तदनिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । सावच्छिन्न घटत्वादिनिष्ठावच्छेदकत्वस्यैव विषयित्वाद्यवच्छिन्नप्रमेयत्वाद्यवच्छिन्ना-वच्छेदकत्वस्यैव वा तादृशविशिष्टान्यावच्छेदकतात्वात् ।

एवं च प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं स्वातन्त्र्येण नोपादेयम् । रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्व-विशिष्टाभावमादाय नाव्याप्तिः । तदीयप्रतियोगितावच्छेदकतायां तादृशोक्तत्रितय-संबन्धेन समवायसंबन्धावच्छिन्नसाध्यतावच्छेदकताविशिष्टान्यत्वस्य तादृशसंबन्धेन साध्यतावच्छेदकताव्यापकत्वस्य साध्यतावच्छेदकरूपत्वनिष्ठस्य च तदनिरूपितत्वस्य तदभावीयप्रतियोगितायामसत्त्वेन तन्निरूपकाभावस्य लक्षणाघटकत्वादिति चेत् ।

अत्र केचित् उभयस्थले (शुद्धविशिष्टसाध्यकस्थले) चैकस्यैव व्याप्तित्वे व्याप्तिज्ञानरूपकारणस्य भेदाभावेन सर्वदैव सावच्छिन्ननिरवच्छिन्नावच्छेदकताक-विधेयतानिरूपकयोरनुमित्योः प्रसगः स्यादित्यनुमितिकारणभेदाय व्याप्तिद्वयनिर्वचन-मिति वदन्ति ।

तदपरे न मन्यन्ते । भेदकसौलभ्यात् । तथा हि वह्नीतरावृत्तित्वेन वह्नित्वे धूमव्यापकतावच्छेदकत्वग्रहे (धूमव्यापकतावच्छेदकताप्रकारतानिरूपित-वह्नीतरावृत्तित्वावच्छिन्नवह्नित्वनिष्ठविशेष्यताशालिज्ञाने वह्नित्वे तादृशावच्छेदकता-कविधेयताकानुमितिर्भवति । वह्नित्वत्वेन वह्नित्वे तादृशावच्छेदकताग्रहे वह्नित्व-त्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितिरिति नियमे तत्तद्व्यक्तिज्ञानमेव भेदकम् (निरवच्छिन्नसावच्छिन्नावच्छेदकताकविधेयताकानुमितिभेदकम्) । न चैवं वह्निमान् इत्यनुमितेः, वह्नीतरावृत्तिमद्वानित्यनुमितेश्च न भेदकसिद्धिः । उभयानुमितिकारणस्य वह्नीतरावृत्तित्वेन वह्नित्वे धूमव्यापकतावच्छेदकत्त्वग्रहस्यै-कस्यैव सत्त्वात् । व्याप्तिभेदपक्षे (सिद्धान्ते) निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकता-

कविधेयताकानुमितित्वं प्रति निरवच्छिन्नवह्निनत्वनिष्ठावच्छेदकताघटितव्याप्तिज्ञानस्य कारणत्वम् । तत्तद्धर्मावच्छिन्नावच्छेदकताकविधेयताकानुमितिषु तत्तद्धर्मातिरिक्तधर्मानवच्छिन्नावच्छेदकताघटितव्याप्तिज्ञानानां कारणत्वमिति अनुमितिभेदकव्याप्तिज्ञानभेदस्य सौलभ्यमिति वाच्यम् । निरवच्छिन्नवह्निनत्वनिष्ठावच्छेदकताकविधेयताकानुमितौ वह्नीतरावृत्तित्वावच्छिन्नविशेष्यताकस्य व्यापकतावच्छेदकत्वज्ञानस्य, वह्निनत्वत्वावच्छिन्नावच्छेदकताकविधेयताकानुमितौ वह्निनत्ववदितरावृत्तित्वावच्छिन्नविशेष्यताकव्यापकतावच्छेदकत्वावगाहिज्ञानस्य, वह्नीतरावृत्तित्वावच्छिन्नावच्छेदकताकविधेयताकानुमितौ वह्नीतरावृत्तिमदितरावृत्तित्वावच्छिन्ने व्यापकतावच्छेदकत्वावगाहिज्ञानस्य च कारणत्वकल्पनया भेदकसौलभ्यत्वात् । व्याप्तिभेदपक्षेऽपि व्यापकतावच्छेदकत्वनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकस्य तद्विशेषस्य (वह्नीतरावृत्तित्वादिविशेषस्य) चावश्यनिवेश्यत्वात् । (हेतुव्यापकतावच्छेदकत्वस्य यो धर्मस्तन्निष्ठधर्मिताया अवच्छेदकस्य वह्निनत्वादेः, तद्विशेषस्य वह्नीतरावृत्तित्वादेश्चावश्यनिवेश्यत्वात्) । अन्यथा व्यभिचारग्रहेऽपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वावच्छिन्नग्रहसंभवेन (निर्धर्मितावच्छेदकज्ञानं न प्रतिबध्यं न वा प्रतिबन्धकं चेति नियमात् ।) धूमवान् वह्नेरित्यत्र प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति निर्धर्मितावच्छेदक व्यभिचारज्ञानसत्त्वेनापि साध्यतावच्छेदकं तादृशप्रतियोगितानवच्छेदकमिति निर्धर्मितावच्छेदकज्ञानं संभवति । निर्धर्मितावच्छेदकज्ञानं न प्रतिबध्यं न वा प्रतिबन्धकं भवतीति धूमसाध्यकवह्निनहेतुकानुमित्यापत्तिः । अतो धर्मितावच्छेदकनिवेशस्योभयत्रावश्यकत्वमिति विज्ञेयम् । वह्निनत्वत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकत्वघटितव्यापकतावच्छेदकत्वस्य धूमजनकतावच्छेदकजातित्वावच्छिन्ने ग्रहात् वह्निनत्ववद्वानित्यनुमित्यापत्तेश्च । 'धूमजनकतावच्छेदकजातित्वावच्छिन्नं धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववद् वह्निनत्वत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकतावदिति ज्ञानात्) वह्निनत्ववद्वानित्यनुमित्यापत्तेश्च । (वह्निनत्वत्वावच्छिन्नावच्छेदकताकविधेयताकानुमितौ वह्नीतरावृत्तिमदितरावृत्तित्वावच्छिन्ने व्यापकतावच्छेदकत्वावगाहिज्ञानस्य कारणस्य सम्भवात्) ।

वास्तविकीं कल्पयेद्, दृष्टानुसारिणीयत्वकल्पनायाः दण्डिसंयोगस्य सल्लिंगकत्वम् संयोगसामान्यस्य चासल्लिंगकत्वञ्चेति दण्डिसंयोगस्य निरवच्छिन्नत्वघटिताव्याप्तिर्गमकताप्रयोजिका संयोगसामान्यस्य तु दण्डत्वातिरिक्तधर्मानवच्छिन्नावच्छेदकत्वघटितेति तु स्वशिष्ये एव प्रबोधनीये व्याप्तिरूपावधारणात् प्राक् लिंगे सत्त्वासत्त्वयोर्दुर्निरूप्यत्वादित्युपरम्यते । सल्लिंगत्वासल्लिंगत्वं चादायानुमितिव्याप्तिज्ञानयोः कार्यकारणभावो न भवितुमर्हति अतस्तव कथनं न युक्तमिति भावः।

अथ यादृशधर्मानवच्छिन्ना साध्यतावच्छेदकता तत्तद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वमुभयस्थलीय (शुद्धविशिष्टोभयस्थलीय) लक्षणघटकाभावीयप्रतियोगितायां विशेषणमस्तु । भवति चैवमक्लेशेन विशिष्य बोधफलः शब्दानुगमः । तथा च यादृशधर्मानवच्छिन्ना साध्यतावच्छेदकता चेत्तत्तद्धर्मावच्छिन्ना या अवच्छेदकता तदनिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति शुद्धविशिष्टसाध्यकस्थले एकैव व्याप्तिरस्तु न तु पृथक् पृथक् व्याप्तिः स्वीकार्या । घटाभावादिकमादाय लक्षणसमन्वयः । न चेदं लक्षणं यत्त्वतत्त्वघटितत्वादननुगतमिति वाच्यम् । अवच्छिन्नत्वसंबन्धेन धर्मे साध्यतावच्छेदकत्वावृत्तित्वस्य विवक्षितत्वात् । एवं चावच्छिन्नत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववद्धर्मानवच्छिन्ना या साध्यतावच्छेदकता तद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितलक्षणघटकाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । वह्निमान् धूमादित्यत्र दण्डिमान् दण्डिसंयोगादित्यत्र च साध्यतावच्छेदकत्वे अवच्छिन्नत्वसंबन्धेन घटत्वं न वृत्ति तद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्योभयत्र साध्यतावच्छेदके सत्त्वात् । न च निरवच्छिन्नसाध्यतावच्छेदकतानिरूपितावच्छिन्नत्वसंबन्धावच्छिन्नधर्मनिष्ठवृत्तित्वस्याप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम् । अवच्छिन्नत्वसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्य यादृशधर्मे विवक्षणेनादोषात् । निरवच्छिन्नसाध्यतावच्छेदकतास्थले, अवच्छिन्नत्वसंबन्धावच्छिन्नवृत्तित्वीयस्वरूप-

संबन्धस्यान्यत्र प्रसिद्धस्यात्र व्यधिकरणत्वेन तदवच्छिन्नप्रतियोगिताकनिरवच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावस्य केवलान्वयित्वेन यादृशधर्मे सत्त्वात्।

यत्तु प्रमेयावच्छिन्नसाध्यतावच्छेदकतायाम् अवच्छिन्नत्वसंबन्धेन वस्तु (प्रमेय) मात्रस्य वृत्तित्वात् तादृशवृत्तित्वाभावाप्रसिद्धिरिति (अवच्छिन्नत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभावाप्रसिद्धिरिति) । साध्यतावच्छेदकतानिरूपिता या अवच्छिन्नत्वसंबन्धावच्छिन्ना वृत्तिता तस्याः प्रमेयमात्रे सत्त्वेन तादृशवृत्तित्वाभावाप्रसिद्धिरिति तन्न। निरूपितत्वसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववती या अवच्छेदकता तद्वद्धर्मानवच्छिन्नावच्छेदकतानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षितत्वात्। वह्निमान् धूमादित्यत्र व्यधिकरणेन निरूपितत्वसंबन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धेन साध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववती या अवच्छेदकता तद्वद्घटत्वधर्मानवच्छिन्नावच्छेदकतानिरूपिता या लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः। धूमवान् वह्नेरित्यत्र तादृशस्वरूपसंबन्धावच्छिन्न साध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववदवच्छेदकतावद्धूमत्वरूपधर्मानवच्छिन्नधूमत्वनिष्ठावच्छेदकता निरूपितत्वस्य लक्षणघटकसाध्याभावीयप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिः। तादात्म्येन प्रमेयविशिष्टप्रमेयवतः साध्यतायां घटत्वहेतौ निरूपितत्वसंबन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकप्रमेयनिष्ठावच्छेदकतानिरूपिता साध्यतावच्छेदकप्रमेयनिष्ठावच्छिन्नावच्छेदकतानिष्ठा वृत्तिता तद्वृत्तित्वाभाववती घटत्वनिष्ठनिरवच्छिन्नावच्छेदकता तदवच्छेदकतावद्घटत्वरूपधर्मानवच्छिन्नघटत्वनिष्ठनिरवच्छिन्नावच्छेदकता तन्निरूपिता या लक्षणघटकाभावीया घटनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेये सत्त्वान्नाव्याप्तिः।

यद्यपि दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिः । प्रतियोगितानिरूपितदण्डत्वनिष्ठावच्छेदकतायाः निरूपितत्वसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धेन साध्यतावच्छेदकत्वेऽवृत्तित्वेन तद्धर्मानवच्छिन्नावच्छेदकतानिरूपितप्रतियोगितानवच्छेदकत्वात् साध्यतावच्छेदकस्य यद्यपि दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिः । लक्षण-

घटकदण्डी नास्तीत्यभावीयप्रतियोगितायाः परंपरानिरूपितदण्डत्वनिष्ठावच्छेदकतायां निरूपितत्वसंबन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धेन अधिकरणेन अवृत्तित्वेन निरूपितत्वसंबन्धावच्छिन्नवृत्तित्वीयस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपित-वृत्तित्वाभाववती सैव दण्डत्वनिष्ठावच्छेदकता तदवच्छेदकतावद् दण्डत्वरूपधर्मान-वच्छिन्ना घटत्वनिष्ठा निरवच्छिन्नावच्छेदकता तन्निरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके दण्डे सत्त्वात् । तथापि स्वसामानाधिकरण्य, स्वसजातीयत्वो-भयसंबन्धेन स्व (साध्यतावच्छेदकता) विशिष्टावच्छेदकतानिरूपितनिरूपितत्वसंबन्धा-वच्छिन्नवृत्तिताप्रतियोगिकस्वरूपबन्धावच्छिन्ना या साध्यतावच्छेदकतानिरूपिता वृत्तिता तद्वृत्तित्वाभाववती या अवच्छेदकता तदवच्छेदकतावद्धर्मानवच्छिन्नावच्छेद-कतानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेन न तत्रातिव्याप्तिः । दण्डनिष्ठसाध्यतावच्छेदकताविशिष्टा स्वसामानाधिकरण्य, स्वसजातीयत्वोभयसंबन्धेन स्वैव तन्निरूपितनिरूपितत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तिताप्रतियोगिक-स्वरूपसंबन्धावच्छिन्ना वृत्तिता दण्डत्वनिष्ठावच्छेदकतायां वर्त्तते तादृशवृत्तित्वाभाव-वदवच्छेदकता दण्डनिष्ठा तदवच्छेदकतावद्दण्डरूपधर्मानवच्छिन्ना या लक्षणघटकसाध्याभावीया प्रतियोगिता तदवच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात् । न च तथापि दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिस्तदवस्था । लक्षण-घटको यो जातिमद् दण्डी नास्तीत्यभावस्तदीयप्रतियोगितानिरूपितसावच्छिन्नदण्डत्व-निष्ठावच्छेदकतायां स्व (साध्यतावच्छेदकता) विशिष्ट (स्व) निरूपितनिरूपितत्व-संबन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभाववती सावच्छिन्ना दण्डत्वनिष्ठावच्छेदकता तदवच्छेदकतावद्दण्डत्वरूपधर्मानवच्छिन्नघटत्वनिष्ठावच्छेदक-तानिरूपिता या लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यता-वच्छेदके सत्त्वादिति वाच्यम् । स्वसामानाधिकरण्य, स्वसजातीयत्वोभयसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नवृत्तिताप्रति-योगिकस्वरूपसंबन्धावच्छिन्ना या साध्यतावच्छेदकतानिरूपितवृत्तितानिष्ठा प्रतियोगिता तन्निरूपकवृत्तित्वाभाववदवच्छेदकताविशिष्टावच्छेदकत्वानिरूपितावच्छेदकतानिरूपि-तत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेनोक्तदोषाभावात् । वै०

स्वसामानाधिकरण्य स्वसजातीयत्वोभयसंबन्धेन । तथा च स्वसामानाधिकरण्य, स्वसजातीयत्वोभयसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकतानिरूपितनिरूतित्वसंबन्धावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नवृत्तितानिष्ठप्रतियोगिताकवृत्तित्वाभाववदवच्छेदकताविशिष्टावच्छेदकत्वानिरूपितावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । तथा च नोक्तदोषः । दण्डनिष्ठसाध्यतावच्छेदकताविशिष्टा तादृशोभयसंबन्धेन स्वैव तन्निरूपितनिरूपितत्वसंबन्धावच्छिन्ना वृत्तिता दण्डत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिष्ठा तादृशवृत्तिताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तित्वाभाववती जातित्वावच्छिन्ना दण्डत्वनिष्ठा अवच्छेदकता स्वसामानाधिकरण्यस्वसजातीयत्वोभयसंबन्धेन स्वविशिष्टा स्वैव तदवच्छेदकत्वानिरूपिता दण्डनिष्ठा प्रतियोगितावच्छेदकता तन्निरूपिता लक्षणघटकजातिमद्दण्डी नास्तीत्यभावीया प्रतियोगिता तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

यत्तु किञ्चिद्वृत्तित्वावच्छेदकतात्वगतद्वित्वे साध्यतावच्छेदकतानिरूपितवृत्तित्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं तद्रूप विशिष्टावच्छिन्नाधिकरणधर्मानवच्छिन्नावच्छेदकत्वं वा विवक्षणीयम् । (तद्विशिष्टावच्छिन्नावच्छेदकतानिरूपितत्वं लक्षणघटकाभावीयप्रतियोगितायां विवक्षणीयम्) । वह्निमान् धूमादित्यत्र घटनिरूपितवृत्तित्व घटत्वनिष्ठावच्छेदकतात्वगतद्वित्वं साध्यतावच्छेदकतानिरूपितवृत्तित्व, साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं तादृशघटत्वनिरूपितवृत्तित्वघटत्वनिष्ठावच्छेदकतात्वगतद्वित्वविशिष्टावच्छेदकतानिरूपिता लक्षणघटकाभावीया घटनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः । किं वा तद्रूपविशिष्टावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयघटत्वावच्छिन्नघटत्वनिष्ठावच्छेदकता निरूपिता या लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वान्नाव्याप्तिः। धूमवान् वह्नेरित्यत्र तादृशसाध्याभावीयप्रतियोगितावच्छेदकत्वनिरूपितवृत्तित्व, प्रतियोगितावच्छेदकधूमत्वनिष्ठप्रतियोगितावच्छेदकतात्वगतद्वित्वे साध्यतावच्छेदकधूमत्व निष्ठसाध्यतावच्छेदकतानिरूपितवृत्तित्वसाध्यतावच्छेदकधूमत्वनिष्ठावच्छेदकतात्वोभया-

वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्यासत्त्वेन नातिव्याप्तिः । न च किञ्चित्त्वनिवेशादननुगम इति वाच्यम् । धर्मवृत्तित्वावच्छेदकतात्वगतसमुदायत्वेन प्रवेशादिति (प्रतियोगितावच्छेदकधर्मवृत्तित्वस्य) प्रतियोगितावच्छेदकतात्वगतसमुदायत्वेन-प्रवेशादिति । तथा च धर्मं (धर्मप्रतियोगितावच्छेदक) निरूपितवृत्तित्वावच्छेदकतात्व (प्रतियोगितावच्छेदकतात्व) गतद्वित्वं साध्यतावच्छेदकनिरूपितवृत्तित्व, साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकं तादृशद्वित्वाश्रयविशिष्टावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । तत्र तादात्म्येन प्रमेयवान् यस्तद्वतः साध्यतायां घटत्वे प्रमेयवत्त्वान् घटत्वादित्यत्र प्रमेयरूपधर्मं (प्रतियोगितावच्छेदकघटत्वरूपप्रमेय निरूपितवृत्तित्वावच्छेदकतात्वघटत्वरूपप्रमेयनिष्ठप्रतियोगितावच्छेदकतात्व) गतद्वित्वे साध्यतावच्छेदकप्रमेयरूपघटत्वनिरूपितवृत्तित्व, साध्यतावच्छेदकप्रमेयरूपघटत्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वेन तादृशानुयोगितानवच्छेदकत्वस्यासत्त्वात् तादृशधर्मविशिष्टावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वस्य धर्ममात्रे सत्त्वेन तादृशधर्मानवच्छिन्नावच्छेदकताया अप्रसिद्ध्या तादृशावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तस्या अप्रसिद्ध्याऽव्याप्त्यापत्तेः । एवं वह्निमान् धूमादित्यत्र लक्षणघटकमहानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यभावप्रतियोगितावच्छेदकजातिरूपवह्नित्वरूपधर्मनिरूपितवृत्तित्वतादृशधर्मनिष्ठावच्छेदकतात्वगतद्वित्वे साध्यतावच्छेदकवह्नित्वनिरूपितवृत्तित्ववह्नित्वनिष्ठसाध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्यासत्त्वेन तादृशानुयोगितानवच्छेदकत्वस्य घटाभावीयप्रतियोगितावच्छेदकघटत्वनिरूपितवृत्तित्व, तादृशप्रतियोगितावच्छेदकघटत्वनिष्ठावच्छेदकतात्वगतद्वित्वे सत्त्वेन एतादृशद्वित्वविशिष्टावच्छिन्नावच्छेदकतानिरूपिता या लक्षणघटकाभावीया महानसीयवह्निवृत्तित्वविशिष्टजातिमन्निष्ठा (वह्निनिष्ठा) प्रतियोगिता तदवच्छेदकत्वस्यैव साध्यतावच्छेदके वह्नित्वे सत्त्वेनाव्याप्तिः स्यात् अतो धर्मं (प्रतियोगितावच्छेदकधर्मं) निरूपितवृत्तित्वावच्छेदकतात्वा (प्रतियोगितावच्छेदकतात्वा) वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगतद्वित्वे, साध्यतावच्छेदकनिरूपितवृत्तित्व, साध्यतावच्छेदकतात्वावच्छिन्नप्रति-

योगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं न वक्तव्यम् । नापि तादृशद्वित्वविशिष्टावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयधर्मानवच्छिन्नावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । किं वा तादृशद्वित्ववदाश्रयावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः, न संभवति । एवं दण्डिमान् द्रव्यत्वादित्यत्रातिव्याप्तिः । लक्षणघटकजातिमद्दण्डो नास्तीति साध्याभावप्रतियोगितावच्छेदक (जातित्वविशिष्टदण्डत्वविशिष्टदण्ड) निरूपितवृत्तित्व, तादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगतद्वित्वे साध्यतावच्छेदकनिरूपितवृत्तित्वस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेन तादृशद्वित्ववदवच्छेदकतावद्दण्डत्वानवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितलक्षणघटकघटाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

एवम् अवच्छिन्नत्वसंबन्धावच्छिन्न स्व (धर्म) निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन (अवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकता धर्मवती नेति भेदो ग्राह्यः) साध्यतावच्छेदकतावृत्तिधर्मावच्छिन्नावच्छेदकतानिरूपितत्वं लक्षणघटकाभावीयप्रतियोगिताविशेषणम् उभयसाधारणम् (शुद्धविशिष्टोभयसाध्यकोभयस्थलसाधारणम्)। तथा अवच्छिन्नत्वसंबन्धावच्छिन्न स्व (साध्यतावच्छेदकभिन्नधर्म) निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तितावद्धर्मावच्छिन्नावच्छेदकत्वानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । वह्निमान् धूमादित्यत्र नाव्याप्तिः । साध्यतावच्छेदकता अवच्छिन्नत्वसंबन्धेन न घटत्ववतीति भेदः साध्यतावच्छेदकतायां वर्तते । तादृशभेदवत्त्वसंबन्धेन साध्यतावच्छेदकतावृत्तिः घटत्वादिधर्मः, तद्धर्मावच्छिन्नावच्छेदकता घटवान्नेतिभेदीयप्रतियोगितावच्छेदकता तदनिरूपिता लक्षणघटकघटाभावीयघटनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । साध्यतावच्छेदकता अवच्छिन्नत्वसंबन्धेन न घटत्ववतीति भेदः धूमत्वनिष्ठावच्छेदकतायां वर्तते । तादृशभेदवत्त्व-

संबन्धेन घटत्वादिः साध्यतावच्छेदकतायां वर्तते तदवच्छिन्नावच्छेदकता घटवान्नेति भेदीयप्रतियोगितावच्छेदकता घटनिष्ठा तदनिरूपिता लक्षणघटकसाध्याभावीया धूमनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात् । न च प्रमेयवत्प्रमेयवान् घटत्वादित्यत्राव्याप्तिः । प्रमेयावच्छिन्नप्रमेयनिष्ठावच्छेदकतायां साध्यतावच्छेदकस्य प्रमेयस्यात्वच्छिन्नत्वसंबन्धेन वृत्तित्वेनावच्छिन्नत्वसंबन्धावच्छिन्न-प्रमेयमात्रनिष्ठावच्छेदकताकप्रतियोगिताकभेदः साध्यतावच्छेदकप्रमेयनिष्ठावच्छेदकतायां नास्तीति· तादृशभेदवत्वसंबन्धेन साध्यतावच्छेदकतावृत्तिधर्मोऽप्रसिद्ध इति तादृशधर्मा-वच्छिन्नावच्छेदकत्वमप्यप्रसिद्धमिति तादृशावच्छेदकताकप्रतियोगिताकलक्षणघटकाभावा-प्रसिद्धेरिति वाच्यम् । निरूपितत्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिष्ठावच्छेदकताक-प्रतियोगिताकभेदस्य (साध्यतावच्छेदकतावच्छेदकभिन्नधर्मनिष्ठावच्छेदकतानिरूपितत्व-वती या अवच्छेदकता तद्वद्धर्मावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य) लक्षणघटका-भावीयप्रतियोगितायां निवेशेनोक्तदोषाभावात् । तथा च निरूपितत्वसंबन्धावच्छिन्न-साध्यतावच्छेदकतानिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्नसाध्यता-वच्छेदकतानिरूपितवृत्तितावदवच्छेदकतावद्धर्मावच्छिन्नावच्छेदकत्वानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम् । प्रमेयवत्प्रमेयवद्वान् घटत्वादित्यत्र नाव्याप्तिः । प्रमेयावच्छिन्नप्रमेयनिष्ठावच्छेदकतावती नेत्याकारकभेदः साध्यतावच्छेदकतायां वर्तते तादृशभेदवत्त्वसंबन्धावच्छिन्नसाध्यतावच्छेदकतानिरूपितवृत्तितावद्घटत्वनिष्ठ-निरवच्छिन्नावच्छेदकतावद्घटत्वावच्छिन्नावच्छेदकत्वानिरूपितलक्षणघटकघटाभावीय-प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके प्रमेये सत्त्वात् । महानसीयवह्नित्ववतो विलक्षणविषयितासंबन्धेन साध्यतायां महानसीयवह्निविषयकज्ञान, महानसीयवह्नि-विषयकमहानसीयवह्नित्वावच्छिन्नविषयक (समूहालम्बन) ज्ञानान्यतरत्वादित्यत्राति-व्याप्तिः । निरूपितत्वसंबन्धावच्छिन्नसावच्छिन्नवह्नित्वनिष्ठसाध्यतावच्छेदकतावती न महानसीयत्वनिष्ठावच्छेदकतेति भेदः महानसीयत्वत्वनिष्ठावच्छेदकतायां वर्तते । एव निरूपितत्वसबन्धावच्छिन्नमहानसीयत्वनिष्ठसाध्यतावच्छेदकतावतां न वह्नित्व-निष्ठावच्छेदकतेति भेदः वह्नित्वत्वनिष्ठावच्छेदकतायां वर्तते । तादृशावच्छेदकतावत्

तत्तद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्यैव साध्याभावीयप्रतियोगितायां सत्त्वेन साध्याभावो न लक्षणघटक इत्यभावमात्रप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वाच्यम् । स्व (साध्यता) निरूपितावच्छेदकतानिरूपितत्वसंबन्धावच्छिन्न स्व (साध्यता) निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्नसाध्यतानिरूपितवृत्तितावदवच्छेदकतावद्धर्मावच्छिन्नावच्छेदकत्वानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणेनादोषात् । महानसीयत्वत्ववह्नित्वत्वनिष्ठावच्छेदकतयोः तादृशसंबन्धावच्छिन्नसाध्यतानिष्ठावच्छेदकताकप्रतियोगिताकभेदस्यासत्त्वात् । तादृशभेदवत्त्वसंबन्धावच्छिन्नसाध्यतानिरूपितवृत्तित्वस्य तत्र तत्रासत्त्वात् । साध्यतायाः स्वनिरूपितावच्छेदकतानिरूपितत्वसंबन्धेन महानसीयत्वत्वनिष्ठावच्छेदकतायां वह्नित्वत्वनिष्ठावच्छेदकतायाञ्च वृत्तित्वात् । अत्रोभयसाधारणैकलक्षणेऽपि (सावच्छिन्ननिरवच्छिन्नावच्छेदकताकसाध्यताकस्थलद्वयसाधारणैकलक्षणेऽपि) स्व (घट) वृत्तिभेदीय (घटो न-दण्डीतिभेदीय) दण्डावच्छिन्नप्रतियोगितासंबन्धेन घटसाध्यकदण्डित्वे सद्धेतौ दण्डिनि स्व (घट) वृत्तिभेदीयप्रतियोगितासंबन्धेन घटवान् दण्डित्वादित्यत्र दण्डावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया तदीयप्रतियोगितायां स्व (साध्यता) निरूपितावच्छेदकतानिरूपितत्वरूपव्यधिकरणसंबन्धावच्छिन्न स्व (साध्यता) निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धावच्छिन्नसाध्यतानिरूपितवृत्तिता दण्डत्वनिष्ठावच्छेदकत्वनिष्ठा तदवच्छेदकतावद्दण्डत्वावच्छिन्नदण्डनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वादिति लक्षणघटकाभावस्याप्रसिद्ध्याव्याप्त्यापत्तिरिति केषाञ्चित् प्रलापोऽग्राह्यः । स्ववृत्तिभेदीयघटत्वावच्छिन्नप्रतियोगितासंबन्धेन (घटो न दण्डीति भेदीय प्रतियोगितासंबन्धेन) दण्डी घटवान् दण्डित्वादित्यत्र दण्डनिष्ठतत्तद्व्यक्तित्वनिष्ठनिरवच्छिन्ना अवच्छेदकता स्वनिरूपितावच्छेदकतानिरूपितत्व (व्यधिकरण) संबन्धेन न घटनिष्ठसाध्यवतीति भेदवत्त्वसंबन्धेन साध्यतानिरूपिता वृत्तितावती तादृशवृत्तितावदवच्छेदकता दण्डनिष्ठतद्व्यक्तित्वनिष्ठा निरवच्छिन्ना तादृशावच्छेदकतावद्तत्तद्व्यक्तित्वावच्छिन्नावच्छेदकत्वानिरूपितत्वस्य लक्षणघटकदण्डी नास्तीत्यभावीयप्रतियोगितायां सत्त्वेन तन्निरूपकस्य दण्डी नास्तीत्यभावस्य लक्षणघटकत्वेन प्रसिद्धत्वात् । यदि कथञ्चिद्

यत्र सद्धेतौ सावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वं नान्यस्ये-त्येतादृशस्थलप्रसिद्धिर्भविष्यति भवताम् । तत्र लक्षणघटकाभावीयप्रतियोगितायां स्व (साध्यता) निरूपितावच्छेदकतानिरूपितत्वव्यधिकरणसंबन्धावच्छिन्नस्वनिष्ठावच्छेद-कताकप्रतियोगिताकभेदवत्त्वसंबन्धावच्छिन्नसाध्यतानिरूपितवृत्तितावन्निरवच्छिन्नावच्छेद-कतावद्धर्मा (दण्डत्वादिधर्मा) वच्छिन्नावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तादृशा-वच्छेदकत्वानिरूपितत्वस्यासत्त्वात् तादृशावच्छेदकत्वानिरूपितप्रतियोगिताकलक्षणघट-काभावस्याप्रसिद्ध्याऽव्याप्तिरित्युच्यते । तदा यत्र साध्यतावच्छेदकतावच्छेदक-तदितरोभयानवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वं तादृश-स्थलप्रसिद्धिः किं न भवत्यस्माकम् । एवञ्च तादृशावच्छेदकताकप्रतियोगिताक-साध्याभावमादाय सिद्धान्तवादिमतेऽपि अव्याप्तिर्दुर्वारा स्यात्, तादृशस्थलकल्पना उभाभ्यां न स्वीकार्येति चेन्मैवम् प्रागेव लक्षणस्य दूषितत्वात् । (तत्त्वालोके ५१ एकपंचाशत्पृष्ठे अत्रोच्यते इत्यादिना दूषितत्वात्) । तत्र धूमादिर्लिंगिकायाः निरवच्छिन्न-वह्नित्वनिष्ठावच्छेदकताकविधेयताकानुमितेः अभ्रान्तस्योत्पत्तये अवश्यं लक्षणघटका-भावीयप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वाभाववत्साध्यतावच्छेदकावच्छिन्न-सामानाधिकरण्यं हेतौ व्याप्तिरिति वक्तव्यम् । तादृशव्याप्तिज्ञानस्यैव तादृशानुमितिं प्रति कारणत्वं वाच्यम् । निरवच्छिन्नावच्छेदकताकविधेयताकानुमितिजनकज्ञान-विषयीभूततादृशव्याप्तिघटकाभावीयप्रतियोगितायां स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वं न विशेषणं तदपेक्षया अस्य विशेषणस्य (साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वादिविशेषणस्य) गुरुत्वेन गौरवादिति दूषितत्वं बोध्यम् । एतेन (धूमर्लिंगिकायाः निरवच्छिन्नवह्नित्व निष्ठावच्छेदकताकविधेयताकानुमितेः अभ्रान्तस्योत्पत्तये अवश्यं लक्षणघटकाभावप्रति-योगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपलघुव्याप्तिज्ञानकारणता-वच्छेकैतद्व्याप्त्यपेक्षया नवीनव्याप्तेः गुरुत्वेन कारणतानवच्छेदकत्वमिति उभयसाधा-रणैकलक्षणस्य कर्तुमशक्यत्वादिति दोषेण— अत्रोच्यते इत्यादिनोभयसाधारणैकलक्षणस्य दुष्टत्वप्रदर्शनेन) स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकसाध्यत्वाभाववद्रूपावृत्तित्वम् उभय-

साधारण्याय (शुद्धविशिष्टसाध्यकस्थलोभयसाधारण्याय) अस्तु विशेषणम्। वृत्तिता च स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व संबन्धेन । तथा च साध्यतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धावच्छिन्नसाध्यत्वाभाववद्रूपावृत्तिर्यालक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । वह्निमान् धूमादित्यत्र नाव्याप्तिः । तादृशव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकसाध्यत्वाभाववद्घटत्वगतैकत्वे स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व (व्यधिकरण) संबन्धेनावृत्तिः लक्षणघटकाभावीय प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । तादृशव्यधिकरणसंबन्धेन साध्यत्वाभाववति धूमत्वगतैकत्वे घटत्वादिगतैकत्वे वा लक्षणघटकसाध्याभावीयप्रतियोगितायाः तादृशव्यधिकरणसंबन्धेनावृत्तित्वात् तदवच्छेदकत्वस्यैव साध्यतावच्छेदके धूमत्वे सत्त्वात् । उक्तसंबन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वे च प्रमीयविशेष्यताप्रतियोगिकस्वरूप--संबन्धावच्छिन्ना या उक्तसंबन्धावच्छिन्नसाध्यत्वनिष्ठ प्रकरतानिरूपितविशेष्यत्वनिष्ठ-प्रतियोगिता तन्निरूपकाभावो विवक्षणीय इत्युक्तिः, एकत्वादेः पर्याप्त्यनभ्युपगमेन निरस्ताऽपि निरस्ता बोध्येति दिक्।

तथा च प्रमीयविशेष्यता (साध्यतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन साध्यतावद्रूपमिति प्रमीया साध्यतानिष्ठप्रकारतानिरूपितानिष्ठाविशेष्यता) तत्प्रतियोगिकस्वरूपसंबन्धावच्छिन्ना या साध्यतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-संबन्धावच्छिन्नसाध्यतानिष्ठप्रकारतानिरूपितप्रमीयविशेष्यतानिष्ठाप्रतियोगिता तन्निरूपकाभाववद्रूपावृत्तिर्या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वात्। अवृत्तित्वघटकवृत्तित्वञ्च स्वावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । अतएव (एतेनोक्तदोषादेव) यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकतानवच्छेदकधर्मानवच्छिन्नावच्छेदकतानिरूपितत्वादिकम् एकलक्षणसंपाद-

काविशेषणमपि प्रत्युक्तम् । तथा च यत्किञ्चित्साध्याधिकरणनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकतानवच्छेदकधर्मानवच्छिन्नावच्छेदकतानिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्युभयसाधारणी व्याप्तिः। वह्निमान् धूमादित्यत्र नाव्याप्तिः। यत्किञ्चित्साध्याधिकरणपर्वतनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नवह्निनिष्ठवृत्तितावच्छेदकतानवच्छेदकघटत्वानवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपिता लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात्। धूमवान् वह्नेरित्यत्र नातिव्याप्तिः । यत्किञ्चित्साध्याधिकरणपर्वतनिरूपितसाध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नधूमनिष्ठवृत्तितावच्छेदकतानवच्छेदकघटत्वानवच्छिन्नधूमत्वनिष्ठावच्छेदकतानिरूपिता धूमनिष्ठा लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्त्वात् । दण्डिमान् द्रव्यत्वादित्यत्र नातिव्याप्तिः । तादृशवृत्तितानवच्छेदकघटत्वानवच्छिन्नदण्डनिष्ठावच्छेदकतानिरूपिता लक्षणघटकसाध्याभावीया प्रतियोगिता तदवच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात्। दण्डिमान् दण्डिसंयोगादित्यत्र नाव्याप्तिः । तादृशवृत्तितानवच्छेदकघटत्वानवच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपिता लक्षणघटकघटाभावीया घटनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके दण्डे सत्त्वात् । अन्यथा (निरवच्छिन्नसाध्यतावच्छेदकस्थले प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वास्वीकारे) पर्वते महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यादिप्रतीत्या विशिष्टवह्नित्वस्य तादृशाभावप्रतियोगितावच्छेदकतया वह्निमान् धूमादित्यादाविवेति वह्निपदम् अत्र महानसीयवह्निपरिचयार्थमेवोक्तम्। न त्वभावघटकम्। अप्रयोजकत्वात्। तथा च महानसीयवृत्तित्वविशिष्टजातिमान् नास्तीत्यादिपाठो युक्तः। तदभावप्रतियोगितायाम् (महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यभावीयप्रतियोगितायाम्) साध्यतावच्छेदकवह्नित्वनिष्ठावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकताविशिष्टान्यजातित्वावच्छिन्नावच्छेदकतानिरूपितत्वद्वयसत्त्वेन तादृशनिरूपितत्वद्वयासत्त्वात् । महानसीयवह्निवृत्तित्वविशिष्टजातिमदभावस्य साध्यतावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वद्वयाभावस्य लक्षणघटकाभावीयप्रतियोगिताविशेषणस्य पूर्वोक्तस्य कथनादेव वारणाच्च ।

यत्तु साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगितेत्यत्र साध्यतावच्छेदकनिष्ठावच्छेदकताया साक्षान्निरूपितत्वमेवोभयाभावघटकं बोध्यम् । अन्यथा विषयतया नित्यज्ञानविशिष्टस्य घटस्य विषयितया, विषयितातादात्म्यान्यतरसंवन्धेन वा साध्यतायां नित्यज्ञानत्वे नित्यज्ञानान्यत्वविशिष्टघटाभावस्य लक्षणघटकतया तदीयप्रतियोगितायां साध्यतावच्छेदकनित्यज्ञाननिष्ठावच्छेदकतानिरूपितत्वस्य परंपरया सत्त्वेन तदभावस्य लक्षणाघटकतया तादृशाभावाप्रसिद्ध्याऽव्याप्त्यापत्तेः । साध्यतावच्छेदकतदितरोभयानवच्छिन्नेत्यत्र साध्यतावच्छेदकतया साक्षान्निरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां निवेशे तु नोक्तदोषः। साध्यतावच्छेदृकज्ञाननिष्ठावच्छेदकतया साक्षान्निरूपितत्वस्य नित्यज्ञानान्यत्वविशिष्टत्वनिष्ठावच्छेदकतायां सत्त्वेन तत्प्रतियोगितायामसत्त्वात् । लक्षणघटकतदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन तत्राव्याप्त्यभावोपपत्तेः। साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपितत्वस्य तादृशोभयाभावघटकत्वेऽपि भेदविशिष्टघटस्य विषयितया साध्यत्वे नित्यज्ञानत्वे सद्धेतौ नित्यज्ञानं विषयितासंवन्धेन भेदविशिष्टघटवत् नि.यज्ञानत्वादित्यत्र लक्षणघटकनित्यज्ञानान्यत्वविशिष्टघटाभावीयप्रतियोगितायां साध्यतावच्छेदकज्ञानान्यत्व (भेद) निष्ठावच्छेदकतया साक्षान्निरूपितत्वस्य सत्त्वेन (साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपितत्वस्य सत्त्वेन) साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपितत्त्व, साध्यतावच्छेदकेतरनित्यज्ञानान्यत्ववैशिष्ट्याावच्छेदकतानिरूपितत्वोभयस्य तत्प्रतियोगितायांसत्त्वेन लक्षणघटकाभावाप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकताव्यापकावच्छेदकतयासाक्षान्निरूपितत्व, साध्यतावच्छेदकेतरनिष्ठावच्छेदकतायाः साक्षान्निरूपितत्वोभयाभावस्य लक्षणघटकाभावीयप्रतियोगितायां निवेशेनोक्तदोषाभावात् । साध्यतावच्छेदकताघटादिसामान्यभेदे तत्र प्रतियोगितावच्छेदकनित्यज्ञानान्यत्वनिष्ठावच्छेदकता नं वर्तते इति अभावस्य सत्त्वेन साध्यतावच्छेदकताव्यापकत्वस्य प्रतियोगितावच्छेदकतायां विरहेण तदभावस्य लक्षणघटकत्वमिति तत्राभावाप्रसिद्धिनिबन्धनाऽव्याप्तिविरहोपपत्तिः । ज्ञानं विषयितया भेदविशिष्टघटवत् नित्यज्ञानत्वादित्यस्य व्याप्यवृत्तिसाध्यकत्वेन तत्र प्रतियोगिवैयधिकरण्यं लक्षणघटकाभावे न प्रविष्टमिति साध्यतावच्छेदकसंवन्धावच्छिन्नलक्षणघटकाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके

सत्त्वेनाव्याप्त्यभावोपपत्तावपि कालः तादात्म्येन महाकालवान् महाकालत्वादित्यस्या व्याप्यवृत्तिसाध्यकत्वेन महाकालान्यत्वविशिष्टघटाभावमात्रस्य तत्र लक्षणघटकतया तत्प्रतियोगितायां साध्यतावच्छेदकतदितरोभयावच्छिन्नत्वस्य सत्त्वेन तदुभयाभावस्यासत्त्वात्। तादृशप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्ध्याऽव्याप्तेर्वारणाय साध्यतावच्छेदकतया साक्षान्निरूपितत्वसाध्यतावच्छेदकेतरधर्मावच्छिन्नत्वोभयाभावस्य लक्षणघटकाभावीयप्रतियोगिताविशेषणस्यावश्यकत्वम्। तथा च महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यत्र वह्नेरपरिचायकत्वेऽपि न क्षतिः। साध्यतावच्छेदकवह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताया साक्षान्निरूपितत्वस्य तादृशप्रतियोगितायामसत्त्वेन तादृशोभयाभावस्य सत्त्वात्। तादृशप्रतियोगितावच्छेदकं जातिरूपं वह्नित्वमेव साध्यतावच्छेदकमिति तत्राव्याप्तिः संगच्छते इति। अनित्यज्ञानान्यत्वविशिष्टघटाद्यभावस्य नित्यज्ञानादौ असत्वपक्षे न युज्यते, विशिष्टः शुद्धान्नातिरिच्यते इति न्यायेन शुद्धघटादेः नित्यज्ञाने सत्त्वे नित्यज्ञानान्यत्वविशिष्टघटादेरपि सत्त्वमिति नित्यज्ञाने तदभावस्यासत्त्वेन लक्षणघटकाभावस्याप्रसिद्ध्या तत्राव्याप्तिरिति साध्यतावच्छेदकनिष्ठावच्छेदकतया साक्षान्निरूपितत्वस्य लक्षणघटकत्वकथनं न समीचीनमिति महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यत्र वह्निपदस्य परिचायकत्वमेवास्थेयम्।

## जातिमान् घटत्वादित्यादाविति जा० टी०

अत्र समवायेन जाति (रूपत्वादि) विशिष्टस्य (रूपादेः) समवायेन साध्यत्वं बोध्यम्। न तु तादात्म्येन साध्यत्वम्। तथा सति (समवायेन जातिविशिष्टस्य तादात्म्येन साध्यत्वे सति) तत्तत्क्षणवृत्तित्वविशिष्टघटाद्यभावप्रतियोगितायाम् (हेत्वधिकरणे घटे समवायेन घटत्वविशिष्टतत्तत्क्षणवृत्तित्वविशिष्टघटाद्यभावप्रतियोगितायाम्) साध्यतावच्छेदकजातिरूपघटत्व तदितर तत्तत्क्षणवृत्तित्ववैशिष्ट्योभयानवच्छिन्नस्य प्रतियोगितायां विरहात् (उभयानवच्छिन्नविरहात्)। समवायेन शुद्धघटाभावस्य (तादात्म्येन) प्रतियोगि (घट) सामानाधिकरण्येन प्रतियोगिवैयधिकरण्यस्य विरहात् घटाभावो न लक्षणघटकः, किन्तु पटाभावो लक्षणघट-

कस्तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वे सत्त्वेनाव्याप्तिर्न स्यात्। जातिमत्वान् घटत्वादित्यत्र समवायेन जातिविशिष्टस्य तादात्म्येन साध्यत्वे पटसमवेतत्वविशिष्टजातिमान् नास्तीत्यभावमादाय या अव्याप्तिर्दत्ता सा न स्यात्। अतः समवायेन जातिमतः (रूपस्य) समवायेन साध्यत्वं बोध्यम्। तथा च हेत्वधिकरणे घटे तत्तत्क्षणवृत्तित्वविशिष्टघटाभावीयप्रतियोगितायां साध्यतावच्छेदकघटत्व, तदितर-तत्तत्क्षणवृत्तित्ववैशिष्ट्योभयावच्छिन्नत्वस्य सत्त्वेन तदुभयानवच्छिन्नत्वस्यासत्त्वात् तन्नि-रूपकाभावो न लक्षणघटकः। समवायेन घटत्वविशिष्टस्य घटस्य समवायेनाभावोऽपि न लक्षणघटकः। तदभावे समवायेन घटत्वविशिष्टघटरूपप्रतियोगिनः तादात्म्येन सामाना-धिकरण्यस्य सत्त्वेन प्रतियोगिवैयधिकरण्यस्य तत्रासत्वात्। घटाभावो लक्षणघट-कस्तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वरूपजातौ सत्वेनाव्याप्तिर्न स्यात्। समवायेन जातिविशिष्टस्य रूपादेः समवायेन साध्यत्वे हेत्वधिकरणे घटे पटसमवेतत्वविशिष्टजातिमतः समवायेनाभावो लक्षणघटकस्तदीयप्रतियोगितावच्छेदक जातितदितरोभयानवच्छिन्नप्रतियोगिताकस्य प्रतियोगिव्यधिकरणस्य घटसमवेतत्व-विशिष्टजातिमान् नास्तीत्याकारकस्य सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके जातौ सत्त्वादव्याप्तिः संगच्छते।

## पटसमवेतत्वविशिष्टेति जा० टी०

वै० सामानाधिकरण्यसंवन्धेन, न तु स्वरूपसंवन्धेन। जातौ पटसमवेतत्वस्य स्वरूपसंबन्धेन कथने रूपत्वादीनामनवच्छेदकत्वापत्तिः। रूपत्वरसत्वादीनां साध्यता-वच्छेदकजातीनां पटसमवेतत्ववैशिष्ट्याप्रसिद्ध्या तासां पटसमवेतत्वविशिष्टपटत्व-विशिष्टपटाभावस्य प्रतियोगिव्यधिकरणहेतुसमानाधिकरणस्य या प्रतियोगिता तदनवच्छेदकत्वेन जातिमत्वान् घटत्वादित्यत्राव्याप्तिदानस्यासंगत्यापत्तेः। सामाना-धिकरण्यसंवन्धेन पटसमवेतत्ववैशिष्ट्यस्य जातौ कथने तु सामानाधिकरण्यसंवन्धेन पटसमवेतत्वं रूपत्वजातौ वर्तते। पटसमवेते रूपे पटसमवेतत्वरूपत्वजात्योः सत्त्वात् जातिमान् घटत्वादित्यत्राव्याप्तिदानं संगच्छते। हेत्वधिकरणे घटे पटसमवेतत्वविशिष्ट जातिमान् नास्तीत्यभावप्रतियोगितावच्छेदकत्वस्य पटसमवेतत्वविशिष्टासु रूपत्व-

रसत्र, कर्मत्वादिजातिषु सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके जातावसत्त्वात्। न च सामानाधिकरण्यसंबन्धेन पटसमवेतत्ववैशिष्ट्यस्य जातौ कथनेऽपि घटपटगत-द्वित्वसंयोगाद्यन्तर्भावेन द्वित्वत्वसंयोगत्वादीनां पटसमवेतत्वविशिष्टतया तदवच्छिन्नस्य घटपटगतद्वित्वस्य घटपटसंयोगस्य च हेत्वधिकरणे घटे सत्त्वेन पटसमवेतत्वविशिष्ट जातिमान् नास्तीत्यभावस्य प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वात्, तदभावमादाय तत्राव्याप्तिदानमसङ्गतमिति वाच्यम्। यद्घटव्यक्तौ पटेन संयोगो न जातः न वा घटपटगतं द्वित्वादिकं जातं तद्घटव्यक्तिरूपे हेत्वधिकरणे पटसमवेतत्वविशिष्टजातिमान् नास्तीत्यभावस्य प्रतियोगिवैयधिकरण्येन तमभावमादाय तत्राव्याप्तेः संगतत्वात्। पटसमवेतत्वपदस्य घटासमवेतत्वार्थकत्वाद्वा। सामानाधिकरण्यमेवात्र वैशिष्ट्यमिति। तथा च हेत्वधिकरणे घटे घटासमवेतत्वविशिष्टजातिमान् नास्तीत्यभावस्य प्रतियोगिवैय-धिकरण्येन तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकजातौ विरहात्।

## तत्त्वोपलक्षितव्यक्तिमात्रस्येति

तत्त्वोपलक्षितव्यक्तिमात्रस्येति मात्रपदेन दण्डत्वस्य प्रतियोगितावच्छेदकत्व-व्यवच्छेदः। उपलक्षितेत्यन्तेन तत्तायाः व्यक्तीत्युल्लेखात् तद्व्यक्तेः स्वरूपतोऽवच्छेद-कत्वपक्षव्यक्तिः तद्व्यक्तेः स्वरूपतो भानमिति पक्षो जागदीश्यां व्यक्तिपददानेन ग्राह्यः। तेनोक्तग्रन्थस्य नासङ्गतिः। अन्यथा दण्डेऽतिप्रसङ्गाद्यनापादकत्वविरहेण जात्यखण्डोपाधिभिन्नस्य स्वरूपतोऽवच्छेदकत्वविरहेण तत्तायाः तदवच्छेदकत्वं (तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकतावच्छेदकत्वं) वाच्यम्। तथा सति तदवच्छेदकतायां (तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकतायां) साध्यतावच्छे-दकतावच्छेदकतदितरोभयानवच्छिन्नत्वविरहेण तमभावमादाय तत्राव्याप्तिदानस्या-सङ्गत्यापत्तेः। ननु दण्डिमान् दण्डिसंयोगादित्यत्र तद्दण्डी नास्तीत्यभावमादाया-व्याप्तेर्वारणाय स्वाश्रयाश्रयत्वसंबन्धेन तत्र दण्डत्वं साध्यतावच्छेदकमङ्गीकृतं तथा सति नोक्तदोषः। हेत्वधिकरणे परंपरया दण्डत्वाश्रयस्य दण्डिनः सत्त्वेन तत्र परं-परया दण्डत्वाश्रयस्य प्रतियोगिनोऽभावासत्वात्। साक्षात् समवायेन दण्डत्वस्य साध्यता-वच्छेदकत्वं कुतो नोक्तमित्यत आह—

**हेतुमति दण्डसामान्याभावसत्त्वात् दण्डत्वमपि तादृशावच्छेदकमिति जा० टी०**

तथा च व्यभिचारेण लाघवम् अकिञ्चित्करमिति भावः। दण्डत्वस्य दण्ड्यभाववति दण्डे वृत्तित्वात् हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाच्च दण्डत्वं व्यभिचारीति बोध्यम्।

**साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाया एव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां प्रविष्टत्वादिति जा० टी०**

यद्यपि हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतायां यथाश्रुतेनैव साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिवेशेन विषयितया रूपत्ववदभावस्य रूपवान् पृथिवीत्वादित्यादौ वारणं भवति। तथापि विषयित्वसमवायान्यतरसंबन्धेन रूपत्ववद्वान् आत्मघटान्यतरत्वादित्यत्र आत्मनि समवायेन घटे विषयितया च साध्याभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकतानिरूपितसंसर्गतानिरूप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गतानिरूपितत्वस्य प्रतियोगितावच्छेदकतायां विवक्षा कार्या। संसर्गतायाः रूपवृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। गुणवान् पृथिवीत्वादित्यत्र विषयित्वसमवायोभयसंबन्धेन गुणत्वविशिष्टाभावमादायाव्याप्तिवारणायोक्तसंबन्धावच्छिन्नत्वं तत्र विवक्षणीयम्। स्वपदेन लक्षणघटकाभावीयप्रतियोगितावच्छेदकतानिरूपितसंसर्गता ग्राह्या। एकत्वादेः पर्याप्त्यनभ्युपगमपक्षे च साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतसंसर्गताकत्वं (प्रतियोगितावच्छेदकतायां वक्तव्यम्)। समनियतत्वघटकसंसर्गतायाः संसर्गश्च स्व (संसर्गता) निरूपितावच्छेदकतावत्त्वरूपः। (अवच्छेदकतावत्ता च स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतत्त्रितयसंबन्धेन। वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन)। तथा च रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टवान् पृथिवीत्वादित्यत्र साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वसमनियतसंसर्गताकप्रतियोगितावच्छेदकताकप्रतियोगिताकलक्षणघटकाभावाप्रसिद्ध्या -

ऽव्याप्तिरिति चेत्। अत्र केचित् साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वं साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकेत्यर्थः। (साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वं तदर्थः)। वै० स्वानवच्छेदकसंबन्धावच्छिन्नत्व-स्वसामानाधिकरण्योभयसंबन्धेन। घटत्वादिनिष्ठावच्छेदकतायां स्वसामानाधिकरण्याभावेन स्वविशिष्टत्वविरहात् अत्र घटाभावस्य लक्षणघटकत्वमिति नाव्याप्तिः। रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्ववदभावप्रतियोगितावच्छेदकता साध्यतावच्छेदकताविशिष्टा भवति। तत्र स्वसामानाधिकरण्यस्य स्वानवच्छेदकावच्छिन्नत्वस्य च सत्त्वात्। तदनिरूपिता लक्षणघटकघटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके रूपत्वे सत्त्वात्। न च समवायेन धूमत्वविशिष्टत्वे सति कालिकेन धूमत्वविशिष्टस्य साध्यत्वे व्यभिचारिणि धूमवान् वह्नेरित्यादावतिव्याप्तिः। लक्षणघटकसाध्याभावीयप्रतियोगितायां समवायसंबन्धावच्छिन्नधूमत्वनिष्ठसाध्यतावच्छेदकताविशिष्टायाः कालिकसंबन्धावच्छिन्नधूमत्वनिष्ठायाः प्रतियोगितावच्छेदकतायाः स्वानवच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्ययोः सत्त्वात् तन्निरूपितत्वस्यैव साध्याभावीयप्रतियोगितायां सत्त्वेन तन्निरूपकसाध्याभावो न लक्षणघटक इति घटाभावमादायाव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकताविशिष्टान्यत्वस्यापि साध्यतावच्छेदकताविशिष्टावच्छेदकतायां विशेषणत्वेनादोषात्। अत्र वै० स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन। तथा च साध्यतानिरूपितावच्छेदकताविशिष्टान्या या साध्यतावच्छेदकताविशिष्टावच्छेदकता तदनिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। द्वितीय वै० स्वानवच्छेदकसंबन्धावच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन। एवञ्च समवायसंबन्धावच्छिन्नधूमत्वनिष्ठप्रतियोगितावच्छेदकतायां कालिकसंबन्धावच्छिन्नधूमत्वनिष्ठसाध्यतावच्छेदकतायाः स्वानवच्छेदक(समवाय)संबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन वैशिष्ट्यस्य सत्त्वेन सा प्रतियोगितावच्छेदकता साध्यतावच्छेदकताविशिष्टा भवति। परन्तु स्वावच्छेदक(समवाय) संबन्धावच्छिन्नत्व, स्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकता-

विशिष्टाऽपीति सा प्रतियोगितावच्छेदकता न साध्यतावच्छेदकताविशिष्टान्या तदन्या घटत्वनिष्ठा प्रतियोगितावच्छेदकता तदनिरूपितत्वस्य लक्षणघटकसाध्याभावीय प्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वेन न तत्राति-व्याप्तिरिति बोध्यम्। न चैवं प्रमयेत्वावच्छिन्नप्रतियोगिकसमयवायेन प्रमेयविशिष्ट-साध्यकसद्धेतौ अयमात्मा प्रमेयविशिष्टवान् ज्ञानवत्त्वादित्यत्र हेतुसमानाधिकरण-विषयित्वसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकसाध्याभावीयप्रतियोगितावच्छेदकता साध्यतावच्छेदकप्रमेयनिष्ठा, स्वानवच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योमय-संबन्धेन साध्यतावच्छेदकताविशिष्टापि, सैव साध्यतावच्छेदकप्रमेयनिष्ठा प्रतियोगि-तावच्छेदकता स्वावच्छेदकसमवायसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टैव न तु साध्यतावच्छेदकताविशिष्टान्येति तादृशावच्छ-दकताकप्रतियोगिताकलक्षणघटकाभावाप्रसिद्धयाऽव्याप्तिरिति वाच्यम्। स्वसामानाधि-करण्यं विहाय स्वव्यापकत्वस्य संसर्गतया विवक्षितत्वात्। तथा च स्वावच्छेदक-संबन्धावच्छिन्नत्वस्वाव्यापकत्वोभयसंबन्धेन साध्यतावच्छेदकताविशिष्टान्या या स्वानवच्छेदकसंबन्धावच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकता-विशिष्टा अवच्छेदकता तदनिरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदन-वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। एवञ्च अयमात्मा प्रमेयविशिष्टवान् ज्ञानवत्त्वादित्यत्र समवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताक-प्रतियोगिताकघटाभावस्यैव लक्षणघटकत्वेन प्रसिद्धत्वान्नाव्याप्तिः। स्वानवच्छेदक-संबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टा-विषयित्वसंबन्धावच्छिन्नघटत्वनिष्ठा घटत्वविशिष्टाभावीयप्रतियोगितावच्छेदकता, स्वावच्छेदक (समवाय) संबन्धावच्छिन्नत्वस्वव्यापकत्वोभयसंबन्धेन साध्यतावच्छे-दकताविशिष्टान्या च तदनिरूपिता समवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकता-कप्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति वदन्ति।

परे तु लक्षणघटकाभावीयप्रतियोगितावच्छेदकतायाम्, साध्यतावच्छेदकता-घटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकनिष्ठोमयाभावत्वं विवक्षणी यम्। तथा च साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यता-

वच्छेदकनिष्ठत्वोभयाभाववती या अवच्छेदकता तन्निरूपिता या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। तथा च रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावमादाय नाव्याप्तिः। तदभावीयप्रतियोगितावच्छेदकतायां तदुभयाभावस्यासत्त्वेन तदभावस्य लक्षणाघटकत्वात्। न च प्रमेयत्वावच्छिन्नप्रतियोगिकतादात्म्येन प्रमेयविशिष्टसाध्यके घटत्वे प्रमेयविशिष्टवान् घटत्वादित्यत्राव्याप्तिः। लक्षणघटकपटाभावीयप्रतियोगितावच्छेदकपटत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकतादात्म्यातिरिक्तसमवायसंबन्धावच्छिन्नत्व साध्यतावच्छेदकप्रमेय (पटत्वरूपप्रमेय) निष्ठत्वोभयोः सत्त्वेन तदुभयाभावस्यासत्त्वात्। तादृशावच्छेदकताकप्रतियोगिताकलक्षणघटकाभावाप्रसिद्धेरिति वाच्यम्। साध्यतावच्छेदकताव्यापकत्वसाध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वोभयाभावस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेनादोषात्। लक्षणघटकपटाभावीयप्रतियोगितावच्छेदकतायां तादात्म्यसंबन्धावच्छिन्नप्रमेयनिष्ठसाध्यतावच्छेदकताव्यापकत्वासत्वेन तदुभयाभावस्य सत्त्वात्।

यत्तु जातिमत्त्वान् (जातिमद्वान्) जातेरित्यत्र हेत्वधिकरणे विषयितया जातिविशिष्टाभावमादायाव्याप्तिः। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसमवायातिरिक्तविषयित्वसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकताव्यापकत्वाभावेन तादृशोभयाभावस्य सत्त्वमिति सध्यतावच्छेदके तादृशावच्छेदकताकप्रतियोगितावच्छेदकत्वस्यैव सत्त्वादव्याप्तिरिति।

तत्तुच्छम्। तादृशस्थले दण्ड्यादिसाध्यके दण्डत्वस्येव जातित्वस्यैव साध्यतावच्छेदकत्वात्। दण्डिमान् दण्डिसंयोगादित्यत्र हेत्वधिकरणे तद्दण्डी नास्तीत्यभावमादायाव्याप्तेर्वारणाय यथा स्वाश्रयाश्रयत्व परंपरासंबन्धेन दण्डत्वमेव साध्यतावच्छेदकम्, तथा जातिमत्त्वान् (जातिमद्वान्) जातेरित्यत्रापि स्वाश्रयाश्रयत्वसंबन्धेन जातित्वस्यैव साध्यतावच्छदकत्वोपगमेनादोषात्। अन्यथा तादात्म्येन जातिमतः तादात्म्येन साध्यतायां जातित्वे हेतौ जातिः तादात्म्येन जातिमती जातित्वादित्यत्र तादात्म्येन सत्तारूपजातिविशिष्टा

सत्तैव तादात्म्येन सत्तारूपजातिमती नान्या घटत्वपटत्वादिजातयः सत्तावत्यः। एवञ्च हेत्वधिकरणे घटत्वजातौ साध्याभावस्य सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनाव्याप्त्यापत्तेः। एवं विषयितया जातिमतः साध्यतायां तज्ज्ञानत्वेऽपि ज्ञानं विषयितया जातिमत् तज्ज्ञानत्वादित्यत्रापि तादात्म्येन सत्तादिमतः साध्यस्य विषयितयाऽभावस्य लक्षणघटकतया तदीयप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके जातौ सत्त्वेनाव्याप्त्यापत्तेरित्याहुः।

अन्ये तु साध्यतावच्छेदकव्यापकनिष्ठत्वघटितोभयाभावनिवेशमिच्छन्ति। तथा च साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकनिष्ठत्वोभयाभाववती या लक्षणघटकाभावीयप्रतियोगितावच्छेदकता तदभाववत् साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। ज्ञानं विषयितया जातिमत् तज्ज्ञानत्वादित्यत्र तादात्म्येन सत्तावदभावमादाय नाव्याप्तिः। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकविषयित्वातिरिक्ततादात्म्यसंबन्धावच्छिन्नत्व साध्यतावच्छेदकजातिव्यापकसत्तानिष्ठत्वोभयस्यैव सत्त्वेन तदुभयाभावस्यासत्त्वात्। तादृशसत्तादिमदभावस्य लक्षणाघटकत्वादिति वदन्ति।

तन्नातिरमणीयम्, महाकालानुयोगिककालिकेन घटत्वविशिष्टस्य (महाकालस्य) तादात्म्येन साध्यतायां महाकालत्वे सद्धेतौ कालः तादात्म्येन घटत्वविशिष्टवान् महाकालत्वादित्यत्र धर्ममात्रस्य साध्यतावच्छेदकताघटकमहाकालानुयोगिककालिकसंबन्धेन साध्यतावच्छेदकघटत्वव्यापकत्वात् लक्षणघटकाभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकधर्मनिष्ठत्वोभयस्यैव सत्त्वेन तादृशोभयाभावस्यासत्त्वात्। तादृशोभयाभाववदवच्छेदकताकप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्ध्याव्याप्तेः। न च कालिकेन गगनस्यावृत्तित्वे विषयितया गगनवदभावो लक्षणघटकः। तदीयप्रतियोगितावच्छेदकगगननिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकमहाकालानुयोगिककालिकसंबन्धातिरिक्तविषयित्वसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकघटत्वाधिकरणमहाकालवृत्त्यभावप्रतियोगित्वेन गगनस्य साध्यतावच्छेदकाव्यापकत्वात्। साध्यतावच्छेदकव्यापकवृत्तित्वविरहेण तादृशोभयाभावस्य गगननिष्ठप्रतियो-

गितावच्छेदकतायां सत्त्वेन लक्षणघटकप्रसिद्धगगनवदभावप्रतियोगितावच्छेदकगगन-निष्ठावच्छेदकत्वाभावस्य साध्यतावच्छेदके घटत्वे सत्त्वान्नाव्याप्तिरिति वाच्यम्। स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन घटत्वविशिष्टसाध्यकसद्धेतौ घटत्वविशिष्ट (पटगतरूप)वान् पटत्वादित्यत्र लक्षणघटकाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटक-संबन्धातिरिक्तविषयित्वसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकव्यापकनिष्ठत्वोभयस्य सत्त्वेन तादृशोभयाभावस्यासत्त्वात्। तादृशोभयाभाववदवच्छेदकताकप्रतियोगिताक-लक्षणघटकाभावाप्रसिद्ध्याऽव्याप्त्यापत्तेः। धर्ममात्रस्यैव सर्वस्यैव वा साध्यतावच्छेदक-ताघटकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन घटत्वरूपसाध्यतावच्छेदकाधिकरणाभावाप्रतियो-गित्वेन पटत्वादेः पटादिगतरूपादिवृत्तिरूपत्वादेर्वा साध्यतावच्छेदकव्यापकत्वात्। न च साध्यतावच्छेदकप्रतियोगिकसाध्यतावच्छेदकताघटकसंबन्धेन व्यापकत्वं विव-क्ष्यते। एवञ्च पटगतरूपादिगतरूपत्वादेः साध्यतावच्छेदकघटत्वप्रतियोगिक-स्ववृत्तिवाच्यत्ववत्वसंबन्धो व्यधिकरण इति तादृशसंबन्धेन साध्यतावच्छेदकघटत्वाधि-करणवृत्त्यभावप्रतियोगित्वेन घटत्वाव्यापकत्वात् स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन घटत्व विशिष्टसाध्यकसद्धेतौ घटत्वविशिष्ट (पटगतरूप)वान् पटत्वादित्यत्र नाव्याप्ति-रिति वाच्यम्।

एवं सति स्ववृत्तिवाच्यत्ववत्वसंबन्धेन प्रमेयविशिष्टवान् घटत्वादित्यादौ साध्यतावच्छेदकप्रमेयप्रतियोगिकस्ववृत्तिवाच्यत्ववत्वसंबन्धेन लक्षणघटकाभाव-प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व साध्यतावच्छेदकव्यापकनिष्ठत्वोभयस्यैव सत्त्वेन तादृशोभयाभाववदवच्छेदकताक-प्रतियोगिताकलक्षणघटकाभावाप्रसिद्ध्याऽव्याप्तेः।

यत्तु प्रतियोगितावच्छेदकताघटकसंबन्धेन यत्किञ्चित्साध्यवृत्तिधर्मनिष्ठ साध्यतावच्छेदकताव्यापकावच्छेदकत्वानिरूपितत्वमेव लक्षणघटकाभावीयप्रतियोगि-तायां वाच्यम्। एतन्निवेशश्च प्रतियोगिताविशिष्टा या लक्षणघटकाभावीया प्रति-योगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। प्रतियोगितायां प्रतियोगितावैशिष्ट्यं च स्वतादात्म्य, स्वावच्छेदकता-घटकसंबन्धावच्छिन्नयत्किञ्चित्साध्यनिरूपितवृत्तित्वाभाववद्धर्मनिष्ठसाध्यतावच्छेदकता

व्यापकावच्छेदकत्वानिरूपतित्वोभयसंबन्धेन। वह्निमान् धूमादित्यत्र लक्षणघटकघटाभावीयप्रतियोगिताविशिष्टा स्त्वैव तत्र स्वतादात्म्य, स्वावच्छेदकताघटकघटत्वप्रतियोगिकसमवायसंबन्धावच्छिन्न यत्किञ्चित्साध्यमहानसीयवह्निनिरूपितवृत्तित्वाभाववह्नित्वरूपधर्मनिष्ठसाध्यतावच्छेदकताव्यापकवह्नित्वनिष्ठावच्छेदकत्वानिरूपितत्वयोः सत्त्वात् तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वान्नाव्याप्तिः। धूमवान् वह्नेरित्यत्र, नातिव्याप्तिः। लक्षणघटकसाध्याभावीयप्रतियोगिताविशिष्टा स्वैव स्वतादात्म्यस्य प्रतियोगितावच्छेदकताघटकधूमत्वप्रतियोगिकसमवायसंबन्धावच्छिन्नयत्किञ्चित्साध्य (धूम) निरूपितवृत्तित्वाभाववद्घटत्वरूपप्रमेय - धर्मनिष्ठसाध्यतावच्छेदकताव्याधिका प्रमेयत्वावच्छिन्ना अवच्छेदकता तदनिरूपिता लक्षणघटकधूमाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके धूमत्वेऽसत्वात्। साध्ये यत्किञ्चित्वनिवेशात् महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। अन्यथा पर्वते हेतुसमानाधिकरणप्रतियोगिव्यधिकरणः महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टस्य महानसीयवह्नेरभावो वर्तते। तदीयप्रतियोगितायां स्वतादात्म्यस्य स्वावच्छेदकताघटकतादृशसंबन्धावच्छिन्नमहानसीयवह्निनिरूपितवृत्तित्वाभाववत् प्रमेयत्वं न वह्नित्वं तस्य महानसीयवह्निरूपसाध्ये वृत्तित्वात्, तादृशप्रमेयत्वनिष्ठावच्छेदकताव्यापकप्रमेयनिष्ठावच्छेदकता तदनिरूपिता महानसीयवह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावीया प्रतियोगिता तदवच्छेदकत्वस्य च साध्यतावच्छेदके सत्त्वेन तत्राव्याप्त्यापत्तेः। यत्किञ्चित्त्वनिवेशे च नोक्तदोषः। महानसीयवह्न्यनुयोगिकसमवायेन यत्किञ्चित्साध्यपर्वतीयवह्न्यवृत्ति वह्नित्वनिष्ठावच्छेदकताव्यापकवह्नित्वनिष्ठावच्छेदकत्वानिरूपितत्वस्य तेन संबन्धेन वह्नित्वविशिष्टाभावीयप्रतियोगितायामसत्त्वेन तदभावस्य लक्षणघटकत्वात्, तादृशप्रतियोगिता लक्षणघटकघटाभावीया तदनवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात्। साध्यतावच्छेदकताव्यापकत्वनिवेशात् प्रमेयसाध्यतावच्छेदकस्थले नाव्याप्तिः। अन्यथा प्रमेयवद्वान् पटत्वादित्यत्र तादृशप्रतियोगिताकलक्षणघटकाभावस्याप्रसिध्याऽव्याप्त्या-

पत्तेः। लक्षणघटकघटाभावीयप्रतियोगितायां स्वतादात्म्यस्य सत्त्वेऽपि स्वनिरूपितावच्छेदकताघटकसमवायसंबन्धावच्छिन्नयत्किञ्चित्पटरूपसाध्यनिरूपितवृत्तित्वाभाववद्घटत्वनिष्ठप्रतियोगितावच्छेदकता घटत्वरूपप्रमेयसाध्यतावच्छेदकनिष्ठावच्छेदकतासमानाधिकरणा च तन्निरूपितत्वस्यैव तादृशघटाभावीयप्रतियोगितायां सत्त्वेन, एवमभावान्तरीयप्रतियोगितायां बोध्यम्, तादृशावच्छेदकत्वानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायामसत्त्वात्। तादृशावच्छेदकत्वानिरूपितप्रतियोगिताकलक्षणघटकाभावस्याप्रसिद्धेः। प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताव्यापकत्वस्य निवेशे च प्रमेयवद्वान् पटत्वादित्यत्र लक्षणघटकतादृशप्रतियोगिताकाभावाप्रसिद्धया नाव्याप्तिः। प्रमेयनिष्ठसाध्यतावच्छेदकताव्यापिका न घटत्वनिष्ठा प्रतियोगितावच्छेदकता किन्तु प्रमेयनिष्ठावच्छेदकतैव तदनिरूपितत्वस्य लक्षणघटकघटाद्यभावीयप्रतियोगितायां सत्त्वेन तन्निरूपकघटाद्यभावस्य लक्षणघटकत्वोपपत्तेरिति।

तन्न, समवायेन रूपत्वविशिष्टस्य विषयितया साध्यत्वे तज्ज्ञानत्वे सद्धेतौ रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टस्य हेत्वधिकरणे तज्ज्ञाने अभावमादायाव्याप्त्यापत्तेः। प्रतियोगितावच्छेदकताघटकरूपत्वप्रतियोगिकसमवायसंबन्धावच्छिन्नयत्किञ्चित्साध्यनिरूपितवृत्तित्वाभाववान् धर्मो न रूपत्वं किन्तु प्रमेय एव तन्निष्ठा प्रमेयत्वावच्छिन्नावच्छेदकता रूपत्वरूपप्रमेयनिष्ठा रूपत्वनिष्ठसाध्यतावच्छेदकताव्यापिका च तदनिरूपितत्वस्य रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टाभावीयप्रतियोगितायां सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके रूपत्वेऽसत्त्वात्। साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितानवच्छेदकधर्मनिष्ठावच्छेदकत्वानिरूपितत्व, स्वतादात्म्योभयसंबन्धेन प्रतियोगिताविशिष्टा या लक्षणघटकाभावीया प्रतियोगिता तदनवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षणे चावच्छेदकतायां प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वमेव विवक्षणीयम्, तथा च नोक्तदोषः। रूपत्वस्य विषयितया यत्किञ्चित्साध्याधिकरणज्ञाननिरूपित रूपत्वप्रतियोगिकसमवायसंबन्धावच्छिन्नवृत्तितानवच्छेदकत्वेन तन्निष्ठावच्छेदकत्वानिरूपितत्वस्य रूपत्वप्रतियोगिकसमवायेन रूपत्वविशिष्टाभावीयप्रतियोगितायामसत्त्वेन तदभावस्य

घटकत्वात् । एवं सति गुणवान् द्रव्यत्वादित्यत्र हेत्वधिकरणे पृथिव्यादौ विषयितया गुणत्वविशिष्टाभावमादायाव्याप्त्यापत्तेः। साध्याधिकरणपृथिव्यादिनिरूपितायाः प्रतियोगितावच्छेदकताघटकविषयित्वसंवन्धावच्छिन्नवृत्तितायाः अप्रसिद्धत्वेन साध्याधिकरणं पृथिव्यादिकं न ग्राह्यं किन्तु आत्मैव ग्राह्यः। तथा च विषयित्वसंवन्धेन गुणत्वविशिष्टज्ञाननिष्ठा साध्याधिकरणयत्किञ्चिदात्मनिरूपिता या वृत्तिता तदवच्छेदकतायाः प्रतियोगितावच्छेदकताघटकविषयित्वसंवन्धावच्छिन्नायाः गुणत्वे सत्त्वेन तादृशवृत्तितानवच्छेदकं न गुणत्वं किन्तु घटत्वादिकमेव तन्निष्ठावच्छेदकत्वानिरूपितत्वस्य हेत्वधिकरणनिष्ठविषयित्वसंवन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकताक प्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके गुणत्वे सत्त्वात्। यदि च धर्मे प्रतियोगितावच्छेदकताघटकसंवन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नवृत्तितावच्छेदकत्वाभावो निवेश्यते। तदा नोक्तदोषः। हेत्वधिकरणपृथिवीवृत्तिविषयित्वसंवन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकताक गुणत्वविशिष्टाभावीयप्रतियोगितायां प्रतियोगितावच्छेदकताघटकविषयित्वसंबन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्ना या साध्याधिकरण यत्किञ्चित्पृथिवीनिरूपितसमवायसंवन्धावच्छिन्नगुणत्वनिष्ठावच्छेदकतानिष्ठा प्रतियोगिता तन्निरूपकाभावस्य गुणत्वे सत्त्वेन तन्निष्ठ (गुणत्वनिष्ठ) विषयित्व संबन्धावच्छिन्नावच्छेदकतानिरूपितत्वस्य सत्त्वेन तदनिरूपितत्वस्यासत्वात् तन्निरूपकस्य विषयितया गुणत्वविशिष्टाभावस्य लक्षणाघटत्वेन नोक्तदोष इत्युच्यते तदा प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्ना या साध्याधिकरणयत्किञ्चिन्निरूपितवृत्तितावच्छेदकतानिष्ठा प्रतियोगिता तन्निरूपकाभाववद्धर्मनिष्ठावच्छेदकत्वानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां निवेशापेक्षया लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकताघटक संबन्धावच्छिन्नत्वस्य निवेशे एव लाघवमित्येतदपेक्षया गौरवेण लक्षणघटकाभावीय प्रतियोगितायां तन्निवेशयितुमशक्यत्वात्।

## अथ रूपत्वादिमतो ज्ञानस्येति जा० टी०

ननु रूपवान् पृथिवीत्वादित्यत्र हेत्वधिकरणे विषयितया रूपत्वविशिष्टज्ञानाभावमादायाव्याप्तिकथनमसङ्गतम्। वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादाया-

व्याप्तेर्वारणाय लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य निवेशेन प्रकृते विषयितया रूपत्वविशिष्टज्ञानाभावीयप्रतियोगितायां साध्यतावच्छेदकत्वरूपत्व तदितरज्ञानत्वोभयावच्छिन्नत्वस्य सत्त्वेन लक्षणाघटकत्वात् कथं तदभावमादाय तत्राव्याप्तिकथनं संगच्छते इति चेन्न। ज्ञानत्वस्यात्र परिचायकत्वेन प्रतियोगितानवच्छेदकत्वात्। विषयितया रूपत्वविशिष्टा (ज्ञाना) भावीयप्रतियोगितायां तदुभयानवच्छिन्नत्वस्य सत्त्वेन तदभावमादायाव्याप्तिकथनसंगतेः। ननु वह्निमान् धूमादित्यत्र महानसीयवह्निवृत्तित्वविशिष्टजातिमान् नास्तीत्यभावमादायाव्याप्तेर्वारणाय शुद्धसाध्यतावच्छेदकस्थले निरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव लक्षणघटकत्वमिति रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्वविशिष्टाभावस्यात्र कथं लक्षणघटकत्वम्, उल्लिख्यमानस्य जात्यादेः स्वरूपतोऽभानेन प्रकृते रूपत्वनिष्ठावच्छेदकताया रूपत्वत्वावच्छिन्नत्वेन सावच्छिन्नत्वादिति चेन्न। समवायान्यसंबन्धेन भासमानस्य जात्यादेरुल्लिख्यमानस्यापि स्वरूपतो भानाङ्गीकारात्। तदाह रूपवानिति। अन्यथा (उल्लिख्यमानस्य किञ्चिद्धर्मेण सर्वत्र भानाङ्गीकारे) रूपत्ववद्वानित्येव ब्रूयात्। रूपसाध्यकस्थले विषयितया रूपत्वविशिष्टाभावीयप्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वविरहेण तदभावमादाय तत्राव्याप्तिकथनस्यासंगत्यापत्तेः। ननु विषयितया वह्नित्वविशिष्टाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिसंभवे रूपवान् पृथिवीत्वादित्यत्राव्याप्तिकथनं न युक्तम्। वह्निमान् धूमादित्यस्य प्राकरणिकत्वात् प्रसिद्धत्वाच्चेति चेन्न। विषयितया वह्नित्वविशिष्टाभावस्य प्रतियोगिसमानाधिकरणत्वेनात्र लक्षणाघटकत्वात्। समवायेन साध्यतायां रूपवान् पृथिवीत्वादित्यत्राव्याप्त्यनुधावनं कृतं जगदीशेन। विषयितया रूपत्वविशिष्टाभावप्रतियोगिनो ज्ञानस्य साध्यतावच्छेदकसमवायेनात्मनि अधिकरणत्वस्य प्रसिद्धेः।

## अव्याप्तिप्रसङ्गादिति जा० टी०

ननु प्रतियोगिव्यधिकरणत्वघटकप्रतियोगिनिष्ठनिरूपकतावच्छेदकतायां यथाश्रुतस्य (अपारिभाषिकस्य) साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य निवेशेन वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यके सद्धेतौ वह्निमान् धूमादित्यत्राव्याप्तिः। लक्षणघटकाभावीयप्रतियोगितायां वह्नित्वप्रतियोगिकसमवायावच्छिन्नत्वस्यासत्त्वेन साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकनिरूप-

कताकाधिकरणाप्रसिद्धया प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धत्वात्। न च साध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्नाधिकरणत्व प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वोभयाभावो हेत्वधिकरणे पारिभाषिकं प्रतियोगिव्यधिकरणत्वं विवक्षितमिति वाच्यम्। तथा सति घटत्वावच्छिन्नप्रतियोगिक स्ववृत्तिवाच्यत्ववत्त्व, संयोगान्यतरसंबन्धेन पटसाध्यकसद्धेतौ मठः पटवान् मठत्वादित्यत्र :लक्षणघटकैकमात्रघटाभावस्यापि स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन पर्याप्त्यघटित साध्यतावच्छेदकसंबन्धेन सर्वत्र साध्याधिकरणत्वप्रतियोग्यधिकरणत्वयोः सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धयाऽव्याप्त्यापत्तेरिति चेन्न। प्रतियोगितावच्छेदकतायां प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वमेव निवेश्यं न तु साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेश्यम्। यथाश्रुतं च (प्रतियोग्यधिकरणावृत्तित्वरूपम्) प्रतियोगिवैयधिकरण्यं ग्राह्यम् न तु पारिभाषिकमिति रूपत्ववदभावस्य प्रतियोगिवैयधिकरण्यमिति तत्राव्याप्तिदानस्य सङ्गतत्वात्।

**यदि च दण्डिमति तत्ताविनिर्मुक्तशुद्धदण्डव्यक्तेरेवावच्छेदकत्वावगाहि प्रत्ययान्तरासत्त्वात् तद्दण्डी नास्तीतिप्रतीत्या तत्ताविशिष्टव्यक्तेरेवावच्छेदकत्वं युक्तमिति जा० टी०।**

सखण्डस्य स्वरूपतो मानासंभवमभ्युपगम्याह यदि चेति। तद्दण्डी नास्तीत्यभावप्रतियोगितावच्छेदकता तत्त्वोपलक्षितदण्डव्यक्तौ स्वीकर्तुं न शक्यते। सखण्डस्य स्वरूपतोऽमानात्। किन्तु तत्ताविशिष्टे दण्डे एव। तथा च नोक्ताभावमादाय तत्राव्याप्तिः संभवति। विशिष्टसाध्यकस्थले प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य निवेशात्। तथा च दण्डिमान् दण्डसंयोगादित्यत्र तद्दण्डी नास्तीत्यभावमादाय नाव्याप्तिः संभवतीति शङ्कातुराशयः।

**रूपत्वन्यूनवृत्तिजातिमत्वान् रूपादित्यत्राव्याप्तिरिति जा० टी०।**

न्यूनवृत्तित्वञ्च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। यथा नीलत्वं रूपत्वन्यूनवृत्ति। नीलरूपे उभयो रूपत्वनीलत्वयोः

सामानाधिकरण्यं वर्तते। रूपत्वाधिकरणे शुक्लरूपे नीलत्वं नीलं नेति भेदप्रतियोगितावच्छेदकत्वं च वर्तते। स्वसामानाधिकरण्यस्योपादानेन कर्मत्वे संयोगत्वे च न रूपत्वन्यूनवृत्तित्वं भवति। सत्त्वगुणत्वयोः रूपत्वन्यूनवृत्तित्ववारणाय स्वसमानाधिकरणभेदेति। रूपत्वन्यूनवृत्तिजातिमत्वान् रूपादित्यत्र कर्मत्वसंयोगत्वयोः साध्यतावच्छेदकत्ववारणाय न्यूनवृत्तित्वघटकस्वसामानाधिकरण्येति। तत्रैव सत्त्वगुणत्वयोः शक्यतावच्छेदकत्ववारणाय स्वसमानाधिकरणभेदेति। सत्त्वगुणत्वत्वयोः जातित्वानङ्गीकारपक्षे स्वभिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन स्वविशिष्टत्वं स्वन्यूनवृत्तित्वं बोध्यम्। संयोगतद्रूपान्यतरत्वादिवारणाय जातीति। तादृशान्यतरत्वे रूपत्वसामानाधिकरण्यं तद्रूपावच्छेदेन वर्तते। शुक्लादिरूपावच्छेदेन रूपत्वसमानाधिकरणभेदश्च तादृशान्यतरत्वे वर्तते। रूपं तादृशान्यतरं नेति भेदः शुक्लादिरूपे वर्तते। अतो जात्युक्तम्। तादात्म्यजातिमतः तादात्म्येन साध्यतायां जातित्वे जातिमान् जातित्वादित्यत्र सत्तान्यजातिमतः तादात्म्येन साध्यतायां सत्त्वे च हेतौ तादात्म्येन सत्त्वान्यजातिमान् सत्त्वादित्यत्र लघुसाध्यकेऽव्याप्त्युपेक्षणं च। तादात्म्येन व्याप्यव्यापकभावस्य सर्वाङ्गीकाराविषयत्वादिति चिन्त्यम्। जातित्वाधिकरणे घटत्वे तादात्म्येन जातित्वाश्रयघटत्वसंबन्धित्वस्य पटत्वावच्छेदेन स्वसमानाधिकरणभेदो वर्तते, तत्राव्याप्तिवारणाय तादात्म्यस्य वृत्त्यनियामकत्वेन तादात्म्येन व्याप्यव्यापकभावो नाङ्गीकार्यः। तस्य प्रतियोगितानवच्छेदकत्वात्।

## निरवच्छिन्नावच्छेदकत्वादिति जा० टी०।

निरवच्छिन्नावच्छेदकत्वाभिधानं तादृशाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयानवच्छिन्नत्वघटितलक्षणासत्त्वसंपादनाय। एतल्लक्षणस्य विशिष्टसाध्यतावच्छेदकस्थलीयत्वम्। सावच्छिन्नसाध्यतावच्छेदकताकस्थले अवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणघटकत्वेन निरवच्छिन्नत्वोपादानमसङ्गतं, प्रतियोगितावच्छेदकतायां निरवच्छिन्नत्वोपादानस्य निरवच्छिन्नसाध्यतावच्छेदकस्थले सत्त्वादिति परास्तम्। निरवच्छिन्नावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकतदितरोभयावच्छिन्नत्वाभावस्य सत्त्वेन तादृशाभावस्य सावच्छिन्नावच्छेदकताकस्थलेऽपि धर्तुं शक्यते, तादृशलक्षणाक्रान्तत्वात्।

## स्वन्यूनवृत्तिजात्याश्रयत्वसंबन्धेन रूपत्वमेव साध्यतावच्छेदकमिति जा० टी०

इदं च स्वसमानाधिकरणजातिमत्व, स्वाश्रयाधिकरणत्वादिलघुसंबन्धस्यापि उपलक्षणतया अभिहितमिति बोध्यम्। यत्तु रूपत्वन्यूनवृत्तिजातिमत्त्वानित्याकारानुगुण्येन तदभिधानम् (तादृशसंबन्धानुधावनम्) इति। रूपत्वन्यूनवृत्तिजातिमत्वान् रूपादित्यत्र स्वन्यूनवृत्तिजात्याश्रयत्वसंबन्ध एवानुगुणः झटिति बोधाय भवति नान्येषामिति। तन्न। तत्संबन्धेन रूपत्वस्य तथात्वे (स्वन्यूनवृत्तिजात्याश्रयत्वसंबन्धेन रूपत्वस्य साध्यतावच्छेदकत्वे) रूपत्ववत्त्वानित्याकारकस्यैव स्वहस्तिततत्वेन प्रकृतानुगुण्यस्य (रूपत्वन्यूनवृत्तिजातिमत्त्वानित्याकारानुगुण्यस्य) स्वहृदयमात्रवेद्यत्वात्। यथा दण्डिमान् दण्डिसंयोगादित्यत्र परंपरासंबन्धेन स्वाश्रयाश्रयत्वरूपसंबन्धेन दण्डत्वस्य साध्यतावच्छेदकत्वे दण्डत्ववत्त्वानित्येवानुमितिर्न तु दण्डिमानिति दण्ड प्रकारिका दण्डस्य दण्डिसंयोगव्यापकतावच्छेदकत्वेनाग्रहात्। यस्मिन् धर्मे लक्षण घटकाभावप्रतियोगितानवच्छेदकत्वज्ञानं तत् तद्धर्मावच्छिन्नविधेयताशाल्यनुमितिं प्रति कारणमिति कारणबाधेन तदवच्छिन्नविधेयताकानुमित्यसंभव इति जगदीशाभिप्रायः। एवं च रूपत्वस्य साध्यतावच्छेदकत्वे रूपत्ववत्त्वानित्येवानुमितिः स्वीकार्या। तथा च स्वन्यूनवृत्तिजात्याश्रयत्वस्येव स्वसमानाधिकरणजात्याश्रयत्व, स्वाश्रयाधिकरणत्वादिलघुसंबन्धस्य साध्यतावच्छेदकत्वे रूपत्ववत्वानित्यनुमित्यनुगुणत्वं तुल्यमिति।

## अनुमितिविधेयतावच्छेदकमिति जा० टी०

परामर्शजन्यतावच्छेदकमित्यर्थः। एवं च तदवच्छिन्नविधेयताकानुमित्यसंभवादिति जागदीश्या अपि प्रमापरामर्शजन्यानुमित्यसंभवादित्यर्थः। नातो दण्डांशे व्यापकतावच्छेदकत्वभ्रमाद् दण्डावच्छिन्नविधेयताकानुमितिसंभवेऽपि क्षतिः।

केचित्तु सल्लिङ्गकानुमितेः भ्रमात्मकपरामर्शमात्रजन्यत्वं सिद्धान्तविरुद्धं कथमन्यथा ज्ञेयत्वादिलिङ्गकवाच्यत्वाद्यनुमितेः साध्याभाववदवृत्तित्वावगाहिपरामर्शात् संभवेऽपि साध्याभाववदवृत्तित्वादेः व्याप्तिवादे व्याप्तित्वानङ्गीकरणं चिन्तामणिकृतां घटत इति दण्डाद्यवच्छिन्नविधेयताकानुमितेरभावात् यथाश्रुतमेव (अनुमितिविधेयता

वच्छेदकमित्येव साध्यतावच्छेदकं वक्तव्यं न तु प्रमापरामर्शजन्यानुमितिविधेयतावच्छेदकं तदिति वक्तव्यम्। एवं दण्डावच्छिन्नविधेयताकानुमित्यसंभवादित्येव वक्तव्यं न तु प्रमापरामर्शजन्यदण्डावच्छिन्नविधेयताकानुमित्यसंभवादिति वक्तव्यमित्याहुः।

**हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतानवच्छेदको यो धर्म इति जा० टी०।**

इदमुपलक्षणम्। दण्डिसंयोगसाध्यके सद्धेतौ दण्डिसंयोगवान् दण्डिमत्वादित्यादौ तत्तत्संयोगाभावमादायाव्याप्तेर्वारणाय साध्यतावच्छेदकतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वमपि विवक्षणीयम्। एवं विवक्षाधारैव केचिदित्यनेनास्वरससूचनबीजं बोध्यम्।

**इत्युभयाकारानुमित्यापत्तेरिति जा० टी०**

अथ लक्षणघटकाभावप्रतियोगितानवच्छेदकं यद् दण्डत्वं तद्विशिष्टा-(दण्डा)वच्छिन्नसामानाधिकरण्यज्ञानं दण्डावच्छिन्नविधेयताकानुमितिं प्रति कारणम्। लक्षणघटकाभावप्रतियोगितानवच्छेदकदण्डत्वावच्छिन्नसामानाधिकरण्यज्ञानञ्च दण्डत्वावच्छिन्नविधेयताकानुमितिं प्रति कारणमिति सामानाधिकरण्यांशे दण्डत्वस्य प्रवेशाप्रवेशाभ्यां सामग्रीभेदसंभवेन नैकपरामर्शात् उभयाकारानुमितिः संभवतीति चेन्न। स्ववृत्तिवाच्यत्ववत्त्वादिसंबन्धेन वह्निसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य धूमत्वे सत्वेन धूमत्वावच्छिन्नसामानाधिकरण्यग्रहात्, समवायेन धूमत्वावच्छिन्नसामानाधिकरण्यग्रहाच्चाभ्रान्तस्य वह्निलिङ्गकानुमितिवारणाय वह्निलिङ्गकधूमत्वविशिष्टानुमितिवारणाय च येन संबन्धेन यस्यानवच्छेदकत्वं तेन संबन्धेन तदवच्छिन्नसामानाधिकरण्यस्य व्याप्तिघटकत्वम्, तादृशसामानाधिकरण्यज्ञानं च तेन संबन्धेन तदवच्छिन्नविधेयताकानुमितौ तादृशसंबन्धात्मकधर्मावच्छिन्नविधेयताकानुमितौ च कारणत्वं वक्तव्यम्। तथा चापत्तेरवारणादिति भावः।

इदं त्ववधेयम्। येन संबन्धेन यस्यानवच्छेदकत्वं तेन संबन्धेन तदवच्छिन्नसामानाधिकरण्यग्रहः, तेन संबन्धेन तदवच्छिन्नविधेयताकानुमितिप्रयोजकः तद्विशेषित तादृशसंबन्धात्मकधर्मावच्छिन्नसामानाधिकरण्यग्रहः तादृशसंबन्धकधर्मावच्छिन्नविधेयताकानुमितिप्रयोजक इत्यभ्युपगमे नापत्तिरिति। (दण्डिमान् दण्डिसंयोगवानित्यनुमित्योरेकपरामर्शजन्यत्वरूपापत्तिर्नेति) दीधितिकृतां दण्डत्वादेः साध्यता-

वच्छेदकत्वानुधावनं यदस्ति तद्विशेषरूपेण संसर्गत्वानभ्युपगमेन। अन्यथा (विशेषरूपेण संसर्गत्वाभ्युपगमे) साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्न सावच्छिन्नावच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नलक्षणघटकाभावप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके विवक्षणेन दण्डिमान् दण्डिसंयोगादित्यत्र तद्दण्डी नास्तीत्यभावमादायाव्याप्तिदोषाभावाद् दण्डत्वादेः परंपरया साध्यतावच्छेदकत्वानुधावनं विफलं स्यात्। तद्दण्डी नास्तीत्यभावीयप्रतियोगितावच्छेदतायाः साध्यतावच्छेदकतावच्छेदकेतरत्वावच्छित्वेन तादृशावच्छेदकत्वीयस्वरूपसंबन्धस्य व्यधिकरणत्वेनैतत्संबन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदके सत्वात् अव्याप्त्यभावेन दण्डत्वे साध्यतावच्छेदकत्वस्य कल्पनमसङ्गतं स्यात्।

## तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणतेति। जा० टी०।

इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्र 'विशिष्टः शुद्धान्नातिरिच्यते' इति शुद्धविशिष्टयोरैक्येन हेत्वधिकरणे गुणे द्रव्यत्वाभावमादायाव्याप्तिवारणाय हेतुतावच्छेदकावच्छिन्नाधिकरणतावद्वृत्ति प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यभिप्रेतम्। तथा च नोक्तदोषः। विशिष्टशुद्धयोरैक्येऽपि पृथिवीजलयोर्न गन्ध इति प्रतीत्यनुरोधेन विशिष्टसत्तावान् गुण इति प्रतीत्यभावेन चोभयोरधिकरणतयोः परस्परं वैलक्षण्यमङ्गीकरणीयमिति। विशिष्टसत्तात्वावच्छिन्नाधिकरणतावद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके द्रव्यत्वत्वे सत्वेन तत्र नाव्याप्तिरित्यभिप्रायेणाह—तथा च हेतुतावच्छेदकावच्छिन्नाधिकरणत्वं न गुणस्येति भाव इति।

ननु सत्तात्वावच्छिन्नाधिकरणत्वस्यापि हेतुतावच्छेदकावच्छिन्नाधिकरणतात्वेन द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तितादवस्थ्यम्। हेतुतावच्छेदकसत्तात्वावच्छिन्नाधिकरणतावति गुणे साध्याभावस्य सत्त्वेन साध्यतावच्छेदके तादृशाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वात्। एवं ज्ञानं समवायेन वह्निज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र विषयितया महानसीयवह्न्यधिकरणे तद्विषयकज्ञाने वह्न्यधिकरणे साध्याभावमादायाव्याप्तिवारणाय हेतुतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिर्या स्व (हेत्वधिकरणता) निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेना-

धिकरणता तद्वद्वृत्ति प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणीयम्। तथा च नोक्तदोषः। तादृशहेत्वधिकरणे द्रव्ये साध्याभावस्यासत्त्वात्। एकत्वादेः पर्याप्त्यनभ्युपगमे च स्ववृत्तित्व, स्वनिरूपितावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वोभयसंवन्धेन हेतुताविशिष्टनिरूपकताकाधिकरणतावद्वृत्ति प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसितम्। निरूपकतायाः हेतुतावृत्तित्वञ्च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंवन्धेन। उभयत्रावच्छेदकतावैशिष्ट्यञ्चावच्छेदकतायाम् स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वैतत्प्रसिद्धचतुष्टयसंवन्धेन। अत्र वृत्तित्वम् स्वानवच्छेदकानवच्छिन्नत्वसंवन्धेन। हेतुताविशिष्टनिरूपकतेत्यत्र वैशिष्ट्यनियामकप्रथमसंवन्धस्योपादाने महानसीयवह्निमान् समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टत्वादित्यत्र कालिकसंवन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपितसमवायसंबन्धावच्छिन्नवह्नित्व निष्ठावच्छेदकतानिरूपितनिरूपकतानिरूपितपर्वतनिष्ठाधिकरणतायां हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतात्वस्य सत्वेन तत्र पर्वते साध्याभावमादाय नाव्याप्तिः। अधिकरणतायारूपवृत्तित्वं च स्वनिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। हेतुता च समवायसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपिता कालिकसंवन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपिता च। निरूपकता च कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपिता समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपिता च। एवं च प्रसिद्ध चतुष्टयसंबन्धेन निरूपकतावच्छेदकताविशिष्टा निरूपकतावच्छेदकतैव तदन्या समवायसंबन्धावच्छिन्नमहानसीयत्वनिष्ठा कालिकसंबन्धावच्छिन्ना वह्नित्वनिष्ठा हेतुतावच्छेदकता तन्निरूपितत्वस्यैव हेतुतायां सत्त्वेन तदनिरूपितत्वस्य तत्रासत्त्वात्, निरूपकता न हेतुतावृत्तीति साध्याभावस्य तादृशहेत्वधिकरणावृत्तित्वात्।

हेतुताविशिष्टनिरूपकतेत्यत्र वैशिष्ट्यनियामकस्ववृत्तित्वनियामकस्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वघटकवैशिष्ट्यनियामकस्य स्वसामानाधिकरण्यस्योपादाने तज्ज्ञानं समवायेन तार्णवह्निविषयकज्ञानत्ववद् विषयितया

तार्णवह्निमत्त्वादित्यत्र समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपित विषयितासंबन्धावच्छिन्ननिरूपकतानिरूपिताधिकरणतावति हेत्वधिकरणे वह्निज्ञाने साध्याभावमादाय नाव्याप्तिः। हेतुतावच्छेदके तार्णत्वे वह्नित्वनिष्ठाया निरूपकतावच्छेदकताया असत्त्वेन तदवच्छेदकतायां (हेतुतावच्छेदकतायां) तार्णत्वावच्छेदेन निरूपकता(वह्निनिष्ठा)वच्छेदकतासामानाधिकरण्यस्यासत्त्वेन तत्र हेतुतावच्छेदकता भवति निरूपकतावच्छेदकताविशिष्टान्या तन्निरूपितत्वस्यैव हेतुतायां सत्त्वेन तदनिरूपितत्वाभावात् हेतुतायां निरूपकत्वस्यावृत्तित्वमिति। एवं तज्ज्ञानं समवायेन तार्णवह्निविषयकज्ञानत्ववत् विषयितया तार्णवह्निमत्त्वात्। तज्ज्ञानं समवायेन जातिमद्वह्निविषयकज्ञानत्ववद् विषयतया जातिमद्वह्नित्वविशिष्टवह्निविषयकज्ञानत्वात्। तज्ज्ञानं समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवह्निविषयकज्ञानत्ववत् समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवह्निमत्वादित्यत्र वह्नित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतामादाय, एवं जात्यवच्छिन्ननिरूपकतानिरूपिताधिकरणतामादाय, एवं (कालिकसंबन्धावच्छिन्न)वह्नित्वनिष्ठावच्छेदकताकनिरूपकतां चादाय क्रमशः अव्याप्तिवारणाय स्ववृत्तित्वघटकवैशिष्ट्यनियामकतया स्ववृत्तित्व,स्वानवच्छेदकानवच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वानां प्रवेशः।

एवं विषयितया वह्निहेतुके समवायतज्ज्ञानत्वसाध्यके तार्णवह्नित्वावच्छिन्ननिरूपकतानिरूपितां जातिमद्वह्नित्वावच्छिन्ननिरूपकतानिरूपितां जातिमद्धेतुके तज्ज्ञानत्वसाध्यके जातिमद्वह्नित्वावच्छिन्ननिरूपकतानिरूपितां, वह्निज्ञानसाध्यकवह्निहेतौ कालिकसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपित समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितां निरूपकतां चादाय तत्तन्निरूपिताधिकरणतामादायाव्याप्तिवारणाय स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वरूपहेतुताविशिष्टनिरूपकेति द्वितीयसंबन्धघटक वैशिष्ट्यनियामकानां स्वसामानाधिकरण्य स्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्व स्वावच्छेदकसंबन्धावच्छिन्नत्वसंबन्धानां प्रवेशः। तथा च वह्निमान् धूमादित्यत्रोक्तनिरूपकतानिरूपिताधिकरणतायाः (धूमत्वावच्छिन्नसामान्याधिकरणतायाः) अप्र-

सिद्ध्याऽव्याप्तिः। तथाहि धूमवानिति प्रात्यक्षिकप्रतीतेः नियमिताधिकरणतानवगाहित्वेन नियमिताधिकरणतानिरूपितधूमनिष्ठाधेयत्वानवगाहित्वमिति धूमवानिति प्रत्यक्षात्मकज्ञानेन धूमत्वावच्छिन्नसामान्याधिकरणत्वस्य न सिद्धिः। अन्यथा धूमवानिति निश्चयसत्त्वे धूमवान् क इति जिज्ञासानुदयापत्तेः। (धूमवानिति प्रात्यक्षिकप्रतीतेरनियन्त्रिताधिकरणविषयिण्या मतुपा अधिकरणत्वावगाहित्वेऽपि न तथा प्रतीत्यां तादृशा(धूमत्वावच्छिन्नसामान्या)धिकरणत्वसिद्धिः। तद्विषयकत्वेनानुव्यवसीयमानतायाः सन्दिग्धत्वात्। तद्विना तस्या अनुपपत्तिविरहाच्च।

अयं भावः। धूमवानित्यत्र धूमसंबन्धितामात्रस्यैवावगाहमानेन नियमितधूमाधिकरणतानवगाहनेन न धूमत्वावच्छिन्ननिरूपकतानिरूपितसामान्याधिकरणतायाः धूमवानिति प्रत्यक्षेण सिद्धिः। सामान्यधूमाधिकरणत्वं विनापि धूमवान्(पर्वतः)इति प्रात्यक्षिकप्रतीतेरनुपपत्तिविरहाच्च। धूमवान् पर्वत इत्यनुमितेः नियमित (पर्वत) विषयिण्याः (सामान्य) अधिकरणत्वावगाहित्वस्यैव विरहात्। धूमत्वावच्छिन्नविधेयतानिरूपित पर्वतत्वावच्छिन्नोद्देश्यतायाः एवावगाहनात्। न तथा अनुमित्या धूमत्वावच्छिन्नसामान्याधिकरणत्वं सिद्धयति। धूमवानिति शाब्दप्रतीतिः मतुबर्थाधिकरणत्वावगाहमानाऽपि अधिकरणत्वे धूमत्वविशिष्टं निरूपितत्वसंसर्गेण भासयन्ती न धूमत्वावच्छिन्ने, तत्र (धूमत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वे) प्रमाणं भवितुमर्हति। धूमत्वावच्छिन्ननिरूपितत्वस्याधिकरणत्वेऽभासमानतया धूमत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वे सा प्रतीतिः प्रमाणं न भवितुमर्हति, तदनवगाहनात्।

न च गुणो गुणकर्मान्यत्वविशिष्टसत्तावानित्यस्याप्रामाण्याय मतुबर्थाधिकरणत्वे प्रकृत्यर्थमाने अवच्छिन्नत्वसंबन्धेन प्रकृत्यर्थतावच्छेदकस्यापि तत्राधिकरणत्वे भानमङ्गीकार्यमिति धूमवानित्याप्तशब्दः कथं धूमत्वावच्छिन्नाधिकरणत्वान् न साधयेदिति वाच्यम्। धूमत्वावच्छिन्नाधिकरणतायां न नो विद्वेषः, किन्तु तत्पर्वते तत्पर्वतीयान्तरसत्त्वे धूमसत्वे चान्यत्र धूमसत्त्वेऽपि च स्वविषयाधिकरणत्वम् (धूमाधिकरणत्वम्) अप्रमापयन्त्या (धूमत्वावच्छिन्नाधिकरणत्वम् अप्रमापयन्त्यां) तत्पर्वतीय धूमवानिति प्रतीत्या तन्महानसीयधूमवानिति प्रतीत्या च सिद्धेभ्यः तत्पर्वतीय धूमत्वाद्यवच्छिन्नाधिकरणत्वेभ्योऽतिरिक्तायां धूमत्वमात्रावच्छिन्ननिरूपकतानिरू-

पिताधिकरणतायां विद्वेष इति तत्तद्धूमत्वावच्छिन्नाधिकरणतयैव धूमवानिति प्रतीत्युपपत्तौ सामान्यधर्मावच्छिन्नातिरिक्ताऽधिकरणता न मन्तव्येति भावः। न चेदं ज्ञानं महानसीयवह्निमत् प्रकारितया धूमवदिति प्रतीतिरप्रमा भवन्ती धूमत्वमात्रावच्छिन्नाधिकरणतां नान्तरेण स्वधर्मान् तिरस्करिष्यति (धूमवान् इत्याप्तशब्दः कथमकस्मात् उक्तमर्यादामभिपतिष्यति)। तथा च नापलपितुं शक्यं विवादाध्यवसितं सामान्यधर्मावच्छिन्नाधिकरणत्वमिति वाच्यम् इति प्रमात्वे स्वप्रकारतावच्छेदक (प्रमाप्रकारतावच्छेदक) मात्रावच्छिन्नाधिकरणतैवान्तर्भावनीया, शाब्दात्मिकायां च मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकाशेषधर्मावच्छिन्नत्वस्येव तदितरानवच्छिन्नत्वस्यापि माननियमोऽङ्गीकार्य इति प्रमात्वमेव संयोगेन धूमवानिति प्रतीतौ भवद्धूमत्वमात्रावच्छिन्नामधिकरणतां साधयिष्यति। एवं धूमवानित्याप्तशब्दः कथमकस्मादुक्तमर्यादामतिपतिष्यति। तथा च नाप्रलपितुं शक्यं विवादाध्यवसितं सामान्यधर्मावच्छिन्नाधिकरणत्वमिति वाच्यम्। अतिरिक्ताधिकरणता (अतिरिक्ता सामान्यधर्मावच्छिन्नाधिकरणता) कल्पनागौरवप्रतिपक्ष(विरोधि)तर्कस्फूर्तिः। विषयितया (महानसीय धूमवान्) इत्यत्र विषयितया धूमवानिति प्रतीतिः। धूमवत्त्वप्रतीतिविशेषप्रमात्वापत्तिभिया विषयितादिसंबन्धस्थले वैमुख्यमासादयन्त्यपि, संयोगादिस्थले प्रमात्वरीतिं (प्रमात्वे स्वप्रमाप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणतैवान्तर्भावनीया इति रीतिम्) शब्दमर्यादाञ्च (शाब्दात्मिकायां च मतुबर्थे स्वप्रकृत्यर्थतावच्छेदकाशेषधर्मावच्छिन्नस्येव तदितरानवच्छिन्नस्यापि माननियमोऽङ्गीकार्य इति शाब्दमर्यादां च) स्ववश एव (स्वभावत एव) स्थापयिष्यतीति विषयितासंबन्धस्थलीय प्रमाशरीरे स्वप्रकारतावच्छेदकमात्रावच्छिन्नाधिकरणत्वस्य प्रवेशेऽपि अन्यत्र (संयोगादिसंबन्धस्थले) तदभावाच्चेति सामान्यधर्मावच्छिन्नाधिकरणतायां मानाभावः।

अयं भावः। इदं ज्ञानं विषयितया महानसीयवह्निमत् तज्ज्ञानत्वादित्यत्र महानसीयवह्नित्वावच्छिन्नाधिकरणतामात्रं भासते न तु वह्नित्वावच्छिन्नसामान्यधर्मावच्छिन्नाधिकरणत्वं तथैव संयोगादिसंबन्धस्थलेऽपि विनिगमनाविरहात् स्वीक्रियतामिति। न चेयमुक्तिः (अशेषधर्मावच्छिन्नाधिकरणतैव स्वीकार्या न सामान्यधर्मा-

वच्छिन्नाधिकरणतेत्युक्तिः) सिद्ध्यसिद्धिभ्यां पराहता। (यदि सामान्यधर्मावच्छिन्नाधिकरणताऽस्ति। तर्हि निषेद्धुमशक्या। यदि नास्ति तदाऽपि निषेद्धुमशक्या। अलीकप्रतियोगिकाभावस्यास्वीकारात्)। प्रमाणत्वावच्छेदेन स्वातिरिक्तधर्मानवच्छिन्नत्वसंबन्धावच्छिन्नधर्मनिष्ठप्रकारतानिरूपितहेतुनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यतानिरूपकज्ञानजनकतायाः प्रमाजनकताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नाभावे प्रागुक्तविशेष्यतायाम् (स्वातिरिक्तधर्मानवच्छिन्नधर्मनिष्ठप्रकारतानिरूपितहेतुनिष्ठविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताधिकरणत्वनिष्ठविशेष्यतायाम्) प्रमानिरूपितत्वाभावे वा तात्पर्यम्। यः कोऽपि सामान्यधर्मावच्छिन्नाधिकरणतामङ्गीकरोति तन्न युक्तम्। तत्र प्रमाणाभावेन सा नास्तीत्याशयेनाह–यद्यपीति जा० टी०।

इदञ्च (सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकरणञ्च) प्राचां मतेनोक्तम्। उक्ताधिकरणत्वाभावेऽपि (सामान्यधर्मावच्छिन्नाधिकरणत्वाभावेऽपि) वक्ष्यमाणरीत्या हेत्वधिकरणत्वनिवेशसंभवेनोक्तलक्षणे न कापि हानिरिति प्रौढिप्रकटनाशयेन "यद्यपी"त्युक्तं जगदीशेन। (सामान्यधर्मावच्छिन्नाधिकरणताया अनङ्गीकारेऽपि न प्रकृतलक्षणे दोष आपतिष्यति पारिभाषिकाधिकरणत्वकल्पनेन दोषाभावोपपत्तिरिति जगदीशस्य प्रौढित्वं बोध्यम्।

वस्तुतस्तु सामान्यधर्मावच्छिन्नाधिकरणत्वाङ्गीकार एव ज्यायान्। तथा हि प्रमात्वं हि प्रकारताविशिष्टप्रकारताकज्ञानत्वमेवानुगतम्। विषयितासंयोगादिसंबन्धघटितसाधारणम्। वै० स्वतादात्म्य स्वावच्छेदकाशेष स्वावच्छेदकधर्ममात्रावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपितत्वोभयसंबन्धेन प्रकारतावच्छेदकाधेयतावच्छेदकयोः विशेष्यतावच्छेदकाधिकरणतावच्छेदकयोश्चाभिन्नत्वम्। एकधर्मनिष्ठयोरप्यवच्छेदकतयोः परस्परभेदः। तच्च (प्रमात्वञ्च) संयोगेन धूमवत्त्वज्ञाने भवद् बुभुत्सितां सामान्यधर्मावच्छिन्नाधिकरणतां साधयदेव भविष्यति। अन्यथा (सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारे) विशिष्टसत्त्वशुद्धसत्त्वयोरनतिरेकात् (विशिष्टः शुद्धान्नातिरिच्यते इति विशिष्टसत्त्वशुद्धसत्त्वयोरैक्यात्) एकविशिष्टनिरूपिताया अपि अपरनिरूपिततया तथा च विशिष्टसत्ताबुद्धेः प्रमात्व-

नियमानिर्वाहात् (विशिष्टसत्त्वनिष्ठप्रकारतानिरूपितायाः विशेष्यतायाः सत्त्वनिष्ठप्रकारतानिरूपिततया (विशिष्टसत्त्वनिष्ठप्रकारतानिरूपितविशेष्यतायां सत्त्वनिष्ठप्रकारतानिरूपितत्वस्य सत्त्वेन) तथा च (विशिष्टसत्त्वनिष्ठप्रकारतानिरूपित विशेष्यतया च) विशिष्टसत्त्ववुद्धेः (विशिष्टसत्तावान् गुण इति बुद्धेः) प्रमात्वविवरहात्। विशिष्टसत्वनिष्ठप्रकारतानिरूपितविशेष्यतायाः गुणे वृत्तित्वेऽपि विशिष्टसत्तावान् गुण इति बुद्धिर्न प्रमा भवति। विशिष्टसत्तावान् गुण इति बुद्धौ अप्रमात्वनिर्वाहाय प्रमात्वं प्रकारताविशिष्टप्रकारताकज्ञानत्वमित्यत्र वैशिष्टयनियामकस्य स्वावच्छेदकाशेषस्वावच्छेदकमात्रावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपितत्वस्योपादानम्। तथा च विशिष्टसत्तावान् गुण इति बुद्धावप्रमात्वं सिद्धयति। विशिष्टशुद्धयोरैक्येऽपि उभयोरधिकरणत्वयोः परस्परभिन्नत्वेन विशिष्टसत्तात्वावच्छिन्नाधेयतानिरूपिताधिकरणतायाः द्रव्यमात्रनिष्ठत्वेन गुणावृत्तित्वात् विशिष्टसत्त्वनिष्ठप्रकारतायां तादृशाधिकरणतावद्गुणनिष्ठविशेष्यतानिरूपितत्वविरहेण विशिष्टसत्तावान् गुण इति बुद्धेरप्रमात्वमुपपन्नं भवति। अधिकरणतानां भेदायावच्छेदकभेदकल्पनेऽपि यद्यपि शुद्धसत्तात्वावच्छिन्न, गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतयोः परस्परं भेदः आधेयतावच्छेदकभेदेनावच्छेद्यस्याधेयत्वस्य भेदाद् भविष्यति। विशिष्टसत्तावान् इत्यत्राधेयतावच्छेदकं तादृशवैशिष्टयं सत्तात्वञ्चोभयम्, सत्तावानित्यत्र केवलसत्तात्वमिति निरूपकस्याधेयत्वस्य भेदात् निरूप्यस्याधिकरणत्वस्य भेदेन विशिष्टसत्वाधिकरणत्वस्य गुणेऽसत्त्वेनोक्तदोषाभावस्य सिद्धेर्विलक्षणाधिकरणता नाङ्गीकार्या। तथापि तत्तत्पर्वतीयधूमादेः भिन्नमूर्तिकतया परस्परभिन्नत्वेन तत्तत्पर्वतीयधूमव्यक्तिनिरूपितत्वमात्रेण तत्तत्पर्वतीयत्वभेदेनावच्छेद्यस्य तत्तदाधेयत्वस्य भेदमात्रेण तत्तदाधेयतानिरूपिताधिकरणत्वस्यापि भेदसिद्धौ पर्वतीयधूमत्वावच्छिन्नविशेषाधिकरणत्वमपि न स्यात् (न सिद्धयेत्)। एवञ्च तत्तद्विशिष्टाधिकरणतयैव सिद्धे सामान्यधर्मावच्छिन्नाधिकरणता नाङ्गीकार्येतास्य क्वावसरः स्यात्। न च तत्तद्धूमस्य जात्यखण्डोपाधिभिन्नत्वेन किञ्चिद्धर्मेण भानात् तत्तद्धूमत्वावच्छिन्नाधिकरणता सेत्स्यतीति वाच्यम्। जात्यखण्डोपाधिभिन्नानां केनचिद् रूपेणैव भानमिति नहि राज्ञामाज्ञा अस्ति। अतः

तत्तद्धूमत्वावच्छिन्नाधिकरणतयैव निर्वाहे सामान्यधर्मावच्छिन्नाधिकरणता न वाच्येत्यस्य नावसरः। अतो धूमवानिति प्रतीत्या सामान्यधर्मावच्छिन्नाधिकरणता अतिरिक्ता स्वीकार्या। सामान्यधर्मावच्छिन्ना धूमत्वावच्छिन्नाधिकरणता न पर्वतीयधूमत्वावच्छिन्नविशेषाधिकरणतया गतार्था भवितुमर्हति। न च निरूपकस्य (अधिकरणता निरूपकाधेयत्वस्य) स्वरूपतोऽभानात् तत्र न तथेति वाच्यम्। (तत्तद्धूमत्वे तत्तद्धूमनिष्ठाधेयतानवच्छेदकत्वं न भवतीति वाच्यम्) तथा विशेषधर्मावच्छिन्नाधिकरणतयैव निर्वाहे सामान्यधर्मावच्छिन्नाधिकरणता न स्वीकार्येति भावः। भासमानधर्मस्य तत्तद्धूमत्वस्य निरूपकविशेषणत्वेऽपि तत्तदाधेयताविशेषणत्वेऽपि अवच्छिन्नत्वसंबन्धेन तत्तदाधेयत्वे तत्तद्धूमत्वस्य विशेषणत्वेऽपि अवच्छेदकत्वे आधेयत्वरूपनिरूपकस्य अवच्छेदकत्वे मानाभावात्। एवञ्च विशेषधर्मावच्छिन्नाधेयतानिरूपिताधिकरणताऽपि न सिद्ध्यति कुतस्तया सामान्यधर्मावच्छिन्नाधिकरणता गतार्था भविष्यतीति बोध्यम्।

अथ प्रतियोगिताविशेषणं भासमानतामात्रेण घटाद्यभावप्रतियोगितावच्छेदकत्वे यथा घटत्वादिके भवति, तथा निरूपके (आधेये) विशेषणतया भासमानतामात्रेण धूमवानित्यत्र निरूपकतावच्छेदकत्वं धूमत्वादौ कथं न भविष्यति। तथा च भासमानधर्मस्य निरूपके (आधेयत्वे) विशेषणत्वेऽपि अविच्छिन्नत्वसंबन्धेन विशेषणत्वेऽपि अवच्छेदकत्वे मानाभावादिति तव कथनं न संगतमिति चेत्। धूमो नास्तीत्यत्र प्रतियोगिविशेषणतया भासमाने धूमत्वमात्रे यथा प्रतियोगितावच्छेदकत्वम्। तथा धूमवानित्यत्र निरूपके धूमे विशेषणतया भासमाने धूमत्वमात्रे कथं न निरूपकतावच्छेदकत्वं विनिगमनाविरहेण स्यात्। तथा च धूमत्वमात्रावच्छिन्नाधेयतानिरूपितसामान्याधिकरणता कथं न त्वया स्वीकार्येति। यदि धूमत्वस्यावच्छेदकत्वे धूमत्वावच्छिन्नप्रतियोगिताकमहानसीयधूमाभावस्य पर्वते सत्त्वेन तत्र (पर्वते) धूमो नास्तीति प्रतीतेः प्रमात्ववारणायैव धूमो नास्तीत्यत्र धूमत्वमात्रप्रतियोगितावच्छेदकत्वम्। धूमवानित्यत्र तादृशप्रयोजनाभावेन धूमत्वमात्रे नाधेयतावच्छेदकत्वं कल्पनीयं किन्तु आधेयतावच्छेदकत्वं कल्पनीयम्। एवञ्च धूमत्वमात्रावच्छिन्नाधेयतानिरूपितसामान्याधिकरणता न स्वीकार्येति चेत्। तदा तादृशप्रयोजनस्य

(अतिप्रसङ्गापादनरूपप्रयोजनस्य) अभावेन धूमत्वादिषु निरूपकता (आधेयत्वा) वच्छेदकत्वमपि न स्यात्। तथा च विशेषधर्मावच्छिन्नाधिकरणतयैव निर्वाहे सामान्य-धर्मावच्छिन्नाधिकरणता न मन्तव्येति त्वया कथयितुं न शक्यते। एवञ्च सामान्य-धर्मावच्छिन्नाधिकरणता स्वीकार्या भवति। तस्मात् असति बाधके सामान्यतो दृष्टानुसारित्वमेव कल्पनायां वाच्यमिति विशिष्टसत्तावगाहिन्यां विशिष्टसत्तावानिति प्रतीतौ, अवच्छिन्न (किञ्चिद्धर्मावच्छिन्न) निरूपकताकत्वस्य दृष्टत्वेन, तत्पर्वतीय-धूमवानित्यत्र, अवच्छिन्ना(किञ्चिद्धर्मावच्छिन्ना) धिकरणत्वावगाहित्ववद्, विषयितया धूमवानित्यत्र धूमत्वमात्रावच्छिन्नावच्छिन्नत्वावगाहित्वमपि स्यादेव। (धूमत्वमात्रावच्छिन्नाधिकरणतैव धूमत्वावच्छिन्नसामान्याधिकरणता सा सिद्ध्यति)। एवं च विशिष्टसत्तावानित्ययं शब्दो विशिष्टसत्तात्वावच्छिन्नाधिकरणतां बोधयतीतिवद् विषयितया धूमवानिति शब्दो धूमत्वमात्रावच्छिन्नाधिकरणतां सामान्यधर्मावच्छिन्ना-धिकरणतां बोधयतीति संयोगेन धूमवानित्यपि शब्दः, धूमत्वमात्रावच्छिन्नाधिकरणतां (सामान्यधर्मावच्छिन्नाधिकरणतां) बोधयदेव। एवञ्च नाकस्मात् प्रमात्वभेद (विष-यिता संयोगादि संबन्धमादाय प्रमात्वभेद) कल्पनाप्रसक्तिः। न वा मतुपः (धूमवा-नित्यत्र मतुपः) स्वप्रकृत्यर्थतावच्छेदकमात्रावच्छिन्नाधिकरणत्वबोधकत्वरूपशब्द रूपमर्यादाभङ्गप्रसङ्गोऽपि भवतीति। न च प्रकृते (सामान्यधर्मावच्छिन्नाधिकरणता न स्वीकार्या विशेषधर्मावच्छिन्नाधिकरणतयैव निर्वाहादिति प्रकरणे) गौरवरूप बाधकसद्भावात् (सामान्यधर्मावच्छिन्नातिरिक्ताधिकरणतास्वीकारे गौरवमिति बाधकसद्भावात्) असति बाधके सामान्यतो दृष्टानुसारित्वमेव कल्पनायां वाच्यम् इत्यनुपपन्नं स्यादिति सामान्यदर्शनेन तावदेव कल्प्यं यत्र गौरवादिकं न प्रसज्यते इति तादृशधूमत्वावच्छिन्न (तत्तद्धूमत्वावच्छिन्न)त्वस्याधिकरणतायां स्वीकृतेऽपि नातिरिक्ताधिकरणताप्रसक्तिः। धूमत्वमात्रावच्छिन्नत्वस्य चाधिकरणतायां स्वीकारे तु सामान्यधर्मावच्छिन्नातिरिक्ताधिकरणताप्रसङ्ग इति गौरवमिति तन्न (सामान्यधर्मावच्छिन्नाधिकरणत्वं न) कल्प्यमिति वाच्यम्। अनेकाधिकरणतासु (तत्तद्धूमत्वावच्छिन्नानेकाधिकरणतासु) धूमवानिति प्रतीतिविषयितासंबन्धकल्पना-पेक्षया अतिरिक्तसामान्यधर्मावच्छिन्नाधिकरणताकल्पनाया एव लघुत्वात्। सामान्या-

भावस्य, अतिरिक्तावयव्यादेः स्वीकर्तृभिः अपीदृशमेव (सामान्यधर्मावच्छिन्नाधिकरणत्वमिव) अनेकविशेषाभावापेक्षयैकसामान्याभावः, अनेकावयवसंयोगापेक्षयैकावयवीत्यादिकमेव) लाघवादिकमङ्गीकृतम्। अन्यथा (एतादृशलाघवास्वीकारे) तत्तत्सिद्धिरपि (तत्तद्विशेषाभावापेक्षया सामान्याभावस्य, तत्तदवयवसंयोगापेक्षयाऽतिरिक्तावयविनश्च सिद्धिरपि) तेषां (अतिरिक्तसामान्याभावातिरिक्तावयव्यादिस्वीकर्तृणां) न स्यात्। विशेषाभावकूटावगाहित्वस्य विलक्षणसंयोगवदवयवविषयकत्वस्य च सामान्याभावप्रतीतिघटादिप्रतीत्योः संभवात्, प्रतिबध्यप्रतिबन्धकभावादेः तत्तद्धर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नप्रकारत्वादिघटितरूपादिभिः अभाववत्ताबोधे प्रमात्वस्य तत्तद्धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिकसंख्यावच्छिन्न (रूपावच्छिन्न) वद्विशेष्यताकप्रकारताकत्वाच्च दोषासंभावादित्यलं पल्लवितेन। प्रतिबध्यप्रतिबन्धकभावश्च तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताशालि बोधं प्रति तद्धर्मातिरिक्तधर्मानवच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताशालिनिश्चयः प्रतिबन्धकः। अभाववत्ताबोधप्रमात्वञ्च तत्तद् (तत्तद्घटत्वादि) धर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिसंख्या (सकलतत्तदभाववन्निष्ठसंख्या) वच्छिन्ना विशेष्यता (तत्तदभाववन्निष्ठाविशेष्यतानिरूपितप्रकारता (तत्तदभावनिष्ठप्रकारता) कत्वं तत्तदभाववद्विषयकज्ञाने)। "तथापि हेतुतावच्छेदकीभूतधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्व्यतिरेकः तथाविधं हेतुतावच्छेदकाश्रयाधिकरणमेव हेतुतावच्छेदकावच्छिन्नाधिकरणेत्यनेन विवक्षितमिति जा० टी०। अत्राधिकरणतात्रयम् हेतुतावच्छेदकसंबन्धावच्छिन्नम् अवच्छेदकाश्रयत्वम्। अवच्छेदकताद्वयञ्च। हेतुतावच्छेदकताघटकसंबन्धावच्छिन्नं ग्राह्यम्। तेन कालिकेन धूमाश्रयह्रदनिष्ठाधिकरणतानवच्छेदकत्व, सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावस्य धूमत्वे सत्त्वेऽपि न ह्रदस्य हेत्वधिकरणत्वप्रसङ्गः। हेतुतावच्छेदकसंयोगेन धूमाश्रयत्वस्य ह्रदेऽसत्त्वात्। तज्ज्ञानं समवायेन ज्ञानाभाव-

विषयकज्ञानत्ववत् विषयितया ज्ञानाभाववत्त्वादित्यत्र हेतुतावच्छेदकज्ञानाभाववत्वस्य स्वाश्रय (ज्ञानाभाव) घटोभयविषयकज्ञाननिष्ठप्रतियोगित्वसंवन्धावच्छिन्नाधिकरणतानवच्छेदकत्वघटितोभयाभावसत्त्वेनोक्तज्ञानस्य (ज्ञानाभावत्वाश्रयघटोभयविषयकज्ञानस्य) हेत्वधिकरणत्वेऽपि तत्र साध्याभावमादाय नाव्याप्तिः। हेतुतावच्छेदकविषयित्वसंवन्धेन स्वाश्रय (ज्ञानाभावघटोभयविषयकसमूहालम्बनज्ञाने) ज्ञानाभावस्यासत्त्वं विषयिताया विलक्षणत्वात्। एवं धूमविषयकज्ञाननिष्ठविषयित्वसंबन्धावच्छिन्नाधिकरणतावच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्योभयस्य सत्त्वेन तादृशोभयाभावस्य धूमत्वे विरहात् पारिभाषिकहेत्वधिकरणत्वाप्रसिद्ध्या वह्निमान् धूमादित्यत्र नाव्याप्तिः। हेतुतावच्छेदकसंयोगसंवन्धेन धूमत्वे तादृशोभयाभावस्य सत्त्वेन पर्वतादौ पारिभाषिकहेत्वधिकरणत्वस्य प्रसिद्धत्वात्। एवं कालिकेन धूमत्वाश्रयस्य मत्स्यादेः संयोगेन जलह्रदेऽधिकरणत्वेऽपि न तस्य ह्रदस्य धूमाधिकरणत्वप्रसङ्गः। हेतुतावच्छेदकताघटकसमवायसंबन्धत्वस्य कालिकेऽसत्त्वात्। तादृशसमवायेन धूमत्वाश्रयधूमस्य संयोगेनाधिकरणत्वं ह्रदे न वर्तते। एवं तज्ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र कालिकेन वह्नित्वविशिष्टविषयकज्ञानस्य न तत्प्रसङ्गः। (हेत्वधिकरणत्वप्रसङ्गः)। कालिके हेतुतावच्छेदकताघटकसंबन्धत्वस्य विरहात्। तस्य समवाये सत्त्वात्। एवं समवायेन धूमत्वविशिष्टधूमहेतुकस्थले वह्निमान् धूमादित्यत्र विषयित्वसंबन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकनिरूपकत्वमादाय ज्ञानस्य न हेत्वधिकरणत्वप्रसङ्गः। हेतुतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नावच्छेदकताकनिरूपकतानिरूपिताधिकरणत्वस्य ज्ञानेऽसत्त्वात्। हेतुतावच्छेदकताद्वये हेतुतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य निवेशात्। अथ तज्ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र स्वाश्रयमहानसीयवह्निविषयकज्ञाननिष्ठाधिकरणतानिरूपितविषयित्वसंबन्धावच्छिन्नमहानसीयवह्नित्वावच्छिन्नाधेयतावच्छेदकत्वस्य हेतुतावच्छेदके वह्नित्वे विरहेण तादृशोभयाभावस्य सत्त्वात् महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावमादायाव्याप्तिः। तत्र वह्निविषयकज्ञानत्वस्य साध्यस्यासत्त्वात्।

अत्र केचित् हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छे-

दके रूपे स्वा (हेतुतावच्छेदकगतरूपा) वच्छिन्नाश्रयाधिकरण यन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयाभावः स एव हेत्वधिकरणत्वेन विवक्षित इति नाव्याप्तिः। हेतुतावच्छेदकवह्नित्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्वे हेतुतावच्छेदकवह्नित्वाश्रयवह्न्यधिकरण - वह्निविषयकज्ञाननिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वेन तादृशोभयाभावस्य सत्त्वात् वह्निविषयकज्ञानमेव तादृशहेत्वधिकरणं तत्र साध्याभावस्यासत्त्वात्। न तु महानसीय वह्निविषयकज्ञानं हेतुतावच्छेदके तादृशोभयत्वस्यैव सत्त्वेन तादृशोभयाभावस्याऽसत्त्वात्। नन्वत्र इदं द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यत्राव्याप्तिः। गुणकर्मान्यवैशिष्ट्यसत्तात्वगतद्वित्वे स्वा (हेतुतावच्छेदकगतरूपा) वच्छिन्नाश्रयाधिकरणगुणनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहात् तादृशोभयाभावस्य सत्त्वेन गुणस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावमादायाव्याप्तिः। गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतौ घटवृत्तित्वविशिष्टविशिष्टसत्तावानित्यादिप्रतीत्यनुरोधेन क्लृप्तघटवृत्तित्वविशिष्टविशिष्टसत्तात्वावच्छिन्नाधिकरणताव्यक्तीनामेव विशिष्टसत्तात्वावच्छिन्नाधिकरणतात्वेन विषयत्वाद् विशिष्टसत्तात्वमात्रावच्छिन्नाधिकरणत्वे मानाभावादिति चेदत्र घटवृत्तित्वविशिष्टविशिष्टसत्तावानिति प्रतीतौ घटवृत्तित्वविशिष्टसत्तावानिति प्रतीत्यनुरोधेन क्लृप्तघटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वस्यैव विषयः। तस्याश्च (घटवृत्तित्वविशिष्टसत्तात्वावच्छिन्नाधिकरणतायाश्च) गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहिन्यां न विषयत्वसंभवः। न चोक्तप्रतीतिः (गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीतिः) निरूपकांशे (गुणकर्मान्यत्वविशिष्टसत्त्वांशे) भासमाने गुणकर्मान्यत्ववैशिष्ट्यांशेऽवच्छेदकत्वावगाहिनीति त्रितय (घटवृत्तित्ववैशिष्ट्य गुणकर्मान्यत्ववैशिष्ट्य सत्तात्वै-

तत्त्रितय) धर्मावच्छिन्नाधिकरणतात्वस्योक्ताधिकरणतायाम् (गुणकर्मान्यत्वविशिष्ट-सत्तात्वावच्छिन्नाधिकरणतायाम्) विरहेण न तस्याः (गुणकर्मान्यत्वविशिष्टसत्ता-त्वावच्छिन्नाधिकरणतायाः) तत्प्रतीति (घटवृत्तित्वविशिष्टविशिष्टसत्तावानिति-प्रतीति) विषयत्वसंभव इति गुणकर्मान्यत्वविशिष्टसत्तावानिति प्रतीत्यनुरोधेन गुणकर्मान्यत्वविशिष्टसत्तात्त्वावच्छिन्ननिरूपकतानिरूपिताधिकरणता ततोऽतिरिक्ता (घटवृत्तित्वविशिष्टविशिष्टसत्तात्वाच्छिन्नाधिकरणतातोऽतिरिक्ता) स्वीकार्येति सामान्यतोऽधिकरणतावच्छेदकत्वस्य हेतुतावच्छेदके गुणकर्मान्यत्वविशिष्टसत्तात्वे सत्त्वेन गुणस्यात्र हेत्वधिकरणत्वेन न धर्तुं शक्यते इति इदं द्रव्यं गुणकर्मान्यत्व-विशिष्टसत्त्वादित्यत्र नाव्याप्तिरिति वाच्यम् । लाघवेनापत्त्यविरहेण चोक्तप्रतीतेः (घटवृत्तित्वविशिष्टसत्तावानिति प्रतीतेः) गुणकर्मान्यत्वेऽवच्छेदकत्वावगाहित्वा कल्पनादिति उक्तविशिष्ट (गुणकर्मान्यत्वविशिष्ट) सत्त्वहेतुके इदं द्रव्यं विशिष्टसत्त्वा-दित्यत्र नाव्याप्तिसंभवः। गुणनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व सामान्यतोऽधिकरणतानिरूपितनिरूपकता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयस्यैव हेतुता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगतरूपे गुणकर्मान्यत्व वैशिष्ट्यसत्तात्वगतद्वित्वे सत्त्वेन तादृशोभयाभावस्यासत्त्वात् गुणस्य हेत्वधिकरणत्वा-भावात् घटवृत्तित्वविशिष्टसत्तावानिति प्रतीतिसाक्षिकाधिकरणत्वेन गुणकर्मान्यत्व-विशिष्टसत्तावानिति प्रतीतिसिद्धगुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणताया अगतार्थत्वात् ।

अपि तु इदं द्रव्यं घटवृत्तित्वविशिष्टसत्त्वादित्यत्राव्याप्तिः। हेतुतावच्छेदक घटवृत्तित्ववैशिष्ट्यसत्तात्वगतद्वित्वे गुणनिष्ठाधिकरणतानिरूपितनिरूपकता वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्वस्याभावेन तादृशोभयाभावस्य तत्र सत्त्वात्। तथा हि घटवृत्तिसत्तावानिति प्रतीतौ तद्घटवृत्तिसत्तावानिति प्रतीत्यनुरोधेन क्लृप्ततद्घट वृत्तिसत्तात्वावच्छिन्नाधिकरणत्वादेरेव घटवृत्तिसत्तात्वावच्छिन्नाधिकरणतात्वेन

विषयत्वम्। एवञ्च तद्घटादिवृत्तिसत्तात्वावच्छिन्नाधिकरणतया घटवृत्तिसत्तात्वावच्छिन्नाधिकरणता गतार्थेति स्वतन्त्रा घटवृत्तिसत्तात्वावच्छिन्नाधिकरणता नास्तीति गुणस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावो वर्तते हेतुतावच्छेदके तादृशोभयाभावस्य सत्त्वादिति प्राज्ञजातीयैः (पण्डितेषु विशेषैः) उच्यते। तदग्राह्यम्। असत्कल्पनायास्तस्या अग्रे स्फुटत्वादिति चेन्न (इदं द्रव्यं घटवृत्तिसत्त्वादित्यत्राव्याप्तिरिति चेन्न)। स्वा ( हेतुतावच्छेदकगतरूपा ) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदताक निरूपकताकाधिकरणताया विवक्षितत्वात् (हेत्वधिकरणत्वेन विवक्षितत्वात्)। तादृशस्य (हेतुतावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक निरूपकताकाधिकरणत्वस्य) तद्घटवृत्तिसत्तात्वावच्छिन्नाधिकरणत्वस्य गुणे विरहात्। तथा च तत्र न हेत्वधिकरणं गुण इति तत्र साध्याभावमादाय नाव्याप्तिः, हेतुसमानाधिकरणाभावस्यैव लक्षणघटकत्वात्। तथा च इदं द्रव्यं घटवृत्तिसत्त्वादित्यत्राव्याप्तिः केषांचिन्मते न शोभते। न च "द्रव्यमेव न गुणादिः" इत्यादिग्रन्थे (द्रव्यं विशिष्टसत्त्वादित्यादौ तादृशाधिकरणं द्रव्यमेव न गुणादिः, विशिष्टसत्तात्वे तन्निष्ठा (गुणनिष्ठा) धिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च सत्त्वादिति ध्येयमिति (जगदीशग्रन्थे) गुणस्याधिकरणत्व (विशिष्टाधिकरणत्व) विरहप्रयोजकतया विशिष्टसत्तात्वे तादृशावच्छेदकत्वद्वय (गुणनिष्ठाधिकरणतानिरूपित निरूपकतावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वद्वय) सत्त्वप्रदर्शनमसङ्गतम्। गुणस्य प्रागुक्तस्वाश्रयाधिकरणत्वविरहादिति वाच्यम् (स्वावच्छिन्ना (हेतुतावच्छेदकगतरूपावच्छिन्ना) नुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक निरूपकताकाधिकरणत्वविरहादिति वाच्यम्)। तद्ग्रन्थस्य यथाश्रुताभिप्रायकत्वात्। यतो विशिष्टसत्तात्वं गुणनिष्ठाधिकरणतानवच्छेदकमतो न गुणादिस्तदधिकरणम्। (विशिष्टसत्त्वाधिकरणम्) यतो द्रव्यनिष्ठाधिकरणतावच्छेदकमतो द्रव्यं विशिष्टसत्ताया अधिकरणमित्यर्थतात्पर्यकत्वाद् वा।

यत्तु घटान्यत्वविशिष्टप्रमेयावच्छिन्नाधिकरणत्वस्य धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकतया (धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतया) तदाश्रयत्वस्य (घटान्यत्वत्वविशिष्टप्रमेयावच्छिन्ना-

धिकरणत्वस्य) ह्रदादौ सत्त्वेन तस्य धूमाधिकरणत्वं तत्र साध्याभावस्य सत्त्वात्, वह्निमान् धूमादित्यत्राव्याप्तिरिति। तन्न। प्रमेयत्वावच्छिन्नावच्छेदकताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य प्रमेयत्वे एव कल्पनात् (न धूमत्वगतैकत्वे) घटान्यत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वव्यक्तीनामेव विषयत्वाच्चेति दोषासंभवात्। तथा च हेतुतावच्छेदकधूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणत्वस्य ह्रदे विरहेण तस्य धूमाधिकरणत्वेऽग्राह्यत्वमिति तत्र साध्याभावमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः। घटान्यत्वविशिष्टप्रमेय इति प्रतीतिविषयत्वस्य घटान्यत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वव्यक्तिषु सत्त्वेऽपि घटान्यत्वविशिष्टधूमत्वावच्छिन्नाधिकरणत्वे धूमत्वगतैकत्वावच्छिन्नानुयोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतात्वस्यासत्त्वात्।

न च महानसीयसाध्यके समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टहेतौ महानसीयवान् महानसीयवह्नेरित्यत्राव्याप्तिः। कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकसमवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणत्वस्य पर्वते सत्त्वेन तत्र साध्याभावस्य सत्त्वात्। कालिकेन महानसीयत्वविशिष्टवह्निमानिति प्रतीतौ पर्वतीयत्वविशिष्टतादृशवह्नित्वावच्छिन्नाधिकरणत्वादेः क्लृप्तस्यैव विषयत्वात्। (कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकताकसमवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वादेः क्लृप्तस्यैव विषयत्वात्)। समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टवानिति प्रतीतौ समवायेन तत्तन्महानसीयविशिष्टतादृश (कालिकसंबन्धावच्छिन्न) वह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणत्वानां क्लृप्तानां विषयत्वादिति वाच्यम्। स्वनिरूपितनिरूपकतावच्छेदकतावत्त्वसंबन्धेन (स्व अधिकरणता) हेतुतावच्छेदकतात्वव्यापकत्वस्योक्ताधिकरणतायां (हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतायां) विवक्षितत्वात्। अवच्छेदकतावत्ता च स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वसामानाधिकरण्योभयसंबन्धेन। तथा च स्व (अधिकरणता) निरूपितनिरूपकतावच्छेदकतावत्त्वसंबन्धेन हेतुतावच्छेदकतात्वव्यापिका या स्वा

(हेतुतावच्छेदकगतरूपा) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताधिकरणता तद्वद् वृत्तिप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदक साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति फलितम्। तथा च नोक्तदोषः। समवायसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतायां कालिकसंबन्धा वच्छिन्न वह्नित्वनिष्ठावच्छेदकतायां च हेतुतावच्छेदकतायां कालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठायाः समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठायाश्च निरूपकतावच्छेदकतायाः स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य सामानाधिकरण्योभयसंबन्धेनासत्वात् स्वनिरूपितनिरूपकतावच्छेदकतावत्त्वसंबन्धेन साधिकरणता न हेतुतावच्छेदकतात्वव्यापिकेति तामधिकरणतामादाय तत्र नाव्याप्तिः संभवतीति। न चैवं हेत्वधिकरणतायां हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक निरूपकतानिरूपितत्वनिवेशनं व्यर्थमिति वाच्यम्। इदं द्रव्यं गुणकर्मान्यत्वविशिष्ट सत्त्वादित्यत्र द्रव्यान्यत्वविशिष्टसत्त्वाधिकरणगुणनिष्ठाधिकरणता स्वनिरूपितनिरूपकतावच्छेदकतावत्त्वसंबन्धेन हेतुतावच्छेदकगुणकर्मान्यत्वविशिष्टसत्तात्वनिष्ठावच्छेदकता व्यापिका तादृशाधिकरणतावद् गुणनिष्ठसाध्याभावमादायाव्याप्तेः। हेतुतावच्छेदकतायां सा निरूपकतावच्छेदकता स्वावच्छेदकसंबन्धावच्छिन्नत्व स्वसामानाधिकरण्योभयसंबन्धेन वर्तते। हेत्वधिकरणतायां हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितनिरूपकतानिरूपितत्वस्य निवेशे तु नोक्तदोषः। हेतुतावच्छेदकगुणकर्मान्यत्ववैशिष्ट्यसत्तात्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकता स्वरूपसंबन्धावच्छिन्नगुणकर्मान्यत्ववैशिष्ट्यनिष्ठा स्वरूपसंबन्धावच्छिन्ना सत्त्वत्वनिष्ठा च। निरूपकतावच्छेदकता च स्वरूपसंबन्धावच्छिन्ना द्रव्यान्यत्ववैशिष्ट्यनिष्ठा सत्तात्वनिष्ठा च तस्याः सामानाधिकरण्यं हेतुतावच्छेदकतायां वर्तते इति गुणनिष्ठाधिकरणता न स्वनिरूपितनिरूपकता वच्छेदकतावत्त्वसंबन्धेन हेतुतावच्छेदकतात्वव्यापिका किन्तु द्रव्यनिष्ठाधिकरणतैव व्यापिका तादृशाधिकरणतावति द्रव्ये न साध्याभावो वर्तते। हेतुतावच्छेदकसंबन्धः समवायः। व्यापकतावच्छेदकसंबन्धः स्वरूपः।

न चैवमपि वह्नित्वविशिष्टज्ञानत्वसाध्यके समवायेन वह्नित्वविशिष्ट

हेतुके इदं ज्ञानं समवायेन वह्नित्वविशिष्टविषयकज्ञानत्ववत् विषयितया समवायेन वह्नित्वविशिष्टवत्त्वादित्यत्र कालिकसंवन्धावच्छिन्नसमवायसंवन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतामादायाव्याप्तिः। वह्नित्वे द्विविधावच्छेदकत्वस्य सत्त्वेऽपि तद् (वह्नित्व) गतैकत्वस्यैव तादृशनिरूपकतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकत्वादिति वाच्यम्। (वह्नित्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिककालिकसमवायोभयसंवन्धावच्छिन्नावच्छेदकताकनिरूपकतानिरूपिताधिकरणतावति ज्ञाने साध्याभावो वर्तते। साधिकरणता च स्वनिरूपितनिरूपकतावच्छेदकतावत्त्वसंवन्धेन समवायसंवन्धावच्छिन्नहेतुतावाच्छेदकवह्नित्वनिष्ठावच्छेदकतायां वर्तते। तत्र स्वरूपसंवन्धेन हेतुतावच्छेदकतात्वमपि वर्तते इति साऽधिकरणता हेतुतावच्छेदकतात्वव्यापिका भवति। स्वावच्छेदकसमवायसंवन्धावच्छिन्नत्व स्वसामानाधिककरण्ययोः हेतुतावच्छेदकतायां सत्त्वादिति वाच्यम्)। यथा तार्णवह्नित्वावच्छिन्न, वह्नित्वतार्णत्वावच्छिन्ननिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतार्णवह्नित्व, वह्नित्वतार्णत्वगतयोः द्वित्वयोः अपेक्षाबुद्धिविषययोर्भेदः। तथैव केवलसमवायसंवन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वह्नित्वगतैकत्वम्। कालिकसमवायोभयसंवन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं वह्नित्वगतं द्वित्वं कालिकसंवन्धावच्छिन्नघटितानुयोगितावच्छेदकवह्नित्वमित्येकं समवायसंवन्धावच्छिन्नघटितानुयोगितावच्छेदकं वह्नित्वमित्येकमित्यपेक्षाबुद्धिविषयीभूतं द्वित्वं वह्नित्वगतं द्वित्वमेवेति उभयसंबन्धावच्छिन्नावच्छेदकताकनिरूपकतावच्छेदकतायाः तादृशोभयसंबन्धेन हेतुतावच्छेदकत्वावृत्तित्वेन तादृशनिरूपकताधिकरणतायाः स्वनिरूपितनिरूपकतावच्छेदकतावत्वसंबन्धेन हेतुतावच्छेदकत्वाव्यापकत्वात्। समवायेन द्वित्वं यथा घटाकाशौ इत्यत्र घटे आकाशे च वर्तते। अतो द्वित्ववान् घट इति प्रयोगः द्वित्ववान् आकाश इति च। तथैव समवाय घटितसामानाधिकरण्येन स्वरूपेण वह्नित्वे द्वित्वं बोध्यमिति केचिद् वदन्ति।

परे तु प्रकृतहेतुतायां स्ववृत्तिनिरूपकताकाधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्व, "सामान्यतः" अधिकरणतानिरूपितनिरूपकतावत्त्वोभयाभावः स

एव हेत्वधिकरणपदार्थत्वेन विवक्षितः। निरूपकतावत्ता च स्ववृत्तित्वसंबन्धेन। स्ववृत्तित्वञ्च सर्वं स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धेन। वै० स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्ववृत्तित्वेषु यदुपादेयं तत्संबन्धेन। तथा च न कोऽपि दोषः। संबन्धव्यावृत्तिस्तु प्रायशो विषयितासंबन्धेन। हेतुताऽव्याप्तिवारणरूपाऽनुसन्धेयेति। एवञ्चैकत्वादेः पर्याप्त्यनभ्युपगमेऽपि न क्षतिः। न वा वह्नित्वमात्रगतद्वित्वाभावेऽपि चोक्तदोषः। (समवायेन वह्नित्वविशिष्टस्य विषयितया हेतुत्वे समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वसाध्यकेऽव्याप्तिरूपदोषो नेति प्राहुः।) वह्निमान् धूमादित्यत्र धूमत्वावच्छिन्नहेतुतायां स्वा (धूमत्वा) श्रय पर्वतीयधूमनिष्ठानिरूपकतावदन्यत्वस्य सत्त्वेऽपि सामान्यतोऽधिकरणताकनिरूपकतावत्त्वाभावेन तादृशोभयाभावस्य तत्र सत्त्वात्। स्व (पर्वतनिष्ठाधिकरणता) निरूपितनिरूपकतावच्छेदकता पर्वतीयधूमत्वनिष्ठा स्वैव तादृशप्रसिद्धचतुष्टयसंबन्धेन भवति। तदन्यत्वस्य धूमत्वभिन्नघटत्वादिनिष्ठावच्छेदकता तदनिरूपितत्वं हेतुतायां वर्तते। सामान्यधर्मावच्छिन्नाधिकरणत्वानभ्युपगमेन पर्वतनिष्ठाधिकरणतानिरूपितनिरूपकतावत्त्वाभावेन तादृशोभयाभावस्तत्र (धूमत्वावच्छिन्नहेतुतायां) वर्तते। अतो हेत्वधिकरणं पर्वत इति बोध्यम्। धूमवान् वह्नेरित्यत्र वह्निनिष्ठहेतुतायां हेत्वधिकरणायोगोलकनिष्ठाधिकरणतानिरूपित निरूपकतावदन्यत्वसामान्यतोऽधिकरणतानिरूपितनिरूपकतावत्त्वोभयाभावो वर्तते इति हेत्वधिकरणं भवत्ययोगोलकं तत्र साध्याभावो वर्तते इति नातिव्याप्तिः।

इदन्तु बोध्यम्। व्याप्तिज्ञाननिष्ठ (अनुमितिनिरूपित) कारणता च नोक्तोभयाभावादि (हेतुतावच्छेदकधर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्व सामान्यतोऽधिकरणतावच्छेदकत्वोभयाभावादि) विषयिताघटितरूपेण। किन्तु हेतुतावच्छेदकावच्छिन्नविषयितानिरूपिताधिकरणत्वविषयितानिरूपिताधिकरणविषयितानिरूपितवृत्तित्वविषयितानिरूपिताभावविषयितानिरूपित प्रतियोगित्वविषयितानिरूपितावच्छेदकत्वविषयितानिरूपिताभावविषयितानिरूपितसाध्यतावच्छेदकविषयितानिरूपितसाध्यविषयितानिरूपिताधिकरणविषयितानिरूपित वृत्तित्वविषयितानिरूपितहेतुविषयिताकत्वेन। तथैव व्याप्तिज्ञाने अनुमितिकारणत्वस्यानुव्यवसीयमान-

त्वात्। संयोगादिना धूमवद्वृत्त्यभावप्रतियोगितानवच्छेदकत्वग्रहे धूमवत्त्वस्य धूमत्वावच्छिन्नाधिकरणतात्वेनावगाहमानं विषयितया धूमवद् वृत्यभावप्रतियोगितानवच्छेदकत्वग्रहे च धूमत्वेतरधर्मानवच्छिन्नाधिकरणतात्वेन धूमवत्त्वस्यावगाहनान्न प्रमात्वस्यानुपपत्तिः। उक्तोभयाभावस्य शब्दानुगमानुरोधेन व्याप्तिलक्षण एव हेत्वधिकरणत्वपरिचायकतया प्रवेश इति।

अथानयोः (संयोगादिसंबन्धविषयित्वसंबन्धहेतुकस्थलव्याप्तिज्ञानयोः) एकमनुसृत्य विचारप्रसङ्गः। तत्र स्वा(हेतुतावच्छेदकगतरूपा)वच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकयन्निष्ठाधिकरणत्वं तादृशावच्छेदकताक (हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक) निरूपकताकाधिकरणतावद्यन्निष्ठाधिकरणत्वापेक्षया लघुभूतं कुतो न निवेशितमिति पर्यनुयोगे (प्रश्ने) प्रतिविधानम् (समाधानम्) उच्यते कैश्चित्। तथा हि तादृशाधिकरणत्वस्य (हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकाधिकरणत्वस्य) यत्पदार्थपरिचायकतयैव प्रवेशेनाभावकोटावप्रवेशात् हेतुतावच्छेदके तादृशोभयाभावकोटावप्रवेशात्। अस्मत्पक्षे लाघवो युष्मत्पक्षे च तादृशावच्छेदकताकनिरूपकताकत्वस्य परिचायकत्वस्यासंभवात्। (स्वावच्छिन्ना (हेतुतावच्छेदकरूपावच्छिन्ना) नुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकाधिकरणत्वस्य यत्पदार्थे निवेशवादिमते) तादृशावच्छेदकताकनिरूपकताकत्वस्य परिचायकत्वस्य (उभयाभावपरिचायकत्वस्य) असंभवात्। पर्वतादिनिष्ठतदधिकरणता (हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकाधिकरणता) घटितोभयाभाव प्रतियोगितावच्छेदकत्वस्य लाघवेन प्रतियोग्यंशे भासमाने तदधिकरणताघटितोभयाभावस्यैवकल्पनीयतया पर्वतादीनां तादृशोभयाभावप्रतियोगिता परंपरावच्छेदकत्वरूप हेत्वधिकरणत्वानुपपत्तेरिति। तन्न महानसानुयोगिकसंयोगेन धूमहेतुके इदं महानसीयवह्निमत् महानसानुयोगिकसंयोगेन धूमादित्यत्र महानसनिष्ठमहानसानुयोगिकसंयोगसंबन्धावच्छिन्नाधिकरणताघटितोभयाभावप्रतियोगितावच्छेदकत्वस्य महानसवृत्तित्वाघटितोभयाभावत्वे एवं कल्पनीयतया महानसस्य हेत्वधिकरणत्वानुपपत्त्या, गुरुधर्मस्य

प्रतियोगितावच्छेदकत्वाङ्गीकारेणैवंतदुक्तिरित्यस्य वाच्यत्वात्। तादृशाभावीय (तादृशोभयाभावीय) प्रतियोगितानिरूपितपरंपरावच्छेदकतावदधिकरणत्वस्यैव (हेत्वधिकरणत्वेन) वा विवक्षितत्वादिति। अत्र वदन्ति। धूमवानितिप्रतीतौ पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वादेर्न विषयत्वं किन्तु धूमत्वाश्रयनिरूपिताधिकरणतात्वेन ततोऽपि (पर्वतीयधूमाद्यधिकरणतातोऽपि) अवश्यक्लृप्तेषु तद्व्यक्ति निरूपिताधिकरणत्वेष्वेव। तथा च धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकाधिकरणत्वाप्रसिद्धेः स्वावच्छिन्ना (हेतुतावच्छेदकरूपावच्छिन्ना) श्रयाधिकरणत्वमेव विवक्षणीयम्। न च इदं द्रव्यं घटवृत्तिसत्त्वादित्यत्र प्रागुक्तरीत्या (विशिष्टः शुद्धान्नातिरिच्यते इति रीत्या) अव्याप्तिः, हेत्वधिकरणे गुणे साध्याभावस्य सत्त्वादिति वाच्यम्। तद्घटवृत्तिसत्तावानिति प्रतीतौ तद्घटवृत्तिसत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वस्य तद्वृत्तिसत्तावानिति प्रतीत्यनुरोधेन क्लृप्तस्य विषयत्वात् प्रयोजनाभावेन घटत्वे निरूपकतावच्छेदकत्वाकल्पनात्। तदधिकरणत्वस्य (घटनिरूपितवृत्तित्वसत्तात्वोभयधर्मावच्छिन्नाधिकरणत्वस्य) घटवृत्तिसत्तावानित्यत्र विषयत्वासंभवात्। तथा च तद्वृत्तिसत्तात्वे सामान्यतोऽधिकरणतावच्छेदकत्व, गुणनिष्ठाधिकरणतानवच्छेदकत्वोभयस्यैव हेतुतावच्छेदके सत्त्वेनात्र गुणस्य हेत्वधिकरणत्वाभावात्। न च तद्घटवृत्तिसत्ताहेतुके इदं द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्रैवाव्याप्तिः। हेतुतावच्छेदके गुणनिष्ठाधिकरणतान वच्छेदकत्वस्य सत्त्वेऽपि सामान्यतोऽधिकरणतावच्छेदकत्वाभावेन तादृशोभयाभावस्य सत्त्वेन गुणस्य हेत्वधिकरणत्वमिति गुणे साध्याभावस्य सत्त्वादिति वाच्यम्। हेतुतावृत्ति यत्किञ्चिदभाव (हेत्वभाव) प्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपसामान्यस्यैव विवक्षितत्वात्। हेतुतावृत्तियत्किञ्चिदभावीय (हेत्वभावीय) प्रतियोगितावच्छेदकताविशिष्ट हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपसामान्यावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावो हेतुतावच्छेदके तदेव हेत्वधिकरणमित्यस्य विवक्षि-

तत्वात्। प्रतियोगितायाः हेतुतायां वृत्तित्वं च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वसंवन्धेन। प्रतियोगितावच्छेदकतावैशिष्टयञ्च हेतुतावच्छेदकतायाम् स्वसामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंवन्धेन। वृत्तिता च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन। तथा च इदं द्रव्यं तद्घटवृत्ति सत्त्वादित्यत्र हेतुतानिरूपित घटत्वनिष्ठावच्छेदकतायाः उक्तावच्छेदकत्ववैशिष्टयविरहेण (हेतुतावृत्त्यभावीय "हेत्वभावीय" प्रतियोगितावच्छेदकतावैशिष्टयविरहेण) घटवृत्तिसत्त्वाभावप्रतियोगितावच्छेदकता लाघवात् तद्व्यक्तिवृत्तिसत्तात्वे न तु घटवृत्तिसत्तात्वे गौरवात् तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके तद्व्यक्तिवृत्तिसत्तात्वावच्छिन्नाधिकरणतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकत्वसत्त्वात् न गुणपटादीनामधिकरणत्वप्रसङ्गः। (हेतुतावृत्तिहेत्वभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके तद्व्यक्तिवृत्तिसत्तात्वगतरूपे तद्व्यक्तिवृत्ति सत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावद् यन्निष्ठाधिकरणता (गुणपटादिनिष्ठाधिकरणता) निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य चोभयस्य हेतुतावच्छेदकतद्व्यक्तिवृत्तिसत्तात्वगतरूपे सत्त्वेन तदुभयाभावस्यासत्त्वात् न गुणपटादीनां हेत्वधिकरणत्वप्रसङ्गः। तेन गुणे पटे वा साध्याभावमादाय नाव्याप्तिप्रसङ्गः।

सामान्यपदप्रवेशात् (प्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसामान्यावच्छिन्नानुयोगितेत्यत्र सामान्यपद निवेशात्) घटवृत्तिसत्त्वाभावप्रतियोगित्वमादाय (हेतुतावृत्तिघटवृत्तिसत्त्वाभावमादाय) एतद् घटस्य न हेत्वधिकरणत्वप्रसङ्गः। इदं द्रव्यं घटवृत्तिसत्त्वादित्यत्र हेतुतायां घटवृत्तिसत्त्वाभावमादाय एतद्घटस्य न हेत्वधिकरणत्वप्रसङ्गः। एवञ्च हेतुतावच्छेदकगतरूप, स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकाधिकरणत्वप्रवेशेऽपि तद्घटवृत्तिसत्ताहेतुके इदं द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्र तादृशा-

धिकरणत्वाप्रसिद्ध्या (सामान्यतोऽधिकरणत्वाऽप्रसिद्ध्या) दोषतादवस्थ्येन (इदं द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्राव्याप्तितादवस्थ्येन) तत्स्थलीय दोषवारणप्रयोजनकत्वस्य तत्रोक्तौ (इदं द्रव्यं तद्घटवृत्तिसत्त्वादित्यत्राव्याप्तिवारणाय हेतुतावृत्ति यत्किञ्चिदभावीय (हेत्वभावीय) प्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्ति प्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावो हेतुतावच्छेदके तदेव हेत्वधिकरणमित्युक्तौ निगृहीत एव वक्ता स्यात्। तदुक्तावपि तत्राव्याप्तिवारणं न भवति यदर्थमुच्यते तत्फलमेव जायते तद्वक्ता निगृहीत एव स्यात् बुद्ध्या नोच्यतेऽनेनेति मध्यस्थो जानाति। न च कम्बुग्रीवादिमद्धेतुके अयम् अवयविमान् कम्बुग्रीवादिमत्वादित्यत्राव्याप्तिः। प्रतियोग्यंशे भासमानस्यैवातिप्रसङ्गानापादकस्याप्यवच्छेदकत्वाभ्युपगमात्। (न च हेतुतावृत्ति यत्किञ्चिदभाव (हेत्वभाव) प्रतियोगितावच्छेदकताविशिष्टहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपसामान्यावच्छिन्नानुयोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावद् यन्निष्ठाधिकरणता निरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावो हेतुतावच्छेदके तदेव हेत्वधिकरणमिति विवक्षणे गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन हेतुतायां किञ्चिदभाव (हेत्वभाव) प्रतियोगितावच्छेदकता विशिष्टहेतुतावच्छेदकता कम्बुग्रीवादिगुरुधर्मेऽसत्त्वेन तद्घटितोभयाभावस्य हेतुतावच्छेदकेऽप्रसिद्ध्या अयम् अवयविमान् कम्बुग्रीवादिमत्वादित्यत्राव्याप्तिरिति वाच्यम्। प्रतियोग्यंशे भासमानस्यैवातिप्रसङ्गाद्यनापादकस्यापि गुरुधर्मस्य कम्बुग्रीवादेरपि कम्बुग्रीवादिमान् नास्तीति प्रतीत्या प्रतियोगितावच्छेदकत्वाभ्युपगमात्।

अथ प्रतियोग्यंशे भासमानस्यापि अवच्छेदकत्वम् (प्रतियोगितावच्छेदकत्वम्) अयम् अवयविमान् कम्बुग्रीवादिमत्त्वादित्यत्राव्याप्तिवारणाय, इदं द्रव्यं घटवृत्ति सत्त्वादित्यत्र चाव्याप्तिवारणाय गुरुधर्मस्यापि निरूपकांशे भासमानधर्ममात्रस्य प्रतियोगितावच्छेदकत्वमङ्गीकार्यम्। तत्र (एवं स्वीकारे) विशिष्टसत्त्व-

हेतुके इदं द्रव्यं घटवृत्तिसत्त्वादित्यादौ घटवृत्तित्वविशिष्टविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणत्वावगाहितया विशिष्टसत्तावानिति प्रतीत्युपपादनस्य शक्यतया प्रागुक्तरीत्या (विशिष्टः शुद्धान्नातिरिच्यते इति रीत्या हेत्वधिकरणगुणवृत्तिसाध्याभावमादाय) अव्याप्तिवारणाय स्वावच्छिन्नाधिकरणत्वनिवेश आवश्यकः (तथा च नोक्ताव्याप्तिः, विशिष्टसत्तावच्छिन्नाधिकरणत्वस्यातिरिक्तस्य स्वीकारेण गुणादेः हेत्वनधिकरत्वामिति, तत्र साध्याभावमादायाव्याप्तेरनवसरः। हेत्वधिकरणे प्रतियोगिव्यधिकरणसाध्याभावोऽव्याप्तिप्रयोजकः) इति चेत्। पर्वतीयत्वादिविशिष्ट धूमत्वावच्छिन्नाधिकरणत्वेत्यादि ग्रन्थानुरोधेन, उक्ताव्याप्तीनां (इदं द्रव्यं घटवृत्ति सत्त्वात्, अयमबयविमान् कम्बुग्रीवादिमत्त्वादित्यादावव्याप्तीनां) वारणाय च, किमित्यनतियुक्तिकपक्ष आश्रियते द्रव्यमेव (विशिष्टसत्त्वस्याधिकरणम्) न गुणादिरित्यादि ग्रन्थस्वारसिकार्थसिद्धये उक्तदोषाणाम् (द्रव्यं विशिष्टसत्त्वादित्यादाव व्याप्तिरूपदोषाणाम्) निरासाय च या प्रतीतिः अधिकरणतानिरूपकांशे भासमान धर्मस्यावच्छेदकत्वं विना नोपपद्यते सा (प्रतीतिः) अवच्छेदकत्वं तत्र (गुर्वादिधर्मे) अवगाहमाना तत्संसर्गतया पर्याप्तिमेवावगाहते। अवच्छेदकत्वावगाही अत्यन्ताभाव प्रतीतिवद्, यन्निरूपकांशे भासमानधर्मे अवच्छेदकत्वं विनाऽपि उपपद्यते तस्याः (प्रतीतेः) अवच्छेदकत्वावगाहित्वस्यापि अप्रामाणिकतया पर्याप्त्यवगाहित्वं तु सुतराम् अप्रामाणिकम्, ध्वंसप्रतीतिवद्। तथा सति पर्वतीयधूमवानित्यादिप्रतीतौ पर्वतीयधूमत्वावच्छिन्नमधिकरणत्वम् तादृशाश्रय (पर्वतीयधूमत्वाश्रय) निरूपितम् अधिकरणत्वं वा विषय इत्यन्यदेतत्। धूमवानित्यत्र तु (प्रतीतौ तु) धूमनिरूपिताधिकरणत्वस्यैव विषयत्वम् (न तु धूमत्वावच्छिन्ननिरूपितस्य सामान्यधर्मावच्छिन्नाधिकरणत्वस्य विषयत्वम्) विशिष्टसत्तावानित्यस्याः प्रतीतेः अवच्छेदकत्वं बिना अनुपपन्नायाः विशिष्टसत्तात्वपर्याप्तावच्छेदकतावगाहित्वमेव। गुरुधर्मावच्छिन्नाधिकरणत्वमपि स्वीक्रियते एव। उक्तग्रन्थे (पर्वतीयत्वादिविशिष्ट धूमत्वावच्छिन्नेत्यादिग्रन्थे) अवच्छिन्नपदम् आश्रयपरमेव न तद्ग्रन्थस्यासङ्गतिरित्येतत्पक्ष एव ततः सयुक्तिकर आश्रयितव्यः। तत्र न बहुतरकुसृष्टिकल्पनावकाशोऽपीति गृहाण। एवं च समवाये रूपादिहेतुके इदं द्रव्यं रूपवत्वादित्यत्र रूपत्वनिरूपित

(प्रतियोगिक) समवायावच्छिन्नाधिकरणतावच्छेदकत्वस्याप्रसिद्ध्या अव्याप्तिः स्यादिति (साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना या प्रतियोगितावच्छेदकता तदवच्छेदकताकनिरूपकताकाधिकरणत्वस्याप्रसिद्ध्याऽव्याप्तिः स्यादिति) तादृशाधिकरणतावन्निष्ठत्वेनाधिकरणताप्रवेशः। तथा च तादृशविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणतावच्छेदकत्वस्य प्रसिद्ध्या नाव्याप्तिः। (रूपत्वप्रतियोगिक समवायस्य विशेषसंसर्गत्वेनास्वीकारात्। समवायरूपसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वस्य घटवानित्यत्र प्रसिद्ध्या तादृशावच्छेदकताकप्रतियोगिताकाधिकरणस्याप्रसिद्ध्या द्रव्यं रूपवत्त्वादित्यत्र नाव्याप्तिः। यद्वा यत्पदार्थे स्वा (हेतुतावच्छेदकरूपा) वच्छिन्नाश्रयनिरूपिताधिकरणत्वस्य अधिकरणत्वे च तद्वृत्तित्वस्योक्त्या स्वाश्रयावच्छिन्ननिरूपितत्वमेव विवक्षितं तादृश्या चोक्तव्यङ्ग्या चिन्तामणिदीधित्यादावेव भवितव्यं नान्यत्र विशेषं नावकल्पयाम इति मार्मिकाः।

एतेन स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकहेतुतावच्छेदकसंबन्धावच्छिन्नयन्निष्ठाधिकरणत्वं विवक्षणीयं तावताऽपि वह्निमान् धूमादित्यत्र ह्रदस्य हेत्वधिकरणत्ववारणसंभवात् यत्पदार्थे स्वावच्छिन्नानुयोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकाधिकरणत्वं न वाच्यमित्यपि समाहितम्। अथ विशिष्टाभावमुपेक्ष्योभयाभावनिवेशनं कथं कृतमिति न वाच्यम्। महानसं महानसानुयोगिकसंयोगेन धूमादित्यत्र विशिष्टाभावस्याप्रसिद्ध्या (हेतुतावच्छेदके धूमत्वे धर्मे स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानवच्छेदकत्वविशिष्टसामान्यतोऽधिकरणतावच्छेदकत्वस्याप्रसिद्ध्या) अव्याप्त्यापत्तेः। मम तु सामान्यतोऽधिकरणतावच्छेदकत्वस्य विशिष्टसत्तात्वे प्रसिद्ध्या तादृशोभयाभावस्यात्र धूमत्वे प्रसिद्धिः। सामान्यधर्मावच्छिन्नाधिकरणत्वाप्रसिद्ध्या महानसानुयोगिकसंयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नाधिकरणत्वस्याप्रसिद्धेः।

ननु हेतुतावच्छेदकगतरूपे स्वाश्रयाश्रयाधिकरणीभूतयनिष्ठाधिकरणता निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-

नुयोगितानवच्छेदकत्वगतद्वित्वाश्रयाधिकरणत्वं स एव हेत्वधिकरणपदार्थं इत्येव वाच्यं लाघवात् । वह्निमान् धूमादित्यत्र हेतुतावच्छेदकधूमत्वगतैकत्वे पर्वत-निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वगतद्वित्वं बुद्धिविशेषविषयत्वरूपं तदा-श्रयः तादृशानुयोगितावच्छेदकत्वतादृशानुयोगितानवच्छेदकत्वोभयं तदधिकरणत्वं हेतुतावच्छेदकगतरूपे वर्तते। न च तज्ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र विषयित्वसंबन्धावच्छिन्न सामान्यतोऽधिकरणतानिरूपितनिरूपकता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वाप्रसिद्ध्या (तादृश द्वित्वस्याप्रसिद्धेः) अव्याप्तिरिति वाच्यम्। घटत्वादौ तत्सौलभ्यत्वात्। घटत्वनिष्ठा-नुयोगितावच्छेदकत्वस्य तदेकत्वे तद्व्यक्तित्वे वा कल्पनीयत्वात्। तथा च हेतुतावच्छे-दकवह्नित्वगतैकत्वे स्वाश्रय (वह्नित्वाश्रय) वह्न्यधिकरणतज्ज्ञाननिष्ठाधिकर-णता निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितानवच्छेदकत्वगतद्वित्वं तदाश्रयत्वस्य (तादृशद्वित्वाश्रयत्वस्य) वह्नित्वगतैकत्वे सत्त्वात्; हेत्वधिकरणं तज्ज्ञानं प्रसिद्ध्यतीति नोक्तदोषः। अन्यथा (घटत्वनिष्ठा-नुयोगितावच्छेदकत्वस्य घटत्वगतैकत्वे तद्व्यक्तित्वे वाऽस्वीकृते) उभयाभावकल्पेऽपि नित्यज्ञानानुयोगिकविषयितया घटहेतुके इदं ज्ञानं घटविषयकज्ञानत्ववत् नित्यज्ञाना नुयोगिकविषयितासंबन्धेन घटवत्त्वादित्यत्र नित्यज्ञाननिष्ठाधिकरणतानिरू-पित निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेकत्वाप्रसिद्ध्या तादृशोभयाभावस्याप्रसिद्धेरव्याप्त्यापत्तेरिति चेन्न । सामान्यतोऽधिकर-णता निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वा भावस्य (केवलान्वयित्वेन) गगनाभावरूपस्य (समनियताभावानां लाघवेनैक्यात्) वह्नित्वरूपहेतुतावच्छेदकगतैकत्वादौ द्वित्वेन (तादृशानुयोगितावच्छेदकत्व तादृशानु-योगितानवच्छेदकत्वगत (बुद्धिविशेषविषयत्वरूपद्वित्वेन) सत्तया तादृशविषयिता-सबन्धेन वह्निहेतुकसद्धेतौ इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितासंबन्धेन

वह्निमत्वादित्यत्र महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेः । महानसीयवह्निविषयकज्ञाननिष्ठसामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व, स्वाश्रयाश्रयाधिकरणता निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वगत–द्वित्वाश्रयाधिकरणत्वस्य हेतुतावच्छेदकवह्नित्वगतैकत्वे सत्त्वेन महानसीय बह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावमादाय तत्राव्याप्त्यापत्तेः। तादृशावच्छेदकतात्वावच्छिन्नाधिकरणत्व (स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाधिकरणत्व) तादृशाभावत्वावच्छिन्नाधिकरणत्व (सामान्यतोधिकरणता निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्व) गतद्वित्वाश्रयाधिकरणत्वस्य (हेतुतावच्छेदकगतरूपे) विवक्षणेऽपि उक्तदोष (इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्राव्याप्तिरूपदोष) तादवस्थ्यमेव। नायमलीकप्रतियोगिताकाभावः। विषयितायाः हेतुतावच्छेदकसंबन्धत्वस्थले प्रतियोगिनः प्रसिद्धेः। तादृशाधिकरणताया अपि (सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया अपि) गगनाभावनिष्ठायाः (सामान्यतोऽधिकरणतानिरूपित निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावस्य केवलान्वयित्वेन सर्वत्र सत्त्वेन तदधिकरणत्वस्य सर्वत्र सत्त्वात्। तदधिकरणत्वं गगनाभावे वर्तते। अधिकरणतायाः लाघवेनाधिकरणस्वरूपत्वमिति तदधिकरणत्वं गगनाभावरूपम्) द्वित्वेन (तादृशानुयोगितावच्छेदकत्वाधिकरणत्व तादृशानुयोगितावच्छेदकत्वाधिकरणत्वगतबुद्धिविषयत्वरूपद्वित्वेन) तदधिकरणतायाः द्वित्वाश्रयाधिकरणतायाः, हेतुतावच्छेदकवह्नित्वगतैकत्वे सत्त्वात्। तथा च तादृशहेत्वधिकरणं महानसीयवह्निविषयकज्ञानं तत्र साध्याभावमादाय इदं ज्ञानं वह्निविषयकज्ञानत्ववत्। विषयितया वह्निमत्वादित्यत्राव्याप्तेस्तादवस्थ्यम्। उभयाभावनिवेशे च तत्कोटौ (उभयाभावकाटौ) तादृशावच्छेदकत्व, तादृशावच्छेदकत्वाभावयोः (हेतुतावच्छेदक-

गतरूपे स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावयोः) तत्त्वेनैव प्रवेशेन (तादृशाधिकरणतात्वेन प्रवेशेन) तयोः (अधिकरणत्वयोः) अधिकरणरूपत्वेन (अधिकरणात्मकत्वेन) दोषस्य (इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र महानसीयवह्निविषयकज्ञानस्योक्तरीत्या हेत्वधिकरणत्वेन तत्र साध्याभावमादाय या अव्याप्तिर्दत्ता तस्याव्याप्तिदोषस्य न संभवः। हेतुतावच्छेदकवह्नित्वगतैकत्वे महानसीयवह्निज्ञाननिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य चोभयस्य सत्त्वेन तादृशोभयाभावस्यासत्त्वात्।

उभयाभावस्य केवलान्वयित्वेन समनियताभावानां लाघवेनैक्यमिति तदुभयाभावस्य गगनाभावरूपत्वं गगनाभावस्य च हेतुतावच्छेदकवह्नित्वगतैकत्वे सत्त्वेन महानसीयवह्निविषयकज्ञानस्य इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्र हेत्वधिकरणत्वं दुर्वारमिति। तत्र साध्याभावमादायाव्याप्तिरिति वाच्यम् उभयाभावस्य तत्रोभयाभावत्वेन प्रवेशात्। तादृशोभयवति हेतुतावच्छेदकरूपे तादृशोभयाभावत्वेन तादृशोभयाभावस्य सत्त्वायोगात्। गगनाभावत्वेन तत्र (हेतुतावच्छेदकगतरूपे) उभयाभावस्य सत्त्वेऽपि तादृशोभयाभावस्य तादृशोभयाभावत्वेन (तादृशोभयवति हेतुतावच्छेदके) सत्त्वायोगात्।

वस्तुतस्तु तादृशद्वय (हेतुतावच्छेदकगतरूपे स्वाश्रयाश्रयाधिकरणतानिरूपित निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावद्वय) वृत्तित्वेन द्वित्वस्य प्रवेशे घटघटान्यगतद्वित्वस्य सर्वत्र सत्त्वेन तादृशोभयवृत्तितया तदाश्रयत्वस्य (तादृशद्वित्वाश्रयत्वस्य) रूपमात्रे विषयितया वह्न्यादिहेतुकस्थले इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितयावह्निमत्वादित्यत्र महानसीयवह्निविषयकज्ञानादेरपि हेत्वधिकरणत्वप्रसङ्गस्तत्र साध्याभाव-

मादायाव्याप्तिः स्यात्। अतस्तादृशद्वयमात्रवृत्तित्वं द्वित्वे विवक्षणीयम् (हेतुतावच्छेदकगतरूपे स्वाश्रयाधिकरणयन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावमात्रवृत्तित्वं द्वित्वे विवक्षणीयम्) मात्रार्थप्रवेशेनोभयाभावापेक्षया गौरवप्रसङ्ग इति सूक्ष्ममीक्षणीयमिति।

अथ यद्वृत्त्यभावप्रतियोगितानवच्छेदकं हेतुतावच्छेदकं तदेव हेत्वधिकरणं वाच्यम्। तादृशोभयाभावापेक्षया लाघवात्। अभावे यद्वृत्तिता च स्व (अभाव) प्रतियोगिमत्ताग्रहविरोधिताघटकसंवन्धेन ग्राह्या। तेन धूमाभावस्य कालिकेन पर्वतादिवृत्तित्वेऽपि न पर्वतादेः हेत्वधिकरणत्वानुपपत्तिः। गगनाभावभेदादिहेतुकस्थले अयं प्रमेयः गगनाभावभिन्नत्वादित्यत्र हेत्वभावस्य गगनाभावरूपस्य केवलान्वयित्वेन हेत्वधिकरणवृत्तित्वेऽपि गगनाभावभेदाभावत्वस्य (हेत्वधिकरणत्वेनाभिमतं) यद् (तद्') वृत्तितानवच्छेदकतया यद्वृत्तितावच्छेदकानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके विवक्षायां न दोषः। वै० स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंवन्धेन। तथा च हेतुतावच्छेदकं यद्वृत्तितावच्छेदकानुयोगिताविशिष्टप्रतियोगितानवच्छेदकं तदेव हेत्वधिकरणमिति फलितम्। वै० स्वनिरूपितत्वस्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंवन्धेन। गगनाभावभेदाभावत्वरूपानुयोगितानिरूपितत्वस्य गगनाभावभेदनिष्ठप्रतियोगितायां सत्त्वेऽपि स्वनिष्ठानुयोगितानिरूपितत्वस्य सत्त्वेन तदनिरूपितत्वस्यासत्त्वात्। भेदाभावस्य प्रतियोगितावच्छेदकत्वरूपत्वेन गगनाभावनिरूपितत्वस्यापि सत्त्वात्। यन्निष्ठ (हेत्वधिकरणनिष्ठ) वृत्तितावच्छेदकत्वं गगनाभावे गगनाभावभेदाभावत्वे च वर्तते। अनुयोगितायाश्चानुयोगिस्वरूपत्वमिति हेत्वधिकरणवृत्तितावच्छेदकगगनाभावरूपानुयोगितानिरूपितत्वस्य तन्निष्ठानुयोगिता (गगनाभावभेदाभावत्वरूपानुयोगिता) निरूपितत्वस्य च गगनाभावभेदाभावीयगगनाभावभेदनिष्ठप्रतियोगितायां वर्तते इति चेन्न। वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वे तेन हेतुतायां चैत्रः सुखी धनवत्वादित्यत्र . हेतुतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्याऽव्याप्त्या-

पत्तेः। हेतुतावच्छेदकं यद्वृत्तितावच्छेदकानुयोगिताविशिष्टप्रतियोगितानवच्छेदकमित्यत्र प्रतियोगिता हेतुतावच्छेदकसंवन्धावच्छिन्ना ग्राह्या। अन्यथा वह्निमान् धूमादित्यत्र पर्वते समवायेन धूमाभावमादाय तस्य (पर्वतस्य) हेत्वधिकरणत्वानुपपत्तेः। पारिभाषिकहेतुतावच्छेदकसंवन्धावच्छिन्नत्वं विवक्षितुमशक्यम्। तच्च हेतुतावच्छेदकातिरिक्तसंवन्धानवच्छिन्नत्वरूपम्। अयं सुखी धनवत्वादित्यत्राव्याप्तिः। हेतुतावच्छेदकस्वामित्वस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति तत्संवन्धावच्छिन्नहेत्वधिकरणवृत्त्यभावप्रतियोगित्वमप्रसिद्धम्। संवन्धान्तरावच्छिन्न प्रतियोगित्वे च पारिभाषिकहेतुतावच्छेदकसंवन्धावच्छिन्नत्वं न वर्तते इति हेत्वधिकरणवृत्तिहेतुतावच्छेदकसंवन्धावच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेः। वृत्तिनियामकसंवन्धेन सद्धेतौ वह्निमान् धूमादित्यत्र साध्यानधिकरणस्य जलादेः हेत्वधिकरणत्वापत्त्या पारिभाषिकहेतुतावच्छेदकावच्छिन्नत्वस्याभावीयप्रतियोगितायां विवक्षितुमशक्यत्वात्।

इदं चिन्तनीयम्। किं वा यद्वृत्त्यभावे वीप्सा न विवक्षिता यद्वृत्तिर्यो योऽभावः हेतुतावच्छेदकसंवन्धावच्छिन्नप्रतियोगिताक इत्यर्थः स्यात्। अस्मिन्नर्थे वह्निमान् धूमादित्यत्र साध्यानधिकरणस्य न हेत्वधिकरणत्वापत्तिः। जलादौ संयोगेन धूमाभावसत्त्वात्। एवं च संयोगेन घटाभावमादाय साध्यानधिकरणस्य हेत्वधिकरणत्वापत्तिर्युज्यते। स्वाश्रयाधिकरणत्वस्य (हेतुतावच्छेदकाश्रयाधिकरणत्वस्य) यत्पदार्थविशेषणत्वेऽपि (यद्यपि साध्यानधिकरणस्य स्वाश्रयाधिकरणत्वविरहेण हेत्वधिकरणत्ववारणेऽपि तथापि) विषयित्वादिना वृत्त्यनियामकेन वह्निहेतुके इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यादौ महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वं दुर्वारमेव। महानसीयवह्निविषयकज्ञाने विषयितासंबन्धेन वह्न्यभावो धर्तुं न शक्यते विपयिताया वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात्। संयोगादिना वह्न्यभावीयप्रतियोगितायां पारिभाषिकहेतुतावच्छेदकसंबन्धावच्छिन्नत्वविरहेण सोऽप्यभावो नात्र लक्षणघटको भवितुमर्हति।

(वस्तुतस्तु वृत्त्यनियामकहेतुकस्थले अस्मिन् लक्षणेऽव्याप्तिरेव भवति। हेतुतावच्छेदकसंवन्धावच्छिन्नप्रतियोगिताकाभावस्य हेतुतावच्छेदकसंबन्धातिरिक्त

संबन्धानवच्छिन्नप्रतियोगिताकाभावस्य वाऽप्रसिद्धेरिति चिन्त्यम्।) किन्तु घटाभाव एव लक्षणघटकस्तदीयप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके वह्नित्वे सत्त्वेन भवति तत्र हेत्वधिकरणं महानसीयवह्निविषयकज्ञानं तत्र साध्याभावमादाय इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्वादित्यत्राव्याप्तिर्दुर्वारेति। अथ वृत्त्यनियामकसंबन्धस्य भेदप्रतियोगितावच्छेदकतावच्छेदकत्वं सर्वमतःसिद्धमिति स्वाश्रयाधिकरणीभूतयन्निष्ठभेदप्रतियोगितानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकतानवच्छेदकं हेतुतावच्छेदकं तदेव हेत्वधिकरणमिति विवक्षणे नोक्तदोषः। महानसीयवह्निविषयकज्ञानं विषयितासंबन्धेन वह्निमान्नेति भेदीयप्रतियोगितावच्छेदकतावच्छेदकत्वस्य हेतुतावच्छेदके वह्नित्वे सत्त्वेन तदनवच्छेदकत्वस्यासत्त्वात्। महानसीयवह्निविषयकज्ञानस्य स्वाश्रयाधिकणीभूतयत्पदार्थत्वेन ग्रहीतुमशक्यत्वादिति चेत्। हेतुप्रतियोगिकस्य हेतुतावच्छेदकसंबन्धत्वे हेत्वधिकरणवृत्तितादृशभेदाप्रसिद्धेरव्याप्तिः,। (पर्वतो वह्निमान् धूमप्रतियोगिकसंयोगसंबन्धेन धूमादित्यत्र स्वाश्रयाधिकरणीभूतपर्वतवृत्तिः धूमप्रतियोगिकसंयोगसंबन्धेन पर्वतो घटवान् नेति भेदो न प्रसिद्धः। तादृशसंबन्धेन घटवत्त्वस्याप्रसिद्ध्याऽलीकप्रतियोगिकाभावस्यास्वीकृतत्वात्। तथा च तत्राव्याप्तिः) तदव्याप्तिवारणाय, हेतुतावच्छेदकसंबन्धावच्छिन्नत्वम् हेतुतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, हेतुताव्यापकत्वोभयाभावरूपं पारिभाषिकं वाच्यम्। तथा च पर्वतः संयोगेन घटवान्नेति भेदमादाय तत्राव्याप्तिवारणेऽपि हेतुतावच्छेदके स्वाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावापेक्षया व्यापकत्वघटितस्य यद्वृत्तिभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वस्य हेतुतावच्छेदके विवक्षणीयस्य नवीनकल्पेन गौरवेण लघुत्वाभावात्। किञ्च गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे पर्वतो वह्निमान् प्रमेयधूमादित्यत्र ह्रदादीनामपि हेत्वधिकरणत्वापत्त्या तत्र साध्याभावमादायाव्याप्त्यापत्तिः। ह्रदे हेत्वभावस्य धर्तुमशक्यत्वात्, अन्याभावप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके प्रमेयधूमत्वे सत्त्वात्। पारिभाषिकावच्छेदकत्वविवक्षणे च तत्पर्यालोचनेऽतीवगौरवम्। (यद्वृत्तिभेदप्रतियोगितावच्छेदकतावच्छेदकं यत्समानाधिकरणाभावप्रतियोगितान-

वच्छेदकं तदेव प्रतियोगितावच्छेदकतावच्छेदकमिति विवक्षणे नोक्तदोषः। ह्रदो प्रमेयवान्नेति भेदप्रतियोगितावच्छेदकतावच्छेदकं धूमत्वं प्रमेयधूमत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति भवति ह्रदवृत्तिप्रमेयधूमवान्नेति भेदप्रतियोगितावच्छेदकतावच्छेदकं प्रमेयधूमत्वम्। तथा च हेतुतावच्छेदके तादृशोभयाभावापेक्षयाऽस्मिन् कल्पेऽतीवगौरवम्। अस्मिन् कल्पे पारिभाषिकं प्रतियोगितावच्छेदकत्वकल्पनम्, प्रतियोगितायां प्रतियोगितावच्छेदकतावच्छेदकतायां वा हेतुतावच्छेदकसंबन्धावच्छिन्नत्वकल्पनम्, हेतुतावच्छेदकावच्छिन्नत्वं व्यापकत्वघटितं पारिभाषिकमतीवगुरुभूतमिति । अतएव (हेतुतावच्छेदके तादृशोभयाभावनिवेशापेक्षयाऽन्यविवक्षायां गौरवादेव) हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकसंबन्धितावद् यद् (पर्वतादि) वृत्तिभेदीयप्रतियोगितानिरूपितपरंपरावच्छेदकतावत् प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं स एव हेत्वधिकरणपदार्थः। भेदश्च हेतुतावच्छेदकसंबन्धावच्छिन्नं यत् प्रतियोगितावच्छेदकावच्छिन्नसंबन्धित्वं तदवच्छिन्नप्रतियोगिताकः। पर्वतो न संयोगेन घटसंबन्धीत्याकारकः पर्वतो वह्निमान् धूमादित्यत्र हेतुतावच्छेदकधूमत्वगतैकत्वे स्वा (हेतुतावच्छेदकगतरूपा) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपितसबन्धितावद् यत् (पर्वतादि) वृत्ति (पर्वतः संयोगेन घटसंबन्धी नेत्याकारक) भेदीया संबन्धिनिष्ठा प्रतियोगिता घटावच्छिन्नसंबन्धित्वावच्छिन्ना तत्प्रतियोगितापरंपरावच्छेदकता घटत्वनिष्ठा तदवच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वात्। एवञ्च इदं द्रव्यं कपिसंयोगादित्यत्र हेत्वभावस्य अव्याप्यवृत्तिवद्भेदस्यापि अव्याप्यवृत्तित्वपक्षे हेतुमद्भेदस्य च साध्याधिकरणवृक्षवृत्तित्वेऽपि न क्षतिः (तस्य वृक्षस्य न हेत्वधिकरणत्वानुपपत्तिः)। उक्तसंबन्धितावद् व्यक्तिभेदकूटस्यैवात्र प्रवेशात्। तथा च कपिसंयोगसंबन्धितावद् भेदकूटस्य वृक्षेऽसत्त्वेन हेतुतावच्छेदके तादृशप्रतियोगितानवच्छेदकत्वस्य, हेतुतावच्छेदकगतरूपे च तादृशानुयोगितानवच्छेदकत्वस्य सत्त्वेन तस्य हेत्वधिकरणत्वोपपत्तिः। न च विषयितया प्रमेयवह्निहेतुके सद्धेतौ, इदं ज्ञानं प्रमेयवह्निविषयकज्ञानत्ववत विषयितया प्रमेयवह्निमत्त्वादित्यत्र महानसीयप्रमेयवह्निविषयकज्ञानस्य हेत्वधि-

करणत्वापत्तिः। विषयित्वादीनां वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वेन गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन च विषयितासंवन्धावच्छिन्नप्रमेयवह्नित्वावच्छिन्नप्रतियोगित्वाप्रसिद्धिः। तथा च महानसीयवह्निविषयकज्ञाने विषयितया प्रमेयवह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नसंवन्धित्वावच्छिन्नप्रतियोगिताकभेदो न ग्राह्यः तत्रान्यभेदो ग्राह्यः, तदीयप्रतियोगितानवच्छेदकत्वस्य हेतुतावच्छेदके, किं वा हेतुतावच्छेदकगतरूपे तादृशानुयोगितानवच्छेदकत्वस्य वा सत्त्वात्, तत्र साध्यामावमादायाव्याप्तिरिति वाच्यम्। यत्प्रतियोगितावच्छेदकतावच्छेदकधर्मावच्छिन्नसंवन्धित्वस्यैव विवक्षितत्वात्। महानसीयप्रमेयवह्निविषयकज्ञाने विषयितया प्रमेयवह्निमद्भेदस्य सत्त्वेन तस्य हेत्वधिकरणत्वासंभवात्। एवञ्च हेतुतावच्छेदकगतरूपे स्वा (हेतुतावच्छेदकगतरूपा) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकता निरूपितनिरूपकतानिरूपितसंवन्धितावद् (पर्वतादि) यद्वृत्तिभेदीयप्रतियोगिता निरूपितपरंपरावच्छेदकता वच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं तदेव हेत्वधिकरणम्। भेदश्च हेतुतावच्छेदकसंवन्धावच्छिन्नभेदीयप्रतियोगितापरंपरावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपा— वच्छिन्नानुयोगिताकपर्याप्तिप्र तियोग्यवच्छेदकताक निरूपकतानिरूपितसंवन्धित्वावच्छिन्नं तदवच्छिन्नप्रतियोगिताको ग्राह्यः। तथा च महानसीयप्रमेयवह्निविषयकज्ञाने महानसीयप्रमेयवह्निविषयकज्ञानं विषयितया प्रमेयवह्निमान्नेति भेदस्य सत्त्वेन तद्भेदीयप्रतियोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यैव हेतुतावच्छेदकप्रमेयवह्नित्वगतरूपे सत्त्वेन तदनवच्छेदकत्वस्य तत्रासत्त्वात्, तत्र महानसीयप्रमेयवह्निविषयकज्ञाने हेत्वधिकरणत्वं न सिद्ध्यति। महानसीयप्रमेयवह्निविषयकज्ञानं तादृशप्रतियोगितानिरूपितपरंपरावच्छेदकप्रमेयवह्नित्वावच्छिन्ननिरूपकतानिरूपितसंवन्धितावन्नेति भेदस्य महानसीयप्रमेयवह्निविषयकज्ञाने सत्त्वात्।

प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वं च निरूपकतायां पर्याप्तिघटितं वाच्यम्। अन्यथा महानसीयवह्निविषयकज्ञानस्य वह्निमद्भेदप्रतियोगितावच्छेदकतावच्छेदकवह्नित्वावच्छिन्नमहानसीयवह्निसंबन्धितावत्त्वेन, वह्निविषयक

ज्ञानस्य च महानसीयवह्निमद्भेदीयप्रतियोगितावच्छेदकतावच्छेदकवह्नित्वावच्छिन्ननिरूपकतानिरूपितसंबन्धितावत्त्वेन विषयितया वह्निहेतुके महानसीय वह्निहेतुके चाव्याप्त्यापत्तेः। महानसीयवह्नित्वावच्छिन्ननिरूपकतानिरूपित संबन्धित्वावच्छिन्नप्रतियोगिताकभेदस्य महानसीयवह्निविषयकज्ञानेऽसत्त्वेन तादृशभेदप्रतियोगितावच्छेदकतानवच्छेदकत्वस्य हेतुतावच्छेदके सत्त्वात्। पर्याप्तिनिवेशे च नोक्तदोषः। महानसीयवह्निविषयकज्ञाने तादृशप्रतियोगितावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक (महानसीयवह्निमद्विषयकज्ञानं न वह्निमद्विषयकं, वह्निमद्विषयकज्ञानं न महानसीयवह्निमद्विषयकमिति भेदीयप्रतियोगितावच्छेदकतावंच्छेदकतात्वावच्छिन्नप्रतियोगिताक) पर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपितसंबन्धित्वावच्छिन्नप्रतियोगिताकभेदस्य सत्त्वेन हेतुतावच्छेदकगतरूपे तादृशभेदप्रतियोगितावच्छेदकता वच्छेदकधर्मगतरूपभेदस्यासत्त्वात्। महानसीयत्ववह्नित्वेगतरूपयोः परस्परभेदात्। एवञ्च (प्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वस्य पर्याप्तिघटितत्वे) गुरुधर्मस्य प्रतियोगितानवच्छेदकतया यत्प्रतियोगितापदेन प्रमेयधूमत्वावच्छिन्ना प्रतियोगिता न ग्राह्येति हेतुतावच्छेदकसंबन्धावच्छिन्न यत्प्रतियोगितावच्छेदका (प्रमेयधूमत्वा) वच्छिन्नसंबन्धितायाः अप्रसिद्ध्या हेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नघटत्वावच्छिन्न संबन्धिता ग्राह्या तादृशसंबन्धित्वावच्छिन्नप्रतियोगिताकह्रदवृत्तिभेदीयप्रतियोगिता निरूपितपरम्परावच्छेदकतावच्छेदकघटत्वगतरूपभेदस्य हेतुतावच्छेदकप्रमेय धूमत्वगतरूपे सत्त्वेन वह्निमान् प्रमेयधूमादित्यत्र ह्रदस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावमादायाऽव्याप्तिः तद्वारणाय स्वावच्छिन्नानुयोगिकपर्याप्ति प्रतियोग्यवच्छेदकताकनिरूपकताकसंबन्धितावत्त्वं स्वाश्रयावच्छिन्नत्वं वा यत्पदार्थे (हेत्वधिकरणत्वेनाभिमते यत्पदार्थे वा) विशेषणमावश्यकमिति परास्तम्। धूमप्रतियोगिकसंयोगेन धूमहेतुकस्थलेऽव्याप्तेः। तत्र तादृशसंबन्धावच्छिन्नप्रतियोगिताकभेदस्याप्रसिद्धत्वात्। धूमप्रतियोगिकसंयोगेन धूमभिन्नपदार्थस्य कुत्रापि न सत्त्वं तस्य व्यधिकरणसंबन्धः।

यत्तु हेतुतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वीयस्वरूपेण संबन्धित्वाभावो

निवेश्य इति। हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितनिरूपकतानिरूपितसंबन्धितावद्वृत्तिभेदीययत्प्रतियोगितानिरूपित परंपरावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतासंबन्धिता तस्याः हेतुतावच्छेदकसंबन्धावच्छिन्नसंबन्धित्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववद् यत् तत्प्रतियोगितानिरूपितपरंपरावच्छेदकतावच्छेदकगतरूपभेदः (हेतुतावच्छेदकगतरूपे) स एव हेत्वधिकरणपदार्थः। वह्निमान् धूमादित्यत्र धूमप्रतियोगिकसंयोगेन हेतुतावच्छेदकधूमत्वगतैकत्वे हेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नसंबन्धित्वीयस्वरूपसंबन्धेन पर्वतो न घटसंबन्धितावानिति भेदीयप्रतियोगितानिरूपितपरंपरावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकसंबन्धिताया अभावो हेतुतावच्छेदकगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकसंबन्धितावति पर्वते वर्तते तत्प्रतियोगितानिरूपितपरंपरावच्छेदकताकावच्छेदक घटत्वगतरूपभेदस्य हेतुतावच्छेदकधूमत्वगतैकत्वे सत्त्वान्नाव्याप्तिः। न च धूमत्वावच्छिन्नविषयित्वादिसंबन्धावच्छिन्नसंबन्धित्वस्य धूमविषयकज्ञाने प्रसिद्धतया हेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नसंबन्धिताप्रतियोगिकस्वरूपसंबन्धेन तादृशसंबन्धितावति पर्वते वृत्तितया हेतुमद्भेदीयप्रतियोगित्वस्य यत्प्रतियोगितापदेनोपादेयत्वात् तन्निरूपितपरंपरावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपितसंबन्धित्वाभावीय यत्प्रतियोगितेत्यत्र यत्पदेनोपादेयत्वात्। तत्प्रतियोगितानिरूपित परंपरावच्छेदकतावच्छेदकगतरूपभेदस्य हेतुतावच्छेदकगतरूपेऽसत्त्वेन वह्निमान् धूमादित्यत्र पर्वतादेर्हेत्वधिकरणात्वानुपपत्त्या हेत्वधिकरणस्याप्रसिद्धत्वादव्याप्तिरिति वाच्यम्। हेतुतावच्छेदकसंबन्धावच्छिन्नत्वस्य पर्याप्त्यघटितस्य संबन्धितायां विशेषणत्वादिति। तथा च शुद्धसंयोगसंबन्धावच्छिन्ना या (तदृशघटत्वावच्छिन्ना) संबन्धिता तदवच्छिन्नप्रतियोगिताकभेदमादाय वह्निमान् धूमप्रतियोगिकसंयोगेन धूमादित्यत्र पर्वतादिः हेत्वधिकरणं भवतीति न तत्र हेत्वधिकरणाप्रसिद्धिनिबन्धना-

ऽव्याप्तिरिति। तत्तुच्छम्। संबन्धित्वान्तराभावनिवेशे कपिसंयोगहेतुके इदं द्रव्यं कपिसंयोगवत्त्वादित्यत्राव्याप्तेरनिवार्यत्वात्। उक्तसंवन्धित्वस्यापि अव्याप्यवृत्तित्वेन तदभावस्य (तादृशसंवन्धित्वाभावस्य) हेतुमति वृक्षे सत्त्वेन तस्य हेत्वधिकरणत्वानुपपत्त्या हेत्वधिकरणाप्रसिद्ध्याऽव्याप्त्यापत्तेः। विषयितात्वकालिकत्वान्यतरत्ववत् संबन्धावच्छिन्नसंबन्धित्वाभावमादाय विषयितया वह्निहेतुके इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्त्वादित्यत्र महानसीयवह्निविषयकज्ञानादेरधिकरणत्वप्रसङ्गात्। विषयितायाः वृत्त्यनियामकत्त्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकहेत्वभावस्य तत्र वक्तुमशक्यत्वम्, यद्वृत्त्यभावीयप्रतियोगितायां च हेतुतावच्छेदकसंबन्धावच्छिन्नत्वस्य निवेशः। अन्यथा समवायेन धूमाभावमादाय वह्निमान् धूमादित्यत्र पर्वतादेर्हेत्वधिकरणत्वानुपपत्त्या हेत्वधिकरणाप्रसिद्धिरित्यव्याप्त्यापत्तेः। अतोऽयं कल्पो न युक्तः। महाकालानुयोगिककालिकेन घटादिहेतुकस्थले महाकाले तादृशसंबन्धित्वाभावेन महाकालस्य हेत्वधिकरणत्वानुपपत्तेः। महाकालस्य तादृशकालिकसंबन्धेन सर्वसंबन्धित्वेन तादृशकालिकसंबन्धेन संबन्धित्वाभावस्याप्रसिद्धेः। तद् वारणायायासश्च गुरुत्वाद् विफलायासं करिष्यतीत्यलम् तेनेति ध्येयम्।

ननु व्यापकतावच्छेदकत्वरूपाभावप्रतियोगितावच्छेदकत्वेन हेतुरेवोपादेयः। (साध्याभावव्यापकाभावप्रतियोगित्वेन हेतुरेवोपादेयः) न तु हेत्वधिकरणम्। तथा च हेत्वधिकरणत्वस्य लक्षणाघटकतया तद्विचारोऽर्थान्तरग्रस्त इति चेत्। (किं वा साध्यवद्भेदव्यापकीभूतहेतुमद्भेदप्रतियोगितावच्छेदकत्वेन हेतुरेवोपादेयो न त्वधिकरणत्वम्)। अथवा व्यापकतावच्छेदकत्वं यदभावप्रतियोगितावच्छेदकत्वं तेन रूपेण हेतुरुपादेयः। साध्याभावो हेत्वभावव्याप्यो व्यापकश्च हेत्वभाव एतन्निष्ठाया व्यापकता तदवच्छेदकत्वं हेतौ वर्तते। यदि विशिष्टसत्तावानितिप्रतीतेर्विशिष्टसत्त्वस्य विशिष्टः शुद्धान्नातिरिच्यत इति शुद्धसत्त्वस्येव विशिष्टसत्त्वस्यापि गुणे सत्तया (विशिष्टसत्तावान् गुण इति प्रतीतेः) गुणेऽप्रामाण्याय विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावगाहित्वे तदधिकरणत्वस्य गुणेऽसत्वान्न प्रामाण्यम्, विशिष्टसत्तावान्नेति प्रतीतेरपि विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वावच्छिन्नभेदावगाहित्वं तदा विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदकमिति प्रतीतेरपि विशिष्टसत्ताधिकरणत्वाव-

गाहित्वमेवेति नोक्तसिद्धाभावस्य (विशिष्टसत्तावद्वृत्त्यभावप्रतियोगितानवच्छेदक-प्रमितिप्रतीतिसिद्धाभावस्य हेतुतावच्छेदकावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाव-त्वमिति विशिष्टसत्त्वे हेतावव्याप्तेर्न्न विशिष्टसत्त्ववृत्त्यभावप्रतियोगितानवच्छेदकस्य तस्य लक्षणघटकता। यद्यपि विशिष्टसत्ता नास्तीति प्रतीतौ विशिष्टसत्ताभावस्य भासमानत्वेऽपि तस्य (विशिष्टसत्ताऽभावस्य) प्रतियोगितावच्छेदकावच्छिन्नाधिकर-णतया विरोधित्वकल्पनाद् गुणे प्रमात्वस्योक्तप्रतीतेरिव (विशिष्टसत्ता नास्तीति प्रती-तेरिव) विशिष्टसत्तावान्नेति प्रतीतेरपि विशिष्टसत्तात्वावच्छिन्नावच्छेदकताकप्रतियो-गिताकभेदावगाहित्वेऽपि तस्य (विशिष्टसत्तावान्नेति भेदस्य) प्रतियोगितावच्छेदक-तावच्छेदकीभूतधर्मावच्छिन्नाधिकरणतया सह विरोधित्वस्वीकारात्, प्रमात्वं गुणेऽप्यु-पपद्यते इति विषमो दृष्टान्तः। (अभ्युपगमवादेनाह) तथापि विशिष्टसत्तावद्वृत्त्य-भावप्रतियोगितावच्छेदकभेदस्य तादृशावच्छेदकतात्वावच्छिन्नाधिकरणतयैव (विशिष्ट सत्तावद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नाधिकरणतयैव सह विरोधित्वेन तत्कोटौ (विरोधितावच्छेदककोटौ) विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वस्याप्रविष्ट-त्वात् प्रविष्टस्य विशिष्टसत्त्वस्य गुणसाधारणत्वात् (विशिष्टः शुद्धान्नातिरिच्यत इति शुद्धसत्त्वस्येव विशिष्टसत्त्वस्य गुणादिवृत्तित्वात्) उक्ताधिकरणत्वस्य (विशिष्ट-सत्त्ववद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नाधिकरणत्वस्य द्रव्यतात्वे (विशिष्ट-सत्त्ववद्गुणवृत्त्यभाव (द्रव्यत्वाभाव) प्रतियोगितात्वावच्छिन्नाधिकरणत्वस्य सत्तया-ऽव्याप्तिः (द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः) दुरुद्धरैव। यत्र विशिष्टसत्तात्वं साक्षा-दवच्छेदकं तत्रैव विरोधिनिरूपकताया तदधिकरणत्वं व्यवस्थितम्। प्रकृते च तादृशा-वच्छेदकत्वस्यैव (विशिष्टसत्त्ववद्वृत्त्यभावप्रतियोगितावच्छेदकत्वस्यैव) प्रतियोगिता वच्छेदकत्वेन तदवच्छेदकावच्छिन्नाधिकरणताया एव विरोधनिरूपकत्वं तत्र च (विरो-धनिरूपकत्वे) विशिष्टसत्तात्वावच्छिन्नाधिकरणता कथंचिन्नान्तर्भवतीति सूक्ष्ममीक्ष-णीयम्।

केचित्तु अभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वेन धूमवद्वृत्त्यभावप्रतियोगिता वच्छेदकत्वं (साध्यतावच्छेदके) नास्तीति बुद्धेर्धूमत्वविशिष्टवैशिष्ट्यावगाहितया (संयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नसामान्याधिकरणताया असत्त्वेन तदवगाहि-

तया) भ्रमत्वापत्त्या न ततोऽर्थसिद्धिः। (धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके नास्तीति भ्रमात्मकज्ञानात् धूमत्वावच्छिन्नसामान्याधिकरणतासिद्धिः) प्रमात्मकज्ञानस्यैवार्थसाधकत्वात्। तद्विशिष्टवैशिष्ट्यावगाहित्वं हि तद्गतरूपवृत्ति निरूपकतानिरूपिताधिकरणत्वावगाहित्वमेव। महानसीयवह्निविषयकज्ञानं वह्निमत् वह्निविषयकज्ञानं महानसीयवह्निमत् इत्यनयोः विशिष्टवैशिष्ट्यावगाहिनोरन्यथा (विशिष्टवैशिष्ट्यावगाहित्वस्य तद्गतरूपवृत्तिनिरूपकतानिरूपिताधिकरणत्वावगाहित्वरूपास्वीकारे) अप्रामाण्यानुपपत्तेः। धूमवानिति प्रमया न धूमत्वविशिष्टवैशिष्ट्यावगाहित्वम्, येन (धूमवानिति यथार्थज्ञानेन) धूमत्वगतैकत्ववृत्ति निरूपकतानिरूपिताधिकरणत्वसिद्धिः स्यात् (संयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्नसामान्याधिकरणतासिद्धिः स्यात्)। तत्रैव हि विशिष्टवैशिष्ट्यावगाहित्वम्, यत्र विशिष्टवैशिष्ट्यावगाह्युपलक्षितवैशिष्ट्यावगाहिनोः प्रमात्वाप्रमात्वयोर्विशेषोपलब्धिरिति वदन्ति। ते (केचित्) विशिष्टवैशिष्ट्यावगाहिमर्यादान् नातिशेरते इति नियमतात्पर्यानभिज्ञाः। व्यक्ती भविष्यति हि तदर्थः पृथिवीसमवेतत्वस्योपलक्षणतया प्रतियोगितावच्छेदकत्वोपपादनावसरे। भवतु वा धूमत्वावच्छिन्नाधिकरणत्वावगाहितया उक्तप्रतीतेः (धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके नास्तीति प्रतीतेः) भ्रमत्वम्। तावताऽपि तया (धूमवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं साध्यतावच्छेदके नास्तीति प्रतीत्या) धूमत्वावच्छिन्ना (धूमत्वनिष्ठा) वच्छेदकताकप्रतियोगिताकाभावसिद्धौ किं बाधकमाकलयन्तीति न विद्मो वयम्। धूमासत्त्वनिबन्धनभ्रमस्यैव तादृशार्थ (धूमाभाव) बाधकतायां न्याय्यत्वात्। तत्रैव विशिष्टवैशिष्ट्यावगाहित्वमित्यादि यदुक्तं, तेन जानीमहे न दृष्टान्तैः लोहितोष्णीषाधिकरणं तत्र हि विशिष्टवैशिष्ट्यावगाहित्वस्यौत्सर्गिकत्वं व्यवस्थापितम्। अनुभूयतेऽपि च तदानीम् अरक्तस्य दण्डस्य सत्त्वे अत्र रक्तदण्डो नास्तीति वादिनं प्रति तद्दण्डालोचनवताम् उपहासाद्युपलब्धेरिति।

अथ महानसीयवह्न्यभावसाध्यके महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन वह्निहेतुके अयं महानसीयवह्न्यभावः महानसीयवह्नित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन वह्निमत्त्वादिति विरुद्धे हेतौ अतिव्याप्तिः। वह्नित्वगतैकत्वे हेतुतावच्छेदकसंबन्धावच्छिन्न .स्वा (हेतुतावच्छेदकवह्नित्वगतैकत्वा)

वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितमहानसीयवह्नित्वावच्छिन्ननिरूपकतानिरूपिताधिकरणतावन्महानसीयवह्न्यभावनिष्ठाधिकरणताघटितोभयाभावसत्त्वेन महानसीयवह्न्यभावस्यैव हेत्वधिकरणत्वात्। (हेतुतावच्छेदकवह्नित्वगतैकत्वे हेतुतावच्छेदकसंबन्धावच्छिन्ना या स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतानिरूपितमहानसीयवह्नित्वावच्छिन्ना निरूपकता तन्निरूपिताधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वसत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावेन तादृशोभयाभावस्य सत्त्वात्, भवति तत्र हेत्वधिकरणं महानसीयवह्न्यधिकरणं तच्च नेष्टम्। अतः प्रमीयहेतुतावच्छेदकसंबन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे विवक्षणीयम्। तथा च लाघवेन तदुभयाभावमनिवेश्य हेतुतावच्छेदकगतरूपवृत्तिहेतुतावच्छेदकसंबन्धावच्छिन्नप्रकारतानिरूपितप्रमीयविशेष्यतावत्त्वमेव हेत्वधिकरणपदार्थो वाच्यः, तावतैव सर्वदोषवारणसंभवात्। विशेष्यताया हेतुतावच्छेदकगतरूपवृत्तित्वञ्च स्वनिरूपितप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। न चोपलक्षणीभूतस्य निरूपकतानवच्छेदकत्वेऽपि प्रकारतावच्छेदकत्वस्य स्वीकृततयोपलक्षणतया गुणकर्मान्यत्वावगाहिगुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति प्रमीयविशेष्यतावत्त्वस्य गुणे सत्त्वाद् द्रव्यं विशिष्टसत्त्वादित्यत्राव्याप्तिः। हेतुतावच्छेदकगुणकर्मान्यत्वोपलक्षितसत्तात्वगतैकत्वे गुणकर्मान्यत्वोपलक्षितसत्तात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाः स्वनिरूपितप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन रूपे वृत्तित्वादिति वाच्यम्। हेतुतावच्छेदकगतरूपे स्वा (हेतुतावच्छेदकगतरूपा) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावद्यन्निष्ठविशेष्यतानिरूपितप्रमीयहेतुतावच्छेदकसंबन्धावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विवक्षणेनादोषात्। उपलक्षकधर्मस्य प्रकारतानवच्छेदकत्वाच्च। एवं च हेतुतावच्छेदक गुण-

कर्मान्यत्ववैशिष्ट्य, सत्तात्वगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक निरूपकतानिरूपिताधिकरणता द्रव्यमात्रे वर्तते न तु गुणे कर्मणि च तादृशाधिकरणतावद्द्रव्यमात्रविशेष्यतानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नप्रमीयप्रकारताया उपलक्षणीभूतगुणकर्मान्यत्वविशिष्टसत्तायां सत्त्वे सत्त्वात्, गुणादिनिष्ठविशेष्यता निरूपितप्रमीयप्रकारतायास्तत्रासत्त्वाच्च। हेतुतावच्छेदकप्रकारतावच्छेदकगतरूपयोः द्वित्वैकत्वयोः परस्परं भेद इति।

नचैवं गुणकर्मान्यत्वसत्त्वयोः नानामुख्यविशेष्यताशालिसमूहालम्बनबोधस्य गुणकर्मान्यत्वोपलक्षितसत्त्वावगाहिबोधस्य च किं वैलक्षण्यं परस्परासंबद्धयोः गुणकर्मान्यत्वसत्त्वयोरुभयोस्तत्तद्वोधे प्रकारत्वादिति वाच्यम्। (उपलक्षकस्य प्रकारतावच्छेदकत्वेऽयं दोष इति बोध्यम्)। गुणकर्मान्यत्वोपलक्षितसत्त्वावगाहिबोधे गुणकर्मान्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यतानिरूपितप्रकरताकत्वं न भासते, समूहालम्बनबोधे च तादृशप्रकारतानिरूपितविशेष्यत्वाभिन्नविशेष्यतानिरूपितसत्त्वनिष्ठप्रकारताकत्वं भासते इति वैलक्षण्यस्य तत्तद्बोधे सत्त्वात्। जगदीशमते समानाधिकरणविषयतयोरभेदः। गदाधरमते च तयोविषयतयोरवच्छेद्यावच्छेदकभाव इति विशेषः। उपलक्षणीभूतधर्मो यत्र प्रकारः तत्रोभयधर्मनिरूपितैकैव विशेष्यता, समूहालम्बनबोधे च यावत्प्रकारतावच्छेदकधर्मस्तावद्विशेष्यतेति परस्परं भेदः। एतेन (तादृशाधिकरणतावन्निष्ठत्वस्यानुपदोक्तस्य प्रमीयविशेष्यतायां निवेशेन) धूमत्वे संयोगसंबन्धावच्छिन्नाधिकरणतामात्रानवच्छेदकत्वस्य व्यवस्थापितत्वेन स्वा (हेतुतावच्छेदकगतरूपा) श्रयाश्रयाधिकरणत्वस्यैव हेत्वधिकरणत्वेनाभिमतयत्पदार्थे निवेशनीयतया द्रव्यं विशिष्टसत्त्वादित्यत्रानुपदोक्ताव्याप्तेर्न निस्तारः। (हेतुतावच्छेदकगतरूपे तादृशविशेष्यतायाः सत्त्वेन गुणस्यापि तादृशाधिकरणतावत्त्वात्) इति निरस्तम्। गुणे तादृशाधिकरणत्वस्यासत्त्वात्। विशेष्यतानिरूपितत्वञ्च (विशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वावच्छिन्ननिरूपकतावत्त्वम्) नातः प्रमेयत्ववन्महानसीय वह्निविषयकज्ञानवद् वह्निमानिति विषयितया वह्न्यवगाहिवह्न्यंशे तादृशज्ञानम् उपलक्षणतयाऽवगाहमानज्ञानमादाय महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वप्रसङ्गः (तादृशनिरूपितत्वनिवेशेन विषयितया प्रमेयत्ववन्महानसीयवह्नि

विषयकज्ञानोपलक्षितवह्निविषयकज्ञानमादाय इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्त्वादित्यत्र तादृशमहानसीयवह्निविषयकज्ञानस्य न हेत्वधिकरणत्वम्। समानाधिकरणविषयतयोः अभेदेऽपि निरूपकभेदेन निरूप्यताभेदात्। अन्यथा तादृशमहानसीयवह्निविषयकज्ञाननिष्ठविशेष्यतानिरूपितत्वस्य तादृशाधिकरणतावद्वह्निविषयकज्ञानीयवह्निनिष्ठप्रकारतायां सत्त्वेन तादृशमहानसीयवह्निविषयकज्ञाननिष्ठविशेष्यतानिरूपितशुद्धवह्निविषयकज्ञानीयवह्निनिष्ठप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकवह्नित्वगतैकत्वे सत्त्वेन महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेर्दुर्वारत्वापत्तेः। तादृशविशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वावच्छिन्ननिरूपकत्वनिवेशे च तादृशाधिकरणतावद् वह्निविषयकज्ञाननिष्ठप्रमीयविशेष्यतानिष्ठनिरूप्यतानिरूपितप्रकारतात्वावच्छिन्ननिरूपकतावत्त्वं शुद्धवह्निनिष्ठप्रकारतायां वर्तते न तु महानसीयवह्निनिष्ठप्रकारतायामिति तादृशप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकावच्छिन्नानुयोगिताक पर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावत्त्वं शुद्धवह्निज्ञाने वर्तते न तु महानसीयवह्निविषयकज्ञाने तथा च नोक्तदोषः। एवञ्च तादृशाधिकरणतावन्निष्ठप्रमीयविशेष्यतावत्त्वं हेत्वधिकरणत्वेनाभिमतयत्पदार्थे लाघवान्निवेश्यं न तु हेतुतावच्छेदके तादृशोभयाभावो निवेश्य इति चेन्न। महानसीयवह्निविषयकवह्निविषयकज्ञानान्यतरत्ववद् वह्निमदिति ज्ञानमादाय इदं ज्ञानं वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्त्वादित्यादौ महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तेः। तथा च इदं ज्ञानं समवायेन वह्निविषयकज्ञानत्ववत् विषयितया वह्निमत्त्वादित्यत्र हेत्वधिकरणे महानसीयवह्निविषयकज्ञाने साध्याभावमादायाव्याप्तिः स्यात्। तादृशज्ञाननिष्ठान्यतरत्वावच्छिन्नविशेष्यतानिरूपितप्रमीयप्रकारतायाः शुद्धवह्नाविव महानसीयवह्नावपि सत्त्वेन हेतुतावच्छेदकवह्नित्वगतैकत्वे तादृशप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्।

तथा च हेतुतावच्छेदकवह्नित्वगतैकत्वे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतानिरूपिताधिकरणतावन्महानसीयवह्निविषयक ज्ञाननिष्ठ

विशेष्यतानिरूपितवह्निनिष्ठप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वेन महानसीयवह्निविषयकज्ञानस्य हेत्वधिकरणत्वापत्तिः, तत्र साध्याभावस्य सत्त्वात्। न च विशेष्यतायाम् उभयावृत्तिधर्मानवच्छिन्नत्वम् प्रकारतायां वा विशेष्यतावच्छेदकव्यापकविधेय (हेतु) प्रतियोगिकसंसर्गावच्छिन्नत्वं वा विशेषणं तथा च नोक्तदोषः। तादृशान्यतरत्वस्योभयवृत्तिधर्मत्वेन तदवच्छिन्नायाः तदन्यतरत्ववद्वह्निमदिति ज्ञाननिष्ठविशेषताया न ग्राह्यत्वम्। तादृशविशेष्यतावच्छेदकव्यापकविधेय (शुद्धवह्निरूपहेतु) प्रतियोगिकसंसर्गावच्छिन्ना प्रकारता शुद्धवह्निनिष्ठैव न तु महानसीयवह्निनिष्ठा महानसीयवह्नेरविधेयत्वात्। तादृश प्रकारतानिरूपितशुद्धवह्निविषयकज्ञाननिष्ठविशेष्यतावद् ज्ञानमेव हेत्वधिकरणमिति नोक्तदोष इति वाच्यम्। यादृशस्थले (साध्यहेतुकस्थले) हेतुज्ञानं नोभयावृत्तिधर्मावच्छेदेन न वावच्छेदकावच्छेदेन चोत्पन्नं तत्राव्याप्त्यापत्तेरिति। तत्र तादृशविशेष्यताया अप्रसिद्ध्या हेत्वधिकरणत्वस्याप्रसिद्धेः। किं वा तादृशप्रकारताया अप्रसिद्ध्या तादृशप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्याप्रसिद्धौ हेत्वधिकरणत्वस्याप्रसिद्धेः।

यत्तु इदं ज्ञानं समवायेन वह्निविषयकज्ञानत्ववत्, विषयितास्वरूपान्यतरसंबन्धेन वह्निमत्त्वादित्यत्र महानसीयवह्निविषयकज्ञानं विषयितास्वरूपान्यतरसंबन्धेन प्रमेयविशिष्टवदिति ज्ञानीयप्रमेयावच्छिन्नप्रकारतामादायाऽव्याप्तिः (तादृश प्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे सत्त्वात्) तदवच्छेदकता (प्रमेयावच्छिन्नप्रकारतावच्छेदकता) त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तत्तद्द्वित्वैकत्वादिष्वेव सत्त्वात्। अधिकरणतापक्षे च (यन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्न प्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व सामान्यतोऽधिकरणतानिरूपितनिरूपकता वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयाभावस्य हेतुतावच्छेदकगतरूपे निवेशपक्षे च) प्रमेयावच्छिन्नाधिकरणताया अप्रसिद्ध्या नोक्तदोषः। स्वस्मिन् स्वाधिकरणत्वस्यासत्त्वात्। अन्यथा घटो घटवानिति प्रतीतेः प्रमात्वापत्तेः। प्रमेयः प्रमेयवानिति प्रतीत्यभावेन प्रमेयावच्छिन्नाधिकरणत्वं न प्रसिद्ध्यतीति। तन्न, प्रमेया-

वच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य-प्रमेयत्वे एव कल्पनात्। न तु द्वित्वैकत्वादौ। एवञ्च हेतुतावच्छेदकवह्नित्वगतैकत्वे तादृशप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकप्रमेयत्व-भेदो वर्तते इति। इदं ज्ञानं समवायेन वह्निविषयकज्ञानत्ववत् विषयितास्वरूपान्य-तरसंबन्धेन वह्निमत्वादित्यत्र प्रमेयविशिष्टवदिति ज्ञानमादाय याऽव्याप्तिरुक्ता, सा न संभवति। तादृशप्रकारतावच्छेदकताविशिष्टहेतुतावच्छेदकत्वस्य विवक्षया वा दोषासंभवात्। (यन्निष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताविशिष्टहेतुतावच्छे-दकतायाः विवक्षया वा दोषासंभवात्। वै० स्वानवच्छेदकानवच्छिन्नत्व, स्ववृत्तित्वो-भयसंबन्धेन, स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन।

वस्तुतस्तु हेतुतावच्छेदके यन्निष्ठविशेष्यतानिरूपितहेतुतावच्छेदकसंबन्धा-वच्छिन्नप्रमीयप्रकारतावच्छेदकत्वं न विशेषणम्। प्रकृतहेतुप्रमात्वस्य प्रकृतहेत्वधि-करणत्वघटितत्वेन तस्य च (प्रकृतहेत्वधिकरणत्वस्य च) उभयाभावघटितरूपत्वेऽ-व्याप्तितादवस्थ्यात्। हेतुतावच्छेदकावच्छिन्नाधिकरणतारूपस्य च धूमहेतुकस्थला-नुरोधेन त्यक्तत्वाच्च।

अयंभावः, तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकज्ञानत्वं प्रमात्वम्। तच्च तन्निष्ठाधेयतानिरूपिताधिरकणतावन्निष्ठविशेष्यतानिरूपित तन्निष्ठप्रकारताशालिज्ञानत्वरूपमिति प्रमात्वस्याधिकरणताघटितत्वम्। एवञ्च मानाभावेन विषयिताभिन्नसंयोगादिसंबन्धावच्छिन्नसामान्यधर्मावच्छिन्नाधिकरणत्वस्या-स्वीकारात् तद् घटितप्रमात्वमपि दुर्लभमेव। यदि हेत्वधिकरणत्वं पारिभाषिकम्, हेतुता-वच्छेदके यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व सामान्यतोऽधिकरणता निरूपितनिरूपकतावच्छेदकत्वोभयाभावस्तद्रूपं वाच्यम्। तथा च हेत्वधिकरणत्वस्य प्रमात्वाघटितत्वेऽपि इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्राव्याप्तिः। विशिष्ट-सत्त्वत्वे गुणनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वेऽपि सामान्यतोऽधि-करणतानिरूपितनिरूपकतावच्छेदकत्वाभावेन तादृशोभयाभावस्य सत्त्वात्। गुणस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावस्य सत्त्वात्। पर्वतो वह्निमान् धूमादित्यत्र हेतुतावच्छेदकसंयोगसंबन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नाधिकरणत्वस्याप्रसिद्ध्या

तद्घटितप्रमीयप्रकारताऽप्यप्रसिद्धेत्यव्याप्त्या प्रमात्वघटितहेत्वधिकरणत्वस्य त्यक्तत्वा-च्चेति। न च प्रमात्वं नोक्तरूपम् अधिकरणत्वघटितं किन्तु भ्रमभिन्नज्ञानत्वरूपम्। तथा च भ्रमभिन्नज्ञानीयत्वस्यापि स्वप्रकारताविशिष्टप्रकारतारूपस्य न निवेशसंभवः। वै० स्वाता-दात्म्य, स्वावच्छेदकसंबन्धावच्छिन्न स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशे-ष्यतानिरूपितप्रकारताभिन्नत्वोभयसंबन्धेन वाच्यम्। तथा च इदं द्रव्यं गुणकर्मान्यत्ववि-शिष्टसत्त्वादित्यत्र न गुणरूपाधिकरणमादायाव्याप्तिः। विशिष्टसत्त्वनिष्ठप्रकारतायां स्वा-वच्छेदकसमवायसंबन्धावच्छिन्न स्वावच्छेदकविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभावव-द्गुणनिष्ठविशेष्यतानिरूपितत्वस्यैव सत्वेन तद्भिन्नत्वस्य तत्रासत्त्वेन तदुभयाभावस्य तस्यां प्रकारतायामसत्त्वात्। हेतुतावच्छेदके स्वप्रकारताविशिष्टप्रकारतावच्छेदकत्वस्यासत्वेन तत्र गुणस्य हेत्वधिकरणत्वाभावादिति वाच्यम्। एवं सति वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वपक्षे अयं स्वामित्वसंबन्धेन धनवान् स्वरूपेण चैत्रत्वादित्यत्र प्रकारताविशिष्टप्रकारतावच्छेदकत्वस्य हेतुतावच्छेदके चैत्रत्वेऽसत्त्वेन तत्राव्याप्तेः। स्वामित्वसंबन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्ध्या स्वावच्छेदकसंबन्धावच्छिन्न स्वावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपितप्रकारताभिन्नत्वस्य प्र-कारतावैशिष्ट्यनियामकसंबन्धस्याप्रसिद्धेः। न च स्वतादात्म्य स्वावच्छेदकसंबन्धाव-च्छिन्नस्वावच्छेदकधर्मावच्छिन्नसंबन्धित्वाभाववन्निष्ठविशेष्यतानिरूपितप्रकारताभिन्नत्वो-भयसंबन्धेन प्रकारतायां प्रकारतावैशिष्ट्यं वाच्यमिति वृत्त्यनियामकसंबन्धसंबन्धित्वस्य प्रसिद्ध्या नोक्तदोष इति वाच्यम्। तथा च वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः। संयोगसंबन्धावच्छिन्नसामान्यधर्मावच्छिन्नाधिकरणत्वस्यैव संयोगसंबन्धावच्छिन्नसामान्य धर्मावच्छिन्नसंबन्धित्वस्याप्यप्रसिद्धेः।

यत्तु प्रकारतावच्छेदकतायां हेतुतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेश्यम्। अन्यथा इयं पृथिवी नीलरूपवत्त्वादित्यत्राव्याप्त्यापत्तेः। विषयितया नीलरूपत्वविशिष्ट-साधनाभाववत्पृथिवीनिष्ठविशेष्यतानिरूपितत्वस्य नीलरूपनिष्ठप्रकारतायां सत्त्वेन तादृशप्रकारताभिन्नत्वस्यासत्वात्। एवञ्च इदं ज्ञानं वह्निविषयकज्ञानत्ववद् विषयितया वह्निमत्वादित्यत्राव्याप्तेः। स्वरूपेण प्रमेयत्वविशिष्टवह्निविषयकज्ञाननिष्ठविशेष्य-तानिरूपितसमवायसंबन्धावच्छिन्नवह्नित्वरूपहेतुतावच्छेदकनिष्ठावच्छेदकताकभ्रमभिन्न-

ज्ञानीयप्रकारतावैशिष्ट्यस्य हेतुनिष्ठप्रकारतायां सत्त्वेन तदवच्छेदकत्वस्य हेतुतावच्छेदके वह्नित्वे सत्त्वात्। तज्ज्ञानमपि (स्वरूपेण प्रमेयत्वविशिष्टवह्निविषयकज्ञानमपि) हेत्वधिकरणं तत्र साध्याभावस्य सत्त्वादिति तन्न। प्रकारतायां हेतुतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नावच्छेदकत्वानिरूपितत्वस्यैव विशेषणतया तस्यां प्रकारतायां तादृशसंबन्धभिन्नस्वरूपसंबन्धावच्छिन्नप्रमेयत्वनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वेन हेतुनिष्ठप्रकारतायां तादृशप्रकारतावशिष्ट्यस्यासत्वेन तज्ज्ञानस्य (विषयितया नीलरूपविषयकज्ञानस्य) हेत्वनधिकरणत्वोपपत्तेः। न चैवं महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वसंबन्धेन बह्निहेतुके व्यभिचारिणि का गतिरिति वाच्यम् (अयमभावो महानसीयबह्नित्वावच्छिन्नप्रतियोमिताकाभाववान् महानसीयवह्नित्वावच्छिन्नप्रतियोगितासंबन्धेन बह्निमत्वादित्यत्र हेतुतावच्छेदकसंबन्धावच्छिन्नवह्नित्वावच्छिन्नप्रकारतायां हेतुतावच्छेदकताघटकसमवायातिरिक्तसंबन्धावच्छिन्नावच्छेदकत्वानिरूपिता या स्वाऽच्छेदकसंबन्धावच्छिन्नस्वावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभाववन्निष्ठविशेष्यतानिरूपित-प्रकारता तद्भिन्नत्व, स्वतादात्म्योभयसत्त्वेन तत् प्रकारतावच्छेदकत्वस्य हेतुतावच्छेदके वह्नित्वे सत्त्वेन तत्रातिव्याप्तिः) उभयाभावघटकसामान्यतोऽधिकरणतावच्छेदककोटौ हेतुतावच्छेदकसबन्धावच्छिन्नत्वस्य प्रकृतहेतुतावच्छेदकसंसर्गघटकतावच्छेदकधर्माऽच्छिन्नसंसर्गताकत्वरूपस्य सत्त्वात्। तथा च महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वरूपहेतुतावच्छेदकसंबन्धघटकतावच्छेदकप्रतियोगित्वावच्छिन्ना या बह्नित्वावच्छिन्ना प्रतियोगिता तादृशप्रतियोगितात्वावच्छिन्नसंसर्गताकाधिकरणतावच्छेदकत्वस्य, महानसीयबह्न्यभावरूपयन्निष्ठाधिकरणतानवच्छेदकत्वस्य च द्वयोर्वह्नित्वे हेतुतावच्छेदके सत्त्वेन तयोर्द्वयोर्व्यतिरेकाभावस्यैव तत्र (हेतुतावच्छेदके बह्नित्वे) सत्त्वेन हेत्वधिकरणाप्रसिद्धेः तत्रातिव्याप्त्यभावोपपत्तेः। तद्धर्मा (प्रकृतहेतुतावच्छेदकसंबन्धतावच्छेदकधर्मा) वच्छिन्नघटकतावच्छेदकत्वं च तदवच्छिन्नविषयित्वाभिन्नविशेष्यतावच्छेदकत्वम् (प्रकृतहेतुतावच्छेदकसंबन्धतावच्छेदकधर्मावच्छिन्नविषयित्वाभिन्नविशेष्यतावच्छेदकत्वम्)। तेन विपयित्वकालीनसंयोगादिहेतुतावच्छेदकसंबन्धस्थले न दोषः। (पर्वतो बह्निमान् विषयित्वकालीनसंयोगेन धूमादित्यत्र नाव्याप्तिः। अन्यथा

प्रकृतहेतुतावच्छेदकविषयित्वकालीनसंयोगनिष्ठसंसर्गतावच्छेदकविषयित्वत्वावच्छिन्नविषयित्वसंबन्धेन धूमस्य धूमविषयकज्ञाने सत्त्वेन तस्य धूमाधिकरणत्वं तत्र साध्याभावस्य सत्त्वात् । तथाकथने तु नोक्तदोषः । प्रकृतहेतुतावच्छेदकविषयिताकालीनसंयोगरूपसंबन्धतावच्छेदकसंयोगत्वावच्छिन्नविषयित्वाभिन्नविशेष्यतावच्छेदकसंयोगत्वावच्छिन्न - संसर्गताकाधिकरणता पर्वते वर्तते तत्र साध्याभावस्यासत्वात् । तादृशविषयितायां कालीनत्वनिष्ठविशेष्यतानिरूपितप्रकारत्वस्य सत्वात् । तादृशप्रतियोगित्वादीनां (महानसीयवह्नित्वावच्छिन्नप्रतियोगित्वादीनां, विशेषधर्मावच्छिन्नप्रतियोगित्वानाम् । आदिना प्रकारत्वादीनां संग्रहः) । ततद् व्यक्तित्वादिना संसर्गत्वस्यानुभवातीततया तद्व्यक्तिसंसर्गकस्थलस्य (महानसीयवह्नित्वावच्छिन्नप्रतियोगितासंसर्गकस्थलस्य) अयमभावः महानसीयवह्न्यभाववान् महानसीयवह्नित्वावच्छिन्नप्रतियोगितासंबन्धेन वह्निमत्वादित्यादिस्थलस्य) अभावादेव नातिव्याप्तिरिति वयं (तत्वालोककर्तारो वयम्) ब्रूमः ।

अथ हेतुतावच्छेदकसंबन्धावच्छिन्न स्वाश्रयाश्रयनिष्ठनिरूपकताकाधिकरणतावद् यन्निष्ठ हेतुतावच्छेदक विषयित्वान्यतरसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे विवक्षणीयम, उभयाभावो न निवेश्यः (हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य - नुयोगितानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावछेदकत्वोभयाभावो न निवेश्यः) विषयित्वसंयोगान्यतरसंबन्धेन धूमवानिति प्रतीतेः पर्वतीयधूमादिविषयकज्ञाने प्रमात्वेन पर्वतीयधूमत्वाद्यवच्छिन्नाधिकरणत्वविषयित्वसंभवाद् वह्निमान् धूमादित्यत्राव्याप्त्यभावात् (पर्वतीयधूमविषयकज्ञानं विषयित्वसंयोगान्यतरसंबन्धेन पर्वतीयधूमवद् इत्यत्र तत् ज्ञाननिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वं धूमत्वे प्रसिद्धमिति पर्वतो वह्निमानित्यत्राव्याप्त्यभावात् पर्वतनिष्ठाधिकरणता धूमत्वगतैकत्वाश्रयधूमत्वाश्रयपर्वतीयधूमनिष्ठाधेयतानिरूपिता तादृशनिरूपकता हेतुतावच्छेदकविषयित्वसंयोगान्यतरघटकसंयोगसं

बन्धावच्छिन्ना च स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकाधेयताकाधिकरणत्वस्याप्रसिद्धत्वेऽपि स्वाश्रयाश्रयनिष्ठाधेयतानिरूपिताधिकरणत्वस्य सामान्यधर्मानवच्छिन्नत्वेन प्रसिद्धत्वात् विषयितया घटसाध्यके घटज्ञानवृत्तित्वविशिष्टज्ञानत्वेऽव्याप्त्यापत्तेः। (इदं ज्ञानं विषयितया घटवत् घटज्ञानवृत्तित्वविशिष्टज्ञानत्वादित्यत्राव्याप्त्यापत्तेः) समवायेन घटज्ञानवृत्तित्वविशिष्टज्ञानत्वाभिन्नज्ञानत्वाधिकरणीभूते घटज्ञानवृत्तित्वविशिष्टज्ञानत्वविषयकज्ञाने प्रकृतहेतोः (घटज्ञानवृत्तित्वविशिष्टज्ञानत्वस्य) विषयितया सत्त्वेन तस्य हेत्वधिकरणत्वापत्त्या तत्र साध्याभावस्य सत्त्वात् (घटज्ञानत्वाभिन्नं यज्ज्ञानत्वं तस्य समवायेनाश्रयो यत् हेतुविषयकज्ञानं तद्वृत्तिज्ञानत्वविषयकज्ञाननिष्ठाधिकरणतानिरूपितविषयित्वसंबन्धावच्छिन्ननिरूपकतावच्छेदकगतघटज्ञानवृत्तित्वविशिष्टज्ञानत्वत्वगतरूपस्य हेतुतावच्छेदकगतरूपे सत्त्वेन तस्य हेत्वधिकरणत्वं तत्र साध्याभावस्य सत्वात्) घटविषयकज्ञानस्य हेत्वधिकरणत्वमिष्टम् न तु तद्भिन्नस्य घटज्ञानवृत्तित्वविशिष्टज्ञानत्वाभिन्नज्ञानत्वाश्रयज्ञानस्येति बोध्यम्। न च स्वा (हेतुतावच्छेदकरूपा) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे इति कल्पे च नोक्तदोषः। उक्तानुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकगतरूपेऽसत्त्वात् उभयो रूपयोः परस्परभेदादिति वाच्यम्। इदं ज्ञानं समवायेन घटज्ञानत्ववत् प्रतियोगितया घटज्ञानाभाववत्त्वादित्यत्राव्याप्त्यापत्तेः। हेतुतावच्छेदकं यद् घटज्ञानाभावत्वं तद्गतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकघटज्ञानाभावविषयकज्ञानाभावत्वावच्छिन्ननिरूपकताकाधिकरणतावद् यत्पदार्थीभूतघटज्ञानाभावविषयकज्ञाननिष्ठहेतुतावच्छेदकविषयित्वान्यतरघटकविषयित्वसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतावच्छेदकं यद् घटाभावत्वं तद्गतसमुदायत्वे सत्त्वेन घटज्ञानाभावविषयकज्ञानस्य हेत्वधिकरणत्वापत्तौ तत्र साध्याभावस्य सत्त्वात्।

वस्तुतः अन्यतरत्वं न संसर्गतायाम् अधिकरणतानिरूपितायामवच्छेदकम् (अन्यतरत्वं नाधिकरणतानिरूपितसंसर्गतायामवच्छेदकम्) विषयित्वसंयोगान्यतरसंबन्धेन

धूमवान् पर्वत इति ज्ञाने संयोगसंबन्धावच्छिन्नतत्तद्धूमत्वावच्छिन्नाधिकरणताव्यक्ती-नामेव विषयत्वात्, तज्ज्ञानं तादृशान्यतरसंबन्धेन धूमवदिति ज्ञाने च विषयित्वसंबन्धा-वच्छिन्नाधिकरणत्वस्यैव विषयत्वादिति सामान्यधर्मावच्छिन्नाधिकरणत्वस्यास्वीकारे धूमत्वगतैकत्वे संयोगसंबन्धावच्छिन्नपर्वतादिनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेद-कतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यासत्त्वेन धूमाधिकरणत्वस्या-प्रसिद्धेः। पर्वतो वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः। तादृशोभयाभावनिवेशे च नोक्त-दोषः। हेतुतावच्छेदकगतरूपे स्वाश्रयाश्रयाधिकरणीभूतयन्निष्ठाधिकरणतानिरूपितनिरू-पकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेऽपि सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितावच्छेदकत्वस्याभावेन तादृशोभयाभावस्य सत्त्वाद् भवति पर्वतादिः धूमरूप-हेत्वधिकरणमिति।

एवं ( हेतुतावच्छेदकसंबन्धविषयित्वसंबन्धान्यतरसंबन्धेन हेत्वधिकरणत्वविव-क्षणेऽनुपदोक्तदोषसत्त्वे ) प्रतियोगित्वहेतुतावच्छेदकान्यतरसंबन्धावच्छिन्नाधिकरण-त्वनिवेशोऽपि हेयः। पर्वतो वह्निमान् धूमादित्यत्र सामान्यधर्मावच्छिन्नाधिकरणत्वा-स्वीकारे धूमत्वगतैकत्वे तादृशानुयोगितावच्छेदकत्वस्यासत्वेन हेत्वधिकरणाप्रसिद्ध्या व्याप्त्यापत्तेः। अतएव (वह्निमान् धूमादित्यत्र पूर्वोक्तरीत्याऽव्याप्तेरेव) स्वा (हेतुतावच्छे-दकगतरूपा) वच्छिन्नप्रतियोगितानिरूपितानुयोगित्व हेतुतावच्छेदकान्यतरसंबन्धावच्छि-न्नाधिकरणतानिवेशोऽपि निरस्तः(हेतुतावच्छेदकधूमत्वगतैकत्वे स्वावच्छिन्नप्रतियोगिता-निरूपितानुयोगित्वसंबन्धावच्छिन्नधूमाभावनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदक-तात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य संयोगसंबन्धावच्छिन्न-पर्वतनिष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकत्वस्य सामान्यधर्मावच्छिन्नाधिकरणत्वास्वीकारपक्षेऽसत्त्वेन हेत्व-धिकरणाप्रसिद्धेः। उभयाभावनिवेशपक्षे तु नोक्तदोषः। हेतुतावच्छेदके सामान्यतोऽ ( किञ्चिन्निष्ठा ) धिकरणतानिरूपितनिरूपकत्वावच्छेदकत्वाभावेन स्वाश्रयाधिकरण यन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपित-

निरूपकतावच्छेदकत्वोभयाभावस्य सत्त्वेन पर्वतादौ हेत्वधिकरणत्वप्रसिद्ध्या न तत्रा व्याप्तिः ( पर्वतो वह्निमान् धूमादित्यत्र नाव्याप्तिः )। नन्वेवं संयोगस्वरूपान्यतर-संबन्धेन धूमहेतुकस्थलेऽव्याप्तिः। (पर्वतो वह्निमान् संयोगस्वरूपान्यतरसंबन्धेन धूमा-दित्यत्राव्याप्तिः )। हेतुतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वाप्रसिद्धेः। ( स्वरूप-संबन्धावच्छिन्नधूमत्वावच्छिन्नाधिकरणत्वस्य संयोगसंबन्धावच्छिन्नधूमत्वावच्छिन्न-निरूपकतानिरूपिताधिकरणत्वस्य चाप्रसिद्धेरिति चेन्मैवम्। हेतुतानिरूपितसंसर्गता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गतायां निवे-श्यत्वात्। संसर्गताया रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्व, स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता वच्छेदकरूपवृत्ति (निष्ठ) प्रतियोगिताकभेदावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वान्यतर-संबन्धेन। एवञ्चान्यतरसंबन्धेन हेतुतास्थले ( पर्वतो बह्निमान् संयोगस्वरूपान्यतर संबन्धेन धूमादित्यादौ ) प्रत्येकधर्म ( संयोगत्वावच्छिन्नसंसर्गतैव किं वा स्वरूपत्वा-वच्छिन्नसंसर्गतैव ) रूप ( स्वस्वरूप ) वृत्तिर्भविष्यति। तेन स्वरूपसंबन्धा-वच्छिन्नधूमत्वावच्छिन्नाधिकरणत्वस्याप्रसिद्धत्वेऽपि संयोगसंबन्धावच्छिन्नतराद्धूम-त्वावच्छिन्ननिरूपकत्वमादाय संयोगस्वरूपान्यतरसंबन्धेन हेतुतास्थले लक्षणसमन्वयः कार्यः।

अथ इदं द्रव्यं द्रव्यानुयोगिकसमवाय, गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्न-निरूपितविषयित्वान्यतरसंबन्धेन सत्त्वादित्यत्राव्याप्तिः। यत्पदेन विशिष्टसत्ताविष-यकज्ञानस्यापि धारणसंभवात् तत् ( विशिष्टसत्त्वविषयक ) ज्ञाननिष्ठाधिकरणता-निरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य सत्तात्वगतैकत्वे सत्त्वेऽपि हेतुतावच्छेदकसंसर्गघटकप्रत्येकसंबन्धा ( तादृशान्यतरघटकतादृशसमवाय संबन्धा ) वच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्या-प्त्यनुयोगितावच्छेदकत्वस्य ( सामान्यधर्मावच्छिन्नाधिकरणत्वाभावपक्षे ) विरहेण तादृशोभयाभावस्य सत्त्वात्। हेतुतावच्छेदकद्रव्यानुयोगिकसमवायसंबन्धावच्छिन्नायाः द्रव्यनिष्ठाधिकरणतानिरूपितसत्तानिष्ठनिरूपकतायाः सामान्यधर्मावच्छिन्नाधिकरणत्वा-

भावपक्षेऽसत्त्वात् । एवञ्च तादृशहेत्वधिकरणविशिष्टसत्ताविषयकज्ञाननिष्ठसाध्याभावमादायाव्याप्तिः ।

यत्तु यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंबन्धीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं हेतुतावच्छेदकगतरूपे विवक्षणीयमित्युक्तस्थले द्रव्यस्यैव यत्पदार्थतेति नाव्याप्तिः । (द्रव्यनिष्ठानुयोगितानिरूपित हेतुतावच्छेदकद्रव्यानुयोगिकसमवायसंबन्धप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिता - कपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्तात्वगतैकत्वे सत्त्वात् । न तु विशिष्टसत्ता विषयकज्ञाननिष्ठानुयोगितानिरूपित हेतुतावच्छेदकसंबन्धीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्तात्वगतैकत्वे सत्त्वात् )

तन्न । धूमत्वस्य संयोगसंबन्धावच्छिन्ननिरूपकतायामिव संसर्गीयप्रतियोगितायामपि अनवच्छेदकत्वात् । अन्यथा हेतुतावच्छेदकगतरूपे यन्निष्ठानुयोगितानिरूपितहेतुतावच्छेदकसंबन्धीयप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वमात्रस्य विवक्षायामेव सामञ्जस्ये तत्र तदुभयाभावनिवेशस्या (हेतुतावच्छेदकगतरूपे यन्निष्ठाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व, सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयाभावनिवेशस्या) नौचित्यापत्तेः । इदं द्रव्यं द्रव्यानुयोगिकसमवाय, विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयिताऽन्यतरसंबन्धेन सत्त्वादित्यत्र यत्पदेन विशिष्टसत्ताविषयकज्ञानस्य ग्रहणं न संभवति । विशिष्टसत्ताविषयकज्ञाननिष्ठानुयोगिता निरूपिता विशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसंसर्गीयप्रतियोगिता विशिष्टसत्तानिष्ठैव, न तु शुद्धसत्तानिष्ठा विषयिताया विलक्षणत्वात् । तथा च तादृशप्रतियोगिता (विशिष्टसत्तानिष्ठप्रतियोगिता) वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विशिष्टसत्तात्वगतरूपे सत्त्वेन शुद्धसत्तात्वगतरूपेऽसत्त्वात् । यत्पदेन द्रव्यस्य ग्रहणं भवति । द्रव्यनिष्ठानुयोगितानिरूपितद्रव्यानुयोगिकसमवायसंसर्गीयप्रतियोगिता शुद्धसत्तानिष्ठा तादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य शुद्धसत्तात्वगतैकत्वे सत्त्वात् । तथा चैतादृशनिवेशेनैव सामञ्जस्ये तत्र तदुभयाभावनिवेशस्य ग्रन्थकृतोऽ नौचित्यप्रसङ्गो ऽत एतादृशनिवेशो न युक्त इति भावः ।

न च प्रमेयावच्छिन्न( संसर्गीय )प्रतियोगितामादाय ह्रदादीनां धूमहेतुकस्थले हेत्वधिकरणत्वापत्तिः (पर्वतो वह्निमान् धूमादित्यत्र ह्रदनिष्ठानुयोगितानिरूपिता हेतुतावच्छदेकसंयोगसंसर्गीया धूमनिष्ठा प्रमेयावच्छिन्ना प्रतियोगिता तादृशप्रतियोगिता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छदेकत्वस्य हेतुतावच्छेदक-धूमत्वगतैकत्वे सत्त्वेन ह्रदस्य हेत्वधिकरणत्वमिति तत्र साध्याभावस्य सत्वेनाव्याप्ति रिति वाच्यम् । हेतुतानिरूपितावच्छदेकताविशिष्टान्यावच्छदेकत्वानिरूपित्त्वस्य हेतुतावच्छेदकसंसर्गीयप्रतियोगितायां विशेषणेनादोषात् । वै० स्वसामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्वैतत्त्रितयसंबन्धेन । वृत्तित्वञ्चात्र स्वान-वच्छेदकसंबन्धावच्छिन्नत्वसंबन्धेन । प्रमेयावच्छिन्नधूमनिष्ठहेतुतावच्छेदकसंसर्गीयप्रति-योगितायां हेतुतानिरूपितधूमत्वनिष्ठावच्छेदकताविशिष्टान्या प्रमेयत्वावच्छिन्ना प्रमेय-निष्ठाऽवच्छेदकता तन्निरूपितत्वस्य सत्वेन तदनिरूपितत्वस्यासत्त्वात् तादृशसांसर्गि-कप्रतियोगिता न धर्तव्या । एवं वह्न्यभावत्वसाध्यके संयोगप्रतियोगित्वान्यतरसंबन्धेन वह्निहेतुके व्यभिचारिणि अतिव्याप्तिस्तथापि दुरुद्धरा । यत्पदेन पर्वतस्य धारणा-संभवात् । तन्निष्ठाधिकरणतानवच्छेदकत्वस्य सामान्यतोऽधिकरणतावच्छेदकत्वस्य च द्वयोर्वह्नित्वे सत्त्वात् । तथा चायं वह्न्यभावः वह्न्यभावत्ववान् संयोगप्रतियोगित्वा-न्यतरसंबन्धेन वह्ने रित्यत्र यत्पदेन वह्न्यभाव एवं ग्राह्यः, तन्निष्ठाधिकरणतानिरू-पितप्रतियोगित्वसंबन्धावच्छिन्ननिरूपकतावच्छेदकत्वस्य वह्नित्वे सत्त्वेन तदुभया-भावस्य तत्र सत्त्वात् इति चेत् ।

अत्रोच्यते । हेतुतावच्छेदकतावच्छेदकतात्वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकगतरूपे स्वाश्रयाश्रयनिष्ठा या हेतुतानिरूपितसंसर्गतावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपनिरूपितसंसर्गता स्वावच्छेदकतात्वा वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वा ( संसर्गता ) वच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नप्रति-योगिताकभेदवदवृत्तित्वान्यतरसंबन्धावच्छिन्न ( हेतुतावच्छेदकसंसर्गनिष्ठसंसर्गतानिष्ठ ) वृत्तितावत्संसर्गतानिरूपित ( तद्धूमनिष्ठ ) निरूपकतातद्विशिष्टान्यत्वं-विवक्षणीयम् । विशिष्टे निरूपकता वै० । स्व (तद्धूमनिष्ठनिरूपकता) विशिष्ट-

निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वविशिष्ट-निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन निरूपकताविशिष्टं तद्धूमत्वगतैकत्वम् । निरूपकतायां प्रथमवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति संसर्गताकत्व, स्वनिरूपिताधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितत्वोभयसंबन्धेन । निरूपकतायां द्वितीयवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकावच्छिन्नघटकतावच्छेदक-धर्मावच्छिन्नसंसर्गताकत्वसंबन्धेन । एवञ्च इदं द्रव्यं द्रव्यानुयोगिकसमवायविशिष्टसत्ता-त्वावच्छिन्ननिरूपितविषयित्वान्यतरसंबन्धेन सत्त्वादित्यत्र नाव्याप्तिः । सत्तात्वगतैकत्वे स्वाश्रयाश्रयनिष्ठविशिष्टसत्तात्वावच्छिन्ननिरूपितविषयित्वसंबन्धावच्छिन्नविशिष्टसत्त्व-त्वावच्छिन्ननिरूपकताविशिष्टत्वस्यैव सत्त्वेन तन्निरूपिताधिकरणतावतो (विशिष्टसत्ता-विषयकज्ञानस्य) यत्पदार्थत्वाभावात् । उक्तव्यभिचारिणि (वह्न्यभावत्वसाध्यके संयोग प्रतियोगित्वान्यतरसंबन्धेन वह्निहेतुके अयमभावो वह्न्यभावत्ववान् संयोगप्रतियोगित्वा-न्यतरसंबन्धेन वह्निमत्त्वादित्यत्र) वह्नित्वगतैकत्वे संयोगसंबन्धावच्छिन्नवह्नित्वा-वच्छिन्ननिरूपकताविशिष्टान्यत्वसत्त्वेन तन्निरूपकतानिरूपिताधिकरणतावतः पर्वतस्य यत्पदार्थत्वसंभवेन नातिव्याप्तिरिति । वह्निमान् धूमादित्यत्र तादृशधूमत्वगतैकत्वे स्वा-श्रयाश्रयधूमनिष्ठहेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकसंयोगत्वगतैकत्वे स्वावच्छेदकता ( संयोगनिष्ठसंसर्गतावच्छेदकता ) त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन वृत्ति संयोगनिष्ठसंसर्गता-तन्निरूपिता निरूपकता तद्धूमनिष्ठा, तद्विशिष्टा स्वनिरूपितसंसर्गतावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्व (निरूपितत्व) स्व-निरूपिताधिकरणतावत्पर्वतरूपयन्निष्ठाधिकरणतानिरूपितत्वोभयसंबन्धेन स्वैव निरू-पकता, तद्विशिष्टं तद्धूमत्वगतैकत्वं, स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्व स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-त्वोभयसंबन्धेन । तदन्यत्वं हेतुतावच्छेदकधूमत्वगतैकत्वे वर्तते । अयमभावो वह्न्यभावत्व-वान् संयोगप्रतियोगित्वान्यतरसंबन्धेन वह्निमत्त्वादित्यत्र नातिव्याप्तिः । तादृशहेतुता-

वच्छेदकवह्नित्वगतैकत्वे स्वाश्रयाश्रयवह्निनिष्ठा हेतुतानिरूपितसंसर्गतावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक(संयोगप्रतियोगित्वान्यतरत्वगतरूप)निरूपितस्वा (संसर्गत्वा) वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक (संयोग-प्रतियोगितान्यतरत्व ) गतरूपवृत्तिप्रतियोगिताकभेदावच्छिन्नभेदवद्वृत्तित्वसंबन्धावच्छि-न्नवृत्तितावत् संयोगनिष्ठसंसर्गतानिरूपितनिरूपकता वह्निनिष्ठा तद्विशिष्टान्यत्वं वह्नित्वगतैकत्वे नास्ति। रूपे तादृशनिरूपकतावैशिष्ट्यञ्च स्वविशिष्टनिरूपकता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वविशिष्टनिरूपकता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन। निरूपक-तायां प्रथमवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गतानिरूपितत्व, स्वनिरूपिताधिकरणतावद् यत् ( पर्वत ) निष्ठाधिकरणतानिरूपितत्वोभयसंबन्धेन। निरूपकतायां द्वितीयवैशिष्ट्यञ्च स्वनिरूपितसंसर्गतावच्छेदकावच्छिन्नघटकतावच्छेदकधर्मावच्छिन्नसंसर्गतानिरूपितत्व - संबन्धेन। तथा च स्व ( वह्नित्वनिष्ठनिरूपकता ) निरूपितसंसर्गतावच्छेदकावच्छिन्न-घटकतावच्छेदकसंयोगत्वावच्छिन्नसंसर्गतानिरूपितत्वस्य स्वस्मिन् सत्वेन स्वनिरूपित-संसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकसंयोगत्वगतरूपवृत्ति संसर्गतानिरूपितत्व, स्वानिरूपिताधिकरणतावत्पर्वतरूपयन्निष्ठाधिकरणतानिरूपित-त्वयोः तत्र सत्वात् नोक्तदोषः।

न चैतल्लक्षणस्य यत्वघटितत्वेनाननुगम इति वाच्यम्। हेतुतावच्छेदकगतरूप-वृत्तिभेदः ( हेतुतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकरूपवृत्तिसंसर्गतानिरूपितस्वाश्रयाश्रय ( हेतु ) निष्ठनिरूपकताविशिष्टं न हेतुतावच्छेदकगतरूपमित्याकारको भेदः ) तदीया या निरूपकताविशिष्टनिरूपकता-निष्ठा प्रतियोगिता तन्निरूपिता या निरूपकतात्वावच्छिन्नाऽवच्छेदकता (तादृशसंसर्गता-निरूपिता स्वाश्रयाश्रयहेतुनिष्ठनिरूपकतानिष्ठावच्छेदकता ) तन्निरूपिता या निरू-पकतात्वावच्छिन्नावच्छेदकतात्वनिष्ठावच्छेदकता तन्निरूपितोभयत्वावच्छिन्न ( स्वहेतुनिष्ठनिरूपकता ) विशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-

पर्याप्त्यनुयोगितावच्छेदकत्व, स्वविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयावच्छिन्नस्व( हेतुनिष्ठनिरूपकता )विशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वविशिष्ट निरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयावच्छिन्नसंसर्गतानिरूपितावच्छेदकतावदभावीया ( तादृशोभयघटकतादृशपर्याप्त्यनुयोगितावच्छेदकत्वाभावीया)प्रतियोगिता तन्निरूपितपरंपरीया स्व(स्वाश्रयाश्रयहेतुनिष्ठनिरूपकतानिष्ठा प्रतियोगिता )विशिष्टघटकस्वनिष्ठावच्छेदकता तन्निरूपिता या तादृशसंसर्गताकत्वनिष्ठावच्छेदकता स्वनिरूपित ( निरूपकतानिरूपित ) संसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृतिसंसर्गताकत्व ) निष्ठावच्छेदकता ( स्वनिरूपितसंसर्गतावच्छेदकावच्छिन्नघटकतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वत्वनिष्ठावच्छेदकता ) तन्निरूपितोभयत्वावच्छिन्नसंसर्गता ( तादृशकत्वतादृशकत्वोभयत्वावच्छिन्नसंसर्गता ) तन्निरूपितनिरूपितत्वसंबन्धावच्छिन्नाधिकरणत्वनिष्ठावच्छेदकता निरूपिता या स्वनिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वसंबन्धावच्छिन्ना ( पक्षनिष्ठा ) वच्छेदकता तद्वत्वेन यत्पदार्थानुगमादिति ।

हेतुतावच्छेदकगतरूपवृत्तिभेदप्रतियोगितानिरूपिता या तादृशनिरूपकतात्वावच्छिन्नावच्छेदकता तन्निरूपिततादृशावच्छेदकतात्वनिष्ठावच्छेदकतानिरूपितोभयत्वावच्छिन्नसंसर्गतानिरूपितावच्छेदकतावदभावीयप्रतियोगितानिरूपितपरंपरीयस्व - निष्ठावच्छेदकतानिरूपिता या तादृशसंसर्गताकत्वत्वनिष्ठावच्छेदकतानिरूपितोभयत्वावच्छिन्ना संसर्गता तन्निरूपितनिरूपितत्वसंबन्धावच्छिन्नाधिकरणत्वनिष्ठावच्छेदकतानिरूपिता या स्वनिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपिताधेयत्वसंबन्धावच्छिन्नावच्छेदकता तद्वत्वेन यत्पदार्थानुगमादिति तत्त्वालोकः ।

प्रमीयप्रकारतानिरूपितावच्छेदकत्वस्य हेतुतावच्छेदकविशेषणत्वपक्षे च हेतुतावच्छेदकगतरूपे हेतुताविशिष्टप्रमीयप्रकारतानिरूपितविशेष्यतावद्यन्निष्ठाधिकरणतानिरूपितनिरूपकताविशिष्टान्यत्वं स एव हेत्वधिकरणपदार्थः । प्रकारतायां हेतुतावै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-

वृत्तित्व, स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छे-दकरूपनिरूपित स्वा( संसर्गत्वा )वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्व, स्वा(संसर्गत्वा)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेद-करूपवृत्तिभेदावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वान्यतरसंबन्धावच्छिन्नवृत्तितावत्संसर्ग-ताकत्वोभयसंबन्धेन। निरूपकताविशिष्टान्यघटकविशिष्टनिरूपकतावै० स्वविशिष्टनिरू-पकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वविशिष्टनिरू-पकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन। नि-रूपकतायां प्रथमनिरूपकतावै० स्वनिरूपताधिकरणतावद्यन्निष्ठाधिकरणतानिरूपितत्व, स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृ-त्तिसंसर्गताकत्वोभयसंबन्धेन। निरूपकतायां द्वितीयनिरूपकतावै० स्वनिरूपिता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोग्यवच्छेदकताकत्व स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिभेदावच्छिन्नभेदवद्वृत्तिसंसर्गताकत्वोभयसंबन्धेन। संसर्गतायां रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्व रूपनिरूपितस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेद-कत्वस्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुपोगितावच्छेदकरूपवृत्तिभेदावच्छि-न्नभेदवद्वृत्तित्वान्यतरसंबन्धेन। पर्वतो बह्निमान् धूमादित्यत्र नाव्याप्तिः। तथा हि हेतुतावच्छेदकधूमत्वगतैकत्वे हेतुताविशिष्टा या संयोगसंबन्धावच्छिन्नधूमवान् पर्वत इति प्रमीयज्ञानीया प्रकारता तन्निरूपितविशेष्यतावत्पर्वतनिष्ठाधिकरणतानिरूपित-निरूपकताविशिष्टान्यत्वं वर्तते। अतो भवति हेत्वधिकरणं पर्वतः। हेतुतावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकधूमत्वगतैकत्वे वृत्तित्वं स्वावच्छेदकतात्वाव-च्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्य-वच्छेदकताकनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-संबन्धेन प्रकारतायां वर्तते। स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकरूपनिरूपिता या स्वा(संसर्गता)वच्छेदकतात्वावच्छिन्नप्रतियोगि-

ताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वा( संसर्गता )वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिवृत्तिभेदावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वान्यतर संबन्धावच्छिन्ना वृत्तिता तद्वत्संसर्गताकत्वमपि प्रकारतायां वर्तते। तादृशप्रकारतानिरूपितविशेष्यतावत्पर्वतनिष्ठाधिकरणतानिरूपिततादृशसंसर्गता स्वाश्रयाश्रयतद्धर्मनिष्ठनिरूपकताविशिष्टं यद् तद्धूमत्वगतैकत्वं तदन्यत्वं धूमत्वगतैकत्वे वर्तते। तत्तद्धूमत्वगतैकत्वे निरूपकतावै० स्वविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व स्वविशिष्टनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धेन। प्रथमनिरूपकतावै० स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्व, स्वनिरूपिततादृशवृत्तितावत्संसर्गताकत्वोभयसंबन्धेन। वृत्तिता च संसर्गतायाम् (निरूपकता निरूपिता) संसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेकरूपनिरूपित स्व(संसर्गता)निरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व, स्वा(संसर्गता)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिभेदावच्छिन्नभेदवद्वृत्तित्वान्यतरसंबन्धावच्छिन्ना वृत्तिता तद्वत्संसर्गताकत्वोभयसंबन्धेन, इति हेतुतावच्छेदकावच्छिन्नाधिकरणतेति।

**अथ तथा च धूमत्वाद्यनुगमादेव तत्र व्याप्तेरैक्यव्यवहारो न तु वस्तुगत्या व्याप्तेरैक्यमिति जा० टी०।**

तथा चैकाव्याप्तिरित्यत्रैकपदम् एकधर्मावच्छिन्ननिरूपकताकैकधर्मावच्छिन्नानुयोगिताकपरम्। साध्यतावच्छेदकधर्मावच्छिन्ननिरूपित हेतुतावच्छेदकावच्छिन्नानुयोगिकसामानाधिकरण्यपरम्।

नन्वेवमिति ( सामान्यलक्षणाऽस्वीकारे ), नन्वेवं महानसीयवह्निसामानाधिकरण्यस्य स्मृतस्य पक्षवृत्तिधूमादावसत्त्वात् पर्वतीयवह्निसामानाधिकरण्यस्य प्रागननुभवात् कुतः परामर्श इत्याशङ्कायामाह—एकैव सा व्याप्तिरिति जा० टी०।

नन्वेवमिति । एवमिति एवम् पक्षधर्मांशे हेतौ विशेषणतयानुमितिजनकावच्छेदक-त्वरूपव्याप्तित्वस्य सामानाधिकरण्यमात्रे स्वीकारेऽपि व्याप्तौ ऐक्यव्यवहारोपपादने । पर्वतीयबह्निसामानाधिकरण्यस्य प्रागननुभवात् कुतः परामर्शः ( बह्निव्याप्यधूमवान् पर्वत इति कुतः परामर्शः ) इति गङ्गायामित्यादि । तथा च स्व ( हेतु ) व्यापकसामानाधिकरण्यावच्छिन्नहेतुविषयकज्ञानस्यैव तदनुमितिं प्रति कारणत्वेन तस्य ( हेतुसामानाधिकरण्यस्य ) पक्षधर्मे ( पर्वतीयधूमे ) दृष्टान्तसाधारणे ( महानसीय-साधारणे ) महावाय्वादावुपनीतसामानाधिकरण्यविषयकत्वेन संभवितया पक्षधर्म-धूमादिविषयकपरामर्शाभावेऽपि क्षत्यभावेन परामर्शशङ्काया एवानुत्थानात् सिद्धान्त-विधानमनुचितमिति । अत्र यथा तत्सङ्गतिः तथा तामादायैवेत्याद्यग्रिमग्रन्थे व्यक्ती-भविष्यतीति भावः ।

केचित्तु एवमिति एवशब्दस्य भक्त्या ऐक्यपरत्वे इत्याशङ्कायामित्यादि । तथा च व्याप्तौ भाक्तमेव ऐक्यं व्यवह्रीयेत चेत् कथं सामान्यप्रत्यासत्त्यनङ्गीकारपक्षे पर्वतीय-धूमे व्याप्तिज्ञानाभावमाशङ्क्य व्याप्त्यैक्यमुच्येत तादृशैक्यसद्भावेऽपि व्याप्तिज्ञाना-संभवस्यानुद्धारादिति भावः । तादृशैक्यसद्भावेऽपि ( भ्रमविषयव्याप्तेरैक्यसद्भावे-ऽपि) । अथैवं वस्तुतस्त्वित्यादिग्रन्थेऽनेकस्वरूपसामानाधिकरण्यात्मकव्याप्त्यभिधानं सन्दर्भ विरुद्धं स्यादिति चेत् सत्यम् यद्रूपविशिष्टसामानाधिकरण्येत्यादिना प्रथमं सामाना-धिकरण्यमात्रस्य व्याप्तित्वमभिधाय, ऐक्यव्यवहारश्च तत्र ( व्याप्तौ ) कथञ्चिदुपपाद्य तत्र (व्याप्तौ) दूषणपूर्वकं सामान्यलक्षणाप्रत्यासत्त्यङ्गीकारानङ्गीकारमतभेदेन सिद्धान्त-भूतं भाक्तमुख्यव्यवहारविषयं व्याप्तिद्वयं बोधयतो वस्तुतस्त्वित्यादिग्रन्थस्य न सन्दर्भ-विरोधः । एवञ्च सामानाधिकरण्यमात्रव्याप्तिपक्ष विशिष्टव्याप्तिपक्षयोः प्रथमे सदोषत्वस्य द्वितीयपक्षाभिधायकग्रन्थे एव व्यक्तत्वात् । परामर्शीयसिद्धान्तसंगतिरूपतद्ग्र-न्थाप्रकाशितद्वितीयपक्षानुगुण्यप्रकाशनमात्रतात्पर्यकस्य नवेत्यादिग्रन्थस्यापि द्वितीयेऽपि पक्षे द्वितीये एवोक्तानुगुण्यं सर्वथा निर्दोषत्वञ्च प्रकटयितुं न तु हेतुनिष्ठेत्यादि वक्ष्य तीति वदन्ति ।

धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमितिः स्यादिति भावः इति जा० टी०।

तथा चोक्तसामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वरूपकारणतावच्छेदकावच्छिन्नज्ञानस्य रासभपरामर्शस्थलेऽपि सत्त्वेन तत्रानुमित्यनुत्पत्त्यान्वयव्यभिचार इति भावः। अथ सामानाधिकरण्यावच्छिन्नप्रकारकज्ञानत्वेन (हेतुव्यापकसाध्यसामानाधिकरण्यावच्छिन्नहेतुप्रकारताशालिज्ञानत्व) परामर्शस्य सामानाधिकरण्यमात्रे (हेतुव्यापकसाध्य सामानाधिकरण्यमात्रे) व्याप्तित्वस्वीकारेऽपि न कारणता तादृशनिखिलज्ञानाविरोधित्वेन, स्वरूपासिद्धेः हेत्वाभासत्वानुपपत्तेः। हेतुव्यापकसाध्यसामानाधिकरण्यावच्छिन्नप्रकारतानिरूपकज्ञानत्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकतायाः स्वरूपासिद्धिज्ञानेऽसत्वात्। अनुमितितत्कारणान्यतरत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयिताशालिज्ञानविषयस्यैव हेत्वाभासत्वात्। किन्तु प्रकृतहेतुव्यापकसाध्यसामानाधिकरण्यात्मकव्याप्तिप्रकारतानिरूपित प्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नप्रकारतानिरूपितप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानत्वेन परामर्शस्य कारणत्वं वक्तव्यम्। तथा च धूमव्यापकवह्निसमानाधिकरणरासभवानिति परामर्शात् पर्वतो बह्निमानित्यनुमितिर्नापाद्या, एतामनुमितिं प्रति एतत्परामर्शस्याकारणत्वात्। न चैवमपि एतत्परामर्शात् पर्वतो बह्निमानित्यनुमितिवारणेऽपि रासभो बह्निव्याप्य इति व्यवहारो रासभेन वारित इति वाच्यम्। तद्धर्मावच्छिन्ने तद्व्याप्यव्यवहारे तद्धर्मावच्छिन्नव्यापकसामानाधिकरण्यस्यैव प्रयोजकत्वेन रासभत्वावच्छिन्ननिरूपितव्यापकतायाः वह्नित्वावच्छिन्नेऽसत्वेन तत्र (रासभे) तादृशव्यवहाराभावोपपत्तेरित्याशयेनाह—न च धूमादिव्यापकवह्न्यादिसमानाधिकरणधूमादिमत्तानिश्चयत्वेनैव परामर्शस्य धूमादिलिङ्गकानुमितिहेतुत्वादुक्तव्याप्ते रासभादिसाधारण्येऽपि न क्षतिरिति वाच्यम्, पक्षधर्मांशे विषयतया अनुमितिजनकतावच्छेदकस्यैव व्याप्तिपदार्थतया धूमत्वादेस्तत्रप्रवेशे तद्घटितस्यैव व्याप्तित्वादिति भावः इति जा० टी०। एवकारेण, व्यापकसामानाधिकरण्यमात्रस्य व्यवच्छेदः। एवञ्च हेतुव्यापकसाध्यसामानाधिकरण्यमात्रं न व्याप्तिः, किन्तु प्रकृतहेतुतावच्छेदकावच्छिन्ने प्रकृतहेतुव्यापकसाध्यसामानाधिकरण्यं व्याप्तिः।

तथा च व्यापकसामानाधिकरण्यमात्रस्य व्याप्तित्ववादिभिः व्यापकसामानाधिकरण्यस्य व्याप्तित्वोपपत्तये हेतुव्यापकसाध्यसामानाधिकरण्यमात्रप्रकारकज्ञानस्य कारणत्वं वाच्यम्, एवञ्च पक्षे पर्वते धूमदर्शनेऽसति रासभदर्शने उपनीतधूमव्यापकवह्निसामानाधिकरण्य-प्रकारेण रासभस्य वह्निधूमविरहिणि पक्षे परामर्शात् धूमलिङ्गकवह्न्यनुमितिः दुर्वारा स्यात्। न चैवं रासभवानिति ज्ञानाकारलेखनमसंगतं धूमव्यापकवह्निसामानाधि-करणधूमवानिति लेखनीयमिति वाच्यम्। यथाश्रुताभिप्रायेण तल्लेखात् (रासभादि-साधारणत्वादिति दीधितिदर्शनेन जागदीश्यां रासभपदोपादानं बोध्यम् ।) सामानाधि-करण्यप्रकारकेत्यनेन सामानाधिकरण्यातिरिक्तहेतुतावच्छेदकप्रकारकत्वस्यानुमिति-निष्ठकार्यतानिरूपितपरामर्शनिष्ठकारणतावच्छेदकघटकत्वस्यैव व्यवच्छेदात्। तावतैव व्यापकसामानाधिकरण्यमात्रस्य व्याप्तित्वसिद्धिः। न हि ज्ञानेऽतिरिक्तप्रकारकत्वस्यैव वैफल्यादित्यत्र वा तात्पर्यात्। न चैवं सामानाधिकरण्यमात्रस्य व्याप्तित्वे स्वरूपा-सिद्धस्य तदविरोधित्वेनाभासानुपपत्तिरिति वाच्यम्। अनुभवसिद्धप्रतिबन्धकत्वान्तरस्य (मणिमन्त्रन्यायेन प्रतिबन्धकत्वस्य) तैरप्यङ्गीकारादिति भावः। (मणिमन्त्रन्यायेन तस्य स्वरूपसिद्धेरनुमितितत्कारणान्यतरप्रतिबन्धकत्वमङ्गीकार्यमिति भावः) ।

कश्चित् एतद्ग्रन्थस्य धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानस्य-कारणत्वे पक्षधर्मांशे सामानाधिकरण्यधूमत्वयोः प्रकारतया व्याप्तित्वेन मदिष्टसिद्धिरित्ये-तदर्थकतया धूमत्वादिमति तादृशसामानाधिकरण्यमिति दीधिते धूमत्वविशिष्टविशेषणता-पन्नसामानाधिकरण्यरूपैकविशेषणतापन्नसामानाधिकरण्यहेतुतावच्छेदकोभयार्थकतया च व्याख्यानं कुरुते। तन्न सर्वथा चारु। सामानाधिकरण्यहेतुतावच्छेदकयोरुभयोर्व्याप्तित्वे हेतुव्यापकसाध्यसमानाधिकरणप्रकृतहेतुतावच्छेदकावच्छिन्नवत्ताज्ञानस्यैवानुमितिकारणत्व-प्रसङ्गे न सत्त्वस्य गुणेऽपीत्यादि ग्रन्थोऽसङ्गतः स्यादिति। (साधननिष्ठसामानाधि-करण्यस्य व्याप्तित्वे विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणपरामर्शाद् गुणेऽपि द्रव्यत्वानुमितेः प्रमात्वं स्यादिति जगदीशग्रन्थोऽसंगतः स्यात् ) सत्ताधर्मिणि गुणावच्छेदेन द्रव्यत्वसामानाधिकरण्येन सामानाधिकरण्येन गुणकर्मान्यत्वस्य चोभयोरसत्वादिति भावः। अथ धूमत्वादिमति तादृशसामानाधिकरण्य-

मित्यादि दीधितिग्रन्थेन लब्धस्य धूमत्वसामानाधिकरण्यापन्नस्य सामानाधिकरण्य-संबन्धेन धूमत्वविशिष्टस्य वा सामानाधिकरण्यस्य धूमत्वत्वप्रवेशप्रयुक्तगौरवेण विषयितया कारणतानवच्छेदकत्वेऽपि ( अनुमितिनिष्ठकार्यतानिरूपितपरामर्शनिष्ठ कारणता ( व्याप्तिज्ञाननिष्ठकारणता , वच्छेदकत्वस्य तादृशव्याप्तौ विरहेऽपि ) आधेयतया धूमविशिष्टतादृशसामानाधिकरण्यस्य कारणतावच्छेदकत्वं तात्पर्येण वाच्यम्। तदपि अनुपपन्नम् अवच्छिन्नत्वसंबन्धेन ( अनुमितिनिष्ठकार्यतानिरूपित-परामर्शनिष्ठकारणतानिरूपितप्रकारतानिष्ठावच्छेदकतानिरुपितावच्छिन्नत्वसंबन्धेन) धूम-त्वविशिष्टस्य सामानाधिकरण्यस्य कारणतावच्छेदकत्वौचित्यात् धूमस्याप्रवेशेन लाघवादिति चेन्न । संबन्धसामान्येन प्रकारत्वाद्यतिरिक्तेन स्वातन्त्र्ये णोल्लिखिततया भासमानस्य स्वरूपतो भानानङ्गीकारे विपरीतगौरवात् । (अवच्छिन्नत्वसंबन्धेन धूमत्व-विशिष्टस्य सामानाधिकरण्यस्य व्याप्तित्वे धूमत्वस्योल्लिख्यमानतया धूमत्वत्वेन भानम् । धूमत्वत्वं च धूमेतरावृत्तित्वे सति सकलधूमवृत्तित्वमिति धूमत्वविशिष्टसामानाधि-करण्यस्य व्याप्तित्वे गौरवं भवति । धूमनिष्ठसामानाधिकरण्यस्य व्याप्तित्वे तु धूमत्व-स्यानुल्लिख्यमानत्वेन स्वरूपतो भानमिति लाघवम् । धूमत्वावच्छिन्नत्वस्य कालिकादिना रासभादिवृत्तिसाधारण्यवारणाय समवायसंबन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकत्व-रूपस्य वाच्यतया गौरवमिति केचित् तन्न । आधेयत्वस्यापि स्वरूपसंबन्धावच्छिन्नत्वस्यैव संसर्गताया वाच्यतया तत्प्रयुक्तगौरवस्याभावादिति । ( समवायसंबन्धावच्छिन्नधूमत्व-निष्ठावच्छेदकताकत्वप्रयुक्तगौरवस्याभावदिति । धूमनिष्ठस्य धूमव्यापक वह्निसामाना-धिकरण्यस्य व्याप्तिरूपत्वे मूललभ्यतां दर्शयति—तथा च मूलस्थं तत्पदं लक्ष्ये लक्षणे चोभयत्रैवान्वितमिति भावः जा० टी० । तथा च तेन समं तस्य व्याप्तिः, तेन समं तस्य सामानाधिकरण्यमिति मूलयोजनयैव धूमनिष्ठसामाधिकरण्यस्य व्याप्तित्वं लभ्यते इति भावः । अत्र तेन समं तस्य व्याप्तिरिति, इतरभेदानुमित्युद्देश्यरूप-लक्ष्यपदार्थप्रतिपादकमूलभागव्याख्यानरूपतद्रूपविशिष्टस्येत्यादि दीधितिव्याख्यानावसरे एव द्रव्यत्वादिरूपेणेत्यादिग्रन्थेन लक्ष्ये तत्पदार्थप्रवेशफलमभिहितम् । लक्षणे तत्प्रवेशफलं रासभादिसाधारण्यवारणं दीधितावेवोक्तम् । तेन रासभनिष्ठसामानाधिकरण्यस्यानु-

मितिजनकतानवच्छेदकत्वेन तत्रोक्तसामानाधिकरण्यरूपहेतोः सत्त्वेन व्यभिचारप्रदर्शनं कृतमित्यवधेयम्। लक्ष्ये लक्षणहेतुकेतरभेदानुमितिविशेषपक्षे इति यावत्। लक्षणे इतरभेदानुमापकहेतौ। तथा च हेतुनिष्ठं हेतुव्यापकसाध्यसामानाधिकरण्यं स्वेतरभिन्न हेतुनिष्ठहेतुव्यापकसाध्यसामानाधिकरण्यत्वात् इत्यनुमितौ पक्षीभूताऽपि व्याप्तिः हेतुनिष्ठा वक्तव्या। एवं लक्षणीभूताऽपि इतरभेदानुमापकहेतुरूपा व्याप्तिः हेतुनिष्ठ वक्तव्येति भावः।

**ननु साधननिष्ठसामानाधिकरण्यस्य व्याप्तित्वे एकैव हीत्यादिग्रन्थानुपपत्तिस्तदवस्थैवेति।**

ननु साधननिष्ठस्य हेतुव्यापकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे एकैव हीत्यादिग्रन्थासंगतिरस्त्येव, तादृशसामानाधिकरण्यस्य प्रतिव्यक्तिभिन्नत्वेन नानात्वादिति बोध्यम्। यद्यपि हेतुव्यापकसाध्यसामानाधिकरण्यवति हेतुतावच्छेदकमिति द्वितीय व्याप्तिज्ञानस्य सामान्यलक्षणप्रत्यासत्तेः सत्त्वासत्त्वयोरेव संभवात्, सामान्यलक्षण प्रत्यासत्त्यभावे हेतुतावच्छेदकवति हेतुव्यापकसाध्यसामानाधिकरण्यरूपप्रथमव्याप्तिज्ञानसंभवानुपपत्तिरेव दोषत्वेनोद्भावयितुमुचितम्। तथापि सामान्यलक्षणप्रत्यासत्त्यभावेऽपि विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानस्यैव कारणत्वमङ्गीकार्यम्, नतु विशिष्टबुद्धौ विशेषणज्ञानस्येति व्यवस्थाप्य प्रथमव्याप्तिज्ञानस्योपपाद्यत्वात्। विशेषणज्ञानस्य कारणत्वावलम्ब्युक्तग्रन्थानुपपत्तिरेवोद्भावितेति बोध्यम्। पक्षे साध्यसन्देहेसाध्यसामानाधिकरण्यविशिष्टहेतोः पक्षे परामर्शसंभवात्, हेतुव्यापकसाध्यसामानाधिकरण्यांशस्योपलक्षणतया विषयत्वाङ्गीकारेरण (परामर्शविषयत्वाङ्गीकारेण) विशिष्टसत्त्ववृत्ति, विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यावच्छिन्नप्रकारकगुणविशेष्यकप्रमया गुणो द्रव्यं विशिष्टसत्त्वादित्यानुमित्यापत्तिरित्याह।

**किञ्च विशिष्टसत्त्वव्यापकीभूतद्रव्यत्वसामानाधिकरण्यवतः सत्त्वस्य गुणादौ परामर्शाद् गुणे द्रव्यानुमितेः प्रमात्वं स्यादत आह—तद्वतीति जा० टी०।**

किञ्चेत्यस्य किंवेत्यर्थः वाकारोऽनास्थायाम् । तथा च धूमत्वादिमति हेतुव्यापकसाध्यसामानाधिकरण्यम्, हेतुव्यापकसाध्यसामानाधिकरण्यवति हेतुतावच्छेदकं व्याप्तिरित्युभयार्थतां स्वीकृत्य तादृशसामानाधिकरण्य, हेतुतावच्छेदकोभयधर्मावच्छिन्नप्रकारताशालिज्ञानत्वेन परामर्शस्यानुमितिं प्रति कारणत्वोक्तौ गुणे द्रव्यत्वानुमितिरूपदोषासंभवेऽपि न क्षतिरिति केचित् ।

परे तु धूमत्वादिमतीत्यस्य यथाश्रुतलभ्या धूमत्वादिविशिष्टनिष्ठसाध्यसामानाधिकरण्यरूपव्याप्तिरेव दूषिता, किञ्चेत्यादिना तात्पर्योपवर्णितोभयात्मकव्याप्तौ विशिष्टव्याप्तौ च ग्रन्थानुपपत्तिरेव दोषो बोध्य इत्याहुः । एकाव्याप्तिरिति ग्रन्थानुपपत्तिरेव दोषः सामानाधिकरण्यरूपव्याप्तेः नानात्वादिति भावः ।

अन्ये तु उभयत्वस्य एकविशिष्टापररूपतयोभयस्य व्याप्तित्वम् । हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टधूमत्वे, धूमत्वविशिष्टे धूमव्यापकसामानाधिकरण्ये वा पर्यवस्यतीति तत्रैकत्र व्याप्तिररिति ग्रन्थासङ्गतिरूपदूषणं संगच्छत एवेति वदन्ति । तत्रोभयव्याप्तिज्ञानकारणताऽनन्तर्भूततादृशसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपित-धूमत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नपरामर्शनिष्ठकारणतायाः न चेत्यादि पूर्वोक्तायाः अनाकृतत्वप्रसंगेन ( अनाकरणत्वप्रसंगेन ) सन्दर्भविरोधो नातिदोषतामासादयतीत्यलम् ।

**गुणेऽपि द्रव्यत्वानुमितिः प्रमा स्यादिति जा० टी० ।**

अथ गुणो द्रव्यं विशिष्टसत्त्वादित्यनुमितौ प्रमात्वमापाद्यते, किं वा प्रमात्वविशिष्टानुमितिरापाद्यते ? नाद्यः । विशिष्टसत्त्वव्यापकद्रव्यत्वसमाधिकरणविशिष्टसत्तावान् गुण इति परामर्शोत्तरतादृशानुमितौ ( गुणो द्रव्यमित्यनुमितौ ) प्रमात्वापादकाभावात् । विशिष्टसत्त्वव्यापाकद्रव्यत्वसामानाधिकरण्यवत्सत्तावान् गुण इति ज्ञानोत्तरेऽनुमितित्वस्यैव विरहेणापादकासत्त्वात् अनुमितेरुद्देश्यत्वासंभवाच्च । ( सत्त्वस्य द्रव्यत्वव्यभिचारित्वेन व्याप्तिज्ञानासंभव इत्यनुमित्यभावात्) । न द्वितीयः । प्रमात्वविशिष्टायाः गुणो द्रव्यमित्यनुमितेः कारणाभावेन तादृशानुमितिरूपस्यापाद्यस्या-

प्रसिद्धेः । एवम् अनुमितौ प्रमात्वम् आपाद्यते इति प्रथमपक्षे यत्र यत्र प्रमापरामर्श-जन्यत्वं तत्र तत्र प्रमात्वमिति व्याप्तिसिद्धापादकपरामर्शजन्यत्वमापादकाभिमतम् । तदपि प्रमापरामर्शजन्यत्वस्य समूहालम्बनानुमितावांशिकप्रमायां व्यभिचारित्वेना-संभवि । न च तद्वति तत्प्रकारकत्वमेव व्यापकम् ( आपाद्यम् ) । इष्टापत्तेः । विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यवत्सत्तावान् गुण इति परामर्शजन्यानुमितौ समूहालम्बनरूपायामेव तद्वति तत्प्रकारकत्वस्य सत्त्वेनेष्टापत्तेः ) । न च प्रमापामर्श-मात्रजन्यत्वं व्याप्यम् ( आपादकम् ), तथा च नोक्तदोषः । विशिष्टसत्त्वव्यापकद्रव्यत्व-सामानाधिकरण्यवत्सत्तावान् गुणः, विशिष्टसत्त्वव्यापकद्रव्यत्वसामानाधिकरण्यवद्-विशिष्टसत्त्ववान् गुण इति समूहालम्बनपरामर्शस्यांशिकभ्रमत्वेन प्रमामात्रपरामर्शभावात् नोक्तदोष इति वाच्यम् । प्रमापरामर्शमात्रजन्यायां लाघवज्ञानजन्यानुमितौ व्यभिचारात् । (विशिष्टसत्त्वव्यापकद्रव्यत्वसमानाधिकरणविशिष्टसत्त्ववद्द्रव्यमिति प्रमापरामर्शोत्तरं) गुणो द्रव्यमित्यनुमितौ लाघवमिति ज्ञानम् । तत्र गुणे द्रव्यानुमितिर्भवति तस्यां प्रमात्वा-भाववत्यां प्रमापरामर्शमात्रजन्यायामनुमितौ प्रमापरामर्शमात्रजन्यत्वस्य सत्त्वेन व्यभिचा-रित्वात् । लाघवादिज्ञानस्य स्वातन्त्र्येण कार्यजनकत्वात् भ्रमानुमितिजनकपरामर्शस्य तत्रानपेक्षणात् यथा महानसीयवह्नीतरवह्न्यभाववान् पर्वतः वह्निव्याप्यधूमवानितीतर-बाधसहकारपरामर्शेन महानसीयवह्निमान् पर्वत इत्यनुमितिः महानसीयवह्निव्याप्यवत्ता परामर्शाभावदशायां भवति तथैवात्र तादृशानुमितिर्भवति । अन्यथा तादृशलाघवादिज्ञानस्य वैयर्थ्यापत्तेः । प्रकारतावच्छेदक एव विधेयतावच्छेदकत्वपक्षस्य युक्तत्वात् । अतएव ( लाघवज्ञानजन्यानुमितौ व्यभिचारादेव ) विधेयताविशिष्टोद्देश्यताकत्वमेव व्यापकम् ( आपाद्यम् ) । वै० स्वनिरूपितत्व, स्वविशिष्टनिरूपकताधिकरणतावद्वृत्तित्वोभय-संबन्धेन । अत्र वै० स्वासामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वा-वच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंबन्धेन । वृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्व-संबन्धेनेति निरस्तम् । वह्नित्वेन गुञ्जावगाहि वह्निमान् पर्वत इति भ्रमानुमितेः वह्नित्वे-नवह्न्यवगाहि वह्निमान् पर्वत इति प्रमानुमितिसमानाकारकत्वेन विधेयताविशिष्टेत्यादेः व्यापकत्व ( आपाद्यत्व ) संभवेऽपि वह्नित्वेन गुञ्जावगाहि पर्वतो वह्निमानित्यनुमितेः

प्रमात्वाभावेन तादृशानुमितौ व्यभिचाराच्च । ( प्रमात्वाभाववत्यां वह्नित्वेन गुञ्जावगाहि वह्निमान् पर्वत इत्यनुमितौ विधेयताविशिष्टोद्देश्यकत्वरूपव्यापका ( आपाद्या ) भाववत्यां प्रमापरामर्शमात्रजन्यत्वरूपापादकस्य व्याप्यत्वेनाभिमतस्य सत्त्वाद् व्यभिचारो बोध्यः ) । न च प्रमासजातीयत्वं व्यापकम् ( आपाद्यम् ) प्रमासजातीयत्वञ्च उद्देश्यताविशिष्टोद्देश्यताकत्वम् वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपितविधेयताविशिष्टविधेयताकत्वोभयसंबन्धेन । अत्र वै० स्वसामानाधिकरण्य, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंबन्धेनेति वाच्यम् । वह्नित्वेन गुञ्जावगाहिन्यां पर्वतो वह्निमानित्यनुमितौ, उद्देश्यताविशिष्टोद्देश्यताकत्वरूपप्रमासजातीयत्वरूपव्यापकं ( आपाद्यं ) न वर्तते । प्रमापरामर्शमात्रजन्यत्वरूपमापादकं ( व्याप्यं ) वर्तते व्यभिचारस्य तादवस्थ्यात् । प्रमीयविधेयतायाः वह्नि निष्ठायाः सामानाधिकरण्यरूपवैशिष्ट्यनियामकवैकल्यं भ्रमात्मकानुमितीयविधेयतायां वर्तते तस्याः प्रमीयविधेयताविशिष्टत्वाभावात् । सामानाधिकरण्यविकलेनोक्तत्रितयसंबन्धेन वैशिष्टयस्योक्तौ सन् गुण इति प्रमीयसत्त्वनिष्ठनिरवच्छिन्नविधेयताविशिष्टत्वस्य गुणो द्रव्यमित्यनुमितीयनिरवच्छिन्नद्रव्यत्वनिष्ठविधेयतायां सत्त्वेनेष्टापतेः । ( गुणो द्रव्यमित्यनुमितेः सन् गुण इति प्रमानुमितिसजातीयत्वेन तत्रापाद्यापादकयोः प्रमासजातीयत्वप्रमापरामर्शमात्रजन्यत्वयोः सत्त्वेन प्रमासजातीयत्वस्येष्टत्वात् द्रव्यत्वनिष्ठनिरवच्छिन्नविधेयतायां सत्त्वनिष्ठनिरवच्छिन्नविधेयतायाः स्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्व, स्वावच्छेदकावच्छिन्नत्वानां वैशिष्ट्यनियामकानां सत्त्वात् न च स्वावच्छेदकावच्छिन्नत्व, स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वैतच्चतुष्टयसंबन्धेन विधेयतायाः वैशिष्ट्यं वाच्यम् । तथा च नोक्तदोषः, सत्त्वनिष्ठविधेयतावच्छेदकावच्छिन्नत्वस्य द्रव्यत्वनिष्ठविधेयतायामसत्त्वादिति वाच्यम् । सन् गुण इति प्रमानुमितौ व्यभिचारस्य दुर्वारत्वात् । तत्रानुमितौ व्याप्यत्वेनाभिमतस्य प्रमापरामर्शमात्रजन्यत्वस्यापादकस्य सत्त्वेन स्वावच्छेदकावच्छिन्नत्वस्य सत्त्वनिष्ठनिरवच्छिन्नविधेयतायामसत्त्वेन प्रमासजातीयत्वस्योद्देश्यताविशिष्टोद्देश्यतारूपस्य व्यापकत्वेनाभिमतस्यापाद्यास्यासत्त्वात् । उक्तदोषैरेव द्वितीयकल्पा-

भिमतं यत्र यत्र प्रमापरामर्शाव्यवहितोत्तरत्वं तत्र प्रमानुमितित्वाधिकरणत्वमिति व्याप्तिसिद्धापाद्यताकमपि आपादकं निरस्तमिति चेत्, उच्यते। विशिष्टसत्त्वव्यापक-द्रव्यत्वसामानाधिकरण्यवत् सत्त्ववान् गुण इति परामर्शो यदि भ्रमत्वनिरूपितद्रव्यत्व-विधेयताप्रयोजकः स्वातिरिक्तदोषघटितसामग्रीविरहविशिष्टत्वे सति द्रव्यत्वविधेयताकानु-मित्यव्यवहितपूर्ववान् स्यात्, तर्हि प्रमात्वनिरूपितद्रव्यत्वविधेयताकानुमित्यव्यवहितपूर्व-त्ववान् स्यादित्यत्रापत्तौ तात्पर्यान्न कश्चिद्दोषः। भ्रमत्वप्रयोजकलाघवघटितसामग्रीसमव-हितप्रमापरामर्शे आपाद्यव्यभिचारवाराणाय सत्यन्तम्। लाघवज्ञानसत्त्वे तादृशभ्रमानुमितेः तत्र सत्त्वेन प्रमानुमित्यभावेनापाद्यव्यतिरेकस्य तत्र सत्त्वात्। पक्षे आपादकसिद्ध्यर्थमति-रिक्तान्तम् (पक्षे परामर्शे आपादकस्य प्रमात्वनिरूपितद्रव्यत्वविधेयताकानुमित्य-व्यवहितपूर्वत्ववतः, आपाद्यस्यापादकः भ्रमत्वनिरूपितद्रव्यत्वविधेयताकानुमित्यव्यव-हितपूर्वत्वविशिष्टपरामर्शत्ववान् इति) स च लाघवज्ञानाभावे द्रव्यत्वविधेयताकानुमितेर-भावेन तादृशानुमित्यव्यवहितपूर्वत्वविशिष्टपरामर्शत्ववान् न भवति इत्यापादकस्य परामर्शरूपपक्षेऽसत्त्वस्य वारणाय स्वातिरिक्तेति विशेषणमावश्यकम्। लाघवज्ञानसत्त्वे च भवति तत्र तादृशीभ्रमानुमितिः। समूहालम्बनस्थले व्यभिचारवारणाय विधेयत्व-विशेषप्रवेशः। अत एव प्रमापरामर्शादेवोत्पत्तिकालीनो घटो गन्धवान् पृथिवीत्वादित्य-नुमितेः स्वीकारेऽपि न क्षतिः। पृथिवीत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावा-प्रतियोगिगन्धसमानाधिकरणत्ववत्पृथिवीत्ववान् उत्पत्तिकालावच्छिन्नो घट इति परामर्शस्य प्रमात्वेन भ्रमनिरूपितत्वस्य (भ्रमत्वविशिष्टस्य) अभावान्न तत्रापादको वर्तते, तत्रापाद्यसत्त्वेऽपि न क्षतिः, तस्य व्यापकत्वात्। प्रतियोगिव्यधिकरणाभाव-वद्वृत्तित्वादिघटितप्रमात्वस्य निर्वाच्यत्वाच्चेत्यभिसन्धिरिति।

**तथा च तादृशसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिः, तत्प्रकारि-कैव पक्षधर्मताधीरनुमितिहेतुरिति।**

एवकारेण धूमत्वावच्छिन्ने धूमव्यापकवह्निसामानाधिकरण्यप्रकारकत्वव्यवच्छेदः (धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वप्रकारिका पर्वतादिवृत्तिताधीः परामर्शः)

अनुमितिकारणम् । सामानाधिकरण्यसंबन्धेन धूमव्यापकवह्निसामानाधिकरण्यवद् धूमत्वं तद्वान् धूमः पर्वतादिवृत्तिरिति ज्ञानम् अनुमितिकारणम्। धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वविशिष्टधूमवान् पर्वत इति परामर्शो बोध्यः)। नन्वेवं तादृशसामानाधिकरण्यधूमत्ववद्वान् पर्वत इति ज्ञानस्य कारणत्वं पर्यवसितम्, तन्न युज्यते। लाघवेन तादृशसामानाधिकरण्यविशिष्टधूमवानितिज्ञानस्यैव कारणत्वौचित्यात्। सामानाधिकरण्यविशिष्टधूमत्ववद्वानितिज्ञानस्य कारणत्वं तु धूमत्वनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववद्ध्रदादिरूपस्वरूपासिद्धज्ञानस्य ( धूमाभाववान् ह्रद इति ज्ञानस्य) प्रतिबन्धकत्वानुपपत्त्याऽसंभवि । हेतुतावच्छेदकावच्छिन्नविशेष्यत्वस्य-कारणतावच्छेदकगर्भे निवेशादेव गुणे द्रव्यत्वानुमितेः न प्रमात्वप्रसंगः । हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितप्रकृतहेतुतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नसमवायसंबन्धावच्छिन्नसत्तात्वावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताशालिज्ञानस्य द्रव्यत्वानुमितौ कारणत्वविरहादेव न गुणे द्रव्यत्वानुमितिप्रसंगः । ( प्रमानुमितेः प्रसंगः ) । सत्तानिष्ठप्रकारतायां गुणनिष्ठविशेष्यतानिरूपितायां प्रकृतहेतुतावच्छेदकविशिष्टसत्तात्वावच्छिन्नविशेष्यत्वावच्छिन्नत्वाभावात् । सामान्यप्रत्यासत्त्यभावेऽपि तादृशसामानाधिकरण्योपलक्षितधूमत्वस्य स्मृतस्य पर्वतीयधूमे विशेषणसंभवेन तादृशसामानाधिकरण्यवद् धूमवान् पर्वत इति ज्ञानापेक्षया गुरुधर्मावच्छिन्नकारणताकधूमव्यापकवह्निसामानाधिकरण्यवद्धूमत्ववद् धूमवान् पर्वत इति ज्ञानस्य न कारणत्वसंभवः । ( उल्लिख्यमानस्य किञ्चिद्धर्मेणैव भानमिति नियमेन धूमत्वत्वेनैव धूमत्वस्य भानं भविष्यति धूमत्वत्वञ्च धूमेतरावृत्तित्वे सति सकलधूमवृत्तित्वरूपम् । समानाधिकरणविषयतयोः परस्परावच्छेद्यावच्छेदकभावो गदाधरसंमतः । अभेदो जगदीशसंमतः ) परामर्शनिष्ठा कारणताऽस्ति भवति तदपेक्षया धूमनिष्ठप्रकारताविशेष्यतयोरवच्छेदकं जातिरूपं धूमत्वं तदवच्छिन्नविषयताघटित धर्मावच्छिन्नपरामर्शनिष्ठकारणतायां लाघवमिति सामानाधिकरण्यविशिष्टधूमवान् पर्वत इति ज्ञानमेव पर्वतो बह्निमानित्यनुमितिकारणं न तु सामानाधिकरण्य-

संबन्धेन तादृशसामानाधिकरण्यविशिष्टधूमत्वविशिष्टधूमवान् पर्वत इति ज्ञानम् ) न चैवं विरोधस्य हेत्वाभासत्वानुपपत्तिः, अनुमितावेव तस्य विरोधित्वात् । अनुभवसिद्धप्रतिबन्धकत्वस्य व्याप्तिबुद्धावेव ग्राह्याभावानवगाहिनोऽपि तज्ज्ञानस्य वा कल्पनादित्याशंकामिष्टापत्त्या परिहरति ।

तत्र नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु धूमत्वत्वेन नातो गौरवमिति भावः । ( न च विरोधस्य हेत्वाभासत्वानुपपत्तिः ( विषयविधया हेतुतावच्छेदकस्य परामर्शकारणतानवच्छेदकत्वे अयं गौः अश्वत्वादित्यत्र विरोधस्य गोत्वव्यापकाभावप्रतियोग्यश्वत्वमिति ज्ञानस्य अश्वत्वव्यापकसाध्य ( गोत्व ) सामानाधिकरण्यविशिष्टाश्वत्ववानयमिति ज्ञानाविरोधित्वेन आभासत्वानुपपत्तिः । निर्धर्मितावच्छेदकज्ञानस्याप्रतिबध्यत्वेन गोत्वव्यापकाभावप्रतियोग्यश्वत्वमित्यस्य परामर्शाप्रतिबन्धकत्वात् इति वाच्यम् । अनुमितावेव तस्य विरोधित्वेन हेत्वाभासत्वोपपत्तेः । ( तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वमिति विरोधस्य साध्याभावव्याप्यत्वाद् ) । अनुभवसिद्धप्रतिबन्धकत्वस्य व्याप्तिबुद्धावेव ग्राह्याभावानवगाहिनोऽपि तज्ज्ञानस्य वा ( विरोधज्ञानस्य वा ) कल्पनादित्याशङ्कामिष्टापत्त्या परिहरति ।

**तथा च नीलघटत्वप्रकारकबुद्धौ घटत्वस्येव स्वरूपत एव धूमत्वस्य भानं न तु घटत्वत्वेन नातो गौरवमिति भावः ।**

सामानाधिकरण्यसंबन्धेन नैल्यप्रकारेण घटत्वज्ञाने उल्लिख्यमानस्यापि घटत्वस्य नीलो घट इत्यत्र घटत्वत्वेनानुल्लेखात्, यथा न घटत्वत्वेन भानम् । उल्लिख्यमानाया अपि जातेः समवायातिरिक्तसंबन्धेन भाने स्वरूपत एव भानम् । तथा च तादृशसामानाधिकरण्यवद् धूमवान् पर्वत ज्ञानस्यैव तादृशसामानाधिकरण्यविशिष्टधूमत्वस्य व्याप्तित्वपक्षे कारणत्वमभिमतं न तु तादृशसामानाधिकरण्यविशिष्टधूमत्ववद् धूमवानिति ज्ञानस्य यतो गौरवमिति भावः । स्वरूपत एवेत्यत्र एवकारेण धूमत्वांशे स्वातन्त्र्येण सामानाधिकरण्यस्य प्रकारत्वव्यवच्छेदभ्रान्ति प्रसक्तां वारयितुमाह न तु धूमत्वत्वेनेति दृश्यते चेदृशी व्याख्या दीधितिकारस्य नोपाधिकत्वमात्रव्यवच्छेदाय यद्वक्ष्यतीत्यादौ ।

केचित्तु तादृशवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इति ज्ञानकारणत्वाभिप्रायकमुक्तग्रन्थमिच्छन्ति । तथा च ननु तादृशसामानाधिकरण्यवद् धूमवानिति परामर्शस्य विरोधिज्ञानाविरोधित्वेन न कारणत्वम् तादृशधूमत्ववद् धूमवानिति ज्ञानस्य च धूमत्वत्वविषयकत्वेन गौरवेणैव न तथात्वं ( कारणत्वं ) तादृशसामानाधिकरण्यवद् धूमवानिति बुद्धेश्च तादृशसामानाधिकरण्यविशिष्टधूमत्वाप्रकारकत्वादेव न तत्त्वम् ( कारणत्वम् ) तादृशसामानाधिकरण्याभाववद् धूमत्वमिति ज्ञानं प्रति न विरोधित्वम् इत्याशङ्कायामाह ।

**तत्र च नीलघटत्वप्रकारकबुद्धौ घटत्वस्यैवेति ।**

यथा नीलो घट इति बुद्धौ घटत्वविशिष्टे नैल्यभाने सामानाधिकरण्येन घटत्वेऽपि नैल्यस्य भासमानतया सामानाधिकरण्येन नैल्यप्रकारतानिरूपितविशेष्यत्वाभिन्नघटत्वनिष्ठप्रकारताकत्वरूपं नीलघटत्वप्रकारकत्वं तस्याः ( नीलो घट इति बुद्धेः ) । तथा तादृशसामानाधिकरण्यवद् धूमवानिति ज्ञानेऽपि धूमत्वविशिष्टे तादृशसामानाधिकरण्यभाने सामानाधिकरण्यसंबन्धेनतादृशसामानाधिकरण्यप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाभिन्नधूमत्वनिष्ठप्रकारतानिरूपकत्वरूपतादृशसामानाधिकरण्यविशिष्टधूमत्वप्रकारकत्वमव्याहतम् । अनन्तराभासमानैकज्ञानीयपारतन्त्रीयस्वातन्त्रीयविषयत्वयोरपि अभेदस्वीकारात् । यथा च नीलघट इति बुद्धौ घटत्वनिष्ठा प्रकारता न घटत्वत्वावच्छिन्ना । तथोक्तधूमत्वज्ञानेऽपि धूमत्वनिष्ठप्रकारता न धूमत्वत्वावच्छिन्नेति न गौरवम् । एवञ्च कारणता च परामर्शस्य तादृशसामानाधिकरण्यनिष्ठस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितधूमत्वनिष्ठविशेष्यत्वाभिन्नप्रकारतानिरूपितधूमनिष्ठविशेष्यत्वाभिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वेन । प्रथमाभिन्नत्वोपादानं तादृशसामानाधिकरण्यमात्रप्रकारेण धूमत्वप्रकारकज्ञानस्य कारणत्ववारणाय (एकत्र द्वयमितिरीत्या धूमे तादृशसामानाधिकरण्यधूमत्वप्रकारकज्ञानस्य कारणत्ववारणाय तत्रैका विशेष्यता प्रकारता चोभयनिष्ठा भिन्ना ) । वस्तुतस्तु अवच्छेदकत्वाभिन्नेत्यन्तं नोपादेयम् । तादृशधूमत्वनिष्ठविशेष्यत्वाभिन्नप्रकारतायां निरवच्छिन्नत्वोपादनादेव तद्वारणात् । उक्त-

ज्ञानीयप्रकारतायाः सामानाधिकरण्यावच्छिन्नत्वात् । तादृशसामानाधिकरण्यवद् धूमवान् पर्वत इति ज्ञाने च विशेष्यत्वाभिन्नायाः ( सामानाधिकरण्यनिष्ठप्रकारतानिरूपितधूमत्व-निष्ठविशेष्यत्वाभिन्नायाः ) धर्मितावच्छेदकतात्मकधूमत्वप्रकारतायाः ( तादृशसामाना-धिकरण्यविशिष्टं धूमत्वमिति ज्ञानीयायाः) एव निरवच्छिन्नत्वात् । एतेन निरवच्छिन्न धूमत्वनिष्ठावच्छेदकतात्मकप्रकारताकज्ञानं सावच्छिन्नधूमत्वनिठावच्छेदकतात्मकप्रकार-ताकज्ञानञ्च समानं कारणमिति एकस्मात्मपरामर्शात् । बह्निमानित्यनुमित्यापत्तिरिति परिहृतम् ) अन्यथा एकत्र परामर्शे अप्रामाण्यज्ञानं तदभाववतः परामर्शादपि नानुमितिः स्यादुभयपरामर्शयोः तां प्रति कारणत्वात् । कार्यतावच्छेदककोटावव्यहितोत्तरत्वनिवे-शेन व्यभिचारवारणेऽपि पूर्वोक्तदोषो दुर्वार इति परास्तम् । अतएव तादृशसामानाधि-करण्यनिष्ठप्रकारतानिरूपितधूमत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारताकज्ञानत्वेन परा-मर्शस्य कारणत्वादेव न चेत्यादिनोक्ताद् भेदस्य गौरवाभावस्य चोक्तकारणत्वे सिद्धिः । सामानाधिकरण्यं व्याप्तिरिति पक्षे व्याप्तिभेदस्य सामानाधिकरण्यविशिष्टहेतुता-वच्छेदकव्याप्तिरिति पक्षे गौरवाभावस्य चेति । तस्य ( ज्ञानस्य ) सामानाधिकरण्य संबन्धावच्छिन्नसामानाधिकरण्यत्वावच्छिन्नप्रकारतानिरूपित निरवच्छिन्नधूमत्वनिष्ठप्रकार तानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वे एव पर्यवसानात् । एवञ्च परमर्शीयजनकतानिरूपित पक्षनिष्ठविशेष्यतानिष्ठावच्छेदकता निरूपितप्रकारताश्रयत्वरूप ( सामानाधिकरण्यनिष्ठत्वेन ) व्याप्तित्वस्य धूमांशे सामानाधिकरण्यस्य प्रकारत्वेऽपि धूमत्वे एव सत्त्वेन न व्याप्तेरैक्यहानिः । न च सामानाधिकरण्यस्य धूमे भासमानस्य धूमत्वे भासमानतया सामान्यप्रत्यासत्यभावे पक्षीय धूमे तादृशसामानाधिकरण्यभानानुपपत्तिः । धूमत्वस्य व्याप्तित्वं तत्पक्षे ( सामान्यप्रत्या-सत्तिपक्षे ) एवेति वाच्यम् । सामान्यप्रत्यासत्तिं विनापि व्याप्तेः लौकिकसन्निकर्षादि-ग्राह्यत्वसंभवे लाघवे एव मूलस्य तात्पर्यात् ( धूमनिष्ठसामानाधिकरण्यस्य नानात्वमिति तादृशसामानाधिकरण्यविशिष्टधूमत्वं व्याप्तिरिति तस्यैकत्वेन लाघवमित्यत्रैव तन्मूलस्य तात्पर्यात् ) नन्वेवं महानसीयसामानाधिकरण्यस्य स्मृतस्येत्यादिग्रन्थस्य सामान्य प्रत्यासत्यनङ्गीकर्तृ मींमांसकमतावलम्बित्वादिति व्याख्यां च केचित्कुर्वन्ति । तदपरे न

साध्यन्ते। तथा च तामुपादायैवेत्याद्यग्रिमग्रन्थपर्यालोचनया पूर्वापरमूलपर्यालोचनया च एकैव हीत्यादिमूलस्य सामान्यं प्रत्यभावपक्षीयत्वावधारणात्। सामान्यलक्षणाग्रन्थे तद् व्यवस्थापनस्य (सामान्यप्रत्यासत्तिव्यवस्थापनस्य) सामानाधिकरण्यव्याप्तिपक्षीयत्व-प्रतिपादनाच्च सन्दर्भविरोधापत्तेरिति।

**द्वितीयापि क्वचिद्भिन्नैवेति मन्तव्यमिति।**

चिन्तनीयमित्यर्थः। अत्र हेतुतावच्छेदकस्य हेतुव्यापकसाध्यसामानाधिकरण्यविशिष्टस्य व्याप्तित्वस्वीकारस्य सामान्यलक्षणाप्रत्यासत्त्यभावपक्षीयतया दण्डिमान् दण्डिसंयोगादित्यत्र साध्यसमानाधिकरण (हेतु) वृत्तित्वेन सपक्षवृत्तिधर्म (हेतु) दण्डादीनामेव प्राग् गृहीततया स्मृतस्य तस्य सामानाधिकरण्यस्य) पक्षधर्म (हेतु) विशेषणत्वानुपपत्त्या व्याप्तिज्ञानानुपपत्तिः स्यादिति दण्डत्वस्यैव हेतुतावच्छेदकत्वं व्याप्तित्वं च स्वीकार्यम्। तथा सति रूपत्वव्याप्यजातिमदादिहेतुकस्थलेऽपि (इयं पृथिवी रूपत्व व्याप्य जातिमत्वादित्यत्र) तादृशजातित्वस्यैव स्वीकरणीयतया द्वितीयायाः (तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपायाः व्याप्तेः) न कुत्रापि नानात्वप्रसंग इति चिन्ताबीजम्। ननु भवेदेतदेवं भिन्नत्वमभिन्नत्वं च। यदि नानात्वैकत्वरूपे स्याताम्। किन्तु ते भेदतदभावे (भिन्नत्वं भेदः अभिन्नत्वमभेदः इतितयोर्भेदाभेदरूपत्वात् तत्कथनं न युक्तमिति भावः। भेदश्चानुमितिजनकतावच्छेदकप्रतियोगिकः। स चानुमितिजनकतावच्छेदकादिति पूरणाल् लभ्य इति नासंगतिरित्याह—केचिदित्यन्तेन। द्वितीयापीत्यत्रापिनाऽस्वरसाभिव्यक्तिः। स च (अस्वरसश्च) सामान्यप्रत्यासत्त्यभावे दुर्ज्ञेयतायाः, स्थलविशेषे सावच्छिन्नहेतुकस्थले, उभयोरपि हेतुतावच्छेदकवति तादृशसामानाधिकरण्य, तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकयोः व्याप्त्योः तुल्यत्वेन एकस्य तादृशसामानाधिकरण्यविशिष्टहेतुतावच्छेदकरूपव्याप्तित्वस्य, अनुमितिजनकतावच्छेदकत्वम्, अपरस्य हेतुतावच्छेदकवति तादृशसामानाधिकरण्यस्य व्याप्तित्वस्य (समानत्वेऽपि) नानुमितिजनकतावच्छेदकत्वमिति न युक्तम्। उभयव्याप्त्योः दोषसमानतया (सामान्यं प्रत्यभावपक्षे केचिन्मते दर्शितदोषस्य समानत्वेन) एवात्र विनिगमकस्यासत्त्वादिति अस्वरसबीजम्।

**अथायं वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादि संग्रहायासमानाधिकरणान्तम् इति दीधितिः ।**

ननु प्रतियोग्यसमानाधिकरणहेतुसमानाधिकणेति सिद्धान्तव्याप्तिलक्षणे प्रथमोपात्तत्वात् प्रतियोग्यसमानाधिकरणरूपविशेषणस्य हेतुसामानाधिकरण्यघटकयद्रूपविशिष्टत्वव्यावृत्त्याभिधानमनुचितम् । प्रथमोपस्थितस्य प्रतियोग्यसामानाधिकरण्यविशेषणस्य प्रथमप्रयोजनकथनमावश्यकम् । प्रथमोपस्थितस्य परित्यागे मानाभावादिति चेन्न । सूचीकटाहन्यायेन तदुक्तेरदुष्टत्वात् । यद्रूपविशिष्टसामानाधिकरण्यस्य स्वोक्ततया ( दीधितिकारोक्ततया ) तद्रूपजिज्ञासायाः प्रथमम् उदितत्वाच्च ।

**कपिसंयोगिनि एतत्पदार्थस्य साध्यताभ्रमनिरासार्थमयमिति पक्षनिर्देश इति ।**

ननु भ्रमनिरासार्थतायाः पक्षनिर्देशस्यात्र प्राङ्निराकृततया ( अयमितिपूर्वकथितया ) इदमसङ्गतम् । अयमित्यस्य पूर्वकथनेनैव पक्षत्वं लभ्यते न तु संयोगिनि । अस्य पश्चादुक्तत्वात् । एवं च कपिसंयोगिनि तादात्म्येनायं पदार्थस्य साध्यताभ्रमो न संभवति । तस्य ( एतत्संयोगिनः ) पक्षत्वासंभवे कथं तस्य ( एतत्संयोगिनः ) पक्षत्वनिरासो युक्तः, प्राप्तस्यैव निरासादिति चेद्, भवेदेवं यदि कथामात्रेण तन्निराकृतं स्यात् । किन्तु तत्र (मूले) पक्षनिर्देशेऽपि भ्रमस्यानिवार्यतया तात्पर्यावधारणादेव भ्रमनिवृत्तिः स्वीकरणीयेति पक्षनिर्देशं विनापि तात्पर्यनिश्चयाद्भ्रमनिवृत्तिर्भवत्येवातो न तदर्थता ( पक्षनिर्देशस्य न भ्रमनिवारकता युक्ता ) । प्रकृते अयंपदोपादानेऽपि अयं कपिसंयोगि एतत्त्वादित्युद्देश्यविधेयभावो न संभवति । उद्देश्यतावच्छेदकविधेययोरैक्यात् । एतदयं कपिसंयोगी, एतदपि विधेयांशेऽधिकावगाहिज्ञानं न संभवति विधेयवाचकपदपूर्ववर्तितायाः उद्देश्यवाचकपदे नियमात् । तात्पर्यनिर्णयं विना पौर्वापर्यभेदकल्पनाया अन्याय्यत्वात् । अयम् एतदिति सामानाधिकरण्या( समानविभक्त्यन्ता )संभवाच्च, असमानलिङ्गकत्वादुभयोरिति भ्रमनिरासार्थताया युज्यत एवेति ।

## अग्रे तस्य समाधास्यमानत्वादिति ।

लक्षणान्तरतयेतिशेषः इदं च (समाधानं च) अभावाभावः अभाव एवेति पक्षं स्वीकृत्य । तेन विशिष्टसत्ताभाववान् गुणत्वादित्यत्र साध्याभावस्य विशिष्ट-सत्तारूपस्य सत्तात्मकतया गुणवृत्तित्वेऽपि नाव्याप्तिः । प्रतियोगिना सहाभावस्य विरोधेन साध्याभावस्य गुणेऽसत्त्वात् प्रतियोगिमति साध्याभावो न प्रतियोगिव्यधि-करणो भवति । पटो घटत्वात्यन्ताभाववान् द्रव्यत्वादित्यत्र साध्यभिन्नप्रतियोगिका-भावमादायातिव्याप्तिवारणाय स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धेन साध्या-भावस्य वृत्तित्वं विवक्षणीयं न त स्वरूपसंबन्धेन। अन्यथोक्तस्थले घटत्वरूपसाध्याभावस्य स्वरूपेणावृत्तित्वमिति हेत्वधिकरणे अभावान्तरमादाय तत्रातिव्याप्त्यापत्तेरिति प्रति-योगिव्यधिकरणघटितकल्पापेक्षयाऽस्मिन्पक्षे गौरवमपि न दोषजनकम् अभावाभावस्या-भावरूपत्वेन घटत्वान्यन्ताभावाभावस्य हेत्वधिकरणे घटे वृत्तित्वेन तत्प्रतियोगित्व-स्यैव साध्ये सत्त्वमिति । यद्यपि अभावाभावस्यातिरिक्तत्वेऽपि विशिष्टसत्त्वाभाववान्-द्रव्यत्वादित्यत्र नातिव्याप्तिः समनियतत्वात्। विशिष्टसत्वाभावाभावस्य द्रव्यत्वरूपत्व-मिति हेत्वधिकरणे द्रव्ये साध्याभावस्य सत्त्वात् न वा विशिष्टसत्त्वाभाववान् गुणत्वादित्य-त्राव्याप्तिः । हेत्वधिकरणे गुणे द्रव्यत्वरूपसाध्याभावस्यासत्वात् । तथापि पर्वतः पूर्वक्षण-वृत्तित्वविशिष्टधूमाभाववान् वह्नेरित्यत्र विशिष्टः शुद्धान्नातिरिच्यते इति न्यायेन साध्याभावस्य धूमरूपस्य द्वितीयक्षणावच्छेदेन साध्याभावस्य वा हेत्वधिकरणे पर्वते वृत्तित्वेन तत्प्रतियोगित्वस्यैव साध्ये सत्त्वेनाव्याप्तिः । गगनाभावस्य कालिकेन योऽभावः तस्य स्वरूपेण साध्यतायामात्मत्वादौ हेतौ अव्याप्तिः । हेत्वधिकरणे आत्मनि यः कालिकेन साध्याभावस्तत्प्रतियोगित्वस्यैव साध्ये सत्त्वात् । यद्यप्यत्र गौरवात् तृतीया-भावो न जन्यरूपः किन्तु गगनाभावरूप एव । स च हेत्वधिकरणे आत्मनि न प्रतियोगिव्य-धिकरणः । तत्र द्वितीयाभावरूपप्रतियोगिनः सत्त्वात् ।तथापि साध्यवत्ताग्रहप्रतिबन्धकता-वच्छेदकसंबन्धेन कालिकेन साध्याभावस्य हेत्वधिकरणे आत्मनि प्रतियोग्यसमानाधि-करणत्वेन लक्षणघटकतया तत्राव्याप्तिः दुर्वारा । तयोरव्याप्त्योः वारणं हेत्वधिकरण-निरूपितवृत्तितावच्छेदकतापर्याप्त्यधिरणधर्मपर्याप्तावच्छेदकताकनिरूपकतानिरूपितनिरू-

प्यतावत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षया कार्यम्। यत्प्रतियोगिताकाभावत्वावच्छिन्नाधिकरणं हेतुमति, साध्यतावच्छेदके तत्प्रतियोगितानवच्छेदकत्वस्य विवक्षा कार्या। एवञ्च पूर्वक्षणवृत्तित्वविशिष्टधूमाभाववान् वह्नेरित्यत्र हेत्वधिकरणपर्वतनिरूपितवृत्तितावच्छेदकतापर्याप्त्यधिकरणं धर्मः पूर्वक्षणवृत्तित्वविशिष्टधूमाभावाभावत्वं द्वितीयक्षणे पर्वते विशिष्टधूमाभावाभावस्य सत्त्वेन तस्य वृत्तितावच्छेदकत्वात्। तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वान्नातिव्याप्तिः। किं वा हेत्वधिकरणपर्वतनिरूपिता या द्वितीयक्षणावच्छेदेन प्रथमक्षणवृत्तित्वविशिष्टधूमाभावाभावनिष्ठा वृत्तिता तदवच्छेदकप्रथमक्षणवृत्तित्वविशिष्टधूमाभावाभावत्वरूपधर्मपर्याप्तावच्छेदकताकनिरूपकतानिरूपितप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वेन न तत्रातिव्याप्तिः। एवं गगनाभावस्य यः कालिकेनाभावः तस्य स्वरूपेण साध्यतायामात्मत्वहेतौ, अयं तादृश गगनाभावाभाववान् आत्मत्वादित्यत्र नाव्याप्तिः। कालिकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभावो गगनाभावाभावाभावः। स च लाघवात् गगनाभावरूपो हेत्वधिकरणवृत्तिरिति हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्याप्त्यधिकरणधर्मे गगनाभावत्वं तत्पर्याप्तावच्छेदकताकनिरूपकता गगनाभावनिष्ठैव न तु कालिकसंबन्धावच्छिन्नगगनाभावाभावत्वावच्छिन्नप्रतियोगिताकगगनाभावाभावाभावनिष्ठा तादृशनिरूपकतानिरूपितनिरूप्यतावती प्रतियोगिता गगननिष्ठैव न तु गगनाभावाभावनिष्ठा तदनवच्छेदकत्वस्य साध्यतावच्छेदके गगनाभावाभावत्वे सत्त्वात्।

यत्तु हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिता( अभावत्व )निरूपितप्रतियोगित्वस्य( एतादृशानुयोगितानिरूपितप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरितिफलितम् ) धूमाभावत्वाभावसाध्यकवह्न्यादिसद्धेतौ; अयं धूमाभावत्वाभाववान् वह्नेरित्यत्र, अयोगोलकनिरूपितवृत्तितावच्छेदकधूमाभावत्वस्य साध्याभावात्मकत्वेनाव्याप्त्या ( हेत्वधिकरणायोगोलकनिरूपितवृत्तिताधूमाभावनिष्ठा तदवच्छेदकं यद् धूमाभावत्वं तद् धूमाभावत्वाभावरूपस्याभावरूपम् अभावाभावस्य प्रथमाभावप्रतियोगिरूपत्वात्। तादृशसाध्याभावत्वरूपानुयोगितानिरूपितप्रतियोगिता साध्यनिष्ठा तदवच्छेदकत्वस्यैव साध्यतावच्छेदके ( सत्त्वात् ) धूमाभावत्व

धूमाभावोभयाभाववान् वह्नेरित्यादौ अव्याप्त्या स्वनिरूपितत्व, स्वाश्रयनिरूपितत्वोभयसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावच्छेदकरूपानुयोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यस्य हेयत्वेऽपि ( धूमाभावत्व, धूमाभावोभयाभावरूपस्य साध्यस्याभावः तादृशोभयरूपः स्व ( धूमाभावत्व ) निरूपित स्वा ( धूमाभावत्वा ) श्रय धूमाभावनिरूपितप्रतियोगिता साध्यनिष्ठा तद वच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वाद व्याप्त्या हेयत्वेऽपि) स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेन नोक्तदोषः। धूमाभावत्व धूमाभावोभयाभाववान् वह्नेरित्यत्र साध्यनिष्ठायां प्रतियोगितायां हेत्वधिकरणायोगोलकनिरूपितवृत्तितावच्छेदकोभयाभावत्वरूपानुयोगितानिरूपितत्वस्य, स्वाश्रय ( उभयाभाव ) निष्ठानुयोगितानिरूपितत्वस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वात्। साध्याभावस्यधूमाभावत्वधूमाभावोभयरूपत्वेन साध्यनिष्ठप्रतियोगितायां धूमाभावत्व निरूपितत्व, स्वाश्रयधूमाभावनिरूपितत्वोभयस्य हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वस्यासत्त्वादिति। तन्न, समवायसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभाववान् सत्त्वादित्यादौ व्यभिचारिणि अतिव्याप्तेः। साध्याभावप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताप्रमेयाभावाभावत्वरूपा तद्विशिष्टत्वस्यासत्त्वात्। साध्याभावीया या प्रमेयाभावनिष्ठा प्रतियोगिता सा हेत्वधिकरणनिरूपितवृत्तितावच्छेदकसाध्याभावत्वरूपानुयोगितानिरूपिता अथ च तादृशसाध्याभावत्वरूपानुयोगितानिष्ठा या अनुयोगिता तस्याः प्रमेयरूपत्वं साध्याभावश्च प्रमेयरूप इति तन्निष्ठानुयोगितानिरूपिता चेति साध्यनिष्ठा प्रतियोगिता स्वनिरूपितत्व स्वनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टा न भवति तादृशान्यप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। भावभेदत्वाभाववान् प्रमेयत्वादित्यादावतिव्याप्तेश्च। साध्याभावीयप्रतियोगित्वे साध्यप्रतियोगिकत्वविशिष्टाभावस्य भावभेदात्मकतया तन्निष्ठभावभेदत्वरूपसाध्याभावस्वरूपानुयोगितानिरूपितत्वस्यैव सत्त्वेन तादृशानुयोगिताविशिष्टायाः ( स्वनिरूपितत्व, स्वनिष्ठानुयो-

गित्वानिरूपितत्वोभयसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टाया:) साध्यनिष्ठप्रतियोगिताभिन्नप्रतियोगितायाः अनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। यत्र भावभेदत्वाभावो वर्तते तत्र भावभेदो वर्तते। धर्मिभेदधर्मात्यन्ताभावयोः समनियतत्वात्। हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिता भावभेदत्वनिष्ठा तन्निरूपितत्वं भावभेदत्वाभावाभावीयसाध्यनिष्ठप्रतियोगितायां वर्तते। भावभेदत्वनिष्ठं यदनुयोगित्वं तदाश्रयीभूतभावभेदनिष्ठा अनुयोगिता तन्निरूपितत्वमपि साध्यनिष्ठप्रतियोगितायां वर्तते इति तदनुयोगित्वानिरूपितत्वाभावेन साध्यनिष्ठा प्रतियोगिता हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टा न भवतीत्यन्याभावीयतादृशप्रतियोगितानवच्छेकत्वस्य साध्यतावच्छेदके सत्त्वाद् भवति तत्रातिव्याप्तिः। वस्तुतः अनुयोगित्वस्य तत्तत्प्रतियोगिकत्वविशिष्टाभावत्वरूपतयाविशिष्टस्य निरूपकत्वे विशेष्यस्यापि निरूपकत्वेन (अभावस्यापि निरूपकत्वेन) प्रतियोगितामात्रे (सर्वस्मिन् प्रतियोगित्वे) स्व (अनुयोगिता) निष्ठा (स्वाश्रयनिष्ठा) नुयोगितानिरूपितत्वस्यैव सत्त्वेन स्वाश्रयनिष्ठानुयोगित्वानिरूपितत्वस्य क्वापि प्रतियोगितायामसत्त्वेनासंभव एव तद्वारण-(अव्याप्तिवारण)प्रयासश्च दुरूह एव। सर्वत्र हेत्वधिकरणाभावीयप्रतियोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगितानिरूपितत्व, तादृशानुयोगिताश्रयनिष्ठानुयोगितानिरूपितत्वोभयस्य सत्वेन तत्र स्वनिरूपितत्व, स्वाश्रयनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन हेत्वधिकरणनिरूपितवृत्तितावच्छेदकानुयोगिताविशिष्टत्वप्रतियोगितायामसत्त्वेनासंभव एव भवति यत्तु मते। एवञ्च पूर्वक्षणवृत्तित्वविशिष्टधूमाभाववान् वह्नेरित्यत्रातिव्याप्तिवारणाय कालिकसंबन्धावच्छिन्नप्रतियोगिताकगगनाभावाभाववान् आत्मत्वादित्यत्राव्याप्तिवारणाय हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकनिरूपकतानिरूपितनिरूप्यतावत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षापेक्षया प्रतियोगिवैयधिकरण्यस्य हेतुसमानाधिकरणाभावे विवक्षायामेव लाघवम्। निरवच्छिन्नस्वरूपसंबन्धेनायं कपिसंयोगाभाववान् वृक्षत्वादित्यत्र साध्याभावस्य कपिसंयोगस्य निरवच्छिन्नहेत्वधिकरणवृत्तित्वविरहेण साध्यभिन्नप्रतियोगिकाभावमादायातिव्याप्तिवारणाय साध्यवन्निरूपितत्वसावच्छिन्न-

स्वोभयाभावरूपं वृत्तित्वमभावे वाच्यं तथा च नोक्तदोषः । साध्यवद्भिन्नव्यभिचारनिरूपकवृक्षरूपहेत्वधिकरणनिरूपितसाध्याभावनिष्ठवृत्तितायां साध्यवन्निरूपितत्वविरहेण तादृशोभयाभावो वर्तते भवति चात्र साध्याभावो लक्षणघटक इति न तत्रातिव्याप्ति विरह इति शङ्का न कार्या । व्यभिचारनिरूपकहेत्वधिकरणे वृक्षे कपिसंयोगाभावस्य सर्वावयवावच्छेदेनानुभवसिद्धत्वात् तस्य साध्याभावस्य न संयोगरूपत्वं किन्त्वभावरूपत्व मेव साध्याभावो निरवच्छिन्नवृत्तिमान् व्यभिचारनिरूपके हेत्वधिकरणे वर्तते इति तत्रातिव्याप्तिविरहेण हेतुसमानाधिकरणाभावनिष्ठवृत्तितायां तदुभयाभावो न निवेश्यः । एवञ्चायं कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिवारणायाभावे प्रतियोगिवैयधिकरण्यं निवेश्यमेवेति ।

**ननु शाखामूलादिसर्वावयवावच्छेदेन सर्वत्र द्रव्ये गगनसंयोगस्य सत्त्वादिति ।**

यत्तु इदं संयोगि द्रव्यत्वादित्यत्रातिव्याप्तिवारणाय हेतुसमानाधिकरणाभावे प्रतियोगिवैयधिकरण्यं वाच्यम् । संयोगस्य शाखाद्यवच्छेदेन वृत्तेः—वृक्षे संयोगसामान्याभावस्य वृत्तौ अविरोधात् । न च वृक्षे संयोगसामान्याभावस्य कुतो न प्रत्यक्षापत्तिरिति वाच्यम् । वृक्षेऽतीन्द्रियसंयोगस्य सत्त्वात्, परितः प्रतियोग्युपलब्धेर्दोषाद्वा इति । वृक्षे संयोगसामान्याभावो नास्ति सर्वावयवावच्छेदेन गगनसंयोगस्य सत्त्वादित्यभिप्रेत्य दीधितौ संयोगस्य शाखाद्यवच्छेदेन वृत्तेः वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्तौ अविरोधादित्युक्तम् ।

**गगनसंयोगस्येति जा० टी० ।**

यत्र च द्रव्ये यदवयवावच्छेदेन न संयोगान्तरस्य संभवस्तत्रापि तदवच्छेदेनापि गगनसंयोगसंभव इति सूचयितुं जागदीश्यां गगनादिसंयोगस्येत्युक्तम् । अत्र संयोगस्येत्यत्रैकत्वमविवक्षितम् । तत्तदवच्छेदेन तत्तत्संयोगानां (तत्तद्गगनसंयोगानां) सत्त्वस्यैव विवक्षितत्वात् । न च वृक्षत्वावच्छेदेन तत्तत्संयोगत्वावच्छिन्नस्यासत्त्वेन तत्तत्संयोगाभावावच्छेदकत्वमस्तु वृक्षस्य । संयोगत्वावच्छिन्नस्य वृक्षत्वावच्छिन्ने एव सत्त्वेन संयो-

गत्वावच्छिन्नसामान्याभावावच्छेदकत्वं कथं वृक्षत्वे स्यात् । तथा च दीधितौ कथं वृक्षत्वावच्छेदेन संयोगसामान्याभावोक्तिः संगच्छते इति वाच्यम् । विशेषातिरिक्तस्य सामान्याभावस्या ( संयोगसामान्याभावस्या ) भावेन यत्किञ्चित्संयोगविशेषावच्छेदकत्वस्य सयोगसामान्यावच्छेदकत्वेन संयोगविशेषाभाववतो वृक्षस्य संयोगसामान्याभावावच्छेदकत्वं युज्यते एवेदानीमित्यभिप्रायात् ।

( सामान्याभावस्य विशेषाभावकूटातिरिक्तत्वस्येदानीमसिद्धत्वेन संयोगविशेषाभावावच्छेदकत्वे वृक्षस्य संयोगसामान्याभावावच्छेदकत्वं सिद्ध्यतीति तत्कथनं न विरुद्धमित्यभिप्रायो दीधितिकारस्येति बोध्यम् ।)

**कुतो नाध्यक्षमिति जा० टी० । (नन्वेवं वृक्षे संयोगसामान्याभावस्य सत्त्वे कुतो नाध्यक्षमिति) जा० टी० ।**

ननु चक्षुः संयुक्तसमवेतरूपादिविशेषणतया परिरसादिषु अभावप्रत्यक्षस्यानुदयेन ( परमाणुपरिमाणरसादिषु चक्षुःसंयुक्तसमवेतविशेषणतयाऽभावप्रत्यक्षस्यानुदयेन ) रूपपरिमाणादिचक्षुर्ग्राह्यविशेष्यसयोगाद्यभावविशिष्यैव कारणत्वस्य वक्तव्यतया द्रव्ये सयोगसामान्याभावस्यालीकतया संयोगसामान्याभावप्रत्यक्षे द्रव्यवृत्तिविशेषणतायाः कारणत्वाकल्पनात्, आपादकाभावात्कथमापत्तिः ( वृक्षे संयोगसामान्याभावस्य प्रत्यक्षापत्तिः ) रूपादिषु संयोगाद्यभावो भवति तत्प्रत्यक्षकारणत्वं कल्पनीयं द्रव्ये तु संयोगसामान्याभावो न भवति तत्प्रत्यक्षकारणत्वं न कल्पनीयमित्यापादकाभावेनापत्तिरपि न युक्तेतिशङ्का )। यदि च लाघवेन प्रकारतासंबन्धेन संयोगसामान्याभावप्रत्यक्षे चक्षुःसंयुक्तसमवेतविशेषणत्वस्य कारणत्वं विशेष्यविधया रूपपरिमाणादेर्भाने तत्तल्लौकिकप्रत्यक्षप्रयोजकसामग्र्या अपेक्षितत्वेन यत्र संनिकर्षो नास्ति न तस्य विशेष्यत्वम् । उभयोः सन्निकृष्टत्वे उभयोरेव, एकस्य संनिकृष्टत्वे एकत्रैव विशेष्यत्वमित्युक्तापत्तेरयोगात् ( इत्युक्तौ न कश्चिद्दोषः ) । एवञ्च चक्षुःसंयुक्तशाखादिसमवेतवृक्षविशेषणत्वरूपसंयोगसामान्याभावप्रकारकत्वप्रयोजकसामग्र्याः चक्षुःसंयोगस्य च सत्त्वेनापत्तिसंभव इत्युच्यते । तदपि न । उपनीतभानात्मके (ज्ञानलक्षणया परिमाणादिग्रहे सति)

अधिकरणग्रहे परमाणुपरिमाणरूपाधिकरणान्तर्भावेण रूपत्वाभावादौ चक्षुः संयुक्त-समवेतविशेषणता सम्बन्धे सति घटपरिमाणान्तर्भावेण महत्त्वादिसंबन्धे सति रूपत्वाभाव-प्रत्यक्षवारणाय चक्षुःसंयुक्तयोग्यत्वविशेषणस्य ( चक्षुर्योग्यसंयुक्तसमवेतविशेषणता-कारणमिति रीत्या ) कारणतावच्छेदकशरीरे आवश्यकत्वे द्रव्यान्यवृत्तिविशेष्यता-निरूपितप्रकारत्वस्यैव त्रसरेणुवृत्त्यभावप्रत्यक्षस्थलीयव्यभिचारवारणाय लाघवेनभाव-विशेषविषयत्वमनन्तर्भाव्य कारणतावच्छेदकसम्बन्धत्वस्य वाच्यत्वात्। द्व्यणुकस्य चक्षुर्योग्य-त्वाभावेन त्रसरेणुवृत्त्यभावस्य प्रत्यक्षं न स्यात्। प्रकारतासंबन्धेन संयोगसामान्याभावे चक्षुःसंयुक्तसमवेतविशेषणत्वं कारणमिति न वक्तव्यम्) तच्च न संभवति। ज्ञानलक्षणया परमाणुपरिमाणे ज्ञाते तत्र रूपत्वाभावस्य प्रत्यक्षापत्तिः। चक्षुःसंयुक्ते परमाणौ समवेतं यत्परिमाणं तत्र रूपत्वाभावस्य विशेषणत्वात्। तत्र व्यभिचारवरणाय चक्षुर्योग्ये चक्षु-संयुक्ते समवेतस्य विशेषणत्वं वक्तव्यम्। तथा च प्रकारतासंबन्धेनाभावप्रत्यक्षे तादृश-विशेषणत्वस्य कारणत्वं वक्तव्यम्। लाघवेन द्रव्यान्यनिष्ठविशेष्यतानिरूपितप्रकारता-संबन्धेनाभावप्रत्यक्षं प्रति चक्षुर्योग्यसंयुक्तसमवेतविशेषणत्वं कारणत्वमिति वक्तव्यम्। तथा च द्व्यणुकस्य चक्षुरयोग्यत्वेन नोक्तदोषो यद्यपि संभवति तथापि लाघवेन द्रव्यान्यनिष्ठ-विशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षम प्रति चक्षुःसंयुक्तयोग्यसमवेतविशेषण-ताया एव कारणत्वं वक्तव्यम्। तथा च वृक्षे संयोगसामान्याभावप्रत्यक्षस्य नापत्तिः संभवति, द्रव्यान्यवृत्तिविशेष्यतानिरूपितप्रकारतासंबन्धस्यैवाभावरूपकार्यनिष्ठकार्यता-वच्छेदकत्वादिति वृक्षे संयोगसामान्याभावस्यापादकाभावेनापादयितुमशक्यत्वादिति बोध्या। रूपत्वाभावस्य परिमाणविशेषणत्वसंनिकर्षे चक्षुःसंयुक्तसमवेतरूपसन्निकर्ष-रूपगुणाद्दोषविगमदशायामपि प्रत्यक्षापत्तेः। तत्तद्विशेष्यकाभावप्रत्यक्षे चक्षुःसंयुक्तसमवेत-तत्तद्विशेषणत्वस्यैव संनिकर्षतया ( परिमाणविशेष्यकाभावप्रत्यक्षे चक्षुःसंयुक्तपरिमाण-विशेषणत्वं कारणमित्यादिरूपेण कार्यकारणभावो वक्तव्यः) प्रकृते तदनुसारेणैव (द्रव्य-भिन्ननिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षम् प्रति चक्षुःसंयुक्तयोग्यसमवेत विशेषणताया एव कारणत्वमिति वृक्षे संयोगसामान्याभावप्रत्यक्षस्य नापत्तिः) वर्तनीयत्वा-दिति नापत्तिसंभव इति चेन्न। संयोगाभावनिष्ठप्रकारतानिरूपितविशेष्यतासंबंधेन

चाक्षुषप्रत्यक्षत्वावच्छिन्नं प्रति संयोगाभावनिष्ठविशेषणत्वनिरूपकत्वे सति चक्षुःसंयुक्त समवायस्य कारणत्वकल्पनात् । सामान्यतोऽभावविषयकत्वस्यासन्निकृष्टाभावप्रत्यक्षभयेन वक्तुमशक्यत्वात् । द्रव्यान्यवृत्तिविशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षं प्रति चक्षुर्योग्यसंयुक्तसमवेतविशेषणता कारणमिति तु न वक्तव्यम् । अन्यथा असन्निकृष्टाभावप्रत्यक्षापत्तेः । त्रसरेणौ संयोगसामान्याभावप्रत्यक्षस्यानुत्पन्नतया व्यभिचारप्रसक्तिविरहेण द्रव्यान्यत्वस्यानुपादेयत्वादापत्तिसंभवात् । यद्वा द्रव्यनिष्ठविशेष्यतानिरूपिताभावीयप्रकारतासंबन्धेन घटाभावचाक्षुषोपपत्तये चाक्षुषत्वावच्छिन्नम् प्रत्येव लाघवेन चक्षुःसंयुक्तविशेषणतायाः कारणत्वस्य वाच्यतया संयोगाभावे उक्तसंबन्धेन प्रत्यक्षत्वापत्तेर्दुर्वारत्वादिति भावः । एतदभिप्रायेणैव च कथञ्चिदापत्तिसंभवेऽपि उक्तम् भट्टाचार्येण ।

नन्वभावप्रत्यक्षे योग्यमात्रप्रतियोगिकत्वस्य कारणत्वपक्षेऽपि योग्यमात्रवृत्तिसंयोगसामान्याभावप्रत्यक्षापत्तिवारणाय "परितः प्रतियोग्युपलब्धेः दोषाद्वा वृक्षे न संयोगसामान्याभावप्रत्यक्षम्" इतिग्रन्थावतरण यद्यपि संभवति । तथापि द्रव्ये संयोगसामान्याभावस्य प्राचीनैरेव स्थितिकालेऽपि ( संयोगस्थितिकालेऽपि ) स्वीकृततया तन्मते गुणे संयोगाभावस्य प्रत्यक्षत्वेन तदनुरोधेन ( गुणे संयोगसामान्याभावस्य प्रत्यक्षम् भवतीति प्राचीनानुरोधेन) योग्यमात्रप्रतियोगिकत्वस्य (अभावप्रत्यक्षे स्वरूपेण कारणस्य) परित्याज्यतया संयोगसामान्याभावस्यैव वृक्षे आपत्त्या तादृशग्रन्थावतरणम् ( परित- इत्यादिग्रन्थावतरणम् ) कर्तुमुचितमित्याशयेनाह—ननु "प्रतियोगितावच्छेदकविशिष्टस्यैव योग्यत्वमत्यन्ताभावप्रत्यक्षे तन्त्रम् न तु योग्यमात्रप्रतियोगित्वम् (कारणम्) । अन्यथा गुणेऽपि संयोगसामान्याभावस्य तादृशप्रत्यक्षम् न स्यात् तत्र । ( संयोगसामान्याभावे ) प्रतियोगितासंबन्धेनायोग्यप्रतियोगिसत्त्वेन योग्यमात्रप्रतियोगिकत्वाभावात् अत आह—

## परित इति जा० टी० ।

अथात्यन्ताभावप्रत्यक्षे प्रतियोगितावच्छेदकविशिष्टप्रतियोगित्वस्यैव कारणत्वं न योग्यमात्रप्रतियोगिकत्वस्येति तेजसि गुरुत्वरूपोभयाभावस्य प्रत्यक्षत्वापत्तिः ।

तादृशोभयाभावस्य प्रतियोगितावच्छेदकरूपत्वविशिष्टयत्किञ्चिद्योग्यप्रतियोगिकत्वात् कथं वा न भवति गुरुत्वविशिष्टरूपाभावस्य । तत्र (तेजसि) प्रत्यक्षत्व रूपस्य प्रत्यक्षयोग्यत्वेन तस्य प्रतियोगितावच्छेदकरूपत्वविशिष्टयोग्यप्रतियोगिकत्वादिति चेन्न प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणे धर्मे एव योग्यत्वस्य हेतुतया विवक्षितत्वात् । तथा च नोक्तदोषः रूपत्वगुरुत्वोभयत्वे प्रत्यक्षयोग्यतायाः अतीन्द्रियगुरुत्वघटितत्वेनासत्त्वात् । ननु प्रतियोगितावच्छेदकविशिष्टस्यैव योग्यत्वमत्यन्ताभावप्रत्यक्षे तन्त्रमिति पक्षे योग्यानुपलब्धेः कारणत्वविरहेऽपि अनुपलब्धेरभावप्रत्यक्षं प्रति कारणत्वस्य स्वीकृततया गुणे संयोगरूपप्रतियोग्युपलब्धिविरहात् संयोगसामान्याभावस्य प्रत्यक्षत्वेऽपि द्रव्यं संयोगरूपप्रतियोग्युपलब्धिसद्भावाद् वृक्षे संयोगसामान्याभावस्य न प्रत्यक्षतासम्भव इति कथं प्रतियोग्युपलब्धेर्दोपविधया प्रकृते (वृक्षे संयोगसामान्याभावप्रत्यक्षे) प्रतिबन्धकत्वान्तरकल्पनमिति चेन्न । एकशाखावच्छेदेन कपिसंयोगोपलब्धावपि शाखान्तरावच्छेदेन कपिसंयोगाभावदर्शनात् तदवच्छेदेनाभावप्रत्यक्षे तदवच्छेदेन प्रतियोग्युपलम्भविरहस्यैव हेतुत्वस्य स्वीकरणीयतया वृक्षत्वावच्छेदेन संयोगसामान्याभावप्रत्यक्षकारणस्य वृक्षत्वावच्छेदेन संयोगोपलब्ध्यभावस्य सत्त्वात् । शाखामूलादिसर्वावयवावच्छेदेन प्रतियोग्युपलब्धेर्दोपविधयैव प्रतिबन्धकत्वस्य युक्तत्वादित्याशयेनाह ।

**प्रतियोगिग्रहात्मकदोषाद्वेति जा०टी०**

अथान्धकारे वायुपरमाणौ च घटाद्यभावचाक्षुषस्य, जलादौ गन्धाभावचाक्षुषस्य च वारणाय, अन्धकारे तेजोभावप्रत्यक्षस्य, वायौ उद्भूतरूपाभावप्रत्यक्षस्य परमाणौ महत्वाभावस्य चोपपत्तये च तत् (प्रतियोगि) सत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वलक्षणयोग्यत्वविशिष्टानुपलब्धेः कारणत्वस्य वाच्यतया कथं गुणे संयोग्यसामान्याभावस्य प्रत्यक्षत्वं संभवति "यदि गुणे संयोग; स्यात् तर्हि उपलभ्येत" इत्यापादनस्याभावात् । अतीन्द्रियसंयोगस्य (गुणे) सत्त्वेऽपि तदुपलम्भकाभावादिति चेन्मैवम् । गुणे संयोगसत्त्वे योग्यसंयोगस्यापि सत्त्वावश्यकत्वेन कदाचिदपि कुत्रापि गुणे कस्यापि (संयोगस्यापि) उपलब्धिः स्यादित्येवं योग्यत्वस्य संपादनीयत्वात् ।

यद्वा आलोकसंयोगस्य सर्वत्रैव तेजोभावान्यचाक्षुषे, महत्त्वान्यचाक्षुषमात्रे महत्त्वस्य, रूपान्यचाक्षुषमात्रे चोद्भूतरूपस्य विशिष्यैव हेतुत्वात् उक्तदोषाणामसंभवेन योग्यत्वस्यानुपलब्धिविशेषणत्वानावश्यकत्वात् । तथा च "गुणे यदि संयोगः स्यात् तर्हि उपलभ्येत" इत्यापादयितुं शक्यतया गुणे संयोगसामान्याभावस्य प्रत्यक्षत्वं संभवति। अत एव प्रतियोगियोग्यत्वाद्यपेक्षाऽपि घटते इति भावः । एषा च कुसृष्टिकल्पना न भट्टाचार्यव्याख्यायाम् । भट्टाचार्येण संयोगसामान्याभावस्य प्रत्यक्षतामभ्युपेत्य ग्रन्थावतारस्य कृतत्वादित्यवधेयम । नन्वेवमपि प्रतियोगिग्रहोत्पत्तिदशायामेव संयोगसामान्याभावप्रत्यक्षं दुर्वारम्। पूर्वस्मिन् क्षणे प्रतियोग्युपलम्भरूपप्रतिबन्धकत्वस्यासत्त्वात् इति (जा० टी०) यथाकथञ्चिद् वृक्षरूपाधिकरणज्ञाने इत्यादिरिति शेषः । वृक्षे संयोगोत्पत्तिकालेन संयोगस्य ज्ञानं भवति। विषयतासंबन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणमिति विषयरूपकारणस्य कार्यरूपज्ञानात्पूर्ववृत्तित्वमावश्यकम् । तथा च संयोगोत्पत्तिकाले वृक्षे रूपसंयोगसामान्याभावप्रत्यक्षं दुर्वारं प्रतिबन्धकसंयोगज्ञानस्य पूर्वमसत्त्वात् इति शङ्का । यद्यपि वृक्षे संयोगोपलब्धिदशायां गुणे संयोगाभावप्रत्यक्षस्य उत्पन्नतया द्रव्यत्वावच्छिन्नविशेष्यकसंयोगाभावप्रकारकप्रत्यक्षस्यालीकत्वेन तत्र संयोगत्वावच्छिन्नप्रत्यक्षे प्रतिबन्धकत्वस्य वक्तुमशक्यतया च लौकिकसंनिकर्षप्रयोज्यविशेष्यतासंबन्धेन विशेष्यतामात्रेण वा संयोगाभावप्रत्यक्षे लौकिकविशेष्यतासंबन्धेन संयोगोपलब्धेः प्रतिबन्धकत्वं वाच्यम् । तथा सति तादृशोपलब्धित्वस्य (विशेष्यतासंबन्धेन संयोगोपलब्धित्वस्य) ईश्वरप्रत्यक्षसाधारणतया, ईश्वरसंयोगप्रत्यक्षस्य विशेष्यतासंबन्धेन सर्वदैव सर्वत्रैव च द्रव्ये सत्त्वेन कथं वृक्षे संयोगसामान्याभावप्रत्यक्षापत्तेर्दुर्वारतेति वक्तुं शक्यते ? तथापि लौकिकसंनिकर्षप्रयोज्यविशेष्यत्वातिरिक्तस्य विलक्षणजन्यप्रत्यक्षनित्यज्ञानसाधारणानुगतरूपविशेषावच्छिन्नविषयित्वनिरूपकत्वस्य मानाभावेन संसर्गत्वासंभवात् । लौकिकविशेष्यत्वस्येश्वरज्ञाननिरूपकत्वासंभवान्नेश्वरज्ञानसंसर्गत्वसंभवः । तथा चेश्वरीयसंयोगप्रत्यक्षस्य लौकिकविशेष्यतासंबन्धेन वृक्षेऽसत्त्वात् प्रतिबन्धकाभावेन संयोगोत्पत्तिदशायां संयोगसामान्याभावप्रत्यक्षस्य दुर्वारत्वकथनमुपपद्यते इति भवत्येवोक्तापत्तिः । यद्वा द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षे चक्षुःसंयुक्तविशेषणत्वरूप-

कारणबलादेव वृक्षविशेष्यकसंयोगसामान्याभावप्रत्यक्षस्यापादिततया तद्वारणाय द्रव्य-निष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षान्तर्भाविणैव प्रतिबन्धकत्वं कल्पनीयम्। तथाहि द्रव्यनिष्ठविशेष्यतानिरूपितप्रकारतासंबन्धेनाभावप्रत्यक्षे द्रव्यनिष्ठविशेष्यता-निरूपितप्रकारतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रतियोगिप्रत्यक्षस्य प्रतिबन्ध-कत्वं वाच्यम्। तत्रैकपुरुषस्य दोषविशेषात्प्रतियोगिविशेषग्रहे, अन्यपुरुषस्य तदभावप्रत्य-क्षोपपत्तये तत्पुरुषीयत्वनिवेशस्यावश्यकतया। (तत्पुरुषीयतादृशप्रत्यक्षं प्रति तत्पुरुषीय-तादृशप्रयोगिकत्वसंबन्धेन प्रतियोगिप्रत्यक्षस्य प्रतिबन्धकत्वं वक्तव्यमिति तत्पुरुषीयनिवेश-स्यावश्यकतया) परमेश्वरप्रत्यक्ष, जन्यप्रत्यक्ष, दोषविशेषजन्यज्ञानानां साक्षात्कारित्व-व्यञ्जकविषयितानिरूपितत्वघटितस्य स्वविषयसंयोगवत्त्वस्य वा संसर्गत्वसंभवेऽपि न परमात्मीयसंयोगविषयकप्रत्यक्षाद् वृक्षे संयोगोत्पत्तिसमये संयोगसामान्याभावं प्रत्याप-त्तिवारणसभवः। तत्पुरुषीयतादृशप्रतियोगिकत्वसंबन्धेन प्रतिबन्धकस्य प्रतियोगिप्रत्यक्षस्य वृक्षेऽसत्त्वात्। लौकिकप्रत्यक्षवदेव च दोषविशेषजन्यस्यापि अनुभवानुरोधादभावबुद्धि-विरोधित्वमास्थेयमेवेति भट्टाचार्यस्येश्वरप्रत्यक्षसाधारण्येन प्रतिबन्धकत्वकल्पना च ज्ञानाकरणकज्ञानत्वरूपप्रत्यक्षत्वमभ्युपेत्य। प्रत्यक्षे च सर्वत्र दोषविशेषजन्ये चानुभव-बलात्साक्षात्कारित्वव्यञ्जकविषयितां स्वीकृत्य। अतएव सत्प्रतिपक्षग्रन्थे दोषविशेषाद्य-जन्यत्वस्य साक्षात्कारित्वव्यञ्जकविषयिताशून्यत्वरूपतामभिधायेश्वरप्रत्यक्षस्य साक्षात्का-रित्वव्यञ्जकविषयिताशून्यत्वादेवाप्रतिबध्यत्वमुपपादितम्। तदुक्तं प्रतिबन्ध्यप्रतिबन्धक-भावे च तत्पुरुषीयत्वं नोपादेयम्। द्रव्ये संयोगा (संयोगसामान्या) भावस्य योग्यसंयो-गाभावस्य च कदाचिदपि प्रत्यक्षत्वासंभवात्। गुणे तस्य संयोगाभावस्य (संयोगसा-मान्याभावस्य) योग्यसंयोगाभावस्य च प्रत्यक्षत्वेऽपि दोषविशेषजन्यसंयोगज्ञानस्य गुणेऽनभ्युपगमात्। अभ्युपगमेऽपि तत्पुरुषस्य तत्सत्त्वे दोषप्रतिबन्धकतावच्छेदकस्य प्रमीयलौकिकविशेष्यत्वस्य,स्वविषयसंयोगवत्त्वस्य वा संबन्धस्य गुणेऽसत्त्वेन दोषविधया प्रतिबन्धकत्वासंभवेऽपि उपलब्धिरूपप्रतियोगिसत्त्वेन प्रतियोग्युपलब्ध्यभावरूपकारणविर-हाद् गुणे संयोगसामान्याभावप्रत्यक्षापत्तिविरहात्। अन्यपुरुषस्य योग्यानुपलब्धिसत्त्वे च योग्यानुपलब्धिरस्त्येवेत्यनुपपत्त्यसंभवात्। "कथञ्चिदपि संभवेऽपी" त्यादि भट्टाचार्यग्रन्थः

आपत्तिश्च विशेष्य(विषय)निष्ठप्रत्यासत्त्या संनिकर्षकार्यकारणभावाभिप्रायेणेति । संयोगोत्पत्तिकाले संयोगसामान्याभावस्य वृक्षे प्रत्यक्षवारणाय प्रतियोग्युपलब्धिसामग्र्याः प्रतिबन्धकत्वं जागदीश्यामुक्तम् । तथा च तत्समये संयोगज्ञानरूपप्रतिबन्धकासत्त्वेऽपि तत्सामग्रीरूपप्रतिबन्धकादेव न तत्समये संयोगसामान्याभावप्रत्यक्षं संभवति ।

ननु द्रव्ये संयोगसामान्याभावप्रत्यक्षे तादात्म्येन द्रव्यत्वेन द्रव्यस्य प्रतिबन्धकत्वं लघुभूतं यद्यपि वर्तते । तथापि तादृशप्रतिबन्धकत्वस्याननुभाविकतया प्रकारान्तर्भावेण प्रतिबन्धकत्वे द्रव्येऽभावमात्रस्याप्रत्यक्षत्वापत्त्या च प्रकारान्तर्भावेण प्रतिबन्धकत्वे (मणिमन्त्रन्यायेन द्रव्यस्य प्रतिबन्धकत्वे) द्रव्येऽभावमात्रस्याप्रत्यक्षत्वापत्त्या च ) स्वप्रयोज्यविषयतावच्छेदकावच्छिन्नप्रतियोगित्वसंबन्धेन सामग्र्याः संयोगज्ञानसामान्यप्रयोजिकायाः संयोगसामान्याभावप्रत्यक्षे प्रतिबन्धकत्वमाह ।

**प्रतियोग्युपलम्भकसामग्र्या अपि दोषत्वोपगमादिति जा० टी० ।**

सामग्री च दोषविशेषासंपृक्तचक्षुःसंयुक्तसमवायादिसंनिकर्षः । दोषविशेषसमवहितसंनिकर्षस्य प्रतियोगिग्रहणयोग्यत्वाद् दोषासंपृक्तेति प्रतियोगिन उपलब्धिर्यत इति व्युत्पत्त्या सामग्र्या एव प्रस्तुतत्वादितिभावः,। प्रस्तुतत्वादिति उक्तत्वादित्यर्थः । तेन ( उक्तयुक्त्या सामग्र्या उक्तत्वेन ) संयोगरूपप्रतियोग्युपलम्भकसामग्रीसंबन्धकथाप्रबन्धरूपप्रस्तावविरहेऽपि प्रस्तुतकथनस्य नासंगतिः । एतेन ( उक्तव्युत्पत्त्या सामग्र्या लाभेन ) प्रतियोग्युपलम्भकसामग्र्याः प्रतिबन्धकत्वपक्षस्य निर्दोषत्वेऽपि शिरोमण्युक्तप्रतियोग्युपलब्धिप्रतिबन्धकतायां प्रतियोग्युत्पत्तिसमये दोषोद्धारो न भवतीति शङ्का निराकृता । प्रतियोगिन उपलब्धिर्यतः ( सामग्रीतः ) इति व्यधिकरणबहुव्रीहेः असार्वत्रिकत्वमाशङ्क्याह—

**प्रतियोगिन उपलब्धिर्यत इति व्युत्पत्त्या तस्या एव प्रस्तुतत्वादिति भावः, इति जा० टी० (क्वचित्पाठः) ।**

संयोगसामान्याभावप्रत्यक्षे कार्यसहभावेन ( कार्याधिकरणवृत्तित्वेन ) हेतुत्वोपगमात् नोक्तदोष इति वदन्ति । संयोगोत्पत्तिकाले संयोगसामान्या-

भावस्य न प्रत्यक्षत्वम् । तदानीं प्रतियोग्युपलम्भरूपदोषस्य सत्त्वात् । प्रतिबन्धका-भावादेः हेतुतास्थले प्रतिबन्धकाभावस्य कार्यकालपूर्ववृत्तित्वमात्रम् कार्योत्पत्तावपेक्ष्यते न तु कार्याधिकरणवृत्तित्वमित्यपि अस्वरसो वदन्तीत्युक्त्या सूचितः ।

अथ जागदीश्यां कार्यकालसहभावेनेतिशब्दात् कार्याधिकरणवृत्तितयेत्येव लभ्यते । तच्च ( कार्याधिकरणवृत्तित्वञ्च ) कार्यकालवृत्तितया हेतावप्यस्ति, इति हेतावपि कार्यसहवृत्तित्वव्यवहारापत्तिः । एवञ्च संयोगज्ञानजनकहेतोरपि संयोगज्ञान-सहवृत्तित्वव्यवहारापत्तिरापद्येत । न चेष्टापत्तिः । प्रतिबन्धकाभावस्यैव तावदिष्टत्वात् । यदि कार्यकालमात्रवृत्तितया कार्यसहभावेन हेतुत्वमित्युच्यते । हेतोः कार्यकाल भिन्नकालवृत्तित्वेन नोक्तदोष इत्युच्यते । तदा कार्यसहभावेन हेतौ पूर्ववर्तिनि अनुप-पत्तिः ) कार्यसहभावेन कार्यप्रागभावस्याकारणत्वेन तस्य हेतुत्वानुपपत्तिः इति चेन्न । कार्यसहभावेन हेतुत्वेत्यतः कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकतत्तद्धर्म-वत्त्वम् तेन तेन रूपेण हेतुत्वमिति तात्पर्याल्लभ्यते । कारणत्वञ्चोभयसाधारणम् । स्वा( कार्या )धिकरणस्व( कार्य )पूर्वत्वाधिकरणक्षणद्वयावच्छिन्नस्वसमानाधिकरणा-भावप्रतियोगितानवच्छेदकधर्मवत्वमिति दोषाभावात् । प्रतिबन्धकाभावे सह-कारिणीभूते स्वाधिकरणवृत्तित्वेऽपि स्वपूर्वकालावृत्तित्वम् । तद्भिन्नकारणस्योभय-कालवृत्तित्वमिति विवेकः ।

**न च यो यदीय यावद्विशेषाभाववान् स तत्सामान्याभाववानिति व्याप्तेः संयोगसामान्याभावे मानमिति दीधितिः ।**

इतीतिलुप्तपञ्चमीकम् । यो यदीययावद्विशेषाभाववान् स तत् सामान्याभाव-वानित्युदाहरणस्वरूपज्ञानजन्यज्ञानविषयत्वरूपव्याप्त्यन्वयिनमर्थं द्योतयति । व्याप्ते-रित्यत्र पञ्चमी च मितिकरणत्वान्वयिनं प्रयोज्यत्वं ज्ञायमानलिङ्गस्य मानत्वपक्षे । संयोगविशेषाभावपदं प्रथमान्तम् । लिङ्गज्ञानस्य करणत्वपक्षे विषयत्वार्थकसप्तम्यन्तं मानपदं वा समानविषयलाक्षणिकं बोध्यम् । यत्पदं यद्धर्माश्रयपरम् । विशेषशब्दार्थश्च उभयावृत्तिधर्मवान् तदेकदेशधर्मान्वयि वृत्तित्वं तद्धितार्थः । प्रतियोगितासंबन्धेन

तस्याभावेऽन्वयः। विशेषपदस्य वा उभयावृत्तिधर्मावच्छिन्नप्रतियोगितानिरूपके लक्षणा। यावत्पदस्य तात्पर्यात् अभावपदेन सहासत्तिः कल्प्या। तथा च यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटस्य हेतुत्वं पर्यवसितम्। तत्पदस्य तद्धर्मावच्छिन्नपरतया साध्यत्वमपि तद्धर्मावच्छिन्नाभावस्यैवेत्यभिप्रायेणाह—

**यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववानिति जा० टी०।**

अथ लाघवेन यद्धर्मसामानाधिकरण्यम् उभयावृत्तित्वञ्च प्रतियोगिताविशेषणमस्तु, अलं धर्मविशेषणतया। तथा च यो यद्धर्मसामानाधिकरण्योभयावृत्तित्वोभयविशिष्टा या यत्संबन्धावच्छिन्ना प्रतियोगिता तादृशप्रतियोगिताकयावदभाववान् स तद्धर्मावच्छिन्नतत्संबन्धावच्छिन्नप्रतियोगिताकाभाववानित्येवास्तु। सत्त्व, गुणत्वाद्यवच्छिन्नप्रतियोगित्वादीनामुभयावृत्तित्वविरहेण स्वरूपासिद्ध्यनवकाशात्। अत्यन्ताभावस्य त्रितय (ध्वंस०प्रागभाव०घटादि) प्रतियोगिकत्वेऽपि प्रतियोगिभेदेन प्रतियोगिताया भेदात् तत्संयोगाभावस्योभयावृत्तिप्रतियोगिताकत्वमव्याहतम्। संयोगत्वसमानाधिकरणोभयावृत्तिः समवायसंबन्धावच्छिन्ना या प्रतियोगिता तत्प्रतियोगिताकयावदभाववान् यः स संयोगत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभाववानिति फलितमिति चेन्न। प्रतियोगिभेदेन प्रतियोगिताया भेदे संयोगादिसामान्याभावीय-प्रतियोगिताया एकमात्रवृत्तित्वेनोभयावृत्तित्वात् तन्निरूपकसंयोगादिसामान्याभावस्येदानीं वृक्षेऽसिद्धतया स्वरूपासिद्धिप्रसङ्गात्। (इदानीं वृक्षे संयोगसामान्याभावस्य साध्यतया तत्रासिद्धत्वात्) पक्षे हेत्वभावः स्वरूपासिद्धिः। स्वनिरूपितप्रतियोगितावत्वसंबन्धेनोभयावृत्तित्वस्याभावविशेषणत्वे (स्वम् उभयावृत्तिप्रतियोगितावच्छेदकधर्मः) स्वनिरूपिते स्वाश्रयनिरूपितत्वमपि स्वीक्रियते इति उभयावृत्तिधर्मनिष्ठावच्छेदकतानिरूपितायां प्रतियोगितायां स्वाश्रयोभयवृत्तिधर्मनिरूपितत्वं बोध्यम्। प्रतियोगितावत्ता चाभावे निरूपकत्वसंबन्धेन बोध्या। एवञ्च संयोगत्वस्यानेकसंयोगवृत्तित्वेन नोभयावृत्तित्वम्। संयोगसामान्याभावीया प्रतियोगिता नोभयावृत्तिधर्मनिरूपिता भवति।

स्वनिरूपितप्रतियोगितावत्त्वसंबन्धेनोभयावृत्तित्वस्याभावविशेषणत्वे संयोगसामान्याभावस्य वारणेऽपि तत्संयोगाभावस्य "विशिष्टः शुद्धान्नातिरिच्यते" इति प्रथमक्षणविशिष्टतत्संयोगाभावाभावाभावरूपतया त्रितय ( ध्वंस०प्रागभाव०संयोगादि ) प्रतियोगिकतया वा स्वनिरूपितप्रतियोगितावत्त्वसंबन्धेन तत्संयोगाभावस्याप्युभयवृत्तित्वापत्तेः । ध्वंसाभावादिरूपप्रतियोगित्वस्योभयवृत्तित्वेनोभयावृत्तित्वाभावात् । स्वनिरूपितप्रतियोगितावत्त्वसंबन्धेन तत्तदभावानामप्युभयवृत्तित्वेनोभयावृत्तित्वानुपपत्तेः। मूलाभावे कुतः शाखा प्रतियोगित्वस्योभयावृत्तित्वाभावे कुतस्तन्मूलकाभावस्योभयावृत्तित्वम् । यद्यपि यदीयविशेषाभावपर्याप्तकूटत्वानुयोगितावच्छेदकानुयोगित्वे च स्वावच्छिन्ननिरूपकतानिरूपित ( स्वावच्छिन्नानुयोगितानिष्ठनिरूपकतानिरूपित ) निरूप्यतावत्प्रतियोगित्वसंबन्धेनोभयावृत्तित्वविशेषणं च स्वरूपासिद्धि व्यभिचारञ्च वारयति तत्तत्संयोगाभावनिष्ठानुयोगित्वे तादृशसंबन्धेनोभयावृत्तित्वं वर्त्तते । संयोगसामान्याभावनिष्ठानुयोगित्वे च न वर्तते । तत्तत्संयोगाभावे कूटत्वं वर्तते संयोगासामान्याभावे च न वर्तते तस्यैकत्वात् । तथापि यद्धर्मसमानाधिकरणप्रतियोगिताकत्वस्यातिरिक्तस्य प्रवेशेन गौरवाद् हेयम् । किञ्चोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वापेक्षयोक्तसंबन्धेनोभयावृत्तित्वस्यापि गुरुत्वाद् हेयम् । किञ्चात्यन्ताभावस्य यथा प्रतियोगिना सह विरोधस्तथा ध्वंसप्रागभावाभ्यां सह विरोध इति अत्यन्ताभावस्य प्रतियोगिध्वंसप्रागभावेत्येतत्त्रितयप्रतियोगिकत्वमिति वादिमते तद्दोषतादवस्थ्याच्च हेयम् । एवमुभयावृत्तिधर्मावच्छिन्नाभावकूटत्वापेक्षया यदीयविशेषाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वस्य गुरुत्वमप्यालोचनीयम् । तादृशाभावत्वस्य ( यदीयविशेषाभावत्वस्य ) अनन्ततत्तत्क्षणविशिष्टतत्तद्व्यक्त्यभावसाधारण्येन (आनन्त्यम्) । न चोभयावृत्तिधर्मावच्छिन्नाभावत्वस्यापि प्रथमादितत्तत्क्षणविशिष्टतत्तद्व्यक्त्यभावसाधारण्येनानन्त्यं तुल्यमिति वाच्यम् । तत्तद्व्यक्तित्व, सत्वान्यतरावच्छिन्नाभाववारणायोभयावृत्तिधर्मातिरिक्तधर्मानवच्छिन्नप्रतियोगिताकत्वस्यैवोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकपदेन विवक्षणीयत्वात । प्रथमक्षणविशिष्टतत्तद्व्यक्त्यभावस्योभयावृत्तिधर्मातिरिक्तप्रथमादिक्षणवैशिष्ट्यावच्छिन्नप्रतियोगिताकत्वेन विवक्षितोभयावृत्तिधर्मावच्छिन्नप्रतियोगिता-

कत्वस्य तत्रासत्त्वेनादोषात् । अथापि संयोगत्वसमानाधिकरणोभयावृत्तिधर्मवान् नास्तीत्यभावस्य वारणं न भवति । तथा च संयोगत्वसमानाधिकरणोभयावृत्तितत्तत्संयोगत्ववद्घटोभयाभावस्य तादृशोभयावृत्तिधर्मवान् नास्तीत्यभावस्य वारणं न भवति तथा च संयोगत्वसमानाधिकरणोभयावृत्तितत्तत्संयोगत्ववद्घटोभयाभावस्य तादृशोभयावृत्तिधर्मवान् नास्तीत्यभावस्य हेतोः संयोगासमान्याभावाभाववति तत्तत्संयोगवति सत्त्वेन व्यभिचार इति चेद् । उभयावृत्तिधर्मविशिष्टप्रतियोगिताकत्वमेव निवेशनीयम् । वै० स्वनिष्ठावच्छेदकताकत्व, स्वभिन्ननिष्ठावच्छेदकत्वानिरूपितत्वोभयसंवन्धेन । तथा च नोक्तदोषः । तादृशोभयाभावीयप्रतियोगितायां स्वभिन्नघटत्वनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वेन तदनिरूपितत्वस्य तादृशोभयाभावीयप्रतियोगितायामसत्त्वात् । यदि चोभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकत्वमेव प्रागुक्तव्यभिचारस्वरूपासिद्धिद्वयवारणाय प्रतियोगितायां निवेश्यम् । एवञ्च प्रथमक्षणविशिष्टतत्संयोगाभावस्य द्वितीयक्षणावच्छेदेन वृक्षेऽसत्त्वेऽपि न स्वरूपासिद्धिः । तदभावस्य निरवच्छिन्नप्रतियोगिताकत्वाभावात् । तदापि तद्व्यक्त्यभावे, तद्व्यक्त्यनुयोगिकसमवायादिना संयोगत्वविशिष्टाभावेषु च उभयावृत्तिधर्मनिष्ठनिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावत्वस्य सत्त्वेन प्रतियोगितायामुभयावृत्तित्वकल्पे एव गौरवम् । यत्समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावकल्पे निरवच्छिन्नत्वस्या निवेशेन लाघवं प्रतियोगितायामुभयावृत्तित्वनिवेशकल्पे निरवच्छिन्नत्वनिवेशे गौरवम् । संयोगत्वसमानाधिकरणोभयावृत्तितत्तत्संयोगत्ववद्घटोभयाभावमादाय तत्तत्संयोगवति वृक्षे व्यभिचारवारणाय, एवं संयोगत्वसमानाधिकरणोभयावृत्तिप्रथमक्षणविशिष्टसंयोगाभावस्य द्वितीयक्षणावच्छेदेन वृक्षेऽसत्त्वेन हेतौ स्वरूपासिद्धत्वस्य वारणाय च लाघवानुरोधेनेतरवारकपर्याप्तिरादरणीया । उक्तलाघवगौरवस्याकिञ्चित्करत्वे न्यूनवारकपर्याप्तिमात्रमादरणीयमिति बोध्यम् ।

केवलेतरवारकपर्याप्तिनिवेशे संयोगत्वसमानाधिकरणतत्तत्संयोगत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकं घटव्यक्त्यभावमादाय वृक्षे व्यभिचारापत्तिः। न्यूनवारकपर्याप्तिनिवेशे च घटव्यक्त्यभावप्रतियोगितायां तत्संयोगत्व-

निष्ठावच्छेदकतानिरूपितत्वाभावेन तदभावस्य धर्त्तुमशक्यत्वेन नोक्तदोष इति वोध्यम्। उभयावृत्तित्वञ्च स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वरूपम्। तद्घटस्तद्घटगगनोभयं नेति भेदमादाय तद्घटनिष्ठतद्व्यक्तित्वेऽव्याप्तिवारणाय भेदे व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वं प्रतियोग्यवृत्तित्वं वा विवक्षणीयम्। उभयभेदस्यातादृशत्वान्नोक्तदोषः। तद्रूपभेदश्च तद्रूपनाशकालावच्छेदेन तद्घटे विद्यमानोऽपि न निरवच्छिन्नस्वरूपसंबधेन न वा प्रतियोग्यवृत्तिरतस्तद्घटगततद्व्यक्तित्वं न भेदविशिष्टं भवति। स्व(भेद)निरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वमेव वा संबन्धो भेदविशिष्टान्यत्वघटकवैशिष्टचनियामकः। तद्रूपभेदस्य तद्रूपसत्त्वकाले तद्वति घटेऽसत्त्वेन नोक्तदोषः। न च तद्व्यक्तित्वमप्युभयत्वावच्छिन्नवृत्ति। तद्घटभेदाभावाभावस्य तद्घटभेदस्वरूपत्वेन तद्व्यक्तित्वाश्रयतद्घटभेदाभावस्य तद्घटत्वरूपस्य तद्घटभेदप्रतियोगित्वानुयोगित्वेऽपि (तद्घटभेदाभावे तद्घटगततद्व्यक्तित्वे) तद्घटनिष्ठप्रतियोगितानिरूपितानुयोगित्वम्, एवं तद्घटभेदाभावरूपघटभेदनिष्ठानुयोगितानिरूपितप्रतियोगित्वञ्चास्ति। तथा च तद्घटगततद्व्यक्तित्वे स्वप्रतियोगिवृत्तित्व, स्वानुयोगिवृत्तित्वोभयसंबन्धेन भेदविशिष्टत्वमेव वर्तते न तदन्यत्वम्। स्व (भेदत्वरूपानुयोगित्व) निरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्व, स्वावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वस्य विवक्षया तद्व्यक्तित्वेऽपि उभयावृत्तित्वमुपपादनीयम्। तद्व्यक्तिभेदानुयोगिनि तद्घटभेदाभावे तद्घटव्यक्तिभेदाभावाभावत्वरूपानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नतद्व्यक्तिवृत्तित्वस्य तद्व्यक्तित्वतद्घटत्वे वा सत्त्वेऽपि स्वावच्छिन्नाधेयतानिरूपिताधिकरणतावति तद्घटभिन्ने पटादौ तद्घटत्वं तद्व्यक्तित्वं वा न वर्तते। तद्घटभेदवति तद्घटान्तरे पटे वा तद्घटत्वस्यावृत्तित्वेन तस्योभयावृत्तित्वमुपपन्नम्। न च तद्घटभेदत्वाभावाभावस्य तद्घटभेदत्वस्वरूपत्वेन यत्र तद्घटभेदत्वं वर्तते तत्रैव तद्घटभेदत्वाभावाभाव इत्युभयोः समनियतत्वेन लाघवादैक्यम्। अन्यथा गौरवापत्तेः। तथा च तद्घटभेदत्वाभावे तद्घटभेदत्वाभावाभावरूपतद्घटभेदत्वरूपानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्व, स्वा-

वच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्तित्वयोः सत्त्वेन तद्घटत्वरूपतद्व्यक्तित्वे भेदविशिष्टत्वस्य सत्त्वात् तदन्यत्वाभावेनोभयावृत्तित्वानुपपत्तिः। तद्घटभेदत्वाभावे तद्घटत्वे तद्घटभेदत्वाभावाभावीयप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वस्य सत्त्वेन तद्घटभेदत्वरूपानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नवृत्तित्वमपि वर्तते, तद्घटभेदत्वाभावाभावस्य तद्घटभेदत्वरूपत्वात्। एवञ्च स्वनिरूपितप्रतियोगितावच्छेदक-तद्घटभेदत्वाभावत्वावच्छिन्नतद्घटभेदाभावनिरूपितवृत्तित्वस्य, तद्घटभेदत्वावच्छिन्ना-धेयतानिरूपिताधिकरणताश्रयतद्घटभेदाभावनिरूपितवृत्तित्वस्य च तद्घटगततद्-व्यक्तित्वे सत्त्वादिति वाच्यम्। स्वनिरूपितत्व, स्वनिष्ठानुयोगित्वानिरूपितत्वोभय-संबन्धेन स्वविशिष्टप्रतियोगितावद्वृत्तित्व, स्वावच्छिन्नाधेयतानिरूपिताधिकरणता-वद्वृत्तित्वोभयसंबन्धेन भेदत्वविशिष्टान्यत्वमुभयावृत्तित्वमिति विवक्षणेनादोषात्। तद्घटभेदत्वाभावे स्वविशिष्टप्रतियोगितावत्त्वस्य न सत्त्वम्। तत्र तद्घटभेदत्वा-भावाभावत्वनिरूपितप्रतियोगित्वस्य सत्त्वेन तद्घटभेदत्वनिरूपितप्रतियोगित्वं न वर्तते। तद्घटगततद्व्यक्तित्वे तद्घटगततद्व्यक्तिभेदाभावे स्व (भेदत्व) विशिष्टप्रतियोगिता-वद्वृत्तित्वस्यासत्त्वेन भेदत्वविशिष्टान्यत्वस्य सत्त्वात्। तद्घटभेदत्वाभावनिष्ठ-प्रतियोगित्वे स्व (भेदत्वाभावाभावरूपभेदत्व) निरूपितत्वस्य सत्त्वेऽपि स्व (भेदत्वा-भावाभाव) निष्ठानुयोगितानिरूपितत्वसत्त्वेन तदनिरूपितत्वस्यासत्त्वात् स्वविशिष्ट-प्रतियोगितावत्त्वस्य भेदत्वाभावेऽसत्त्वात्।

अथ स्वप्रतियोगिवृत्तित्व,स्वानुयोगिवृत्तित्वोभयसबन्धेन भेदविशिष्टान्यत्वमु-भयावृत्तित्वमित्यत्र वृत्तित्वं न स्वरूपेण वक्तुं शक्यम्। सत्तायाः समावायेन तद्घटो नेति भेदप्रतियोगिनि घटे अनुयोगिनि पटे च वृत्तित्वेऽपि स्वरूपेणावृत्तित्वात् तस्या उभयावृत्तित्वापत्तेः। नापि संयोगेन समवायेन वा वृत्तित्वं कथयितुं शक्यते। तथा सति वाच्यत्वादीनामुभयावृत्तित्वापत्तेः तेषां स्वरूपेण वृत्तित्वेन संयोग-समवायान्यतरसंबन्धेनावृत्तित्वात् नापि स्वरूप,संयोगसमवायान्यतमसंबन्धेन वृत्तित्वं वक्तुं शक्यम्। तेषामन्यतमघटकस्वरूपेणावृत्तस्य द्रव्यत्वस्योभयावृत्तित्वापत्तेः। तद्घटो नेति भेदप्रतियोगिनि घटेऽनुयोगिनि पटे च द्रव्यत्वस्य स्वरूपेणावृत्तित्वात्।

न च येन संबन्धेन यस्य धर्मस्य वृत्तित्वमस्ति तेन संबन्धेन तस्य धर्मस्योभयावृत्तित्वं विवक्षितमिति द्रव्यत्वस्य समवायेनोभयवृत्तित्वेन तस्योभयावृत्तित्वाभावोपपत्तिरिति वाच्यम् तथा सति तत्पर्वतानुयोगिकसंयोगेन तत्पर्वते वृत्तस्य वह्नेःउभयावृत्तित्वापत्तेः तस्य तेन संबन्धेन तद्वह्निमत् तत्पर्वतो नेति भेदप्रतियोगिनि तत्पर्वते वृत्तित्वेऽपि तद्भेदानुयोगिनि पर्वतान्तरादौ तस्य वह्नेरवृत्तित्वात् तत्संवन्धावच्छिन्नतादृशवृत्तित्वद्वयस्याप्रसिद्धेः। किञ्च तत्पर्वतानुयोगिकसंयोगेन वह्नेः तत्संवन्धावच्छिन्नतादृशवृत्तित्वद्वयस्याप्रसिद्ध्या वह्निमत् तत्पर्वतो नेति भेदविशिष्टस्याप्रसिद्धत्वमित्यलीकप्रतियोगिकभेदाप्रसिद्ध्या तादृशभेदविशिष्टान्यत्वमप्रसिद्धमिति तद्वह्नेरुभयावृत्तित्वानुपपत्तेः। एवं वाच्यत्व,तद्व्यक्तित्वान्यतरत्वादिना तद्व्यक्तित्वस्यापि उभयवृत्तित्वेन तत्राव्याप्तिः। एवं संयोगेन घटत्वेनोभयवृत्तेर्वह्नेः वह्नित्वेनोभयवृत्तितया तत्राव्याप्तिश्चेति चेत् भेदत्वविशिष्टवृत्तित्वाभाववत्त्वमुभयावृत्तित्वमिति गृहाण। वै० स्वावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितत्व, स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्ननिरूपितवृत्तित्ववत्त्वोभयसंवन्धेन। वृत्तित्वे वृत्तितावत्ता च स्वावच्छेदकसंवन्धावच्छिन्नत्व, स्वावच्छेदकावच्छिन्नत्वोभयसंबन्धेन। भेदत्वविशिष्टवृत्तिताया अभावश्च येन संबन्धेनोभयावृत्तित्वं विवक्षितं तत्संवन्धावच्छिन्नवृत्तित्वीयस्वरूपसंवन्धावच्छिन्नप्रतियोगिताकः। प्रतियोगितायां स्व(भेदत्व)वैशिष्टयञ्च स्वनिरूपितत्व,स्वाश्रयनिष्ठानुयोगित्वानिरूपितत्वोभयसंबन्धेन। एवञ्च भेदत्वविशिष्टा वृत्तिता तद्व्यक्तित्वनिष्ठा कालिकसंवन्धावच्छिन्नैव संयोगादिसंवन्धावच्छिन्नैव वृत्तिता वह्निनिष्ठा, न तद्व्यक्तित्वनिष्ठा अन्यतरत्वावच्छिन्ना च वृत्तिता न तद्व्यक्तित्वावच्छिन्ना घटत्वावच्छिन्ना च। वृत्तिता न वह्निनिष्ठेति नैकस्य दोषस्यावकाशः। तद्घटत्वे तद्घटगततद्व्यक्तित्वे च तद्घटो नेति भेदत्वविशिष्टवृत्तित्वाभावस्य सत्त्वेनोभयावृत्तित्वमुपपन्नम्। तथा हि तद्घटगततद्व्यक्तिर्नेति भेदत्वविशिष्टा वृत्तिता कालिकसंवन्धावच्छिन्नतद्घटगततदव्यक्तितात्वावच्छिन्ना तद्घटगततद्व्यक्तित्वनिष्ठा स्वा (तादृशभेदत्वा)वच्छिन्नाधेयतानिरूपिताधिकरणतावद्घटान्तरनिरूपितत्व स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्ननिरूपितत्वोभयसंबन्धेन भवति। तादृशवृत्तितावत्ता च

स्वावच्छेदककालिकसंबन्धावच्छिन्नत्व, स्वावच्छेदकतद्व्यक्तितात्वावच्छिन्नत्वोभयसंबन्धेन स्वस्यां वृत्तितायामेव वर्तते । तादृशकालिकसंबन्धावच्छिन्नतद्व्यक्तितात्वावच्छिन्नवृत्तितायाः स्वरूपसंबन्धावच्छिन्न तद्व्यक्तितात्वावच्छिन्नवृत्तिताप्रतियोगिकस्वरूपसंबन्धरूपव्यधिकरणसंबन्धेनाभावः तद्व्यक्तित्वे वर्तते इति भवति लक्षणसमन्वयः। एवमन्यत्रापि बोध्यम्। कलिकेनापि गगनादीनामवृत्तित्वे गगनत्वेन गगनस्योभयावृत्तित्वसंपत्तये वृत्तितास्थाने संबन्धिता निवेश्या। तथा च गगनं नेति भेदविशिष्टा सम्बन्धिता कालिकसंबन्धावच्छिन्ना गगनत्वावच्छिन्ना गगननिष्ठा स्वा (तादृशभेदत्वा) वच्छिन्नसम्बन्धितानिरूपकतानिरूपितसंबन्धितावद्घटनिरूपितत्व, स्वविशिष्टप्रतियोगितावच्छेदकावच्छिन्ननिरूपितत्वोभयसंबन्धेन भवति। तादृशसंबन्धितावत्ता च स्वावच्छेदककालिकसंबन्धावच्छिन्नत्व, स्वावच्छेदकगगनत्वावच्छिन्नत्वोभयसंबन्धेन स्वस्यां संबन्धितायां वर्तते। तादृशकालिकसंबन्धावच्छिन्नगगनत्वावच्छिन्नसबन्धितायाः तादात्म्यसंबन्धावच्छिन्नगगनत्वावच्छिन्नसंबन्धिताप्रतियोगिकस्वरूपरूपव्यधिकरणसंबन्धेनाभावो गगने वर्तते इति लक्षणसमन्वयः। वाच्यत्वावच्छिन्नवृत्तिताविशिष्टत्वं स्वरूपसंबन्धावच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तितायां वर्तते इत्युभयावृत्तित्वसंपत्तये स्वावच्छेदकावच्छिन्नत्वस्य कालिकसंबन्धावच्छिन्नतद्व्यक्तित्वनिष्ठवृत्तितावत्त्वस्य स्वरूपसंबन्धावच्छिन्नवृत्तितायां सत्त्वेनोभयावृत्तित्वानुपपत्तिवारणाय स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य च निवेशः। कालिकसंबन्धावच्छिन्नतद्व्यक्तिनिष्ठवृत्तित्वस्य स्वरूपसंबन्धावच्छिन्नवृत्तितायां सत्त्वेन तादृशवृत्तित्वाभावस्य तद्व्यक्तित्वेऽसत्त्वात्। तस्य (तद्व्यक्तित्वस्य) उभयावृत्तित्वानुपपत्तिवारणाय स्वावच्छेदकसंबन्धावच्छिन्नत्वस्य च निवेशः। तथा च कालिकसंबन्धावच्छिन्नतद्व्यक्तित्वावच्छिन्नवृत्तिता स्वावच्छेदकावच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन स्वस्मिन्नेव वर्तते। स्वरूपसंबन्धावच्छिन्नप्रतियोगिताप्रतियोगिकस्वरूपरूपव्यधिकरणसंबन्धेन तदभावः तद्व्यक्तित्वे न वर्तते इति तस्योभयावृत्तित्वमुपपन्नम्।

यद्वा वस्तुमदन्यत्वमुभयावृत्तित्वम्। वस्तुमत्ता च स्ववृत्तित्व, स्वनिष्ठप्रतियोगिताकभेदवद्वृत्तित्वोभयसंबन्धेन। यथा घटरूपवस्तुविशिष्टम् तद्घटत्वं

स्ववृत्तित्व, स्वनिष्ठप्रतियोगिताकभेदवद्(अपरघट)वृत्तित्वोभयसंबन्धेन भवति। तदन्यत्वं तद्व्यक्तित्वे वर्तते। भेदश्च तद्व्यक्तित्वाद्यवच्छिन्नप्रतियोगिताकः। अत्रापि तद्व्यक्तिगगनोभयभेदमादाय तद्व्यक्तित्वे उभयावृत्तित्वानुपपत्तिवारणाय, व्यासज्य-वृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वेन स्वप्रतियोग्यवृत्तित्वेन वा भेदो विशेषणीयः। यद्वा स्ववृत्तित्व, स्वनिष्ठप्रतियोगिताविशिष्टानुयोगित्वावच्छिन्नाधेयतानिरूपिता-धिकरणातावद् (घटान्तर) वृत्तित्वोभयसंबन्धेन घटरूपवस्तुमद् भवति घटत्वं तदन्यत्वं (तद्घटत्वे) तद्व्यक्तित्वे वर्तते। अनुयोगितायां प्रतियोगितावैशिष्ट्यश्च स्वनिरू-पितत्व, स्वनिरूपक (भेद) वृत्तित्वोभयसंबन्धेन। अथवा वस्तुविशिष्टान्यत्वमुभया-वृत्तित्वम्। वै० स्ववृत्तित्व, स्वनिष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरू-पकता (अनुयोगिता) वच्छेदकधर्मावच्छिन्ना (भेदत्वावच्छिन्ना) धेयतानिरूपिताधि-करणतावद्वृत्तित्वोभयसंबन्धेन। घटत्वं भवति तद्घटरूपवस्तुविशिष्टं तदन्यत्वं तद्व्यक्तित्वे वर्तते। घटत्वस्य तद्घटनिष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपित-निरूपकता (अभावनिष्ठानुयोगितानिरूपकता) वच्छेदका (भेदत्वा) वच्छिन्नाधेयतानिरू-पिताधिकरणता (घटान्तरनिष्ठा) वद्वृत्तित्वस्य च सत्त्वात्। अस्यापि च येन रूपेणोभ-वृत्तित्वं विवक्षितं (वस्तुविशिष्टं विवक्षितम्)। तद्धर्मावच्छिन्नसंबन्धित्वाभाव एव तात्पर्यम्। अयंभावः तत्पर्वतानुयोगिकसंयोगेन तद्वह्नेःउभयावृत्तित्वसंपत्तये, वाच्य-त्वतद्व्यक्तित्वान्यतरत्वादिना तद्व्यक्तित्वस्योभयावृत्तित्वानुपपत्तिवारणाय, एवं संयोगेन घटत्वेनोभयावृत्तेः वह्नेः वह्नित्वेनोभयावृत्तित्वानुपपत्तिवारणाय, कालिकेन गगनादीनामवृत्तित्वे गगनत्वेन गगनस्योभयावृत्तित्वसंपत्तये, तदघटगततद्व्यक्तित्वे उभयावृत्तित्वसंपत्तये चेत्यादिपूर्वोक्तदोषवारणाय यथानिवेशाः कृताः तथाऽत्रा-पि बोध्याः।

तथा च वस्तुविशिष्टसंबन्धित्वाभाववत्त्वमुभयावृत्तित्वम्। वै० स्व-निरूपितत्वस्वनिष्ठप्रतियोगितात्वावच्छिन्ननिरूप्यतानिरूपितनिरूपकतावच्छेदकावच्छिन्ना-धेयतानिरूपिताधिकरणतावन्निरूपितसंबन्धितावत्त्वोभयसंबन्धेन। संबन्धितायां संबन्धि-तावत्ता च स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वावच्छेदकावच्छिन्नत्वोभयसंबन्धेन।

संबन्धिता च येन रूपेणोभयावृत्तित्वं (तद्धर्मावच्छिन्ना) तद्रूपावच्छिन्ना। अभावश्च येन संबन्धेनोभयावृत्तित्वं विवक्षितं तत्संबन्धावच्छिन्नसंबन्धिताप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। वस्तुविशिष्टा संबन्धिता तद्व्यक्तित्वनिष्ठा कालिकसंबन्धावच्छिन्नैव। अथवा द्वित्वावच्छिन्ननिरूपितवृत्तित्वसामान्ये यन्निष्ठत्व, यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वैतत्त्रितयाभावः, तेन संबन्धेन तेन रूपेण तद्धर्मवत्त्वमुभयावृत्तित्वम्। यथा तद्घटतद्घटान्यघटोभयगतद्वित्वावच्छिन्नघटत्वनिष्ठवृत्तितासामान्ये तद्घटनिष्ठत्व स्वरूपसंबन्धावच्छिन्नत्व, तद्घटगततद्व्यक्तित्वावच्छिन्नत्वैतत्त्रितयाभावो वर्तते, तद्व्यक्तित्वत्वेन रूपेण स्वरूपसंबन्धेन तस्योभयावृत्तित्वमुपपन्नं भवति· सर्वञ्चेदं शब्दानुगमानुरोधेनोक्तम्। प्रकृते च स्वप्रतियोगिनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्व स्वानुयोगिनिरूपितस्वरूपसंबन्धावच्छिन्नवृत्तित्वोभयसंबन्धेन भेदविशिष्टान्यत्वे सति स्वरूपसंबन्धेन वृत्तित्वादिकमेवोभयावृत्तित्वं वाच्यमित्यलम्। वृत्तितादिकमेवेत्यत्रादिना संबन्धित्वस्य परिग्रहः। अन्यथा कालिकादिना गगनत्वेन गगनस्यावृत्तित्वपक्षे कालिकेन गगनत्वेन गगनस्य वृत्तित्वाप्रसिद्ध्या तस्य गगनत्वेनोभयावृत्तित्वानुपपत्तेः।

तत्संयोगत्वे उभयावृत्तित्वमुपपद्यते। तत्संयोगो नेति भेदविशिष्टान्यत्वविशिष्टस्वरूपसंबन्धावच्छिन्नवृत्तित्वस्य तत्र सत्त्वात्। संयोगत्वनिष्ठा वृत्तिता तत्संयोगो नेति भेदविशिष्टा भवति। स्वप्रतियोगितत्संयोगनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्व, स्वानुयोगितत्संयोगभिन्नसंयोगनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वयोः सत्त्वात् तदन्यत्वं तत्संयोगत्वेऽस्तीति तत्संयोगत्वमुभयावृत्तीति।

### तेन न स्वरूपासिद्धिर्न वा सिद्धिसाधनमिति जा० टी०

तेन उभयावृत्तिधर्मवदर्थकविशेषपदोपादानेन, संबन्धस्य यत्त्वतत्त्वेन सामान्यव्याप्तौ प्रवेशेन चेत्यर्थः। संयोगत्वसमानाधिकरणसत्त्वगुणत्वमादाय न स्वरूपासिद्धिः। पक्षे हेत्वभावः स्वरूपासिद्धिः। सत्त्वगुणत्वयोः संयोगत्वसमानाधिकरणत्वेऽपि तयोरुभयवृत्तित्वेनोभयावृत्तित्वरूपविशेषत्वाभावात् ( विशेषानुपादाने तु संयोगत्वसमानाधिकरण-

सत्त्वगुणत्वयोः ग्राह्यत्वे तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वात् स्वरूपासिद्धिः स्यात्। न वा सिद्धिसाधनमिति।

अयं भावः। यत्संबन्धावच्छिन्नत्वस्योभयावृत्तिधर्मावच्छिन्नप्रतियोगितायामविशेषणत्वे संयोगेन तत्तत्संयोगाभावानां वृक्षे सत्त्वेन तत्र संयोगेन संयोगसामान्याभावस्योभयमतसिद्धतया सिद्धसाधनमिति। यत्वतत्त्वेन संबन्धस्योपादाने तु नोक्तदोषः। समवायेन तत्तत्संयोगाभावेन समवायसंबन्धावच्छिन्नसंयोगत्वावच्छिन्नसंयोगसामान्याभावस्य वृक्षे संप्रदायाननुमतत्वेन न सिद्धसाधनमिति। वृक्षे उभयमतसिद्धस्य संयोगेन संयोगसामान्याभावस्य संयोगेन तत्तत्संयोगाभावकूटेन हेतुना साधने सिद्धसाधनं भवति। सामान्यव्याप्तिबलाद् यो यदीययावद्विशेषाभावान् स तत्सामान्याभाववान् इति व्याप्तिबलाद् विशेषहेतौ संयोगेन तत्तत्संयोगाभावे वृक्षे पक्षे वृत्तित्वग्रहाद् संयोगेन संयोगसामान्याभावस्य सिद्धावपि सामान्यव्याप्तेः संबन्धविशेषावच्छिन्नत्वाविशेषितप्रतियोगिताकाभावत्वेन हेतुसाध्यघटिततया तद्व्याप्तिज्ञानात् संयोगीययावद्विशेषाभावे पक्षधर्मताग्रहदशायामपि संयोगत्वावच्छिन्नाभावत्वेनैवाभावेऽनुमितिविधेयत्वस्य संभावितया तादृशानुमितौ ( संयोगेन तत्तत्संयोगाभावहेतुकसंयोगसंबन्धावच्छिन्नसंयोगसामान्याभावानुमितौ ) विशेषसाध्यसिद्धत्वेन संयोगसंबन्धावच्छिन्नसंयोगसामान्याभावग्रहस्य प्रतिबन्धकत्वेन सिद्धिसाधनमिति।

अयमाशयः, यत्वतत्त्वेन संबन्धस्य सामान्यव्याप्तौ, अनिवेशे, संयोगेन तत्तत्संयोगाभावकूटेन संयोगेन संयोगसामान्याभावस्य वृक्षेऽनुमितिः स्यात्। तस्य साध्यस्य सर्वमतसिद्धत्वेन प्रतिबन्धकत्वमिति नानुमितिर्भविष्यति। सिद्धस्य साध्यनिश्चयस्य पक्षताविघटकतयाऽनुमितिं प्रति प्रतिबन्धकत्वात्। व्याप्तौ संबन्धस्य प्रवेशे तु समवायसंबन्धावच्छिन्नतत्तत्संयोगाभावकूटेन हेतुता न समवायेन संयोगसामान्याभावस्य द्रव्ये संप्रदायाननुमतस्य सिद्धिरस्तीति व्यभिचार इति।

**जात्युपादानात् गुरुधर्मस्य कम्बुग्रीवादेः प्रतियोगितानवच्छेदकत्वे तदवच्छिन्नाभावाप्रसिद्ध्याऽपि न व्यभिचार इति जा० टी०।**

कम्बुग्रीवादिरूपगुरुधर्मावच्छिन्नप्रतियोगिताकाभावरूपसाध्याभावाप्रसिद्धि-

वारणाय स्वावच्छिन्नप्रतियोगिताकाभाववत्वसंबन्धेन तद्धर्मस्य साध्यत्वं बोध्यम्। तथा हि स्वावच्छिन्नप्रतियोगिताकाभाववत्वरूपव्यधिकरणसंबन्धेन कम्बुग्रीवादिमत्वरूपस्य साध्यस्याभाववति तत्तद्घटशून्यदेशे घटसामान्याभाववति कम्बुग्रीवादिसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नप्रतियोगिताकयावद्विशेषाभावस्य हेतोः सत्वेन व्यभिचारः। कम्बुग्रीवादिमत्वरूपसाध्यस्य गुरुधर्मत्वेन प्रतियोगितानवच्छेदकत्वात्। स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वरूपव्यधिकरणसबन्धेनाभाववति तत्तद्विशेषाभावरूपहेतोः सत्वात्। जातिपदोपादाने तु नोक्तदोषः। कम्बुग्रीवादिमत्वरूपगुरुधर्मस्य जातित्वाभावेन तस्यासाध्यत्वात्।

अथ साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वस्यैव हेतौ व्यभिचारतया प्रकृतसाध्यतावच्छेदकसंबन्धस्य स्वावच्छिन्न प्रतियोगिताकाभाववत्वस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति तत्संबन्धावच्छिन्न कम्बुग्रीवादिमत्वरूपसाध्याभावस्याप्रसिद्ध्या न व्यभिचारसंभवः। वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वस्वीकारे च प्रकृते व्यभिचारसंभवेऽपि जात्युपादानेऽपि विषयितया तत्तद्वह्न्यभाववति वह्नित्वेन वह्निविषयकज्ञाने विषयितया वह्नित्वावच्छिन्नाभावस्यासत्त्वेन व्याभिचारो दुरुद्धरः स्यादिति चेन्न। वृत्त्यनियामकसंबन्धस्य भेदप्रतियोगितावच्छेदकतायाः सर्वानुमततया साध्यतावच्छेदकसंबन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकत्वाभावाभावस्यैव व्यधिकरणसंबन्धेन(स्वावच्छिन्नप्रतियोगिताकाभाववत्वसंबन्धेन ) व्यापकत्ववारणाय व्यभिचारस्य साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यताव्यापकत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वैतत्त्रितयाभाववत् तादृशभेद ( साध्यतावच्छेदकसंबन्धप्रतियोगित्वविशिष्टहेतुसमानाधिकरणान्योन्याभाव) प्रतियोगितावच्छेदकत्वस्यैव व्यभिचारत्वस्य वाच्यतया प्रकृतेऽपि तत्संगतेः।

तथा हि कम्बुग्रीवादिमत्वसमानाधिकरणतत्तद्घटत्वाभावे हेतौ स्व ( हेतु ) समानाधिकरणस्वावच्छिन्नप्रतियोगिताकाभाववत्वरूपव्यधिकरणसंबन्धावच्छिन्नावच्छेदक-

ताककम्बुग्रीवादिमान् नेति भेदप्रतियोगितावच्छेदकतायां कम्बुग्रीवादिमत्वनिष्ठायां व्यधिकरणसंबन्धरूपस्वावच्छिन्नप्रतियोगिताकाभाववत्वरूपसंबन्धप्रतियोगित्वस्य विरहेण साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व,साध्यताव्यापकत्वयोः सत्त्वेऽपि साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वविरहेण च तादृशत्रितयाभावस्य कम्बुग्रीवादिमत्वनिष्ठायां हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकतायां सत्त्वेन व्यभिचारस्य सत्त्वात्। न तत्र व्यभिचारासंगतिः। धूमवान् वह्नेरित्यादौ वह्निसमानाधिकरणान्योन्याभावः हेत्वधिकरणे अयोगोलके संयोगेन धूमवान् नेत्याकारकः तदीयप्रतियोगितावच्छेदके (धूमनिष्ठावच्छेदकत्वे) सामानाधिकरण्यसंबन्धेन साध्यतावच्छेदकसंयोगसंबन्धप्रतियोगित्वविशिष्टे साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वविरहेण साध्यताव्यापकत्वस्य साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकावच्छिन्नत्वस्य च सत्त्वेऽपि तत्त्रितयाभावस्य तत्र सत्त्वेन व्यभिचारस्य वह्नौ सत्त्वात्। व्यभिचारवत्ता च हेतौ स्वसमानाधिकरणप्रकृतहेतुतावच्छेदकवत्त्वसंबन्धेन। यद्वा व्याप्तिशरीरे यत्संबन्धे वृत्त्यनियामकसंबन्धान्यत्वं विशेषणीकृत्य वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वस्वीकारेण व्यभिचारस्य संगमनीयत्वं बोध्यमिति।

तथा हि स्वावच्छिन्नप्रतियोगिताकाभाववत्वसंबन्धभिन्नसंयोगसंबन्धावच्छिन्नकम्बुग्रीवादिमत्वत्वावच्छिन्नप्रतियोगिताका (साध्यतावच्छेदकावच्छिन्नप्रतियोगिताका)भाववति घटसामान्यशून्यदेशे यावत्तत्तद्घटाभावस्य सत्त्वाद् व्यभिचारः तत्तद्घटाभावकूटे हेतौ भवति।

ननु व्याप्तिशरीरे जातेरुपादानेऽपि (यो यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकयावदभाववान् स तत्संबन्धावच्छिन्नतज्जातिनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेन तज्जातिमानिति कथनेऽपि) कपालद्वयसंयोगगत कम्बुग्रीवादिमत्वरूप (अवयवसंयोगत्वरूप) जातेः स्वाश्रयाश्रयाधिकरणत्वरूपपरंपरासंबन्धेन (स्वाश्रयः कपालसंयोगः तदाश्रयः कपालः तदधिकणंर

भूतलादिकं तन्निष्ठं यदधिकरणत्वं तद्रूपपरंपरासंबन्धेन ) स्व ( कम्बुग्रीवत्व ) समानाधिकरणीभूततत्तद्भूतलत्वरूपोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववति कपालद्वयसंयोगे तत्संबन्धावच्छिन्न ( स्वाश्रयाश्रयाधिकरणत्वरूपपरंपरासंबन्धावच्छिन्न ) स्व ( कम्बुग्रीवत्व ) निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंबन्धेन ( व्यधिकरणेन ) कम्बुग्रीवत्वस्य ( साध्यस्य ) विरहेण व्यभिचारः। तादृशसंबन्धेन कम्बुग्रीवत्वस्य साध्यस्याभाववति ( कपालद्वयसंयोगे ) तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताक-यावदभावस्य हेतोः सत्त्वात् । यदि गुणविभाजकजातित्वेन जातेस्तत्र प्रवेश इति कपालद्वयसंयोगगतकम्बुग्रीवत्वस्यायवगतसंयोगविशेषनिष्ठस्य संयोगत्वव्याप्यजातिरूपस्य गुणाविभाजकत्वेन न ग्राह्यम् । स्वव्याप्यत्वे सति स्वव्याप्याव्याप्यत्वं स्वविभाजकत्व-मिति नोक्तदोषः। कम्बुग्रीवत्वे गुणत्वव्याप्यसंयोगत्वव्याप्यत्वस्यैव सत्त्वादित्युच्यते । तदा स्व ( संयोगत्व ) व्याप्यकम्बुग्रीवत्वाश्रयाधिकरणत्वसंबन्धेन संयोगत्वाधिकरणत्व घटितहेतुमति संयोगत्वस्य विरहेण व्यभिचारो दुर्वार एवेति चेन्न ( तदा स्व-संयोगत्व, व्याप्यकम्बुग्रीवत्वाश्रयाधिकरणत्वसंबन्धेन संयोगत्वसमानाधिकरणोभयावृत्तितत्तद्भूत-लत्वादिधर्मावच्छिन्नप्रतियोगिताकयावदभाववति भूतलभिन्ने संयोगभिन्ने रूपादिगुणे संयोगत्वरूपसाध्यस्यासत्त्वेन व्यभिचारो दुर्वारः। संयोगत्वव्याप्यकम्बुग्रीवत्वाश्रयकपाल-द्वयसंयोगाश्रय, कपालाश्रयाधिकरणत्वसंबन्धेन रूपे साध्यस्य संयोगत्वस्यासत्त्वेन हेतोः सत्त्वाद् व्यभिचारो दुर्वारः) । समवायेनैव यज्जातिसमानाधिकरणत्वस्यात्र प्रवेशेनादोषात् । समवायेन यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताक-यावदभाववान् यः स तत्संबन्धावच्छिन्न ( समवायसंबन्धावच्छिन्न ) तज्जात्यवच्छिन्न-प्रतियोगिताकाभाववान् इति व्याप्तिः फलिता । तथा च नोक्तदोषः। प्रकृते तादृश-परंपरासंबन्धस्य समवायसंबन्धत्वाभावात् । न च यः समवायेन यज्जातिसमानाधि-करणोभयावृत्तिधर्मावच्छिन्नयावदभाववान् स तत्संबन्धावच्छिन्नतद्धर्मावच्छिन्नप्रति-योगिताकाभाववानित्युक्तेऽपि कम्बुग्रीवादिमत्वरूपोपाधिमादाय दोषवारणसंभवे तत्र व्याप्तौ जात्युपादानं निरर्थकमिति वाच्यम् । तथा सति गुणवत्वविशिष्टस्यापि यत्तादादि-पदबोध्यतया यत्त्वतत्त्वेनोपादानसंभव इति गुणवत्व ( गुण ) समानाधिकरणोभयावृत्ति-

तत्तद्घटत्वादिधर्मावच्छिन्नप्रतियोगिताकयावदभावस्य घटशून्यदेशे ( तत्तद्घटे पृथिव्यां वा ) समवायेन गुणवत्त्वस्य (गुणस्य) सत्त्वेन समवायसंबन्धावच्छिन्नगुणवत्वावच्छिन्न-प्रतियोगिताकाभावस्य साध्यस्यासत्त्वेन गुणवत्त्वावच्छिन्नप्रतियोगिताकाभावाभावसत्वात् साध्याभाववति पृथिव्यादौ तादृशहेतोः सत्त्वेन व्यभिचारापत्तेः। जात्युपादाने तु नोक्तदोषः। गुणवत्त्वस्य जातित्वाभावात्। यादृशव्याप्तिघटकत्वं तादृशावच्छिन्नत्व-घटित एव साध्यत्वस्य साध्यसंसर्गत्वस्य व्याप्त्यनुगृहीततया संयोगेन गुणवदभावप्रति-योगितावच्छेदकत्वस्य द्रव्यत्वे कल्पनेनोक्तसंबन्धस्य ( संयोगस्य ) गुणव्यधिकरणत्वात्। यादृशस्य च व्याप्तिघटकत्वं तादृशावच्छिन्नत्वघटित एव साध्यत्वस्य साध्यसंसर्गत्वस्य वा व्याप्त्यनुभवगृहीततया संयोगेन गुणवदभावप्रतियोगितावच्छेदकत्वं द्रव्यत्वे कल्प्यते गुणवद् द्रव्यमेव भवतीति। उक्तसंबन्धस्य संयोगस्य गुणव्यधिकरणत्वं द्रव्ययोरेव संयोग इति नियमात्। तथा च गुणवत्वसमानाधिकरणोभयावृत्तितत्तद्घटत्वावच्छिन्नसंयोग-संबन्धावच्छिन्नप्रतियोगिताकयावदभाववद्भूतले गुणवत्त्वावच्छिन्नप्रतियोगिताका (संयोग-संबन्धावच्छिन्नद्रव्यत्वावच्छिन्नप्रतियोगिताका )भावस्यासत्त्वेन न दोषः। संयोगेन गुणावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य द्रव्यत्वे स्वीकारात्। एवं जातित्वेन जातेरपि यत्त्वतत्त्वेन ग्राह्यतया जात्यवच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य नित्यत्वा-विशेषितजातेरेव कल्पनीयतया ( अनेकसमवेतत्वस्यैव कल्पनीयतया ) व्यभिचाराच्च। यत्र जाति ( अनेकसमवेतघटत्व ) समानाधिकरणोभयावृत्तितत्तद्घटत्वादिधर्मा-वच्छिन्नप्रतियोगिताकाभावकूटो वर्तते तत्रानेकसमवेतत्वावच्छिन्नप्रतियोगिताकाभावो न वर्तते। अनेकसमवेतद्वित्वादीनां तत्र सत्त्वात्। अनेकसमवेतत्वावच्छिन्नप्रतियोगिताका भावस्य साध्यस्याभाववति हेतोः सत्त्वेन व्यभिचारो बोध्यः। न च येन रूपेण व्याप्तौ यस्योपादेयता तदवच्छिन्नावच्छेदकत्वस्यैव साध्यघटकत्वे संयोगत्वसमानाधिकरणो-भयावृत्तीत्यत्रोल्लिख्यमानत्वेन संयोगत्वादेरपि स्वरूपतो यत्पदानुपादेयतया संयोगत्वत्वेन यत्पदोपादेयसंयोगत्वस्य तेन ( संयोगत्वत्वेन ) प्रतियोगितानवच्छेदकत्वेन व्यभिचारः। यत्र संयोगत्वसमानाधिकरणोभयावृत्तितत्तत्संयोगित्वाभावः, तत्र निरवच्छिन्नसंयोगत्व-निष्ठावच्छेदकताकप्रतियोगिताकाभावो वर्तते न तु संयोगत्वत्वावच्छिन्नावच्छेदकताक-

प्रतियोगिताकाभाव इति सावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकसंयोग-सामान्याभावसाध्यस्याभाववति वृक्षे तादृशाभावकूटस्य हेतोः सत्त्वेन व्यभिचार इति तत्पदोपस्थाप्यनिष्ठावच्छेदकताकत्वस्यैव ( संयोगत्वादिनिष्ठनिरवच्छिन्नावच्छेदकताक-प्रतियोगिताकाभावस्यैव ) साध्यस्य तत्संसर्गस्य वा व्याप्तिघटकताया वाच्यतया गुणत्वेन जातित्वेन गुणस्य संयोगत्वरूपजात्यादेरुपादेयत्वेऽपि न दोषः । एवञ्च गुणवत्त्वसमाना-धिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटो यत्रास्ति तत्र संयोगावच्छिन्नगुण-वच्छिन्नप्रतियोगिताकाभावोऽपि वर्तते । संयोगसंबन्धावच्छिन्नगुणावच्छिन्नप्रतियोगितावच्छेदकत्वस्य गुण एव स्वीकारात्, न द्रव्यत्वे । एवं संयोगत्वादिजातिसामानाधिकरणोभया-वृत्तिधर्मावच्छिन्नाभावकूटो यत्रास्ति तत्र संयोगत्वादिजात्यवच्छिन्नप्रतियोगिताकाभावो-ऽपि वर्तते एव जात्यवच्छिन्नप्रतियोगितावच्छेदकत्वस्य नित्यत्वविशिष्टानेकसम-वेतजातावेव स्वीकर्तव्यमिति न त्वनेकसमवेतत्वमात्रे । तस्य तस्याश्च गुणस्य जातेश्च तत्पदोपस्थाप्यत्वम् । येन रूपेणोपादेयत्वम् तेन रूपेण प्रति-योगितावच्छेदकत्वस्वीकारे संयोगत्वत्वेन संयोगत्वस्योपादेयत्वमस्ति तेन रूपेण संयोगत्वस्य संयोगाभावप्रतियोगितावच्छेदकत्वम् न तु स्वरूपतोऽवच्छेदकत्वम् स्यात् । एवञ्च संयोगत्वसमानाधिकरणोभयावृत्तितत्तत्संयोगत्वावच्छिन्नप्रति-योगिताकाभावकूटस्य हेतोः संयोगत्वत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकसंयोगा-भावरूपसाध्यस्याभाववति वृक्षे वृत्तित्वेन तत्र व्यभिचारः स्यात् । तत्र हेतुमति वृक्षे निरवच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य सत्त्वा-दिति वाच्यम् । गुणावच्छिन्नाभाव, जात्यवच्छिन्नाभावाद्यनुभवे आनुभावि-कानां गुणत्व, जातित्वाद्यवच्छिन्नावच्छेदकताया एवानुभवारूढत्वेन तस्य ( गुणस्य जात्यादेश्च ) तत्पदोपादेयत्वे ( यो यदीयेत्यत्र तत्पदोपादेयत्वे ) गुणत्वा-वच्छिन्न, जातित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य साध्यत्वापत्या व्यभि-चारः स्यादेव । संयोगत्वाद्यवच्छिन्नाभावानुभवे च संयोगत्वनिष्ठनिरवच्छिन्ना-वच्छेदकत्वावगाहिताया एवानुभाविकत्वेन तस्य ( संयोगत्वस्य ) तत्पदोपादेयत्वे ( यो यदीयेत्यत्र तत्पदोपादेयत्वे ) तन्निष्ठ ( संयोगत्वनिष्ठ ) निरवच्छिन्नवच्छे-

दकताघटितस्य साध्यत्वस्य संसर्गत्वस्य वा प्राप्तत्वेन न दोषः । ( न व्यभिचारः ) इत्येतदर्थस्यानुभववासनावासितान्तःकरणवेद्यस्य सत्त्वात् । तथा च गुणावच्छिन्नसंयोगावच्छिन्नप्रतियोगितया अवच्छेदकं द्रव्यत्वमिति तद-वच्छिन्नाभावो गुणवत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटे वर्तते न तु गुणावच्छिन्नाभावो गुणत्वावच्छिन्नावच्छेदकताकप्रतियोगिताक इति जात्युपादाने तत्र व्यभिचारो दुर्वारः । एवं जातित्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावकूटो यत्रास्ति तत्र सोऽभावो जातित्वनिष्ठावच्छेदकताकाभावो न वर्तते, किन्तु अनेक-समवेतत्वविशिष्टावच्छिन्नावच्छेदकताकप्रतियोगिताकाभाव एव वर्तते । जात्यवच्छिन्न-प्रतियोगिताया अवच्छेदकत्वम् नित्यत्वाविशेषितानेकसमवेते मन्यन्ते न तु नित्यत्व-विशिष्टानेकसमवेते इति जातित्वेन जातेः यो यदीयेत्यत्रानुपादाने तत्र तत्र व्यभि-चारापत्तिरिति बोध्यम् । एतदभिप्रायेणैव जात्यवच्छिन्नाभावाप्रसिद्ध्या व्यभिचारस्य भट्टाचार्योक्तता संगच्छते । न च जात्युपादानेऽपि जातित्वेन जातेर्यत्पदोपादेयतया संयोगत्वनिष्ठमावच्छिन्ननिरवच्छिन्नावच्छेदकतेति पूर्वोक्तरीत्या व्यभिचारतादवस्थ्य-मिति वाच्यम् । जातिपदसमभिव्याहृतयत्पदस्य जातित्वेन जातिबोधकत्वात् । जातिविशेषाणां संयोगत्वादीनां बोधस्यैव तथानुभाविकत्वात् । तथा च जातिपद-समभिव्याहृतयत्पदेन जातित्वेन जातिर्न ग्राह्या किन्तु जातिविशेषाणां संयोगत्वा-दीनामेव ग्राह्यत्वमिति जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव-कूटेऽनेकसमवेतत्वावच्छिन्नाभावाव्यभिचारस्य सत्त्वेऽपि नित्यत्वविशिष्टानेकसमवेतत्व रूपजात्य ( संयोगत्वाद्य ) वच्छिन्नाभावव्यभिचारस्यासत्त्वेन न दोषः । जात्यवच्छिन्ना-भावप्रतियोगितावच्छेदकत्वस्यानेकसमवेतत्वमात्रे स्वीकारात् । न तु नित्यत्वविशिष्टा-नेकसमवेतत्वे इति दोषो नापतति । जातेः यो यदीयेत्यत्र यत्पदेन न धर्तुम् शक्यते । स्वविशेषित ( जातिविशेषितसंयोगत्वादि ) जात्यवच्छिन्नानुभवेऽपि तादृशजातिनिष्ठा वच्छेदकत्वावगाहित्वस्यैव चानुभाविकत्वाच्च । ( स्वं जातिविशेषः संयोगत्वादिजातिः तत्संयोगत्वादिजातिनिष्ठावच्छेदकत्वादित्वस्यैव चानुभाविकत्वाच्च ।

अथैवम् सिद्धसाधनप्रसङ्गः । सामानाधिकरण्यसंबन्धेन शाखादिदेशकालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिरूपकाभावस्य वृक्षे सत्त्वादिति चेन्न । यत्किञ्चिच्छाखावच्छेदेन कम्पभावकालविशेषावच्छेदेन च संयोगत्वावच्छिन्नसामान्याभावस्य वृक्षे सर्वसंमतत्वाद् भवति सिद्धसाधनम् । यन्निष्ठयत्संबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकनिरूपकताकसंबन्धित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटवान् यः स तन्निष्ठतत्संबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानिति व्याप्तावेव जात्युपादानकर्तुस्तात्पर्यात् । यत्संबन्धावच्छिन्नाभावस्य हेतुघटकत्वं तत्संबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वस्य यद्धर्मविशेषणत्वमङ्गीकुर्वतामपि अत्रैव तात्पर्यम् बोध्यमिति । तथा च नोक्तदोषः । संयोगत्वनिष्ठसमवायसंबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकनिरूपकताकसंबन्धिता ( वृक्षनिष्ठसंयोगनिष्ठाशाखाद्यनवच्छिन्ना कालविशेषानवच्छिन्नैव ग्राह्या तादृशसंबन्धित्वसमानाधिकरणोभयावृत्तितत्तत्संयोगत्वावच्छिन्नाभाववान् यो वृक्षः स तन्निष्ठ ( संयोगत्वनिष्ठ ) तत् ( समवाय ) संबन्धावच्छिन्ननिरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभाववानित्यत्रैव यो यदीयेति ग्रन्थतात्पर्यमिति न सिद्धसाधनं भवति । निरवच्छिन्नसमवायसंबन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य पूर्वमसिद्धत्वात् । 'पूर्वम् तु शाखाविशेषाद्यवच्छिन्नत्व, कम्पभाववत्कालविशेषावच्छिन्नत्वावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्यैव सिद्धत्वमिति ।

**न च सत्त्वगुणात्वद्यवच्छिन्नाभावमादाय स्वरूपासिद्धिवारकतयोभयावृत्तिपदस्य वैयर्थ्यम् व्यभिचारावारकत्वादिति वाच्यमिति जा० टी० ।**

वैयर्थ्यमत्र न निष्प्रयोजनकत्वं स्वरूपासिद्धिवारकस्योभयावृत्तिपदस्य स प्रयोजनकत्वेन निष्प्रयोजनकत्वासंभवात् । किन्तु विशिष्टान्तरतादृशघटितत्वमेव बोध्यम् । संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववत्वे विशिष्टान्तर घटितस्य सत्त्वेन तस्य वैयर्थ्यम् । प्रकृते विशिष्टान्तरत्वम् च स्वसमानाधिकरण

प्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वम् बोध्यम् । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वे सति प्रकृतसाध्यव्याप्यतावच्छेदकत्वम् तद्घटितत्वम् वैयर्थ्यम्। संयोगत्वसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभावत्वम् संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम् च तद्घटितत्वस्य संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताक यावदभावत्वे सत्त्वात् भवति हि हेतुः व्यर्थविशेषणघटितः। यथा प्रमेयत्वविशिष्ट व्यभिचारत्वस्य विशिष्टान्तरम् व्यभिचारत्वम् प्रकृतानुमितिप्रतिबन्धकतावच्छेदकं च तद्घटितत्वात्।

अथ घटसामान्याभावविरहिणि कतिपयघटाभावादि सत्त्वेन व्यभिचारवारणाय यावदित्युक्तम् दीधितिकृता । यावत्त्वश्चात्र किं व्यापकत्वार्थकं कूटत्वावच्छिन्नार्थकं वाच्यम् । तत्राद्ये यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकत्वम् हेतुपर्यवसितः। व्यापकत्वम् च स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन वृक्षः स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन यद्धर्म ( संयोगत्व ) समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावे वर्तते तत्र स्वरूपसंबन्धेन तादृशाभावत्वम् वर्तते । व्याप्यतावच्छेदकसंबन्धः स्वरूपः । व्यापकतावच्छेदकसंबन्धः, तादृशाधेयता संबन्धः। संयोगीययावद्विशेषाभावस्य केवलान्वयितया सर्वत्र सत्त्वात् तत्राधेयतासंबन्धेन सर्वस्यैव पदार्थस्य सत्त्वम् बोध्यम् । तथा च यः तादृशसंबन्धेन तादृशविशेषाभावे वर्तते तत्र स्वरूपेण तादृशविशेषाभावत्वम् वर्तते । यदि वृक्षे कोऽपि विशेषाभावो न वर्तेत तर्हि न तस्य व्यापको वृक्षो भवेत् । एवञ्च यः स्वरूपसंबन्धावच्छिन्नाधेयतासंबन्धेन संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्यापकः स संयोगत्वावच्छिन्नसामान्याभाववानिति व्याप्तिः । व्यापकत्वम् च स्वाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदकत्वम् । तत्र कम्बुग्रीवत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावप्रतियोगितावच्छेदकत्वस्य लाघवेन घटत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगिता-

वच्छेदकतात्वे एव कल्पनीयतया तादृशाभावस्य कम्बुग्रीवादिमत्वसमानाधिकरणो-भयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिभेदप्रतियोगितावच्छेदकत्वाभावस्य अ-प्रसिद्ध्या यत्पदेन कम्बुग्रीवादिमत्वस्योपादानासंभवात् कम्बुग्रीवादिमत्वसाध्यके व्यभि-चारवारणाय जातिपदोपादानग्रन्थासंगतिः । वैयर्थ्यपरोक्तिग्रन्थासंगतिश्च । उभया-वृत्तिघटिततद्घटिताभावयोर्भेदेन प्रकृतहेतौ विशिष्टान्तरघटितत्वासंभवात् । द्वितीये च ( यावत्त्वे कूटार्थकत्वे च ) तादृशाभावत्वा ( यद्धर्मसमानाधिकरणोभया-वृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वा ) वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वा-वच्छिन्नस्य हेतुत्वमायातम् । तत्रापि वैयर्थ्यासंभवः । उभयावृत्तित्वाघटिततद्घटित-धर्मावच्छिानुयोगितयोर्भेदेन, उभयोः कूटयोर्भेद इति विशिष्टान्तरघटितत्वासंभवात् । न च स्वव्याप्यत्वसंबन्धेन तादृशभाववृत्तित्वम् हेतुरिति वाच्यम् ( न च स्वव्याप्यत्व-संबन्धेन यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकवृत्तिकूटत्वम् हेतुः । तथा च वृक्षः स्वा ( यद्धर्मा ) वच्छिन्नप्रतियोगिताकाभाववान् यद्धर्मसमानाधिकरणोभयावृत्ति-धर्मावच्छिन्नप्रतियोगिताकाभावकूटवत्वात् । यत्र यत्र यद्व्याप्तकूटो वर्तते तत्र सोऽपि वर्तते इति नियमादिति वाच्यम् । विशिष्टाभावत्वस्याभावत्वानतिरिक्ततया व्याप्यत्वासंभ-वात् । वृक्षान्यपटवृत्तित्वविशिष्टसंयोगसामान्याभावस्य संयोगसामान्याभावानतिरिक्तत्वेन तस्य वृक्षेऽसत्त्वेन तत्र ( वृक्षे ) संयोगत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियो-गिताकयावदभावस्य सत्त्वात् । अस्य तादृशकूटस्य संयोगसामान्याभावाव्याप्यत्वात् । न च यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम् हेतुः । रूप-वृत्तित्वम् च स्वावच्छिन्नानुयोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्व-संबन्धेन । पर्याप्तिश्चेतरवारकाघटितेति नोक्तदोषः । तादृशोभयावृत्तिधर्मावच्छिन्नप्रति-योगिताकाभाववृत्त्यनुयोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक रूपे तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावत्वस्येव तादृशोभयावृतित्वा-घटित तादृशधर्मावच्छिन्नप्रतियोगिताकाभावत्वस्यापि विशिष्टान्तरस्य स्वावच्छिन्ना-नुयोगितावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन वृत्तित्वात् ।

तथा च नीलधूमत्वे धूमत्वरूपविशिष्टान्तरघटितत्वेन वैयर्थ्यस्येव, अस्योभयावृत्तिधर्मा-वच्छिन्नप्रतियोगिताकयावदभावस्य' उभयावृत्त्यघटिततादृशधर्मावच्छिन्नप्रतियोगिताका-भावत्वरूपविशिष्टान्तररूपघटितत्वेन वैयर्थ्यसंत्त्वादिति वाच्यम् । तादृशोभयावृत्तिधर्मा-वच्छिन्नप्रतियोगिताकयावदभावस्य हेतोः, तादृशयावत्वाघटिततादृशधर्मावच्छिन्नप्रति-योगिताकाभावस्य विशिष्टान्तरस्य च विभिन्नानुयोगिताघटितत्वेन तादृशानुयोगिता-वच्छेदकरूपे तादृशसंबन्धेन विशिष्टस्यावृत्तित्वमिति प्रकृतहेतोः विशिष्टान्तराघटितत्वे-नावैयर्थ्यात् । न च यद्धर्मसमानाधिकरण्यनिष्ठावच्छेदकताभिन्नोभयावृत्तिधर्मनिष्ठा-वच्छेदकताभिन्नावच्छेदकत्वानिरूपिततत्तदवच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरू-पित तद्भिन्ना (धर्मनिष्ठावच्छेदकताभिन्ना) वच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छे-दकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठा-वच्छेदकतानिरूपिताभावत्वनिष्ठावच्छेदकतानिरूपितानुयोगितानिरूपक (अनुयोगिक) पर्याप्ति प्रतियोगिकूटत्वत्वेनैव तादृशकूटत्वस्य ( यद्धर्मसमानाधिकरणोभयावृत्तिधर्मा-वच्छिन्नप्रतियोगिताकाभावकूटस्य ) हेतुतावच्छेदकत्वम् वाच्यम् । तथा च तादृशकूटत्वा-वच्छिन्नविषयकोभयावृत्तित्वनिष्ठावच्छेदकत्वनिरूपितविषयकतादृशकूटत्वविषयकप्रतीति विषयतावच्छेदकावच्छिन्नघटितत्वेन ( धर्मनिष्ठावच्छेदकतानिरूपित धर्मनिष्ठावच्छे-दकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिता-वच्छेदकत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगित्वनिष्ठावच्छेदकतानिरूपिताभावत्वनिष्ठा-वच्छेदकतानिरूपितानुयोगितानिरूपक ( अनुयोगिक ) पर्याप्तिप्रतियोगिकूटत्वविषयक-प्रतीतिविषयतावच्छेदकावच्छिन्नघटितत्वेन वैयर्थ्यसंभव इति वाच्यम् । तथा सति ( इतर वारकन्यूनवारकपर्याप्तिघटितकूटत्वत्वेन तादृशकूटत्वस्य हेतुतावच्छेदकत्वे सति) उभया-वृत्त्यनुपादानेऽपि स्वरूपसिद्ध्यसंभवात् । उभयावृत्तित्वनिष्ठावच्छेदकत्वानुपादानस्यैव तदनुपादान ( उभयावृत्त्यनुपादान ) पर्यवसायित्वेन तादृशानुयोगिताकपर्याप्तिप्रतियोगि कूटत्वत्वस्य सत्ताद्यवच्छिन्नाभावसाधारणकूटत्वोभयावृत्तिधर्मावच्छिन्नाभावमात्रवृत्ति-कूटत्वद्वयसधारणतया तदेकस्य ( उभयावृत्तिधर्मावच्छिन्नाभावकूटस्य ) पक्षे ( वृक्षे ) सत्त्वादिति चेत् । ( उभयावृत्तित्वनिष्ठावच्छेदकतानिरूपितत्वस्यानुपादाने संयोगत्वसमा-

नाधिकरणसत्ताद्यभावानुयोगिकूटत्व, संयोगत्वसमानाधिकरणोभयावृत्तिधर्मरूपतत्तत्संयोगत्वावच्छिन्नाभावानुयोगिककूटत्वयोरुभयोरपि तादृशकूटत्वत्वेन धर्तुम् शक्यते इत्युभयावृत्तिधर्मावच्छिन्नाभावकूटत्ववतोऽभावस्य हेतोः वृक्षे सत्त्वेन न स्वरूपासिद्धत्वमिति चेत् । उच्यते । यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्व कूटत्वो (तादृशाभावानुयोगिकपर्याप्तिप्रतियोगिकूटत्वो) भयरूपेणैव परामर्शीय पक्षनिष्ठविशेष्यतानिरूपितप्रकारत्वरूप हेतुत्वम् तादृशयावद्विशेषाभावस्य विवक्षितम् । तत्र तादृशाभावे (यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावे) स्वोद्देश्यतावच्छेदक (तादृशाभावरूपहेतूद्देश्यतावच्छेदकरूपपक्षतावच्छेदक) व्यापकपर्याप्तिरेव संसर्गः । संसर्गता च न तादृशपर्याप्तित्वेन (न स्वोद्देश्यतावच्छेदक व्यापकपर्याप्तित्वेन) किन्तु पर्याप्तित्वेनैव । बह्नित्वावच्छिन्नप्रतियोगित्वस्य प्रतियोगितात्वेन संसर्गतावत् । एवञ्च तादृशपर्याप्तित्वविशिष्टसंसर्गेण (स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तित्वविशिष्ट संसर्गेण) विशिष्टान्तरतावच्छेदककूटत्वस्य (यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववृत्तिकूटत्वस्य) साध्यव्याप्यतानवच्छेदकत्वेऽपि न क्षतिः (यद्धर्मावच्छिन्न प्रतियोगिताकाभावनिरूपितव्याप्यतानवच्छेदकत्वेऽपि न क्षतिः न दोषः) तादृशस्य (यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिरूपसंबन्धस्य) हेतुतावच्छेदकतावच्छेदकताघटकसंबन्धत्वविरहात् । यथा च शुद्धप्रतियोगितात्वेन प्रतियोगित्वस्य तादृशसंसर्गत्वेऽपि (बह्नित्वावच्छिन्नसंसर्गत्वेऽपि) बह्निविशिष्टाभावो न महानसीयवह्न्यभावः । तथोक्तपर्याप्तेः (स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तेः) पर्याप्तत्वेन संसर्गत्वेऽपि तादृशाभावकूटत्वम् (तादृशविशेषाभावकूटत्वम्) न कतिपयाभाववति (न कतिपयतादृशाविशेषाभाववति वर्तते) इति न व्यभिचारः । तथा चोभयावृत्त्यनुपादाने यद्धर्मसमानाधिकरणधर्मावच्छिन्नाभावकूटस्य हेतुतया तत्र कूटत्वस्य (तादृशोभयावृत्तिधर्मघटितवृत्तिकूटत्वस्य) तादृशाभावत्व (तादृशोभयावृत्तिधर्मघटिताभावत्व) व्यापकपर्याप्तेरेव संसर्गत्वेन स्वरूपासिद्धिसंगतिः । यद्धर्म (संयोगत्व) समानाधिकरणसत्त्वाद्यवच्छिन्नप्रतियोगिताकाभावस्य वृक्षेऽसत्त्वात् ।

यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावकूटत्वावच्छिन्ना-

विषयकप्रतीतिविषयतावच्छेदकयद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूट-त्वावच्छिन्नविषयकत्वस्य हेतुविषयकप्रतीतौ सत्त्वेन वैयर्थ्यसंगतिश्च। उक्तकूटत्वयोः विलक्षणपर्याप्तिरूपहेतुतावच्छेदकताघटकसंबन्धेन हेतौ वर्तमानत्वावर्तमानत्वाभ्यां वैलक्षण्येऽपि कूटत्वत्वेन निखिलकूटत्वस्यैव हेतुतावच्छेदकत्वात्। समवायेनावृत्तेरपि गगनादिनित्यप्रमेयस्य समवायेन प्रमेयाभावप्रतियोगित्वं, प्रमेयवदभावप्रतियोगिता-वच्छेदकत्ववद्।

अयम् भावः "यद्धर्मावच्छिन्नप्रतियोगिताकसामान्याभावव्याप्य यद्धर्मसमानाधि-करणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद्विशेषाभाववान् वृक्षः" इति परामर्शीय-पक्षनिष्ठविशेष्यतानिरूपितप्रकारत्वरूपम्, तादृशविशेषाभावकूटस्य हेतुत्वमत्र विव-क्षितम्। समानाधिकरणविषयतयोरभेदात्। अथवा प्रकारतावत्त्वेन हेतुत्वम्। तादृश-विशेषाभावकूटत्वस्य (हेतुतावच्छेदकत्वस्य) स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिरेव संसर्गः। परामर्शीयप्रकारता चात्र यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियो-गिताकाभावत्व तादृशाभावगतकूटत्वोभयावच्छिन्ना ग्राह्या। संसर्गता च पर्याप्तित्वेन न तु स्वोद्देश्यकपर्याप्तित्वेन। वह्न्यभावीयप्रतियोगितायाः शुद्धप्रतियोगितात्वेन प्रति-योगितावत्। वह्न्यभाव इत्यत्र शुद्धप्रतियोगितासंबन्धेन बह्निविशिष्टाभाव इत्येव प्रतीतिः, न तु महानसीयबह्निविशिष्टाभाव इति प्रतीतिर्भवति। तादृशसमभिव्याहारस्य कारणत्वात्। तथा च स्वोद्देश्यतावच्छेदकपर्याप्तेः शुद्धपर्याप्तित्वेन संसर्गत्वेऽपि कति-पयतादृशविशेषाभाववति देशे कूटवत्तादृशविशेषाभावो न वर्तते, स्वोद्देश्यतावच्छेदक-व्यापकपर्याप्तेस्तत्र (कतिपयतादृशविशेषाभाववति देशे) असत्त्वात्। संबन्धसत्ताधीना च संबन्धिसत्तेति नियमात्। तथा चोभयावृत्यनुपादाने संयोगत्वसमानाधिकरणसत्त्वा-भावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्धिः संगता। स्वोद्देश्यतावच्छेदकव्यापकपर्याप्तिसंबन्धेन तादृशाभावकूटवत्तायास्तत्र (वृक्षे) असत्त्वात्। उभयावृत्तिपदानुपदाने स्वरूपा-सिद्धिः संगता भवति। न चोभयोः कूटत्वयोः भिन्नत्वेन यद्धर्मसमाना-धिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावगतकूटत्वमेव साध्यव्याप्यतावच्छेदकं

हेतुतावच्छेदकं न तु यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावगतं कूटत्वं साध्यव्याप्यतावच्छेदकमिति तद्घटितत्वेऽपि हेतोः विशिष्टाभावघटितत्वेन कथं वैयर्थ्यमिति वाच्यम् । उभयोः कूटत्वयोः तेन रूपेण भिन्नत्वेऽपि कूटत्वत्वेन तयोरैक्यमिति उभयोः कूटत्वयोः हेतुतावच्छेकत्वम् समवायेन प्रमेयाभावादिदृष्टान्तश्चात्र प्रमाणम् । तथा च महति हेतुतावच्छेदकेऽल्पतादृश-हेतुकतादृशकूटत्वघटितत्वेन वैयर्थ्यस्य सत्त्वादिति । ननु हेतुतावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषवयतावच्छेदकतात्वावच्छिन्नप्रतियोगिता-वच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक-हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदक-ताकविषयताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितान-वच्छेदकत्वस्यैव व्यर्थविशेषणघटितत्वरूपं वाच्यम् । हेतुतावच्छेकनीलधूमत्वगत-तादृशरूपे स्वा(नीलधूमत्वगतरूपा)वच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक-विषयताशून्यधूमविषयकप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकं धूमत्वगतैकत्वञ्च प्रकृतसाध्यवह्निव्याप्यतावच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगिताकवच्छेदकं हेतुतावच्छेदकनीलधूमत्वसमानाधिकरण-धूमत्वरूपधर्मवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्य-घटादिविषयकज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छे-दकं घटत्वादिगतरूपं तदवच्छिन्नानुयोगितानवच्छेदकत्वस्य सत्त्वेन भवति नील-धूमत्वं व्यर्थविशेषणघटितम् । अन्यथा नीधूमत्वस्य धूमत्वानतिरेकेण धूमत्वा-वच्छिन्नविषयताया नीलधूमत्वावच्छिन्नत्वात् तत्र वैयर्थ्यासंभवात् । (स्वावच्छिन्ना-विषयकप्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकघटितत्वस्य व्यर्थविशेषण-घटितत्वोक्तौ च शुद्धो विशिष्टान्नातिरिच्यते इति धूमत्वनीलधूमत्वयोरैक्येन नीलधूमत्वावच्छिन्नाविषयकप्रतीतिनं धूमत्वावच्छिन्नधूमविषयकप्रतीतिर्भवितुमर्हति किन्त्वालोकविषयकप्रतीतिरेव तथा तदविषयतावच्छेदकालोत्वावच्छिन्नविषयिता-

शून्यप्रतीतिविषयतावच्छेदकत्वस्य नीलधूमत्वे सत्त्वेन न तस्य व्यर्थविशेषणत्वं स्यात् । इदं द्रव्यं घटवृत्तिसत्त्वादित्यत्र स्वा(प्रकृतहेतुतावच्छेदका)वच्छिन्न-विषयिताशून्यप्रतीतिविषयतावच्छेदकत्त्वस्य प्रकृतसाध्यव्याप्यतावच्छेदकस्य पटवृत्ति-सत्तात्वस्यानतिरिक्तेन शुद्धसत्त्वत्वेन घटितत्वाद् हेतोः वैयर्थ्यापत्तेश्च । अतः स्वावच्छिन्नविषयिताशून्यप्रतीतिविषयतावच्छेदकप्रकृतसाध्यव्याप्यतावच्छेदकविशिष्टान्तर-घटितत्वं वैयर्थ्यं न स्वीकार्यम् । किन्तु हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगि-ताकपर्याप्त्यनुयोगितावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदक-ताकविषयिताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकं नीलधूमादित्यत्रालोकत्वादिहेतुतावच्छेदकगतरूपं धूमत्वभिन्नं ग्राह्यम् धूमत्वगतरूपस्य हेतुतावच्छेदकधर्मसमानाधिकरण (धूमत्व) धर्मवृत्तिरूपावच्छिन्ना-नुयोगितावच्छेदकत्वेन तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिता-शून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वा-भावात् । प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकं हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्य-वच्छेदकताकविषयताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकं यद्रूपं यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वगतरूपं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छे-दकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य प्रकृतहेतुतावच्छेदक-गतरूपेऽसत्त्वेन न तस्य वैयर्थ्यम् ।

पर्वतो बह्निमान् नीलधूमादित्यत्र नीलधूमत्वं व्यर्थविशेषणघटितं भवति । तथाहि नीलधूमत्वरूपहेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्ति-प्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकं (आलोकत्वगतैकत्वं) साध्यव्याप्यतावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं हेतुतावच्छेदकसमानाधिकरणधर्मं

( धूमत्व )गतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयशून्यघटादि-विषयकज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वात् ।

यत्तु यद्धर्म( संयोगत्व )मात्रसमानाधिकरणत्वमात्रेण वास्तवतादृशोभयावृत्तिधर्म( तत्तत्संयोगत्व )मात्रावगाहियद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावकूटवानितिप्रतीतिमादाय वैयर्थ्यसंभवः । तत्र ( तादृशप्रतीतौ ) सत्तावदभावा ( प्रतियोगितासंबन्धेन सत्ताविशिष्टाभावा ) देरविषयत्वेन तत्प्रतियोगित्व ( सत्तावदभावप्रतियोगित्व ) साधारणसमुदायत्वस्य धारणासंभवादिति । यद्धर्मसमानाधिकरणसत्ताभावत्वगतसमुदायत्वस्य धारणासंभवादिति ।

अयंभावः । यद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावत्वगतसमुदायत्वे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वगतसमुदायत्वं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकश्च तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्याप्रतीतिर्न हेतुविषयिका यद्धर्मसमानाधिकरणत्वमात्रेण वास्तवतादृशोभयावृत्तिधर्ममात्रावगाहित्वात् किन्तु हेत्वविषयिका घटविषयिका तदीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वेन भवति प्रकृतहेतुः व्यर्थविशेषणघटित इति तन्न । तादृशप्रतीति( यद्धर्मसमानाधिकरणत्वमात्रेण वास्तवतादृशोभयावृत्तिधर्ममात्रावगाहिप्रतीति ) विषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताकत्वस्य प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहात् ।

तस्य ( प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य ) सत्तात्वावच्छिन्नप्रतियोगित्वादिसाधारणसमुदायत्वे ( यद्धर्मसमानाधिकरणसत्ताभावप्रतियोगित्वादिसाधारणसमुदायत्वे ) उभयावृत्तित्व ( यद्धर्मसमानाधिकरणोभयावृत्तित्व)साधारणसमुदायत्वे वा सत्त्वात् । ( यद्धर्मसमानाधिकरणत्वावगाहिधर्मावच्छिन्नप्रतियोगित्वादिसमुदायत्वस्य प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वात् ।

अन्ये तु निरवच्छिन्नावच्छेदकत्वस्यैव व्यर्थविशेषणघटितत्वघटकत्वमित्यभ्युपगमेन प्रकृतोभयावृत्तित्वविशेषणस्य व्यर्थतामुपपादयन्ति । तथाहि हेतुतावच्छेदकघटकानामवश्यं कुत्राप्यनवस्थाभयेन स्वरूपतोभानमभ्युपेयम् । तथा चोभयावृत्तित्वघटकस्वरूपतोभासमाननिष्ठावच्छेदकत्वस्यापि निरवच्छिन्नतया तद्घटितसमुदायत्वस्यैव हेतुतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यं विशिष्टान्तरघटकस्वरूपतोभानयोग्याखिलप्रकारकसमूहालम्बनमादाय विषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकस्य साध्यव्याप्यतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्ववत्तया तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यत्वस्य हेतुमत्वज्ञाने विरहेण वैयर्थ्यसंभव इति वदन्ति । अयंभावः । तादृशविषयताशून्यहेत्वविषयकघटादिविषयकज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य प्रकृतहेतुतावच्छेदकगतसमुदायत्वे सत्त्वेन प्रकृतहेतुर्भवति व्यर्थविशेषणघटित इति वदन्ति । तदसत् । निरवच्छिन्नावच्छेदकत्वस्य व्यर्थविशेषणघटितत्वघटकत्वावश्यकत्वे एव तत् ( व्यर्थत्वम् ) संभवति । न च तस्यावश्यकत्वमस्ति । तथाहि धूमवतो हेतुत्वे पर्वतो बह्निमान् तादात्म्येन धूमवत इत्यत्र धूमधूमत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यधूमत्वेन तद्धूमावगाहिधूमवद्वानितिज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-

नुयोगितावच्छेदकतद्धूमधूमत्वगतद्वित्वमादाय (हेतौ) केवलधूमत्वघटितत्वेन वैयर्थ्यवारणाय हेतुतावच्छेदकतायां निरवच्छिन्नत्वमभिमतम्। तथा चात्रोक्तद्वित्वस्य (धूमधूमत्वगतद्वित्वस्य) प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक पर्याप्त्यनुयोगितावच्छेदकत्वविरहेण दोषस्यैवाभावात्। (तदनुयोगितावच्छेदकत्वं लाघवाद् धूमत्वगतैकत्वे एव स्वीकरणीयमिति हेतुतावच्छेदकधूमत्वगतरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्या तद्धूमावगाहिनी प्रतीतिर्न भवतीति नोक्तदोषः)। हेतौ न विशिष्टान्तरघटितत्वं भवति। तत्रोक्तद्वित्वस्य (तद्धूमधूमत्वगतद्वित्वस्य) प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वविरहेण दोषस्यैवाभावात्। (हेतौ व्यर्थविशेषणघटितत्वस्यैवाभावात्)। धूमवतो व्याप्यत्वे, धूमत्वे निखिलधूमगतसमुदायत्वे वा तद्धूमवतो व्याप्यत्वे तत्तासहितसमुदायत्वे वा तस्य भावात् (प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य सत्त्वात्) न तदुपादेयम् (तदवच्छेदकतायां निरवच्छिन्नत्वं नोपादेयम्)। एवं हेतुमत्त्वविषयकज्ञाने धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयत्वस्यापि न संभवः। तथाहि तादृशपर्याप्तीया (धूमत्वतद्धूमगतद्वित्वावच्छिन्नानुयोगिताकपर्याप्तीया) प्रतियोगिता न तज्ज्ञानीया (हेतुमत्ताज्ञानीया) विषयतावच्छेदकतात्वावच्छिन्ना, तन्निरूपक (तादृशप्रतियोगितानिरूपक) पर्याप्त्यनुयोगितावच्छेदकत्वस्य (धूमत्वतद्धूमगत) समुदायत्वे सत्त्वात्। नापि तद्धूमातिरिक्तधूमावृत्त्यवच्छेदकतात्वावच्छिन्ना, अवच्छेदकभेदेनावच्छेदकताभेदस्याप्रामाणिकत्वात्। नापि तद्धूमधूमत्वान्यतरवृत्तित्वविशिष्टावच्छेदकतात्वावच्छिन्ना। किञ्च तन्निष्ठनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वस्य तादृशपर्याप्तीयप्रतियोगिताविशेषणतया विवक्षणीयत्वात्। अतएव (पर्याप्तिप्रतियोगितायां तादृशभिन्नावच्छेदकत्वानिरूपितत्वस्य विशेषणादेव)। जातिमद्धूमहेतुकस्थले धूमत्वगतैकत्वं विशिष्टान्तरविषयतावच्छेदकताकपर्याप्त्यनुयोगितावच्छेदकमादाय वैयर्थ्यवारणाय तादृशरूपावच्छिन्ना-

नुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकतायां निरवच्छिन्नत्वोपादानमपि अपास्तम् । ( जातिमद्धूमज्ञाने धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक-विषयताशून्यत्वविरहात् । तथा च धूमत्वगतैकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रति-योग्यवच्छेदकताकविषयिताशून्यप्रकृतहेतुविषयकज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य प्रकृतहेतुतावच्छेदकगतरूपे सत्त्वेन तद-नुयोगितानवच्छेदकत्वस्यासत्त्वात् । तदनुयोगितावच्छेदकत्वघटितवैयर्थ्यस्य प्रकृतहेताव-संभवेन तदर्थं निरवच्छिन्नावच्छेदकताघटितस्य वैयर्थ्यस्यानुपादेयत्वात् । तादृश-विषयिताशून्यहेतुविषयकज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्वस्य हेतुतानिरूपितनिरवच्छिन्नावच्छेदकताकपर्याप्त्यनुयोगितावच्छेदके सत्त्वाच्च । विशिष्टान्तरधूमत्वावच्छिन्नतादृशविषयिताशून्यजातिमद्धेतुविषयकज्ञान-विषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य हेतुतानिरू-पितनिरवच्छिन्नावच्छेदकताकपर्याप्त्यनुयोगितावच्छेदके सत्त्वाच्च । तथा च तस्य हेतोर्न वैयर्थ्यम् । एवं नीलधूमहेतुके विशिष्टान्तरविषयतावच्छेदकधूमधूमत्व-समुदायत्वस्य स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिनिरवच्छिन्नावच्छेदकत्वप्रसिद्धे-र्धूमत्वगतैकत्वस्य साध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्वविरहेण धारणासंभवेऽपि नीलधूमत्वे वैयर्थ्यासंभववारणाय साध्य-व्याप्यतावच्छेदकतायां निरवच्छिन्नत्वोपादानमपि न कार्यमिति चेदुच्यते । ( पर्वतो बह्निमान् नीलधूमवत इत्यत्र नीलधूमत्वे विशिष्टान्तरविषयतावच्छेदकधूम-धूमत्वगतसमुदायत्वस्य स्वा( हेतुतावच्छेदकगतरूपा )वच्छिन्नानुयोगिताक-पर्याप्तिप्रतियोगिनिरवच्छिन्नावच्छेदकविषयिताशून्यज्ञानीयविषयतानिरूपितनिरवच्छिन्ना-वच्छेदकताकपर्याप्त्यनुयोगितानवच्छेदकत्वेन हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिरूपा-वच्छिन्नानुयोगिताकपर्याप्तिकनिरवच्छिन्नावच्छेदकताकविषयिताशून्यज्ञानीयविषयतानिरू-पितनिरवच्छिन्नावच्छेदकताकविषयतानिरूपितनिरवच्छिन्नावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वे च ग्रहीतुमशक्यत्वेन केवलधूमत्वगतैकत्वस्य च प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेद-

कत्वेन नीलत्वस्य साध्यव्याप्यतानवच्छेदकत्वेन तादात्म्येन लाक्षणिकनीलिबोधकतया नीलगुणनिष्ठावच्छेदकतायाः सावच्छिन्नत्वेन निरवच्छिन्नत्वाभावेन च नीलत्वगतैकत्वस्य धर्तुमशक्यतया च प्रकृते विशिष्टान्तरतावच्छेदकाप्रसिद्ध्या व्यर्थत्वासंभववारणाय विशिष्टान्तरघटकावच्छेदकतायां निरवच्छिन्नत्वं न निवेश्यम्। तथा च नोक्तदोषः । नीलधूमत्वहेतौ नीलधूमत्वगतसमुदायत्वानुयोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य धूमधूमत्वगतसमुदायत्वे सत्त्वेन तस्य विशिष्टान्तरतावच्छेदकत्वोपपत्तौ तद्घटितत्वेन व्यर्थविशेषणघटितत्वोपपत्तेः । एवञ्च प्रकृतहेतौ न वैयर्थ्यमिति शङ्का सुस्थिरेति चेदुच्यते । स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसंबंधेन धूमत्वविशिष्टद्रव्यत्वहेतुके, स्वाश्रयप्रतियोगिकत्वसंबन्धेन धूमत्वविशिष्टप्रागभावहेतुकस्थले च विशिष्टान्तरतावच्छेदकधूमत्वस्य तेन संबन्धेन हेतुतावच्छेदकसमानाधिकरणतया तद्( धूमत्व )गतैकत्वमादाय वैयर्थ्यवारणाय हेतुविशेषणवैयर्थ्यस्थले व्यर्थविशेषणघटितत्वशरीरे हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिस्थाने हेतुतावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं विशेषणं देयम्। एवञ्च हेतुतावच्छेदकविशेषणस्य नैल्यादेः (नीलत्वादेः) नीलधूमवतो हेतुतायां वैयर्थ्यसंपादनायावच्छेदकतावच्छेद्यघटितत्वं व्यर्थविशेषणघटितत्वं वाच्यम् । तत्र धूमत्वविशिष्टद्रव्य(त्व)वतो हेतुतास्थले व्यर्थविशेषणत्वस्य धूमत्वे वारणाय विशिष्टान्तरविषयतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकतासामानाधिकरण्यं विशेषणतया विवक्षणीयम् । तथा सति प्रकृते वैयर्थ्यसंभवः। सत्ताद्यवच्छिन्नप्रतियोगित्वादीनामुक्तविशेष्यत्वानवच्छेदकत्वात्। व्याप्यतावच्छेदकतावच्छेदकत्वेऽपि तादृशविशेष्यतावच्छेदकतासामानाधिकरण्यं विशेषणम् । अन्यथा नीलधूमविशिष्टहेतुकस्थले धूमत्वगतैकत्वस्य धारणं न स्यादिति न वाच्यम् । विशिष्टसत्तावतो हेतुत्वेऽपि वैयर्थ्यं स्यात्। वैशिष्ट्यनिष्ठावच्छेदकत्वे प्रकृतसाध्यनिरूपिते व्याप्यतावच्छेदकनिरूपितउक्तसामानाधिकरण्यविरहात् । किन्तु प्रकृतसाध्यव्याप्यतावच्छेदकतायाम् उक्तविशेष्यताविशिष्टत्वं वाच्यम्। वै० स्वावच्छेदकधर्मावच्छिन्नत्व स्वनिरूपितप्रकारतासमानाधिकरणावच्छेदकत्वानिरूपितत्वोभयसंबन्धेनेत्यलम्।

हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक विषयिताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतहेतुतावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं व्यर्थविशेषणघटितत्वं हेतुविशेषणवैयर्थ्यस्थले वक्तव्यम्। तेन स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसंबन्धेन धूमत्वविशिष्टद्रव्यादित्यत्र, एवं स्वाश्रयप्रतियोगिकत्वसंबन्धेन धूमत्वविशिष्टप्रागभावादित्यत्र च धूमत्वरूपविशिष्टान्तरतावच्छेदकमादाय न हेतोः व्यर्थविशेषणघटितत्वं भवति। धूमत्वगतैकत्वे हेतुतावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्यासत्त्वेन धूमत्वविशिष्टान्तरावच्छेदकत्वाभावात्। हेतुत्वावच्छेद्यविशेष्यतेत्यादेः हेतुतावच्छेदकसमानाधिकरणेत्यादिस्थानकस्यानिवेशे तत्र तत्र स्थले हेतौ व्यर्थविशेषणघटितत्वापत्तिः। धूमत्वस्य तेन तेन संबन्धेन हेतुतावच्छेदकसमानाधिकरणत्वेन हेतुतावच्छेदकसमानाधिकरणधर्मवृत्तिरूपावच्छिन्नानुयोगिताकपर्याप्त्यनुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताक विषयिताशून्यज्ञानीयविषयतावच्छेदकत्वस्य तत्रासत्त्वेन तादृशविषयिताशून्यज्ञानविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य तत्र सत्त्वमिति तदवच्छिन्नानुयोगिकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यहेत्वविषयकघटादिविषयकप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य प्रकृतहेतुतावच्छेदकगतरूपे सत्त्वात्।

एवं हेतुतावच्छेदकविशेषणस्य नीलत्वादेः नीलधूमवतो हेतुतायां पर्वतो वह्निमान् तादात्म्येन नीलधूमवत इत्यत्र हेतोः वैयर्थ्यसंपादनाय हेतुता-

वच्छेदकतावच्छेद्यत्वघटितं व्यर्थविशेषणघटितत्वं वाच्यम् । तथा च हेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतहेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वं हेतुतावच्छेदकविशेषणव्यर्थविशेषणघटितत्वम् । एवञ्च पर्वतो वह्निमान् नीलधूमवत इत्यत्र हेतोः विशिष्टान्तरतावच्छेदकघटितत्वेन व्यर्थविशेषणघटितत्वमुपपद्यते । हेतुतावच्छेदकनीलधूमगतसमुदायत्वे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यधूम इति प्रतीतिविषयतावच्छेदकधूमत्वावच्छिन्नविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं हेतुतावच्छेदक(नीलधूम)तावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्य(धूम इति)प्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं (धूमत्वगतैकत्वम्) तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्य(घट इति)प्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य सत्त्वात् भवति धूमत्वघटितत्वेन नीलधूमवतो व्यर्थविशेषणघटितत्वम् । तथा सति प्रकृतेऽपि (यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावहेतावपि) वैयर्थ्यसंभवः । सत्त्वत्वाद्यवच्छिन्नप्रतियोगित्वादीनामुक्तविशेष्यतानवच्छेदकत्वात् । तथाहि हेतुतावच्छेदकगतरूपे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतसाध्यव्याप्यतावच्छेदकतात्वा-

वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं प्रकृतहेतुत्वावच्छेद्यविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यज्ञानीयविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं (यद्धर्मसंयोगत्वसमानाधिकरणसत्त्वादिधर्मावच्छिन्नप्रतियोगिताकाभावत्वगतरूपम्) तद्रूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यहेतुभिन्नघटादिविषयकप्रतीतिविषयतावच्छेदकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य हेतुतावच्छेदकगतरूपे सत्त्वात्। सत्त्वत्वाद्यवच्छिन्नप्रतियोगित्वादीनां हेतुत्वावच्छेद्यतादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववृत्ति(अभाव इति ज्ञानीय)विशेष्यतानवच्छेदकत्वात् यद्धर्मसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावविषयकज्ञानं तादृशविषयताशून्यं भवति।

प्रकृतसाध्यव्याप्यतावच्छेदकत्वेऽपि तादृशविशेष्यतावच्छेदकतासामानाधिकरण्यं विशेषणमुपादेयम्। अन्यथा नीलधूमविशिष्टहेतुकस्थले धूमत्वगतैकत्वस्य धारणं न स्यादिति न वाच्यम्। (पर्वतो वह्निमान् नीलधूमविशिष्टवतः धूमवैशिष्ट्य तद्वत्ता च तादात्म्येन बोध्यम्) इत्यत्र हेतुतावच्छेदकगतसमुदायत्वे स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयिताशून्यज्ञानीयधूमविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं तादृशविशेष्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपं धूमत्वगतैकत्वं तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकविषयताशून्यहेतुभिन्नघटादिविषयकप्रतीतिविषयतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्वस्य स्वावच्छिन्नाधिकरणतावृत्तित्वसंबन्धेन धूमत्वविशिष्टद्रव्यवद्धेतुकस्थले हेतुतावच्छेदकगतसमुदायत्वे सत्त्वेन तत्र हेतौ वैयर्थ्यवारणाय विशिष्टान्तरतावच्छेदकतावच्छेदकतायां हेतुतावच्छेदकतावच्छेदकविशेष्यतावच्छेदकतासामानाधिकरण्यं विवक्षणीयं तथा च नोक्तदोषः। तादृशविशेष्यतावच्छेदकद्रव्यत्वनिष्ठा-

वच्छेदकतासामानाधिकरण्यस्य धूमत्वनिष्ठसंबन्धतावच्छेदकतायामसत्त्वेन तस्य विशिष्टान्तरत्वेनाग्रहणात् । तथा सति नीलधूमविशिष्टवद्धेतुकस्थलेऽपि धूमत्वस्य ग्रहीतुमशक्यत्वेन धूमत्वगतैकत्वं ग्रहीतुमशक्यमिति प्रकृतहेतोः (नीलधूमविशिष्टवतः) व्यर्थविशेषणत्वानुपपत्तिः । अतः प्रकृतसाध्यव्याप्यतावच्छेदकतावच्छेदकतावच्छेदकं हेतुतावच्छेदकत्वावच्छेद्यविशेष्यतावच्छेदकतासामानाधिकरण्यं विवक्षणीम् तथा सति नोक्तदोषः । प्रकृतसाध्यव्याप्यतावच्छेदकतावच्छेदकतावच्छेदके धूमत्वे (पर्वतो वह्निमान् नीलधूमविशिष्टवत इत्यत्र) साध्यव्याप्यो नीलधूमविशिष्टवान् तन्निष्ठव्याप्यतानिरूपितावच्छेदकता नीलधूमविशिष्ट(धूम)निष्ठा तन्निरूपितावच्छेदकता नीलधूमनिष्ठा तदवच्छेदके धूमत्वे तत्र विशेष्यता नीलधूमविशिष्ट(धूम)वन्निष्ठा तदवच्छेदकता तादृशविशिष्टधूमनिष्ठा तदवच्छेदकता नीलधूमनिष्ठा तदवच्छेद्यत्वावच्छिन्नविशेष्यतासामानाधिकरण्यस्य तादृशधूमत्वे सत्त्वेन भवति धूमत्वं विशिष्टान्तरावच्छेदकं तद्घटितत्वेन नीलधूमविशिष्टधूमवतो भवति व्यर्थविशेषणघटितत्वम् । स्वावच्छिन्नाधिकरणतावद्वृत्तित्वसंबन्धेन द्रव्यत्ववतो हेतुत्वे पर्वतो बह्निमान् तादृशसंबन्धेन द्रव्यत्ववत इत्यत्र पर्वतो बह्निमान् स्वावच्छिन्नप्रतियोगिकप्रागभाववत इत्यत्र च धूमत्वस्य न विशिष्टान्तरत्वम् । तादृशहेतुतावच्छेद्यविशेष्यतासामानाधिकरण्यस्य संबन्धतावच्छेदके धूमत्वेऽसत्त्वात् । न वा व्याप्यतावच्छेदकतावच्छेदकतावच्छेद्यविशेष्यतासामानाधिकरण्यस्य च तादृशसंबन्धतावच्छेदके धूमत्वेऽसत्त्वाच्चेति बोध्यम् इति तु न वाच्यम् । विशिष्टसत्त्वहेतोः वैयर्थ्यं स्यात् । वैशिष्ट्यनिष्ठावच्छेदकत्वे प्रकृतसाध्यव्याप्यतानिरूपितावच्छेदकतानिरूपिते उक्तसामानाधिकरण्यविरहात् (हेतुतातदवच्छेदकताऽन्यतरावच्छेद्यविशेष्यतातदवच्छेदकतासामानाधिकरण्यविरहात् । भवति तद्वैशिष्ट्यं विशिष्टान्तरं तद्घटितत्वेन इदं द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्र हेतोः व्यर्थविशेषणत्वापत्तेः । किन्तु प्रकृतसाध्यव्याप्यतावच्छेदकतायां हेतुतातदवच्छेदकत्वान्यतरावच्छिन्नविशेष्यतावैशिष्टयं वाच्यम् । वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपितप्रकारतासमानाधिकरणावच्छेदकत्वा-

निरूपितत्वोभयसंबन्धेन । तथा च नोक्तदोषः । इदं द्रव्यं तादात्म्येन गुणकर्मान्यत्वविशिष्टसत्तावत इत्यत्र प्रकृतसाध्यनिरूपितव्याप्यता तादृशविशिष्टसत्तावति वर्तते तन्निरूपितावच्छेदकता विशिष्टसत्तानिष्ठा तस्यामवच्छेदकतायां हेतुत्वतदवच्छेदकताऽन्यतरावच्छेद्यविशिष्टत्वं नास्ति । स्वावच्छेदकसत्तावच्छिन्नत्वं नास्ति । न वा हेतुनावच्छेदकतात्व.वच्छेद्यविशेष्यतावैशिष्ट्यं वर्तते । स्व (हेतुता)-निरूपितावच्छेदकताविशिष्टसत्तानिष्ठा तदवच्छेदकता सत्तात्वनिष्ठा तस्यां स्व-निरूपितप्रकारतासामानाधिकरण्यं वर्तते तन्निरूपितत्वस्मैव साध्यव्याप्यतावच्छेदकतायां वर्तते तदनिरूपितत्वं नास्ति ।

"जातिपदोपादानात् गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे तदवच्छिन्नाभावाप्रसिद्ध्याऽपि न व्यभिचारः" इति मूलघटक "न व्यभिचार" इत्यस्य न साध्याप्रसिद्धिरित्यर्थः । लक्षणया गौणवृत्या व्यभिचारपदस्य साध्याप्रसिद्ध्यर्थकत्वं विवृतिकारस्य न युक्तम् । तत्त्वालोककारेण स्वव्याख्यायां व्यभिचारस्य मुख्यार्थकस्य प्रदर्शितत्वात् ।

केचित्तु . यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाव एव हेतुः । हेतुता च विलक्षणविषयितासंबन्धेन । स्व(हेतु)विशिष्टज्ञानवृत्तिकूटत्वावच्छिन्नवत्वसंबन्धेन । कूटत्वस्य ज्ञानवृत्तिता च स्वा(कूटत्वा)भाववद्वृत्तित्वसंबन्धेन । अवृत्तिघटकवृत्तित्वञ्च । स्व(ज्ञान)विषयतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्वसंबन्धेन । तथा च न व्यभिचारः, न वा जात्युपादानासङ्गतिः । नापि वैयर्थ्यासङ्गतिश्चेति वदन्ति ।

हेतुविषयकज्ञाने कूटत्वस्य वृत्तिता च हेतुविषयकज्ञानाभाववदवृत्तित्वसंबन्धेन । तथा च हेतुविषयकज्ञानवृत्ति यत्कूटत्वं तदवच्छिन्नं यावत् तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावो हेतुः । हेतोः साध्याभाववदवृत्तित्वेन न व्यभिचारः । जात्यनुपादाने स्वावच्छिन्नप्रतियोगिताकाभाववत्वरूपव्यधिकरणसंबन्धेन

कम्बुग्रीवादिमत्वरूपसाध्याभाववति कम्बुग्रीवादिमत्वसमानाधिकरणोभयावृत्तितत्तद्-घटत्वावच्छिन्नप्रतियोगिताकयावदभावस्य वृत्तित्वेन व्यभिचारस्य वारणाय जातिपदं सार्थकम् । हेतौ तादृशोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावे यज्जातिसमानाधिकरणसत्त्वादिधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रविष्टत्वेन वैयर्थ्यसंगतिः । उभयावृत्तिपदानुपादाने स्वरूपासिद्धिसंगतिः ।

परे तु विलक्षणप्रतियोगितासंबन्धेन स्वविशिष्टाभाववृत्तिकूटत्वावच्छिन्नवत्व-संबन्धेन तादृशाभावस्य (यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नयत्संबन्धा-वच्छिन्नप्रतियोगिताकाभावस्य) हेतुत्वम् । कूटत्वस्य तादृशाभाववृत्तित्वञ्च स्वा-भाववदवृत्तित्वसंबन्धेन । अवृत्तित्वघटकवृत्तित्वञ्च स्वप्रतियोगितावच्छेदकधर्मवत्व-संबन्धेनेति न व्यभिचारो न वा वैयर्थ्यासङ्गतिरिति वदन्ति । तन्नाति-समञ्जसम् जातिपदोपादानवैयर्थ्यात् कम्बुग्रीवादिमत्वघटिताभावविशिष्टाभावा प्रसिद्धेः । घटत्वघटिताभावस्यैव तदवच्छेदकत्वौचित्यादिति दिक् ।

**व्यभिचारवारकस्येवासिद्धिवारकस्यापि विशेषणस्य सार्थकतायाः पक्षधरमिश्रादिसंमतत्वादिति जा० टी० ।**

अत्र साध्यगमकत्वरूपं हेतुत्वं हि किञ्चिद्धर्मिण्येव (पक्षे एव) साध्यगम-कत्वं निर्धर्मिकानुमित्यभावात् । तथा च गमकतायां साध्यव्याप्तेरिव पक्ष-धर्मत्वस्यापि (पक्षवृत्तित्वस्यापि) अनुमितिप्रयोजकतया वैयर्थ्यशरीरे प्रकृत-साध्यव्याप्यतावच्छेदकत्वस्येव प्रकृतपक्षधर्मतावच्छेदकत्वस्यापि विशेषणत्वं वाच्य-मिति स्वरूपासिद्धिवारकस्य न वैयर्थ्यमिति मिश्राणामाशयः । अन्येषां तु गमकतायाम् (अनुमितिगमकतायाम्) व्याप्तिमात्रमुपयुक्तं न पक्षधर्मत्वम् । ह्रदे धूमस्य वह्निरूपसाध्यगमकत्वविरहेऽपि अनुमितिगमकता न हीयते । पर्वते वह्निरूपसाध्यगमकत्वाक्षतेरिति पक्षधर्मतावच्छेदकत्वं न वैयर्थ्यघटकमिति व्यभि-चारवारकस्यैव वैयर्थ्यंवदतामाशयो बोध्यः ।

**अतएव शब्दोऽनित्यः सामान्यवत्वे सति गुणान्तरासमानाधिकरण-बहिरिन्द्रियग्राह्यत्वादिति हेतावसिद्धवारकशब्देतरार्थकस्य विशेषगुणान्तर-पदस्य शब्दमण्यालोके तैः सार्थकत्वं समर्थितमिति।**

एकमात्रगुणे तद्घटीयरूपे व्यभिचारवारणाय विशेषगुणान्तरासमानाधि-करणेति स्वात्मकविशेषगुणसमानाधिकरणे शब्देऽसिद्धि (स्वरूपासिद्धि) वारणा-यान्तरेति । आकाशमनःसंयोगे व्यभिचारवारणायैकमात्रवृत्तीति । (इदं मूले न दृश्यते) । एकमात्रवृत्तित्वञ्चोभयावृत्तित्वम् । वृत्तिता च तत्र समवायावच्छिन्ना-न्तर्भवतीति गगनमनस्संयोगध्वंसे व्यभिचारवारणाय गुणेति । मनः कर्मणि व्यभिचारवारणाय वा गुणेति । न च मनोवेगे व्यभिचार इति वाच्यम् । तस्य मीमांसकमते गतिसन्ताने एवान्तर्भावादिति ग्रन्थानुरोधिनः । एकमात्र-वृत्तीत्यस्य मूले पाठो नास्ति। संयोगध्वंसे सामान्यवत्वेन वारणं संभवति तत्र गुणोपादानफलकथनं न युक्तं प्रतिभाति विशेषगुणान्तरासमानाधि-करणोक्तिस्वारस्यादेव विशेषगुणसामानाधिकरण्यस्यापि हेतुघटकत्वलाभाद् गतौ (क्रियायाम्) न व्यभिचारसंभवः । उक्तध्वंसे (गगनमनःसंयोगध्वंसे) व्यभि-चारवारणायैव गुणोपादानम् । दृष्टान्तता च न गगनपरिमाणस्यैवेति समय-परिमाणव[illegible]ति मूलग्रन्थाननुरोधिनः ।

ननु शब्देतरविशेषगुणासमानाधिकरणत्व, विशेषगुणासमानाधिकरणत्वरूपा-भावयोः भेदेन न वैयर्थ्यसंभवः । तयोः परस्पराघटितत्वात्, इति चेन्न। विलक्षणप्रतियोगितासंबन्धेन स्वविशिष्टाभाववत्वसंबन्धेन शब्देतरविशेषगुणसामा-नाधिकरण्यस्यैव विशेषणत्वे तात्पर्यात् । उपस्थितौ लाघवादिति भावः । शब्दो नित्यः सामान्यवत्वे सति विलक्षणप्रतियोगितासंबन्धेन स्व(शब्देतरविशेषगुण) विशिष्टाभाववत्वसंबन्धेन शब्देतरविशेषगुणसमानाधिकरणत्वे सति बहिरिन्द्रिय-ग्राह्यत्वादित्येव हेतुः । एवञ्च शब्देतरविशेषगुणस्य विशेषगुणघटितत्वेन वैयर्थ्य-संभवः ।

क्वचित्पुस्तके शब्दोऽनित्यः सामान्यवत्वे सति विशेषगुणान्तरासमानाधिकरणत्वे सति बहिरिन्द्रियग्राह्यत्वादित्यनुमानमुपलभ्यते तदप्रामाणिकम् । निःप्रयोजनगुणान्तरासमानाधिकरणत्वविशेषणशून्यत्वस्यैव तादृशानुमानहेतोर्मूलग्रन्थेऽदर्शनादिति । मूलग्रन्थे शब्दो नित्यः सामान्यवत्वे सति शब्देतरविशेषगुणान्तरासमानाधिकरणत्वे सति बहिरिन्द्रियग्राह्यत्वादित्यस्यैव दर्शनात् । वर्णात्मकशब्दस्य नित्यत्वं मीमांसकाः मन्यन्ते, नैयायिकाश्चानित्यत्वमिति शब्दनित्यत्वमधिकृत्य विचारस्य युक्तत्वमिति हृदयम् ।

असिद्धवारकविशेषणशून्यं कल्पान्तरमाह ।

**यो यदीययावद्विशेषाभाववानित्यस्य यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभावानाम् प्रत्येकावच्छिन्नाभाववान् स तद्धर्मावच्छिन्नाभाववान् इत्यर्थ इति जा० टी० ।**

उभयावृत्तित्वस्य धर्मविशेषणत्वं, यत्संबन्धावच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वं परित्यज्य लाघवात् कल्पान्तरमाह यद्वेति विवृतिः ।

**तथा च संयगोत्वावच्छिन्नप्रतियोगित्वव्यक्तीनां प्रत्येकावच्छिन्नाभावकूटवत्वस्य पक्षे सत्त्वान्नासिद्धिः, न वा व्यर्थविशेषणत्वमिति ध्येयम् इति जा० टी० ।**

अथ कालिक, स्ववृत्तिवाच्यत्ववत्वादिसंबन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकप्रतियोगित्वमादाय स्वरूपासिद्धिवारणाय (कालिकादिसंबन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकरूपनिष्ठप्रतियोगितावान्नास्तीत्यभावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्धिवारणाय समवायसंबन्धावच्छिन्नसंयोगत्वसत्तात्वान्यतरावच्छेदकताकसंयोगत्वसत्तात्वान्यतरावच्छिन्नप्रतियोगित्व, संयोगद्रव्यत्वोभयाभावप्रतियोगित्वादिकमादाय स्वरूपासिद्धिवारणाय (समवायसंबन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकताकसंयोगद्रव्यत्वोभयीयद्रव्यत्वनिष्ठप्रतियोगितावान् नास्तीत्यभावस्य वृक्षरूपपक्षेऽसत्त्वेन स्वरूपासिद्धि-

धारणाय) यद्धर्मातिरिक्तधर्मानवच्छिन्नत्वस्य यद्धर्मावच्छिन्नयावत्प्रतियोगित्वावच्छिन्नाभावस्य संयोगसामान्याभावप्रतियोगित्वावच्छिन्नाभावस्य वृक्षरूपपक्षेऽसत्वेन स्वरूपासिद्धिवारणाय प्रत्येकावच्छिन्नत्वस्य च निवेशनीयतया असिद्धिवारकानामत्रापि (यद्वेति कल्पेऽपि) सत्त्वमेवेति चेन्न। संयोगसामान्याभावप्रतियोगितावान् नास्तीत्यभावस्य संयोगसामान्याभावस्य द्रव्ये साधनकालेऽसत्त्वात् स्वरूपासिद्धिवारणाय प्रत्येकावच्छिन्नत्वं निवेशितम्। तथा च समवायसंबन्धावच्छिन्नत्वं यद्धर्मनिष्ठावच्छेदकत्वे असिद्धिवारकं विशेषणम्। संयोगद्रव्यत्वोभयाभावप्रतियोगित्व (द्रव्यत्वनिष्ठप्रतियोगित्व) मादाय स्वरूपासिद्धिवारणाय प्रत्येकावच्छिन्नत्वमभावीयप्रतियोगितायां निवेशितमित्यसिद्धिवारकविशेषणानामत्रापि (यद्वेति कल्पेऽपि) कथं लाघवमिति चेन्न। यद्रूपविशिष्टप्रतियोगिताकूटवत्वं यत्र तत्र तद्रूपवृत्तिप्रतियोगिताकाभाववत्वमिति सामान्यव्याप्त्यभ्युपगमात्। वै० स्वावच्छिन्नानुयोगिताकपर्याप्तीया यत्किञ्चिन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगितातद्वत्समवायसंबन्धावच्छिन्नावच्छेदकताकत्वसंबन्धेन। कूटवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्वसंबन्धेन। रूपवृत्तित्वञ्च स्वनिरूपितसमवायसंबन्धावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन। एवं च नासिद्धिवारकस्य व्यर्थविशेषणस्यावकाश इति। प्रकृते संयोगत्वगतरूपविशिष्टा तत्तत्संयोगनिष्ठा प्रतियोगिता। स्वावच्छिन्नानुयोगिताकपर्याप्तीया या यत्किञ्चित् निष्ठ(संयोगत्वनिष्ठ) निरूपितत्वसंबन्धावच्छिन्नावच्छेदकताभिन्ना, अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना चावच्छेदकता तदनिरूपिता प्रतियोगिता तद्वती समवायसंबन्धावच्छिन्नसंयोगत्वनिष्ठावच्छेदकता तत्कत्वसंबन्धेन। तादृशप्रतियोगितानां यत्कूटत्वं यत्र (पक्षे) तादृशतत्तत्संयोगनिष्ठप्रतियोगितानां कूटवत्ता च स्वावच्छिन्नप्रतियोगिताकाभाववत्वसंबन्धेन। तादृशकूटत्वावच्छिन्ना तत्तत्संयोगनिष्ठा प्रतियोगिता तत्प्रतियोगितानिरूपकाभाववत्वं पक्षे वृक्षे वर्तते। तत्र वृक्षे तद्रूप(संयोगत्वगतरूप) वृत्तिप्रतियोगिताका(संयोगसामान्या)भाववत्वं वर्तते। प्रतियोगिताया रूपवृत्तित्वं

च स्वनिरूपितसमवायसंबन्धावच्छिन्ना (संयोगत्वनिष्ठा)वच्छेदकतात्वावच्छिन्न-प्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । एवं च तत्तत्संयोगाभावानां यावतां वृक्षे सत्त्वेन न स्वरूपासिद्धिः। अखण्डस्य तत्तत्संयोगीयप्रतियोगित्वानां कूटत्वस्य हेतुतावच्छेदकत्वेन न व्यर्थविशेषणत्वस्यावकाशः।

केचितु उभयावृत्तित्वस्य धर्मविशेषणस्य, संबन्धावच्छिन्नत्वस्य प्रतियोगित्वविशेषणस्य चाप्रवेशेन लघुभूतं यो यदीयेत्यस्य व्याख्यान्तरमाह यद्वेति। तत्र नासिद्धिः । न वा व्यर्थविशेषणत्वम् । असिद्धवारकतत्तद्विशेषणोपादानेन नासिद्धिः। असिद्धिवारकत्वादेव तत्तद्विशेषणानां न व्यर्थतेत्यर्थ इति प्राहुः।

परे तु यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकत्वमेव हेतुः । व्यापकता च स्वनिष्ठाभावप्रतियोगितावच्छेदकत्वसंबन्धेन। तथा च व्यापकतारूपाभाववैलक्षण्याद्-वैयर्थ्यासंभव इति वदन्ति । यः यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकतावान् स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानिति सामान्यव्याप्तिः फलिता । यत्पदार्थपक्षस्य यद्धर्मावच्छिन्नप्रतियोगितात्वव्यापकत्वं च स्व(यत्पदार्थपक्ष)निष्ठाभावप्रति-योगितावच्छेदकत्वसंबन्धेन । यः यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां प्रत्येका (प्रत्येकप्रतियोगित्वा)वच्छिन्नाभाववान् स तद्धर्मावच्छिन्नप्रतियोगिताकाभाववानिति सामान्यव्याप्तिः । तत्तत्प्रतियोगितावान् नास्तीत्यभावप्रतियोगितावच्छेदकता तत्तत्प्रतियोगितानिष्ठा । तथा च स्व (पक्षरूपवृक्ष) निष्ठाभावप्रतियोगिता-वच्छेदकत्वसंबन्धेन यत्पदार्थः तत्तत्प्रतियोगितायां वर्तते तत्र स्वरूपसंबन्धेन तत्तत्प्रतियोगितात्वमपि वर्तते । तथा च तादृगप्रतियोगितात्वसमानाधिकरणा-भावाप्रतियोगित्वरूपव्यापकत्वं यत्पदार्थे पक्षे इति ।

अन्ये तु उभयावृत्तिधर्मावच्छिन्नत्वस्य उभयावृत्तिधर्मसत्तात्वान्यतरा-वच्छिन्नप्रतियोगिताकाभावं, स्ववृत्तिवाच्यत्ववत्त्वसंबन्धावच्छिन्नतत्तद्व्यक्तित्वनिष्ठा-वच्छेदकताकप्रतियोगिताकाभावं चादाय स्वरूपासिद्धिवारणाय स्वरूपसंबन्धा-

वच्छिन्नतत्तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वार्थकमिव यद्धर्मावच्छिन्नत्वस्यापि स्वरूपासिद्धिवारणाय (साध्याप्रसिद्धिवारणाय) समवायसंबन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वार्थकत्वमस्तु उभयावृत्तित्वस्याप्रवेशेन तदनुपादाननिबन्धनासिद्धिर्न, तस्य (उभयावृत्तित्वस्य) अप्रवेशादेव न व्यर्थविशेषणतेत्यालपन्ति। उभयावृत्तिधर्मावच्छिन्नस्य तत्तत्संयोगव्यक्तित्वावच्छिन्नस्य, उभयावृत्तिधर्मतत्तत् संयोगव्यक्तित्व, सत्तात्वान्यतरावच्छिन्नप्रतियोगिताकाभावस्य (सत्तात्वावच्छिन्नप्रतियोगिता तत्तत्संयोगव्यक्तित्वावच्छिन्नतत्तत्संयोगनिष्ठातत्प्रतियोगिताकाभावस्य) सत्तात्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्धिवारणाय। एवं स्व( तत्तत्संयोगगततद्व्यक्तित्वरूपोभयावृत्तित्वधर्म )वृत्तिवाच्यत्ववत्वसंबन्धावच्छिन्नतत्तद्व्यक्तित्वनिष्ठावच्छेदकताकप्रतियोगिताक(तत्तद्वृत्तित्वेन वृक्षवृत्तिरूपनिष्ठप्रतियोगिताका)भावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्धिवारणाय, स्वरूपसंबन्धावच्छिन्नतत्तद्व्यक्तित्वनिष्ठावच्छेदकताभिन्ना अवच्छेदकतात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितत्वं यथा प्रतियोगितायां निवेश्यते तथैव यद्धर्मावच्छिन्नस्यापि समवायसंबन्धावच्छिन्नयद्धर्मनिष्ठा(संयोगत्वनिष्ठा)वच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितत्वार्थकत्वमस्तु। (तदनिरूपितत्वं प्रतियोगितायामस्तु) तथा चोभयावृत्तित्वस्याप्रवेशेन तदनुपादान उभयावृत्तित्वानुपादान) निबन्धनासिद्धिर्न। तस्य (उभयावृत्तित्वस्य) अप्रवेशेन न व्यर्थविशेषणतेत्यालपन्ति। स्ववृत्तिवाच्यत्ववत्वसंबन्धावच्छिन्नतत्तत्संयोगत्वनिष्ठावच्छेदकताकरूपनिष्ठप्रतियोगिताकाभावस्य वृक्षेऽसत्त्वेन वृक्षे स्वरूपासिद्धिवारणाय समवायसंबन्धावच्छिन्नेत्यादि बोध्यम्। अवच्छिन्नत्वस्य (स्वातिरिक्तानवच्छिन्नत्वरूपस्य) अतिरिक्तानवच्छिन्नत्वरूपस्य भेदघटितत्वेनावच्छिन्नत्वस्य सापेक्षतया दुर्निरूप्यत्वेन विलक्षणस्यैव (अवच्छिन्नत्वस्य) वाच्यतया समवायसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगितानिष्ठम् इतरानवच्छिन्नमिव विलक्षणमेव प्रतियोगितानिष्ठमवच्छिन्नत्वं स्वीकार्यमित्यसिद्धिवारकोभयावृत्तित्वस्य धर्मविशेषणस्याप्रवेशेनोभयावृत्तित्वस्यानुपादानप्रयुक्तासिद्धिर्न। यतो नासिद्धिरतो न व्यर्थविशेषणत्वमित्यर्थः।

न च प्रत्येकपदस्यासिद्धिवारकस्य प्रवेश इति वाच्यम्। (न चात्र यद्वाकल्पे प्रत्येकपदं स्वरूपासिद्धिवारकम्। अन्यथा संयोगत्वावच्छिन्नप्रतियोगितावान् नास्तीत्यभावस्यापि यावदन्तर्गततया तस्य पक्षेऽसत्त्वात् स्वरूपासिद्धिः स्यात्। प्रत्येकपदोपादाने तु यद्धर्मावच्छिन्नप्रतियोगित्ववृत्त्युभयावृत्ति धर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकयावदभाववानित्यर्थलाभान्न दोषः, एवं चोभयावृत्तिपदमेव स्वरूपासिद्धिवारकम्। एवं यद्धर्मावच्छिन्नप्रतियोगिता इत्यत्र यद्धर्मनिष्ठावच्छेदकत्वं—समवायसंबन्धावच्छिन्नं वक्तव्यम्, अन्यथा कालिकेन संयोगत्ववतो वृक्षीयरूपादेरभावप्रतियोगित्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वात् स्वरूपासिद्धिः स्यात्। तथा चात्र यद्वेति कल्पेऽपि स्वरूपासिद्धिवारकविशेषणस्य सार्थक्यमभ्युपगन्तव्यमेवेति वाच्यम्। स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसंबन्धेन तादृशप्रतियोगिताकूट एव हेतुरित्यस्यैव वक्तव्यत्वात्। यावतां यद्धर्मावच्छिन्नप्रतियोगित्वानां कूटत्वस्यैव स्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसंबन्धेन हेतुत्वात्। तत्कूटत्वस्य तेन संबन्धेन वृक्षे सत्त्वेन न स्वरूपासिद्धिः। अन्यादृशस्य प्रत्येकावच्छिन्नाभावस्य दुर्वचत्वात्। (यद्वा यो यदीययावद्विशेषाभाववान् इत्यस्य यो यदीयानां यद्धर्मावच्छिन्नप्रतियोगित्वानां यावतां विशेषाभाववान्—प्रत्येकावच्छिन्नाभाववान् प्रत्येकप्रतियोगित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभाववत् प्रत्येकप्रतियोगितावान् नास्तीत्यभाववान् स तद्धर्मावच्छिन्नाभाववान् इत्यत्र प्रत्येकावच्छिन्नस्य मदुक्तभिन्नस्य विलक्षणावच्छिन्नत्वभिन्नस्य दुर्वचत्वात्। अत एव (अवच्छिन्नत्वस्य विलक्षणस्य विवक्षितत्वादेव)। यावत्त्वस्य व्यापकत्वार्थकत्वोपगमेन संसर्गकोटावुभयावृत्तित्वादेरनिवेशेन च यो यदीययावद्विशेषाभाववानिति पूर्वकल्पेऽपि वैयर्थ्यपरिहारसंभवात् अव्यर्थविशेषणत्वसंपत्त्यै यद्वेति कल्पान्तरस्यानुसृतस्य यावत्त्वादेर्व्यापकत्वोपगमादिना तत्फलकत्वसंपादनं सन्दर्भविरुद्धमित्यपि निरस्तमिति तु वयं ब्रूमः। अथ यो यदीययावद्विशेषाभाववानित्यस्य यो यदीयनां यदभावप्रयोगित्वानां यावतां विशेषाभाववान् प्रत्येकावच्छिन्नाभाववानिति, स

तत्सामान्याभाववानित्यस्य च स तदात्मकसामान्याभाववानित्यर्थं एव कुतो नाङ्गीकृतः। असिद्धिवारकविशेषणस्या (धर्मे उभयावृत्तित्वविशेषणस्या)संभवात् लाघवाच्चेति तु अत्र चिन्त्यम्। **ध्येयमिति जा० टी०।** सामान्याभावप्रतियोगित्वस्य प्रतियोगितावच्छेदकरूपतया, अतिरिक्ततया वा सिद्धान्तसिद्धतया सन्दिग्धासिद्धेः दुर्वारत्वप्रसङ्गरूपास्वरसं सूचयितुं ध्येयमित्युक्तम्। तथा च वृक्षे संयोगाभावस्य यद्वेति कल्पे सदिग्धत्वे न संदिग्धासिद्धत्वमस्त्येवेति भावः। यद्यपि साध्यसन्देहसत्त्वे साध्याभावस्यापि पक्षे संदिग्धत्वमिति संदिग्धासिद्धत्वं न दोषाधायकम् तथापि सन्दिग्धव्यभिचारो न दोषाधायक इत्येव वक्तव्यमन्यथानुमानमात्रोच्छेदापत्तेः। संदिग्धासिद्धेः दोषाधायकत्वमेव।

विशेषपदस्य न्यूनवृत्तिधर्मवदर्थकतामभ्युपेत्य व्याख्यानं दूषयितुमाह "यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नयावदभाववान् स तद्धर्मावच्छिन्नाभाववानित्यर्थस्तु संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य घटावृत्तिसंयोगत्वादिवृक्षान्यासमवेतत्वावच्छिन्नाभावस्य वृक्षान्यसमवेतस्य यावदन्तर्गतस्य वृक्षादौ स्वरूपासिद्धत्वादनुपादेयः (वृक्षे स्वरूपासिद्धत्वादनुपादेयः) इति **जा० टी०।** न्यूनवृत्तित्वं च स्वसमानाधिकरणत्वे सति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्। सत्तात्वे (सत्त्वे) स्व (संयोगत्व) सामानाधिकरण्यं संयोगे वर्तते इति सत्त्वे संयोगत्वन्यूनत्ववारणाय स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिति। संयोगे सत्तावान् नेति भेदस्यासत्त्वमिति सत्तायाः न संयोगत्वन्यूनवृत्तित्वम्।

ननु (घटावृत्तिसंयोगत्वे संयोगत्वन्यूनवृत्तित्ववारणाय) न्यूनवृत्तिधर्मे पक्षतावच्छेदकविशिष्टान्यत्वं वाच्यम्। वै० स्वाश्रयवृत्तित्व स्वानाश्रयवृत्तित्वोभयसंबन्धेन। तथा च घटावृत्तिसंयोगत्वस्य वृक्षपटादिसंयोगद्वयवृत्तित्वाद्, वृक्षसमवेतत्वस्य च वृक्षतदितरोभयवृत्तिसत्तावृत्तित्वानाश्रयपक्षतावच्छेदकविशिष्टान्यत्वमित्यत आह वृक्षान्यासमवेतत्वेति। न च वृक्षान्यासमवेतत्वस्य वृक्षत्वे वृक्षसमवेतरूपादावेव सत्त्वेन तस्य न संयोगत्वसामानाधिकरण्यमिति वृक्षान्या-

समवेतत्वस्य संयोगत्वन्यूनवृत्तित्वमिति वाच्यम् वृक्षद्वयसंयोगान्तर्भावेण तस्य (संयोगत्वन्यूनवृत्तित्वस्य) वृक्षान्यासमवेतत्वे सत्त्वात्। वृक्षद्वयसंयोगवृत्तिवृक्षान्यासमवेतत्वे वृक्षद्वयसंयोगवृत्तिसंयोगत्वसामानाधिकरण्यस्य, घटपटसंयोगत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य च सत्त्वात्। घटपटवृत्तिसंयोगः वृक्षान्यासमवेतत्ववान् नेति भेदप्रतियोगितावच्छेदकत्वस्य वृक्षान्यासमवेतत्वे सत्त्वात्। अथ पक्षतावच्छेदकविशिष्टान्यत्वस्य वृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वेऽपि (तत्तत्संयोगत्वेऽपि) न संभवः। तस्य तत्तत्संयोगत्वस्य वृक्षान्यकप्यादिवृत्तिसंयोगवृत्तित्वात्। स्वाश्रयवृत्तिवृत्तित्व, स्वानाश्रय(कपि)वृत्तित्ववृत्तित्वयोः सत्त्वेन तत्र पक्षतावच्छेदकविशिष्टत्वस्य सत्त्वमिति तदन्यत्वाभावात्। न च वृक्षद्व..संयोगनिष्ठतद्व्यक्तित्वे (तत्संयोगत्वे) तत् (संयोगत्व)न्यूनवृत्तित्वसंभव इति वाच्यम्। तद्वृक्षत्वस्य पक्षतावच्छेदकत्वे (तद्वृक्षः संयोगसामान्याभाववान् संयोगत्वन्यूनवृत्तिधर्मावच्छिन्नयावद्विशेषाभावादित्यत्र तद्वृक्षत्वस्य पक्षतावच्छेदकत्वे) उक्ततद्व्यक्तित्वेऽपि (वृक्षद्वयसंयोगनिष्ठतद्व्यक्तित्वेऽपि) पक्षतावच्छेदकविशिष्टान्यत्वासंभवात्। स्वाश्रय (पक्षतावच्छेदकैतद्वृक्षत्वाश्रयैतद्वृक्ष) वृत्तिसंयोगवृत्तित्वस्य एतत्संयोगगततद्व्यक्तित्वे सत्त्वेऽपि स्वानाश्रय (एतद्वृक्षत्वरूपपक्षतावच्छेदकानाश्रय) वृक्षान्तरवृत्तिसंयोगवृत्तित्वस्य एतद्वृक्षभिन्नवृक्षान्तरवृत्तित्वस्य एतद्वृक्षवृक्षान्तरवृत्तिसंयोगे सत्त्वेन तत्संयोगगततद्व्यक्तित्वे पक्षतावच्छेदकाश्रयवृत्तिसंयोगवृत्तित्व, पक्षतावच्छेदकानाश्रयगतसंयोगवृत्तित्वस्य सत्त्वेन तद्व्यक्तित्वे तद्वृक्षत्वरूपपक्षतावच्छेदकविशिष्टत्वस्यैव सत्त्वेन तदन्यत्वाभावादिति चेद्। वैशिष्ट्यस्य स्वविशिष्टवृत्तिवृत्तित्वघटितत्वेन विवक्षितत्वात्। वै० स्वानाश्रयत्व स्वानाश्रयवृत्तिगुणानाश्रयत्वोभयसंबन्धेन। तथा च कप्यादेः स्वा(पक्षतावच्छेदका)नाश्रयत्वेऽपि स्वाश्रय(तद्वृक्ष)वृत्तिसंयोगरूपगुणानाश्रयत्वविरहेण एतद्वृक्षसंयोगनिष्ठतद्व्यक्तित्वे विशिष्टा( पक्षतावच्छेदकविशिष्टा )न्यत्वसंभवात्।

यद्वा तद्व्यक्तित्वे पक्षसमवेतविशिष्टान्यत्वमेव विशेषणम्। वै० स्ववृत्तित्व, स्वानाश्रयवृत्तिवृत्तित्वोभयसंबन्धेन। तथा च न कोऽपि दोषः। कपिवृक्षसंयोग-

गतैतद्व्यक्तित्वे पक्षसमवेतसंयोगवृत्तित्व, वृक्षसमवेतानाश्रयघटपटादिवृत्तिसंयोग-वृत्तित्वोभयसंबन्धेन वृक्षरूपपक्षसमवेतसंयोगविशिष्टं संयोगत्वं तदन्यत्वं संयोग-गततद्व्यक्तित्वे वर्तते।

वस्तुतस्तु न्यूनवृत्तित्वस्यैव यद्धर्मसमानाधिकरणत्वे सति यद्धर्माश्रय-विशिष्टान्यत्वार्थकत्वं स्वीकृत्य यो यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद-भाववान् स तद्धर्मावच्छिन्नाभाववानित्येवं सामान्यव्याप्तिरेव वाच्या। वै० स्ववृत्तिवृत्तित्व, स्वाश्रयवृत्तित्वोभयसंबन्धेन। स्वम्—यद्धर्माश्रयसंयोगादिः। प्रकृते यो यदीयेत्यत्र संयोगत्वाश्रयसंयोगविशिष्टान्यत्वं तद्व्यक्तित्वे तद्संयोगगततद्-व्यक्तित्वे वर्तते। स्व(संयोग)वृत्तित्वस्य तत्संयोगगततद्व्यक्तित्वे सत्त्वेऽपि स्वा (वृक्षवृत्तिसंयोगा)नाश्रयघटपटवृत्तिसंयोगवृत्तित्वस्य वृक्षकपिसंयोगगततद्व्यक्तित्वे ऽसत्त्वात् भवति वृक्षकपिसंयोगगततद्व्यक्तित्वं यद्धर्मा(संयोगत्वा)श्रय-विशिष्टान्यत्वम्। एवं च सामान्यव्याप्तिग्रहाद् व्याप्यसामान्याघटकपक्षता-वच्छेदकविशिष्टान्यत्वादिघटितविशेषहेतुरित्यसंभवेऽपि न क्षतिरिति। वस्तुतस्तु कल्पे न्यूनवृत्तित्वं यद्धर्मसमानाधिकरणत्वे सति यद्धर्माश्रयविशिष्टान्यत्वं विवक्षितम्। वै० स्ववृत्तित्व स्वानाश्रयवृत्तिवृत्तित्वोभयसंबन्धेन। तथा च सामान्यव्याप्तिग्रहादनुमितिः, यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावहेतुका भवति। न्यूनवृत्तित्वं च व्याप्यसामान्यघटकमेवेति। एवं वृक्षपदस्य तत्संयोग-वदर्थकतया तत्संयोगवदन्यासमवेतत्वे सति पक्षसमवेतरूपादिविशिष्टत्वे सत्त्वेऽपि (स्व—पटसमवेतरूपादि) स्ववृत्तित्व स्वानाश्रयाश्रयवृत्तिवृत्तित्वोभयसंबन्धेन वृक्षसम-वेतरूपादिविशिष्टत्वस्य तत्संयोगवदन्यासमवेतत्वे सत्त्वेऽपि संयोगवृत्तित्वाभावेन संयोगत्वाश्रयविशिष्टान्यत्वस्य वृक्षान्यसमवेतत्वे सत्त्वात् तत्संग्रहः। संयोगत्वा-श्रयविशिष्टान्यत्वसत्त्वेन तत्संग्रहः। तत्तद्वृक्षत्वं पक्षतावच्छेदकीकृत्य उक्तहेतुना (यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावरूपहेतुना) संयोगसामान्याभाव-साधने प्रागुक्ताविव वक्ष्यमाणेऽपि च वृक्षान्यासमवेतत्वमादाय दोषासंभवात्

(स्वरूपासिद्ध्यसंभवात्) । वृक्षपदस्य तत्तत्संयोगवदर्थकताया अभ्युपेयत्वादिति तु अभिनवपन्थाः ।

केचित्तु वृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वे पक्षतावच्छेदकविशिष्टान्यत्वसंपत्त्यर्थं स्वाश्रया( पक्षतावच्छेदकाश्रया )वृत्तिवृत्तित्वस्यैव वैशिष्ट्यघटकत्वम् । वृक्षसमवेतत्वस्य न्यूनवृत्तित्ववारणाय न्यूनवृत्तौ पदार्थविभाजकावृत्तित्वस्य विशेषणत्वम् । वृक्षान्यासमवेतत्वस्याभावादेः समवायेन स्वाश्रयावृत्तेर्वारणाय स्वाश्रयावृत्तौ वृत्तिमत्वस्य समवायावच्छिन्नस्य च विशेषणतां वदन्ति ।

अयं भावः । वृक्षसंयोगनिष्ठतत्तद्व्यक्तित्वे पक्षतावच्छेदकविशिष्टान्यत्वसंपत्त्यर्थं पक्षतावच्छेदकविशिष्टान्यत्वविशेषणघटकवैशिष्ट्यं स्वाश्रयावृत्तिवृत्तित्वसंबन्धेन वाच्यम् । तथा च स्वा(पक्षतावच्छेदका) श्रयावृत्ति (घटपटसंयोग) वृत्तित्वसंबन्धेन पक्षतावच्छेदकविशिष्टं घटपटसंयोगगततद्व्यक्तित्वं तदन्यत्वं वृक्षकपिसंयोगगततद्व्यक्तित्वे वर्तते । वृक्षसमवेतत्वस्य न्यूनवृत्तित्व(यद्धर्मन्यूनवृत्तित्व)वारणाय न्यूनवृत्तौ पदार्थविभाजकावृत्तित्वं विशेषणम् । स्वा (पक्षतावच्छेदकाश्रया) वृत्तिवृत्तित्वे सति पदार्थविभाजकावृत्तित्वे सति स्वसमानाधिकरणत्वं स्वन्यूनवृत्तित्वं वाच्यम् । भवति संयोगगततद्व्यक्तित्वे स्वन्यूनवृत्तित्वम् । वृक्षसमवेत( सत्ता )समवेतत्वे पदार्थविभाजकवृत्तित्वमस्तीति न संयोगत्वरूपतद्धर्मन्यूनवृत्तित्वं भवति । वृक्षान्यसमवेतस्य वृक्षान्यसमवेताभावस्य समवायेन स्वा( यद्धर्मा )श्रयावृत्तेर्वारणाय स्वाश्रयावृत्तिवृत्तौ वृत्तित्वस्य समवायावच्छिन्नस्य विशेषणतां च वदन्ति । (तथा च वृक्षान्यसमवेताभावे पदार्थविभाजकावृत्तित्वस्य स्वसमानाधिकरणस्य च सत्त्वेऽपि न यद्धर्म (संयोगत्व) न्यूनवृत्तित्वं भवति । पक्षतावच्छेदकाश्रयावृत्ति घटपटसंयोगनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वस्य वृक्षान्यसमवेताभावेऽसत्त्वेन न यद्धर्म (संयोगत्व) न्यूनवृत्तित्वं भवति । इति तन्नातिचारु । तथासति द्रव्यत्वान्यवृक्षसमवेतत्व, वृक्षवृत्तिगुणवृत्तिगुणत्वाद्यवच्छिन्नाभावमादाय दोषसंभवे वृक्षान्य-

समवेतत्वावच्छिन्नाभावपर्यन्तानुधावनस्य वैफल्यापत्तेः । अयं भावः । द्रव्यत्वान्य-वृक्षसमवेतत्वे स्वा( पक्षतावच्छेदका )श्रयावृत्ति घटपटसंयोगवृत्तित्वस्य, पदार्थ-विभाजकावृत्तिवृत्तित्वस्य स्व( संयोगत्व )भिन्नत्वस्य स्व( संयोगत्व ) समानाधिकरणत्वस्य च सत्त्वेन तस्य (द्रव्यत्वान्यवृक्षसमवेतत्वस्य) संयोगत्व-रूपतद्धर्मन्यूनवृत्तित्वम् तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्धिर्भवति । एवं वृक्षवृत्तिगुणवृत्तिगुणत्वे तेषां पूर्वोक्तानां सत्त्वेन तस्य संयोगत्वन्यून-वृत्तित्वमिति तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वेन भवति स्वरूपासिद्धिर्दोषः । पक्षतावच्छेदकाश्रयपक्षावृत्तिघटपटसंयोगवृत्तित्वस्य पदार्थविभाजकावृत्तित्वस्य स्व( संयोगत्व )भिन्नत्वस्य स्व( संयोगत्व )समानाधिकरणत्वस्य च वृक्ष-वृत्तिगुणवृत्तिगुणत्वे सत्त्वेन तस्य वृक्षवृत्तिगुणवृत्तिगुणत्वस्य संयोगत्वरूपतद्धर्म-न्यूनवृत्तित्वं तदवच्छिन्नाभावस्य वृक्षेऽसत्त्वेन भवति स्वरूपासिद्धिः ।

यत्तु वृक्षवृत्तिसंयोगवृत्तिसंयोगत्वावच्छिन्नाभावमादाय दोषसंभवे तत्परित्यागो नोचित इति । वृक्षवृत्तिसंयोगवृत्तिसंयोगत्वे स्वा(पक्षतावच्छेदका)श्रयावृत्ति घटपट-संयोगवृत्तित्व, पदार्थविभाजकावृत्तित्व; स्वाश्रयावृत्ति(पक्षतावच्छेदकाश्रयावृत्ति) घटपटसंयोगनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वैतत् त्रितयसंबन्धेन पक्षतावच्छेदक (वृक्षत्व)विशिष्टान्यत्वं स्व (यद्धर्मसंयोगत्व) न्यूनवृत्तित्वं वक्तव्यम् । तथा च स्वस्य( संयोगत्वस्य )स्वन्यूनवृत्तित्वेन स्वावच्छिन्नाभावस्य वृक्षे संयोग-सामान्याभावसाधनसमयेऽसिद्धत्वेन स्वरूपासिद्धिदोषसंभवे तद्दोषपरित्यागो नोचित इति । तदसत् । वृक्षे संयोगसामान्याभावस्य सन्दिग्धत्वेन संयोगसामान्याभाव-मादाय सन्दिग्धासिद्धेरेव संभवेन निश्चितासिद्ध्यनुरोधेनापि तावद्दूरानुधावन (वृक्षान्यसमवेतत्वाद्यनुधावन) सार्थक्यसंभवात् ।

अस्मत्कल्पे च(वस्तुतस्तु कल्पे च)संयोगत्वमादाय स्वरूपासिद्धिदोषस्य न संभवोऽपि तादृशसंयोगत्वे वृक्षसमवेतकपिसंयोगत्वविशिष्टत्वस्य सत्त्वात् । पिपीलकावृत्तिवृक्षसंयोग-वृत्तित्वात् । न च यद्धर्मसमानाधिकरणधर्मे न्यूनवृत्तित्वघटकस्वसमानाधिकरणभेदप्रतियो-गितावच्छेदकत्वं विहाय सामान्यव्याप्तौ यत्समवेतत्वविशिष्टान्यत्वं विशेषणं देयम् ।

तावतैव वृक्षान्यसमवेतत्वावच्छिन्नाभावस्यापि वारणादिति वाच्यम् । तत्संयोग, तद्द्वित्वान्यतरत्वावच्छिन्नाभावमादायासिद्धेः । पूर्वकल्पापेक्षया गुरुत्वाच्चेति । (न च यद्धर्मन्यूनवृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाववान् यः स तद्धर्मावच्छिन्नाभाववानिति सामान्यव्याप्तौ स्वन्यूनवृत्तित्वं स्वसमानाधिकरणत्वं यत्समवेतत्वविशिष्टान्यत्वोभयसंबन्धेन वाच्यम् । तथा च संयोगत्वे स्वसामानाधिकरण्यस्य सत्त्वेऽपि वृक्षसमवेतसंयोगसमवेतत्वस्यैव सत्त्वेन तादृशविशिष्टान्यत्वस्य सत्त्वात् । संयोगत्वस्य न स्वन्यूनवृत्तित्वमिति वाच्यम् । तथासति तत्संयोग, तद्द्वित्वान्यतरत्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वेन स्वरूपासिद्ध्यापत्तेः । वृक्षे तादृशद्वित्वस्य सत्त्वेन तादृशान्यतरत्वावच्छिन्नाभावस्य वृक्षेऽसत्त्वात् । तादृशान्यतरत्वे वृक्षसमवेतत्वविशिष्टान्यत्वस्य संयोगत्वसमानाधिकरणत्वस्य च सत्त्वात् । भवति तादृशान्यतरत्वं संयोगत्वन्यूनवृत्तित्वम् इति पूर्वकल्पापेक्षया गुरुत्वाच्चेति ।

न च सर्वावयवावच्छेदेन वृक्षादौ गगनादेरेक एव संयोगो लाघवादिति तस्यैवाभावविरहात् संयोगविशेषाभाववत्वं पक्षे स्वरूपासिद्धमिति वाच्यम् । इति जा० टी० । अथात्र वृक्षे एव तत्तदवयवावच्छिन्नगगनसंयोगस्य भेदाभावोऽभिमतः । किं वा वृक्षगगनसंयोगाद्घटादिगगनसंयोगस्यापि भेदाभाव इति विमर्शे लाघवात् सर्वेषां संयोगानामैक्यं प्राप्नोति । तत्र "संयोगैक्ये" कैश्चिज्जनैः एकक्रियया एकत्र संयोगनाशे संयोगस्यैकत्वात् । क्रियाशून्येऽपि अपरत्र संयोगनाशापत्तिः । वृक्षस्य विनाशात् वृक्षसंयोगनाशे संयोगस्यैक्यात् विद्यमानघटादिष्वपि घटादिसंयोगनाशापत्तिश्च । क्रियाऽऽश्रयनाशाभ्यामपि लाघवानुरोधेन संयोगविनाशकल्पने पाकाश्रयनाशादितोऽन्यत्र रूपदर्शनेन रूपनाशस्यापि अप्रामाणिकत्वापत्त्या एकरूपादिवादापत्तिः स्यादिति वृक्षे एव तत्तदवयवावच्छिन्नगगनसंयोगभेदाभावोऽङ्गीकार्यः । वृक्षे एकः वृक्षगगनसंयोगोऽङ्गीकार्यः (प्रथमपक्षोऽङ्गीकार्यः) । शाखादौ क्रियायां वृक्षेऽपि संयोगप्रतिद्वन्द्विविभागोत्पत्त्या निष्क्रियदेशावच्छिन्नोऽपि संयोगो नश्यत्येव वृक्षे

संयोगस्यैकत्वात् । निष्क्रियदेशे एव संयोगः परमवतिष्ठते । शाखापतने खण्डवृक्षोत्पत्त्यादिस्थलेऽवस्थितावयवसंयोगसत्त्वेऽपि (अवस्थितावयवकभिन्न) तदवच्छिन्नसंयोगनाशवदिति समानोत्पत्तिध्वंसादिमतां समानक्रियाणाञ्चावयविनाम् एकगगनसंयोगाभ्युपगमेऽपि न क्षतिरित्युच्यते इति तदेव च तत्त्वम् । तदेवं वास्तवम् । अथ समवायेन तत्तत्संयोगं प्रति तादात्म्येन तत्तद्द्रव्यत्वेन कारणत्वकल्पनात् तत्तत्संयोगस्य प्रतिदेशनियमेऽपि (घटपटसंयोगो घटे पटे च वर्तते न तु वृक्षे इत्यादिनियमेऽपि) अवच्छेदकदेशनियमाय अवच्छेदकतासंबन्धेन संयोगं प्रति तादात्म्येनावच्छेदकदेशस्य कारणत्वमपि विशिष्यैव (पृथग् पृथगेव) वाच्यम् । तत्रावच्छेदकतासंबन्धेन तत्तत्संयोगं प्रति तत्तद्देशत्वेन यदि कारणत्वं स्यात् तदा गगनस्य निखिलवृक्षावयवावच्छिन्नतया तं प्रति (गगनसंयोगं प्रति) गगनस्यैकत्वेन कारणत्वकल्पनाया निष्प्रयोजनत्वाद् व्यभिचाराभावेन तदैक्यं (गगनसंयोगैक्यं) निःप्रत्यूहं स्यात् तदेव न (गगनसंयोगैक्यमेव न), मूलावयवावच्छिन्नसंयोगं प्रति मूलत्वादिना कारणत्वस्यैव लाघवेन वाच्यत्वात् । तथा च मूलावच्छिन्नगगनसंयोगस्य शाखावच्छिन्नत्वे शाखायां मूलस्यासत्त्वेन व्यभिचारः स्यात् । व्यभिचारवारणाय कार्यतावच्छेदककोटौ विभुसंयोगान्यत्वादिविशेषणं तदैक्यावधारणं विना (गगनसंयोगैक्यावधारणं विना) गौरवेणापादितुमशक्यम् । (विभुसंयोगान्यत्वविशेषणमापादितुमशक्यम्) । अभ्यर्हितं च पदार्थलाघवगौरवापेक्षया कार्यकारणभावलाघवगौरवमेव । तेनैकसंयोगकल्पनालाघवमकिञ्चित्करमिति गगनवृक्षसंयोगस्यावच्छेदकभेदाद् भेदसिद्धिरित्याशयेनाह ।

**"अतिप्रसङ्गभङ्गाय शाखादि तत्तदवयवावच्छिन्नवृत्तिकसंयोगं प्रति तत्तदवयवत्वेन हेतुत्वस्यावश्यकतया वृक्षे व्याप्यवृत्तिगगनसंयोगस्यासंभवादिति भाव इति जा० टी० ।**

ननु गगनसंयोगस्यैकत्वे व्याप्यवृत्तित्वेऽवच्छेदकत्वविरहेण मूलाद्यन-

वच्छिन्नत्वान्न व्यभिचारप्रसक्तिः। (मूलावच्छिन्नगगनसंयोगः शाखायामपि वर्तते तत्र मूलस्यासत्त्वेन मूलरूपकारणस्य शाखायामसत्त्वेन तत्र गगनसंयोगस्यैकत्वात् भवति व्यतिरेकव्यभिचारः, स न भवति व्याप्यवृत्तेरनवच्छेदकत्वात्। एवं प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यादिप्रतीतेरेकस्यैव शरीरवृक्षसंयोगस्य प्राच्यादिदिगवच्छिन्नत्वशाखावच्छिन्नत्वयोः सत्त्वाद् व्यभिचारः। (प्राच्यादिदिगः तादात्म्येन शाखायां शाखायाः प्राचीदिशि तादात्म्येनासत्त्वात् तत्र तत्र तत्तदवच्छिन्नसंयोगोत्पादेन व्यतिरेकव्यभिचारः)। न चोक्तप्रतीतौ (प्राच्यां शाखायां शरीवृक्षसंयोग इति प्रतीतौ) संयोगद्वयावगाहित्वसंभवः (शरीरशाखा-संयोगः, प्राचीदिग्शरीरसंयोग इति संयोगद्वयावगाहित्वसंभवः)। यत्र प्राच्यां मूले एकशरीरसंयोगः प्रतीच्यां शाखायामपरशरीरसंयोगः तत्र प्रतीच्यां मूले शरीरसंयोग इति प्रतीत्यापत्तेः। एवं संयोगजसंयोगस्थले एकसंयोगे एवाव-यवद्वयावच्छिन्नत्वेन व्यभिचारश्च। (तत्र तत्रावयवे तादात्म्येन स्वभिन्नावय-वस्यासत्त्वेन तत्र तदवच्छिन्नसंयोगोत्पादेन व्यतिरेकव्यभिचारः)। इति मूल-निरूपितावच्छेदकत्वसंबन्धावच्छिन्नवृत्तित्वविशिष्टसंयोगाधिकरणत्वस्य मूलातिरिक्ता-वयवेऽसत्त्वाद् यथा नोक्तस्थलयोः व्यभिचारः। तथा मूलशाखाद्यवच्छिन्नसंयोग-व्यक्तीनां गगननिरूपितानामैक्येऽपि न व्यभिचारः। (मूलनिरूपितावच्छेदकता-संबन्धावच्छिन्नवृत्तितावत्संयोगं प्रति तादात्म्येन मूलं कारणम्, दिन्निरूपिता-वच्छेदकतासंबन्धावच्छिन्नवृत्तितावत्संयोगं प्रति तादात्म्येन दिग्कारणमिति गगनसंयोगस्यैक्येऽपि न व्यभिचारः।) तत्र तदधिकरणवृत्तित्वविशिष्टसंयोगस्या-सत्त्वात् तद्विरहे न तत्संयोगोत्पादः। न चोक्तव्यभिचारयोः वारणाय स्वा( शाखाद्य )वच्छिन्नत्व, स्वा( शाखाद्य )वच्छिन्नानुयोगिकत्वोभयसंबन्धेन शाखावत्संयोगं प्रति (शाखाविशिष्टसंयोगं प्रति) शाखात्वेन कारणत्वम्। कार्यतावच्छेदकसंबन्धश्च स्वा( संयोगा) नुयोगितावच्छेदकत्वम्। एवं स्वा-वच्छिन्नत्वस्वावच्छिन्नप्रतियोगिकत्वोभयसंबन्धेन शाखावत् (शाखाविशिष्ट) संयोगं प्रति शाखात्वादिना कारणत्वम्। कार्यतावच्छेदकसंबन्धश्च स्व (संयोग)

प्रतियोगितावच्छेदकत्वम् । एवं स्वावच्छिन्नत्व स्वावच्छिन्नप्रतियोगिताकत्वोभय-संबन्धेन शाखावत्(शाखाविशिष्ट)संयोगं प्रति शाखात्वादिना कारणत्वम् । कार्यतावच्छेदकसंबन्धश्च स्व( संयोग )प्रतियोगितावच्छेदकत्वं वाच्यम् । (प्राच्यां शाखायां शरीरवृक्षसंयोग इत्यत्र स्वावच्छिन्नत्व स्वावच्छिन्नानुयोगि-कत्वोभयसंबन्धेन शाखावत्संयोगं प्रति स्वानुयोगितावच्छेदकत्वं कार्यतावच्छेदक संबन्धः । अवयवद्वयावच्छिन्नैकसंयोगस्य संयोगजसंयोगस्य कार्यतावच्छेदकसंबन्धः । स्वप्रतियोगितावच्छेदकत्वम्) । गौरवेणैतस्य कार्यकारणभावस्य त्याज्यत्वात् । मेषद्वयादिसंयोगस्थले चोभयोरेव (उभयोर्मेषयोरेव अवयवस्य प्रतियोगित्वा-नुयोगिता( संयोगप्रतियोगित्वानुयोगित्वा )वच्छेदकत्वेन व्यभिचारतादवस्थ्या-च्चेति चेन्न (एकमेषावयवस्य तादात्म्यं द्वितीयमेषावयवेऽसत्त्येन तत्र तादृश-संयोग उत्पद्यते इति व्यतिरेकव्यभिचाराच्चेति) । स्वा(संयोगा)वच्छेद-कत्व, स्वा( संयोगा )वच्छेदकशाखादिसमवेत( अवयवि )समवायित्वो-भयसंबन्धेन शाखादिवृत्तिसंयोगं प्रति तादात्म्येन शाखात्वादिना शाखादेः कारणत्वे एव तात्पर्यात् । उक्तव्यभिचाराप्रसक्तेः । दिक्कालदेशेषु विलक्षणा-वच्छेदकत्वस्य स्वीकृततया विजातीयावच्छेदकतासंबन्धेन प्राच्याद्यवच्छिन्नसंयोगं प्रति प्राच्यादिदिक्त्वेन कारणत्वकल्पनाद् दिग्विशेषावच्छेदकत्वनियमोऽपि उप-पद्यते एव । न च मूलशाखादिनिष्ठावच्छेदकतासंबन्धेन संयोगं प्रति मूल-शाखात्वादिना कारणत्वमेव लाघवाद् व्यभिचारवारणाय वाच्यम्, तथासति गगनसंयोगस्यैकत्वेऽपि न व्यभिचार इति वाच्यम् । विशेषरूपेण संसर्गत्वान-भ्युपगमात् (दिक्कालनिष्ठविजातीयावच्छेदकतासंबन्धत्वास्वीकारात्) । यच्चोक्तं गगनसंयोगस्य व्याप्यवृत्तेरवच्छेदकत्वाभावान्न व्यभिचार इति । तदपि न । शाखायां वृक्षे गगनसंयोग इत्यादिप्रतीतेर्व्याप्यवृत्तेरपि अङ्गीकारादिति । अत्र ब्रूमः । अधो मूले वृक्षे गगनसंयोगः उपरि शाखायां वृक्षे गगनसंयोगः प्राच्यामेतच्छाखायां वृक्षे गगनसंयोग इत्यादिप्रतीतेर्मूलावच्छिन्नस्याधोदेशा-वच्छिन्नतया शाखाद्यवच्छिन्नस्योपरिदेशावच्छिन्नतया मूलशाखाद्यवच्छिन्नगगन-

संयोगस्य भेद एव स्वीकरणीयः । अभेदे च वृक्षे गगनसयोग इति प्रतीत्यापत्तेः । न चोक्तप्रतीत्यसिद्धिः । येन प्रमाणेन संयोगसिद्धिः, तेनैवोक्त-प्रतीतेरपि संपाद्यत्वादिति । अत्रेदं बोध्यम् । उक्तप्रतीतौ 'वृक्षवृत्तिगगनसंयोगे तत्तद्दिग्देशावच्छिन्नत्वभानस्यानुभविकत्वे वृक्षवृत्तितायां वा अनुभविकत्वे भवेदेव संयोगभेदः । देशनिष्ठावच्छेदकतायामेव दिगवच्छिन्नत्वभानस्य प्रामाणिकत्वे च नाङ्गीकार्यः गगनवृक्षसंयोगभेदः । उक्तप्रतीत्यापत्तेरयोगात् । (उपरि मूले वृक्षे गगनसंयोग इति प्रतीत्यापत्तेरयोगात्) । मूलनिष्ठावच्छेदकताया उपरिदेशान-वच्छिन्नत्वात् । अतएव दिग्व्यभिचारं परित्यज्य संयोगजसंयोगे देशव्यभि-चार एवादृतो भट्टाचार्येण (संयोगजसंयोगस्थले एकसंयोगे एव अवयवद्वया-वच्छिन्नत्वेन व्यभिचारः । एकावयवेऽपरावयवतादात्म्याभावात्) । एव वृक्षे गगनसंयोगं व्याप्यवृत्ति गगनेऽव्याप्यवृत्ति प्रतिपादयतो यत्तु संयोगमात्रेत्यादि-गदाधरग्रन्थस्यापि देशनिष्ठावच्छेदकतायामेव दिग्वच्छिन्नत्वे तात्पर्यं वाच्यम् । अन्यथा गगनसंयोगनिष्ठगगनवृत्तितायाम् एकस्याम् उपरिदिग्मूले देशा-वच्छिन्नत्वासंभवेन संयोगभेदस्वीकारे वृक्षेऽपि संयोगभेदस्यावश्यकत्वापत्तेः ।

यद्वा गगने वृक्षे संयोगसत्तायां वृक्षस्यावच्छेदकतयाऽव्याप्यवृत्तितायां तात्पर्यम् । अधोमूले वृक्षे गगनसंयोग इत्यादिप्रतीतिरप्रामाणिक्येवेति । केचित्तु अतिप्रसङ्गभङ्गायेत्यादिजागदीशीग्रन्थम् अन्यथा व्याचक्षते । तथाहि देशविशेषाद्यन-वच्छिन्नसंयोगस्यानुपलम्भात् । कारणनियम्यस्य देशविशेषावच्छिन्नत्वस्यानियमप्रसङ्गात् देशविशेषस्य (संयोगं प्रति) कारणत्वं वाच्यम् । तत् (देश) कार्यता-वच्छेदकं च न संयोगत्वं व्यभिचारापत्तेः । तद्देशभिन्नदेशेऽपि संयोगस्य सत्त्वेन व्यतिरेकव्यभिचारापत्तेः । तद्वारणाय च तत्तद्देशावच्छिन्नत्वं कार्यता-वच्छेदकमभ्युपेयम् । एवञ्चानवच्छिन्नस्य व्याप्यवृत्तेर्गगनसंयोगस्योत्पत्त्यसंभवः उत्पादकसामग्र्यभावात् । यत्किञ्चिद्विशेषसामग्रीं विना सामान्यस्योत्पत्त्यसंभवेन विशेषसामग्र्याः सामान्यस्योत्पत्तावश्यापेक्षणीयत्वात् । विशेषश्चावच्छिन्न एव

(संयोग·) क्लृप्तः । अनवच्छिन्नस्य (संयोगस्य) कल्प्यत्वात् । क्लृप्तानुसारेणैव कल्पनायाः कार्यत्वादित्यव्याप्यगगनसंयोगसिद्धौ न स्वरूपासिद्ध्यवकाश इति । तन्न चारु । वृक्षे संयोगस्य व्याप्यवृत्तेरेव गगनेऽव्याप्यवृत्तितया तदुत्पत्ति (संयोगोत्पत्ति)संभवादिति दिक् ।

**दीधितौ यत्तदर्थयोरननुगमादिति ।**

यत्तदर्थसंयोगत्वघटत्वादीनाम् अनुगतैकरूपाभावेन व्याप्तिकोटौ प्रवेशासंभवाद् घटसामान्याभाव घटीययावद्विशेषाभावादीनां व्याप्तिग्रहश्च न संयोगीययावद्विशेषाभावलिङ्गकसंयोगसामान्याभावानुमित्युपयोगी । तयोर्विशिष्यव्याप्तिश्चाग्रे निराकरणीया । न च यत्तच्छब्दार्थत्वमेवानुगतधर्मः । तस्य (यत्तच्छब्दार्थत्वस्य) प्रमेयत्वादिसाधारण्येन यत्त्वाश्रयसमानाधिकरणोभयवृत्तिधर्मावच्छिन्नाभावकूटस्य प्रायशो(वृक्षे)ऽसत्त्वप्रसङ्गात् । न च यत्त्वं तत्त्वं धर्मविशेषः प्रमाणाभावात् । यत्पदेनैकधर्मोपादाने तत्पदेनापि तस्यैवोपादानमिति नियमस्याशक्यनिर्वाह्यत्वाच्चेति भावः ।

**प्राचां मते यत्तदर्थयोरनुगमात् आह एकावच्छेदेनेति ।**

अनुगतत्वे सति अननुगतकारी धर्मविशेषो यत्त्वतत्त्वमनुभवानुरोधात् । उक्तनियमोऽपि (यस्यैव धर्मस्य यत्त्वेन ग्रहणं तस्यैव तत्त्वेन ग्रहणमिति नियमोऽपि) तत्स्वाभाव्यादेव (यत्तच्छब्दस्वभावादेव) । कथमन्यथा स्वीयस्तनपानादिगोचरप्रवृत्तौ स्तनपानादिगोचरकार्यताज्ञानादिना व्याप्तिमुपलभ्य यो यत्र प्रवर्तते स कार्यतया तज्जानातीति सामान्यतो व्याप्तिमुपादाय गवानयनप्रवृत्तितत्कार्यज्ञानयोरगृहीतव्याप्तिकेनापि तत्प्रवृत्त्या (गवानयनप्रवृत्त्या) तज्ज्ञानम् (गवानयनकार्यज्ञानम्) अनुमीयते । यदि साध्यजातीयसाधनजातीययोः द्वयोरपि व्यभिचारस्यानुपस्थितावुपस्थितनिखिलसाध्यजातीयसाधनजातीयव्याप्तेर्विशिष्यग्रहादेवागृहीतव्याप्तिप्रवृत्तिविशेषलिङ्गेन कार्यत्वविशेषज्ञानानुमानसंभव इति

साधनव्याप्त्यभ्युपगमो निरर्थक इत्युच्यते। तदा प्रकृते तथैव संयोगसामान्याभावसिद्ध्याऽभिमतसिद्धिरिति प्राचामाशयः।

संयोगसामान्याभाव तद्विशेषाभावयोर्व्याप्तिज्ञानस्य व्यभिचाराग्रहे सति संभवेन तस्मादेव द्रव्ये संयोगसामान्याभावः सिद्ध्यतीति। इदं तु बोध्यम्, यत्त्वतत्त्वयोरननुगतत्वेऽपि न क्षतिः। जातिर्जातिमती जातित्वादित्यनुमानादेवाभिमतसिद्धिः (द्रव्ये संयोगसामान्याभावसिद्धिः)। साध्यता च स्वतादात्म्य, स्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटव्यापकाभावप्रतियोगितावच्छेदकत्वोभयसंबन्धेन (प्रतियोगितावच्छेदकत्ववत्त्वोभयसंबन्धेन)। तथा चैतत्साध्यानुमापकहेतुघटकस्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नाभावकूटव्यापकतद्धर्मा(स्व)वच्छिन्नाभावयोर्व्याप्यव्यापकभावेन तन्निरूपिता व्याप्तिः तादृशाभावकूटे सिद्ध्यति। तथा च द्रव्ये संयोगसामान्याभावरूपाभिमतः सिद्ध्यतीति।

यद्वा वृक्षाद्यवृत्ति स्व ( रूपत्व ) समानाधिकरणोभयावृत्ति ( तत्तद्रूपत्वधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावकं यद्यत् तद्भेदकूटवान् यो यः संयोगत्वरूपधर्मः स वृक्षनिष्ठाभावप्रतियोगितावच्छेदक इति व्याप्त्यैव सामान्यव्याप्तिस्थलाभिषिक्तया भट्टाचार्योक्त्याऽभिमतसिद्धिः। वृक्ष संयोगसामान्याभावः (वृक्षाद्यवृत्तिस्व(रूपत्व) समानाधिकरणोभयावृत्ति (तत्तद्रूपत्व) धर्मावच्छिन्न यत्किञ्चिदभावकं यद् यत् (वृक्ष वृत्तिरूपस्पर्शादिकम् ) तत्तद्भेदकूटवान् यो यः संयोगत्वरूपो धर्मः स वृक्षनिष्ठाभाव( संयोगसामान्याभाव )प्रतियोगितावच्छेदक इति व्याप्त्यैव वृक्षे संयोगसामान्याभावः सिद्ध्यति)।

**न चैवं तत्तत्संयोगाभावस्य गुणे व्याप्यवृत्तित्वादेकावच्छेदेन साध्यव्यापकत्वं दुर्घटमिति वाच्यम् इति जा० टी०।**

अथावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाववत्त्वमेवास्तु। (एकावच्छिन्नत्व) उभयाभावघटकैकानवच्छिन्नत्वघटकैकावच्छिन्नत्वम्। स्वसमानाधिकरणावच्छिन्नतादृशाभावा

(उभयावृत्तिधर्मावच्छिन्नाभावा)धिकरणताकूटावच्छेदकावच्छिन्नत्वरूपम् । एवञ्च गुण निष्ठाधिकरणत्वस्य (उभयावृत्तिधर्मावच्छिन्नाभावाधिकरणगुणनिष्ठाधिकरणत्वस्य) अवच्छिन्नत्वविरहेणोभयाभाववत्त्वात् तस्य (एकावच्छेदेन यावद्विशेषाभावरूपोपाधेः) साध्यव्यापकत्वम् (संयोगसामान्याभावव्यापकत्वम्)। वृक्षनिष्ठे संयोगविशेषाभावाधिकरणत्वे कुत्रापि न स्व (संयोत्व) समानाधिकरणनिखिलतादृशा (उभयावृत्तिधर्मावच्छिन्नाभावा)धिकरणतावच्छेदकावच्छिन्नत्वमित्युभयाभावविरहेण साधनाव्यापकत्वम्। (मूलावच्छिन्नसंयोगविशेषाभावाधिकरणतायाः शाखानवच्छिन्नत्वं मूलावच्छिन्नत्वञ्चेति अवच्छिन्नत्वैकानवच्छिन्नत्वोभयस्यैव सत्त्वेन तादृशोभयाभावविरहेण साधनाव्यापकत्वम्। कपिसंयोगविशेषाभावाधिकरणत्वमात्रस्यैव स्व (संयोगत्व) समानाधिकरणनिखिलतादृशा (उभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावाधिकरणत्वा) वच्छेदकमूलावच्छिन्नत्वसत्त्वेनावच्छिन्नत्वाभावादुभयाभाववत्तया (तादृशोभयाभाववत्तया) कपिसंयोगाभावरूपसाध्यव्यापकत्वस्यापि संभवेन न चैवमित्याद्युक्तशङ्काया अपि नावकाशः। (उपाधौ साध्यव्यापकत्वदुर्घटत्वशङ्काया अपि नावकाशः)। भट्टाचार्येण चेदमेकावच्छिन्नत्वं कपिसंयोभावरूपसाध्यव्यापकत्वसंपत्तय उक्तम्।

न च विशिष्टाभावमुपेक्ष्य (अवच्छिन्नत्वविशिष्टैकानवच्छिन्नत्वाभावमुपेक्ष्य) कथम् उभयाभावः (अवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभावः) उक्त इति वाच्यम्। अनिर्वाहात्। तथापि जातित्वरूपत्वादीनामपि यत्पदार्थतया तदवच्छिन्नप्रतियोगिताकाभावरूप साध्यव्यापकत्वस्य विशिष्टाभावविशिष्टे तादृशविशेषाभावे (उभयावृत्तिधर्मावच्छिन्नाभावे) जातित्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावानां रूपत्वसमानाधिकरण तत्तद्रूपत्वावच्छिन्नप्रतियोगिताकाभावानां च व्याप्यवृत्तित्वेन तदधिकरणत्वस्य निरवच्छिन्नत्वेनावच्छिन्नत्व (सावच्छिन्नत्व) विशिष्टैकानवच्छिन्नत्वाभावस्याप्रसिद्ध्या तादृशविशिष्टाभावस्याप्रसिद्धत्वात्। (सावच्छिन्नाधिकरणत्वस्य तादृशाधिकरणतावच्छेदकत्वस्य चाप्रसिद्धेः। जातिविशेषाभावाद्यधिकरणत्वमात्रस्य व्याप्यवृत्तित्वात् तथा चैकावच्छिन्नत्वाप्रसिद्ध्या तद्घटितविशिष्टाभावस्याप्रसिद्धेः। तदुपपत्तये च (एका-

वच्छिन्नत्वविशिष्टतादृशविशेषाभावे उपाधित्वोपपत्तये च) एकानवच्छिन्नत्वघटकैका-वच्छिन्नत्वघटकाधिकरणत्वविशेषणावच्छिन्नत्वस्य ( सावच्छिन्नत्वस्य ) अव्याप्यवृत्त्य-भावत्वावच्छिन्ननिरूपितत्वानवच्छिन्नत्वोभयाभावरूपस्य, अवच्छेदकत्वस्य (एका-वच्छिन्नत्वघटकाधिकरणताकूटावच्छेदकत्वस्य) तद्घटकस्य, स्वनिरूपितावच्छेदकत्वा-भाववत्त्वसंबन्धावच्छिन्नस्वाभाववत्वरूपस्य वाच्यतया विशिष्टाभावप्रवेशे जातित्व, रूपत्वादीनां यत्पदेनोपादाने विशिष्टाप्रसिद्धया साध्योपाध्योः सामान्यव्याप्त्यनिर्वाहः। यत्पदेन जातित्वस्योपादाने देशमात्रस्यैव प्रागुक्तावच्छेदकत्ववत्तया तदनवच्छिन्नावच्छिन्न-त्वयोर्विरुद्धत्वादिति । (एकावच्छिन्नत्वविशिष्टयज्जातिसमानाधिकरणोभयावृत्तिधर्मा वच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्योपाधेरुपपत्तये अवच्छिन्नत्वैकानवच्छिन्न-त्वोभयाभाववटकैकानवच्छिन्नत्वघटकैकावच्छिन्नत्वं यज्जातिसमानाधिकरणोभयावृत्ति-धर्मावच्छिन्नयत्संबन्धावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसावच्छिन्नाधिकरणताकूटा-वच्छेदकावच्छिन्नत्वरूपम् । एकावच्छिन्नत्वघटकाधिकरणताकूटावच्छेदकत्वं च, स्वा (अव्याप्यवृत्त्यभावा)निरूपिताभाववत्त्वरूपं वाच्यं। तथा चावच्छिन्नत्वविशिष्टैकानवच्छि-न्नत्वाभावस्योपाधि घटकत्वे जातित्व, रूपत्वाद्यवच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगि-ताकाभावस्य, उपाधेः सावच्छिन्नत्वविशिष्टैकानवच्छिन्नत्वाभावविशिष्टजातित्व,रूपत्वादि समानाधिकरणोभयावृत्तिधर्मावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकयावदभावस्य च सामान्यव्याप्त्यनिर्वाहः स्यात्। यत्पदेन जातित्वस्योपादाने देशमात्रस्यैव प्रागुक्त-तादृशावच्छेदकत्ववत्तया तदनवच्छिन्नत्वावच्छित्वयोर्विरुद्धत्वादिति जातित्व, रूपत्वादि समानाधिकरणोभयावृत्तिधर्मावच्छिन्नसमवायसबन्धावच्छिन्नप्रतियोगिताकयावदभावस्य व्याप्यवृत्तित्वेनावच्छेदकत्वाप्रसिद्धया सावच्छिन्नत्वविशिष्टैकानवच्छिन्नत्वाभावविशिष्ट जातित्वरूपत्वादिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावरूपोपाधेर प्रसिद्धया जातित्वरूपत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकाभावरूप-साध्यव्याप्यकत्वम् सावच्छिन्नत्वविशिष्टैकानवच्छिन्नत्वविशिष्टस्य, जातित्व, रूपत्वादि समानाधिकरणोभयावृत्तिधर्मावच्छिन्न समवायसंबन्धावच्छिन्नप्रतियोगिताकयावदभावस्यो पाधेः दुर्घटः स्यात्। तादृशोपाधेरप्रसिद्धत्वात्। सावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाव-

स्योपाधिघटकत्वे तु नोक्तदोषः। अव्याप्यवृत्तित्वेन संयोगत्वसमानाधिकरणोभयावृत्ति-तत्तत्संयोगत्वावच्छिन्नसमवायसंबन्धावच्छिन्नप्रतियोगिताकयावदभावरूपोपाधौ प्रसिद्धस्य सावच्छिन्नत्वस्यान्यत्र प्रसिद्धस्यैकानवच्छिन्नत्वस्य च व्याप्यवृत्तिसाध्यकोपाधौ तयो रूपयोरुभयाभावस्य प्रसिद्धचोपाधेः प्रसिद्धत्वात्।

यद्वा यदीययावद्विशेषाभावत्वावच्छिन्ननिरूपितमधिकरणत्वमेकावच्छिन्नत्वविशेषितं लघुभूतमुपाधिः। एकावच्छिन्नत्वञ्च अवच्छिन्नत्वैकानवच्छिन्नत्वोभयाभावरूपमेव तद्-घटकैकावच्छिन्नत्वञ्च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वमेव। एवञ्च अव्याप्यवृत्त्यभावाधिकरणत्वसाधारणकूटत्वेन व्याप्यवृत्त्यधिकरणत्वमपि अव्याप्यवृत्त्ये-वेति संयोगीययावद्विशेषाभावाधिकरणत्वे अवच्छिन्नत्वस्यानेकावच्छिन्नाभावकूटाधि-करणत्वस्य वृक्षावयवत्वेनैव देशावच्छिन्नतया एकानवच्छिन्नत्वस्य सत्त्वेन तस्य (अधि-करणत्वस्य) साधनाव्यापकत्वम्। कपिसंयोगीययावद्विशेषाभावाधिकरणत्वस्य तन्मूला-वच्छेद्यतया उभयाभाववत्त्वेन (अवच्छिन्नैकानवच्छिन्नत्वोभयाभाववत्त्वेन) साध्य-व्यापकत्वमपि संभवति। अत्र विशिष्टाभावनिवेशे न क्षतिः। समानाधिकरणोभयस्यैवैक-विशिष्टापरत्वरूपत्वात्। (यदीययावद्विशेषाभावत्वावच्छिन्ननिरूपितमेकाधिकरणत्वम् एकावच्छिन्नत्वविशेषितं लघुभूतं तादृशाभावानामनेकत्वेन तदधिकरणत्वस्य वृक्षमात्र-वृत्तित्वेनैक्याल्लाघवम्। तथा चैकावच्छिन्नत्वविशिष्टयदीययावद्विशेषाभावत्वावच्छिन्न-निरूपितमेकमधिकरणत्वमुपाधिः। एकावच्छिन्नत्वञ्च अवच्छिन्नत्वैकानवच्छिन्नत्वोभया-भावरूपमेव। एतद्घटकैकावच्छिन्नत्वञ्च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकताकत्वमेव (एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नाधेयतानिरूपितमेवाधिकरण-तायां बोध्यम्। एवञ्च अव्याप्यवृत्त्यभावाधिकरणतासाधारणकूटत्वेन व्याप्यवृत्त्यभावा-धिकरणत्वमप्यव्याप्यवृत्त्येव। प्रमेयं नास्तीत्यभावीयप्रतियोगित्वस्य वृत्त्यवृत्तिप्रमेय साधारणमिव प्रमेयवान्नेति भेदीयप्रतियोगितावच्छेदकत्वस्य वृत्त्यवृत्तिप्रमेयसाधारणमिव तादृशकूटत्वेनोभयसाधारणत्वं बोध्यम्। तथा च संयोगीययावद्विशेषाभावाधिकरणत्वे (मूलादि) सावच्छिन्नत्वस्य (शाखादि) अनेकावच्छिन्नाभावकूटाधिकरणत्वस्य वृक्षावयव-

त्वेनैव देशावच्छिन्नतया एकानवच्छिन्नत्वसत्त्वेन (यत्रानेकावच्छिन्नत्वं तत्रैकानवच्छिन्नत्वस्य सत्त्वात्) सावच्छिन्नत्वैकानवच्छिन्नत्वोभयस्यैव संयोगीययावद्विशेषाभावाधिकरणत्वे सत्त्वेन तादृशोभयाभावस्यासत्त्वात् । साधनाधिकरणे वृक्षे तादृशाधिकरणत्वरूपोपाधेरसत्त्वेन साधनाव्यापकत्वं तत्र वर्तते । कपिसंयोगीययावद्विशेषाभावाधिकरणत्वस्य तन्मूलावच्छेद्यतयोभयाभावसत्त्वेन (सावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभावत्वेन) साध्यव्यापकत्वमपि संभवति । मूलैकमात्रावच्छेद्यत्वस्य कपिसंयोगीययावद्विशेषाभावाधिकरणत्वे सत्त्वेनैकानवच्छिन्नत्वाभावेन तादृशोभयाभावस्य तत्र सत्त्वात् । अत्र विशिष्टाभावनिवेशेऽपि न क्षतिः । समानाधिकरणोभयत्वस्यैवैकविशिष्टापरत्वरूपत्वात् । भट्टाचार्याणामुभयाभावोक्तिश्चात्र कल्पे स्वातन्त्र्येण न दृश्यते । किन्तु प्रागुक्तोभयाभाव-(सावच्छिन्नत्वैकानवच्छिन्नत्वोभयाभाव) घटकैकावच्छिन्नत्वम् एकप्रकारेण निरुद्ध्याथवेत्यादिना प्रकारान्तरेण तस्यैव निर्वचने उभयाभावात्मकत्वमिति ग्रन्थलाघवानुरोधेनापि तथोक्तिसंभवेन वा पूर्वपक्षानवकाशादिति चेद् उपाधिसाध्ययोः सामान्यव्याप्त्यनिर्वाहस्याकिञ्चित्करतया निरवच्छिन्नत्वरूपैकावच्छिन्नत्वनिवेश एव लाघवमित्याशयेनाह—

**"एकावच्छेदेन" इत्यनेन निरवच्छिन्नवृत्तित्वविशिष्टस्य विवक्षितत्वादिति जा० टी० ।**

किञ्चिदनवच्छिन्नवृत्तिकत्वविशिष्टस्य संयोगीययावद्विशेषाभाववत्वस्योपाधित्वेन विवक्षिततया तस्य च संयोगसामान्याभाववति गुणे सत्त्वे बाधकाभावाद् भवत्युपाधेः साध्यव्यापकत्वम् । संयोगीययावद्विशेषाभावरूपसाधनवति वृक्षे निरवच्छिन्नत्वविशिष्टसंयोगीययावद्विशेषाभावरूपोपाधेरसत्त्वेन साधनाव्यापकत्वं बोध्यम् । अधिकरणतामात्रस्याधिकरणवृत्त्यसाधारणधर्मावच्छिन्नतया देशकालेत्युक्ते एकधर्मावच्छिन्ननिरूपिताधिकरणत्वस्यैकत्वे गुणनिष्ठस्य द्रव्यादिनिष्ठस्य चाधिकरणत्वस्याविवक्षितत्वमेव स्यात् अनवच्छिन्नत्वमेव वा स्यादिति देशकालानवच्छिन्नत्वं वृत्तित्वविशेषणतयोपात्तम् । तथा च तादृशाधिकरणत्वे गुणवृत्तित्वमनवच्छिन्नम् (निरवच्छिन्नम्) । वृक्षादिवृत्तित्वञ्च सावच्छिन्नमिति दोष इति । (अधिकरणतायाः अधिकरणवृत्त्यसाधारणैकधर्मा

वच्छिन्नत्वेनैकत्वे संयोगीयविशेषाभावस्य गुणे निरवच्छिन्नत्वं द्रव्ये सावच्छिन्नत्वमिति कथनमसङ्गतम्। एकत्र विरुद्धधर्मयोरसत्त्वात्, अतो देशकालानवच्छिन्नत्वं वृत्तित्व-विशेषणतयोपात्तम्। तथा च गुणवृत्तित्वं संयोगीयविशेषाभावे निरवच्छिन्नत्वम्। वृक्षादि द्रव्यवृत्तित्वं सावच्छिन्नत्वं प्रकृते विवक्षितमिति संयोगीयविशेषाभावाधिकरणत्वस्यैकत्वेऽपि देशकालयोर्भेदमादाय निरवच्छिन्नत्वसावच्छिन्नत्वे बोध्ये)।

ननूपाधेर्व्यभिचारोन्नायकतया व्याप्तिबुद्धावेव विरोधितया साध्यसाधनयोः प्रकृते सामान्यत एव व्याप्तेर्गृहीतत्वेन तत्र सामान्यत एव साध्योपाध्योर्व्याप्ति-विरोधित्वं वाच्यम्। अन्यथा धूमव्यापकमहानसीयतृणादेर्महानसीयवह्निव्यापकता-बुद्धेर्वह्नित्वेन धूमत्वेन व्याप्तिबुद्धौ विरोधित्व स्यात्। सामान्यतश्च साध्यो-पाध्योर्व्याप्तिर्न संभवति। कपिसंयोगाभाववति निरवच्छिन्नकपिसंयोगीयविशेषाभाव-कूटवत्वस्य व्यभिचारित्वादित्याशयेन शङ्कते।

**न च तथापि कपिसंयोगाभाववति वृक्षे निरवच्छिन्नवृत्तित्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादुपाधेः साध्याव्यापकत्वमिति वाच्यमिति जा० टी०।**

जात्यवच्छिन्नाभावस्य जातिमात्रावच्छिन्नाभावस्येत्यर्थः। कपिसंयोगाभावस्य च कपिप्रतियोगिकत्वसंयोगत्वधर्मद्वयावच्छिन्नप्रतियोगिताकाभावस्य अतथात्वेन जाति-मात्रावच्छिन्नप्रतियोगिताकाभावत्वाभाववत्वेन तं प्रति कपिसंयोगाभावं प्रति तदीययावद्विशेषाभावस्य कपिसंयोगीययावद्विशेषाभावस्य उक्तरूपेण निरवच्छिन्न-वृत्तिकत्वविशिष्टकपिसंयोगीययावद्विशेषाभावत्वरूपेण क्षत्यभावात् यो यज्जाति-मात्रावच्छिन्नाभाववान् स तज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगि-ताकयावदभाववानित्यत्र व्याप्तौ निरवच्छिन्नवृत्तिकत्वविशिष्टतज्जातिसमानाधि-करणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावद्विशेषाभावस्यैवोपाधित्वं तस्य साध्यवति गुणे वृत्तित्वेन तदभावस्यासत्त्वात्, तत्रान्याभावस्याप्रतियोगित्वमुपाधौ वर्तते इति साध्यव्यापकत्वमुपाधौ भवति। उक्तव्याप्तौ साध्यविधया प्रवेशादिति।

**जात्यवच्छिन्नाभावस्यैवोक्तव्याप्तौ साध्यविधया प्रवेशादिति जा० टी०।**

साध्यसाधनयोर्व्याप्तौ व्यभिचारवारणाय यज्जात्यवच्छिन्नाभावप्रवेशस्य (यज्जातिमात्रावच्छिन्नाभावप्रवेशस्य) उक्तत्वादित्यर्थः। तेन साध्यसाधनयोर्व्याप्तौ जातिप्रवेशस्य प्रागेव कृतत्वेनोक्तशङ्कायां न सन्दर्भविरोधः। एकावच्छेदेन तदीययावद्विशेषाभावस्योपाधित्वादिति दीधितौ कपिसंयोगाभावमादायोपाधिव्याप्ति-भङ्गशङ्कायां जातिप्रवेशस्य स्मारितत्वात्। पूर्वप्रविष्टजातिप्रवेशोऽत्र स्मारितो न तु नवीनीकृतो येन दीधितौ न्यूनता स्यात्। जात्यवच्छिन्नाभावस्य जातीतरानवच्छिन्नप्रतियोगिताकाभावोऽर्थः। कपिसंयोगाभावस्य कपिप्रतियोगिकत्वसंयोगत्व-धर्मद्वयावच्छिन्नप्रतियोगिताकाभावत्वेन प्रकृतव्याप्तौ तस्याग्राह्यत्वेन साध्योपाध्योः परस्परव्यापकत्वेन साध्यव्यापकत्वमिति तस्योपाधित्वं सगतम्।

अतएव (जातिप्रवेशस्य) प्रकृतग्रन्थेन स्मारितत्वेन जातिप्रवेशस्या-नवीनत्वादेव)। उपाधिसंपत्त्यर्थं जात्यवच्छिन्नाभावप्रवेशो (जातिमात्रावच्छिन्ना-भावप्रवेशो)नोचित इति शङ्काऽपि निरस्ता। कमपि प्रविश्य शङ्का न कर्तव्या, वस्तुस्थितौ शङ्का भवतीति शङ्का निरस्ता बोध्या। अत्र जातेः प्रवेशः पूर्वमेव कृतो न तु नवीनः क्रियते। व्यभिचारवारणायैव तत्(जाति)प्रवेशस्य प्रागुक्तत्वादिति। जात्यवच्छिन्नाभावश्च संयोगघटोभयाभावादिकमादाय सिद्ध-साधन(तदुभयाभावस्य वृक्षे सर्वसंमतत्वात्)वारणाय जातीतरधर्मानवच्छिन्नप्रति-योगिताकाभावरूपः तज्जातिगतैकत्ववृत्तिप्रतियोगिताकाभावपर्यवशायी। प्रतियोगि-ताया रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेद-कत्वसंबन्धेन। नातः संयोगत्वरूपजातेः कपिसंयोगाभावप्रतियोगितावच्छेदकत्वेऽपि दोषतादवस्थ्यमिति भावः।

**न चाभिघातादि (संयोग) सामान्याभावस्य वृक्षे सत्त्वात् तत्र (च) निरवच्छिन्नवृत्तिकत्वविशिष्टस्य तदीययावद्विशेषाभावस्यासत्त्वादेवोपाधेः साध्याव्यापकत्वमिति वाच्यम्। गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशादिति जा० टी० ।**

अयमभिप्रायः यत्त्वतत्त्वघटितसामान्यव्याप्तौ तदेकविशेषसाध्यव्यापकत्व-तादृशसाधनाव्यापकत्वयोरेकत्र ग्रहोऽपि विरोध्यनुभवात् (तदेकविशेषसाधना-व्यापकत्वयोरेकत्र साध्यसाधनरूपैकत्रानुभवविरोधः) गुणविभाजकतज्जातिसामानाधि-करण्योभयावृत्तिधर्मावच्छिन्नकूटोऽपि च साधनविशेषः। यत्त्वतत्त्वघटितस्थलवद् बह्नि-धूमादिस्थले महानसीयवह्न्यादेर्व्यापकत्वाप्रतिभासनान्न दोषः । एतेन साध्यसाधन-व्याप्तौ जात्यवच्छिन्नाभावप्रवेशवद् गुणविभाजकजात्यवच्छिन्नाभावप्रवेशप्रयोजन-विरहात् उपाधिसंपत्त्यर्थं तत्प्रवेशश्चानुचित इति निरस्तम्। निरवच्छिन्नवृत्तिकत्व-विशिष्टसंयोगीययावद्विशेषाभावस्याप्युपाधित्वं यद्यपि संभवति । (संयोगाभाव-साध्यके तस्योपाधित्वं संभवति) । तथापि सामान्याव्याप्त्यनुरोधेन सामान्य एवोपाधिरुक्तः, गुणविभाजकजातेरेव हेतुसाध्ययोः प्रवेशादित्यनेन । अन्यथा शब्दजनकतावच्छेदकीभूताभिघातत्वरूपजातिमात्रावच्छिन्नाभावस्याभिघातरूपसंयोग-सामान्याभावस्य वृक्षे उभयवादिसिद्धतया तत्र निरवच्छिन्नवृत्तिकत्वविशिष्टस्याभि-घातीययावद्विशेषाभावस्यासत्त्वात्। "यत्र जातिमात्रावच्छिन्नाभावस्तत्र निरवच्छिन्न-वृत्तिकत्वविशिष्टतज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभाव इति व्याप्तौ व्यभिचारापत्तेः। विशेषव्याप्तौ च विशेषोपाधिरग्रे वक्ष्यत एवेति (निर्गुणत्वादेरुपाधित्वाच्चेत्यग्रे वक्ष्यते)। गुणविभाजकजातित्वञ्च गुणत्वव्याप्यत्वे सति गुणत्वव्याप्याव्याप्यजातित्वम्। तदपि (गुणत्वव्याप्यजातित्वमपि) गुणत्व-समानाधिकरणभेदप्रतियोगितावच्छेदकजातिमदन्यजातित्वम् । जातिमत्ता च स्व-सामानाधिकरण्य,स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन। गुणत्वसमा-नाधिकरणभेदः, रूपं संयोगो नेत्याकारकः, तत्प्रतियोगितावच्छेदकं संयोगत्वं तत्। संयोगत्वविशिष्टासंयोगत्वव्याप्या अभिघातत्वरूपा जातिः, तत्र संयोगत्वसामानाधि-

करण्यम् अभिघाताख्यसंयोगे वर्तते, नोदनाख्ये संयोगे संयोगत्वाधिकरणे नोदनं नाभिघात इति भेदीयप्रतियोगितावच्छेदकत्वम् अभिघातत्वे वर्तते इति गुणत्वव्याप्यसंयोगत्ववज्जातिरभिघातत्वरूपा तदन्यत्वं संयोगत्वे वर्तते नत्वभिघातत्वे इति गुणत्वव्याप्यजातिः संयोगत्वं न त्वभिघातत्वमिति बोध्यम् ।

वस्तुतस्तु गुणविभाजकसूत्रजन्यबोधीयोद्देश्यतावच्छेदकत्वमेव गुणविभाजकत्वं बोध्यम् । अस्तु सामान्यव्याप्तौ सामान्यस्यैवोपाधेः प्रदर्शनीयत्वं तथापि न क्षतिरित्याशयेनाह ।

**यत्तु एकावच्छेदेनेत्यस्य परस्परानवच्छेदकानवच्छेद्यवृत्तिकत्वविशिष्टेत्यर्थमाहुरिति जा० टी० ।**

संयोगसामान्याभाववति गुणे तत्तत्संयोगाभावस्य परस्परानवच्छेदको यः परस्परसंयोगाधिकरणो देशः, तदनवच्छिन्नवृत्तिकत्वविशिष्टस्य तत्तत्संयोगीययावद्विशेषाभाववत्त्वस्य सत्त्वादुपाधेः साध्यव्यापकता । संयोगीययावद्विशेषाभावरूपहेतुमति च वृक्षे तत्तत्संयोगाभावयोः परस्परानवच्छेदकदेशानवच्छिन्नवृत्तिकत्वविशिष्टस्य तादृशसंयोगीययावद्विशेषाभावस्यासत्त्वात् निरुक्तोपाधेर्हेतुव्यापकताऽपि बोध्येति विवृतिः । तथा च परस्परानवच्छेदकानवच्छिन्नवृत्तिकत्वविशिष्टतदीययावद्विशिष्टाभावस्योपाधेः गुणावच्छेदेन संयोगसामान्याभावव्यापकत्वं सामान्यत एव संभवति । कपिसंयोगसामान्याभाववति, अभिघातरूपसंयोगसामान्याभाववति च वृक्षे मूलस्यान्तर्देशस्य च तदीयविशेषाभावमात्रावच्छेदकत्वेन परस्परानवच्छेदकत्वविरहेण परस्परानवच्छेदकतत्तच्छाखाद्यनवच्छिन्नमूलान्तर्देशाद्यवच्छिन्नवृत्तिकत्वविशिष्टतत्तदीययावद्विशेषाभावयोः सत्त्वात् साधनव्यापकत्वं तु न संभवति । तथा च साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधौ घटते । संयोगीययावद्विशेषाभाववति वृक्षे तादृशवृत्तिकत्वविशिष्टस्य तस्योपाधेरसत्त्वात् साधनाव्यापकत्वम् । देशमात्रस्यैव तत्र परस्परानवच्छेदकतया

(परस्परानवच्छेदकदेशानवच्छिन्नत्वस्य) निरवच्छिन्नवृत्तित्वे एव सत्त्वादिति भावः। (साधनाव्यापकत्वस्य च सत्त्वात् भवति उपाधौ साध्यव्यापकत्वे सति साधनाव्यापकत्वम्)। न च परस्परप्रवेशादननुगमः। तदीयविशेषाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वविशिष्टाधिकरणत्वस्योपाधित्वेन विवक्षणात्। वै० स्वावच्छिन्ननिरूपितत्व, स्वविशिष्टानवच्छिन्नत्वोभयसंबन्धेन। वै० स्वश्रययत्किञ्चिदभावानधिकरणतानवच्छेदकत्वसंबन्धेन। अथवा तादृशाभावत्व(यदीयविशेषाभावत्व) विशिष्टाधिकरणताकूटवत्त्वमेवोपाधिः। वै० प्रागुप्तोभयसंबन्धेन। (यज्जातिसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावत्वविशिष्टाधिकरणताकूटवत्त्वमेवोपाधिः। वै० स्वावच्छिन्ननिरूपितत्वस्वविशिष्टानवच्छिन्नत्वोभयसंबन्धेन। अत्र वै० स्वाश्रययत्किञ्चिदभावाधिकरणतानवच्छेदकत्वसंबन्धेन)। संबन्धे यत्किञ्चित्वप्रवेशात् संयोगविशेषाभावत्वाश्रयाभावाधिकरणतानवच्छेदकदेशाप्रसिद्ध्यादिप्रयुक्तोपाध्यसंभवानवकाशः। अत्र परस्परावच्छेदकं यद् यद् तदनवच्छिन्नत्वं तु न प्रवेश्यम्। तस्य निरवच्छिन्नत्वे एव पर्यवसानेन पूर्वकल्पाविशेषात्। निरवच्छिन्नत्वविशिष्टतदीययावद्विशेषाभावस्योपाधित्वमिति पूर्वकल्पापेक्षया अस्य यत्तुकल्पस्याविशेषापत्तिः स्यात्। वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वपक्षे, अवच्छेदकतासंबन्धेन तदभावा(यदीयविशेषाभावा)धिकरणीभूतदेशस्यावच्छेद्यतासंबन्धेनाभाववत्त्वमेकानवच्छिन्नत्वं व्याप्यवृत्तिरूपादिविशेषाभावकूटाधिकरणताया अपि संग्राहकं भविष्यतीत्याशयेन चिन्त्यमित्युक्तम्। (एकावच्छेदेनेत्यस्य अवच्छेदकतासंबन्धेन तदभावा(तदीयविशेषाभावा)धिकरणीभूतदेशस्यावच्छेद्यतासंबन्धेनाभाववत्त्वेनेत्यर्थः। तथा च तद्विशिष्टयावद्विशेषाभाववत्त्वमुपाधिरिति।

केचित्तु आहुः तच्चिन्त्यमित्युक्तम्। बहुपुस्तकेषु तादृशार्थप्रतिपादकः केचित्त्वादिग्रन्थ एव नोपलभ्यते। अत्रावच्छेद्यत्वसंबन्धावच्छिन्नप्रतियोगिताकाभावनिवेशनञ्च सामान्याभावनिवेशपक्षे लाघवानुरोधेनैव। अवच्छेद्यत्वस्य प्रतियोगित्वे तत्र स्वरूपसंबन्धावच्छिन्नत्वस्य प्रवेश्यत्वात्। अवच्छेदकत्वसंबन्धावच्छिन्नाभाववद् यद् यद्

तन्निष्ठावच्छेदकत्वाभावनिवेशे च गगनादीनामपि यत्पदार्थतया तन्निष्ठाव्याप्य-वृत्तितानियामकावच्छेदकत्वाप्रसिद्ध्या अभावाप्रसिद्धिः स्यादिति तन्निवेशः । वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वेऽपि तत्संबन्धावच्छिन्नप्रकारता-निरूपितविशेष्यत्वाभाव एव प्रमीयविशेष्यत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताको निवेश्य इति बोध्यम् ।

**तत्र व्याप्यवृत्तिरूपत्वादीनां विशेषाभावस्यावच्छेदकाप्रसिद्ध्या तदनवच्छेदकत्वस्याप्यसंभवेन तत्रैव साध्याव्यापकत्वतादवस्थ्यादिति दिगिति जा० टी० ।**

न च व्याप्यवृत्तिरूपाभावाधिकरणताया अप्यवच्छेदकत्वस्य संसर्गधर्म-विशेषादौ प्रसिद्धिसंभवात्, तत्साधारणा(धर्मसंसर्गसाधारणा)वच्छेदकत्वोपादाने क्षत्यभावान्न दोष इति वाच्यम् । धर्मसंसर्गादिनिष्ठावच्छेदकत्वाव्याप्यवृत्तिता-नियामकावच्छेदकत्वादिसाधारणावच्छेदकत्वस्यैकत्वाभावादिति । यद्यवच्छेदकतात्व-द्वयमन्यतरत्वेन निवेश्य स्वनिरूपितान्यतरवदभाववत्वमेवानवच्छेदकत्वं तदा न कोऽपि दोष इति विभाव्यम् । (धर्मनिष्ठावच्छेदकत्वस्य संसर्गनिष्ठावच्छेद-कत्वस्याव्याप्यवृत्तिनियामकदेशकालनिष्ठावच्छेदकत्वस्य च विभिन्नत्वरूपेणाव्याप्य-वृत्तितानियामकावच्छेदकत्वस्य व्याप्यवृत्तिरूपत्वाद्यभावसाध्यकस्थले यदीयविशेषा-भावस्यावच्छेकत्वाप्रसिद्ध्या तादृशोपाधेरप्रसिद्ध्यापत्तेः । साध्योपाध्योः व्याप्त्यनुपपत्तेः । यदि धर्मसंसर्गादिनिष्ठावच्छेदकतात्वाव्याप्यवृत्तितानियामकावच्छेदकतात्वद्वयम् अन्य-तरत्वेन निवेश्य स्वनिरूपितान्यतरदभाववत्वेनानवच्छेदकत्वं विवक्षितं तदा न कोऽपि दोषः । अव्याप्यवृत्तित्वनियामकावच्छेदकत्वस्य प्रसिद्ध्या तदभावस्य प्रसिद्धत्वात्) ।

**संयोगसामान्याभावस्य तन्मते (प्राचीनमते) केवलान्वयितया तत्साध्यतायामभाववत्वादित्यस्यैव सम्यक्त्वादिति भाव इति जा० टी० ।**

अथ परमाणुद्वयसंयोगस्याभावो न परमाणौ संभवति तस्य (परमाणोः)

अन्वयवत्वादिति कथं संयोगसामान्याभावस्य केवलान्वयित्वं संभवति। परमाणौ तस्यासत्त्वात्। तथा सति परमाणावेव व्यभिचारवारणाय (संयोगसामान्याभावरूपसामान्याभाववति परमाणौ अभाववत्त्वरूपहेतोः सत्त्वात्, परमाणुः संयोगसामान्याभाववान् अभाववत्वादित्यत्र व्यभिचारवारणाय) हेतुविशेषणस्य (अभाववत्वरूपहेतुविशेषणस्य संयोगस्य) सार्थक्यसंभवात् (संयोगस्य) कथं वैयर्थ्यमुक्तम्। भट्टाचार्येण च प्राचीनमतग्रन्थ एव वृक्षत्वादिना संयोगसामान्यं व्यवस्थाप्य(संयोगसामान्याभावस्य द्रव्ये सत्त्वं वदतां प्राचीनानां मते) गगनादौ संयोगाभावसाधनपरतां सामान्यानुमानस्य प्रतिपादितम् तद्ग्रन्थे सुतरामुक्ता शङ्का। (अभाववत्त्वस्य हेतुत्वेनानिर्वाहे संयोगसामान्याभावसाध्यके संयोगयावद्विशेषाभाववत्त्वहेतौ विशेषणस्य संयोगस्यावैयर्थ्यशङ्का)। यत्तु वृक्षत्वावच्छेदेन वृक्ष इव द्रव्यत्वावच्छेदेन परमाणावपि द्रव्ये संयोगसामान्याभावसंभवेनः संयोगसामान्याभावस्य सर्वत्र विद्यमानत्वेन केवलान्वयित्वसंभवः। तथः च संयोगसामान्याभाववान् संयोगीययावद्विशेषाभाववत्त्वादित्यत्राभाववत्त्वस्यैव हेतुत्वसंभवेन हेतुविशेषणस्य संयोगस्य वैयर्थ्यात् व्यर्थविशेषणत्वं संगतमिति। तन्न, तथा सति द्रव्यावच्छेदेन न कस्यापि गुणस्य संभव इति तत्सामान्याभावस्यापि(गुणसामान्याभावस्यापि) सत्तया (द्रव्ये सत्तया) (निर्गुणत्वस्य) उपाधिप्रदर्शनासङ्गतेः। तस्य साधनव्यापकत्वात्। न चादिपद (निर्गुणत्वादेरित्यत्रादिपद)ग्राह्य द्रव्यभिन्नत्वस्योपाधितासंभवः। तस्यापि (द्रव्यभिन्नत्वस्यापि) प्रमेयत्वावच्छेदेन द्रव्यवृत्तित्वसंभवात्। (तथा च द्रव्यभिन्नत्वस्य साधनवति वृक्षेऽसत्त्वेन साधनाव्यापकत्वमिति न तस्योपाधित्वं संभवति)। तस्मात् साधारणधर्ममात्रावच्छेदेनैव स्वस्मिन् अभावसत्त्वमस्मिन् मते न वाच्यम्। वृक्षत्वावच्छेदेनेत्यादौ वृक्षपदस्यापि तद्व्यक्तिपरत्वमेव बोध्यम्। एवञ्च वृक्षत्वावच्छेदेन वृक्ष इव परमाणुत्वावच्छेदेनापि न तत्र (परमाणौ)तत्सत्त्वसंभवः। (संयोगसामान्याभावसत्त्वसंभवः।) एवं द्रव्यत्वावच्छेदेन परमाणौ द्रव्ये तत्स्वीकारे (संयोगसामान्याभावस्वीकारे) वृक्षेऽपि तत्र तत्सत्त्वम् (संयोगसामान्या-

भावसत्त्वम्) अवारितं स्यादिति भट्टाचार्यस्य वृक्षपक्षकानुमान(संयोगसामान्या-भावानुमान) परित्यागो निर्बीजः स्यादिति तद्ग्रन्थासंगतिः (हेतुविशेषणस्य संयोगस्य वैयर्थ्यशङ्काया असङ्गतिः) दुर्वारेति चेत् । मैवम्, परमाणावपि दिग्विशेषावच्छेदेन संयोगसामान्याभावसत्त्वसंभवात् । उक्तञ्च वैशेषिकसूत्रोपस्कारे शङ्करमिश्रपादैः "परमाणावपि दिग्विशेषस्यावच्छेदकत्वसंभव इति" ।

**चिन्त्यमिति जा० टी० ।**

चिन्ता च तत्र दिग्विशेषस्यावच्छेदकत्वाननुभव एव । यद्वा परमाणौ संयोगाभावः प्रलयावच्छेदेन वर्तते इति संयोगसामान्याभावस्य केवलान्वयित्व-संभवः । न चैवमुत्पत्तिकालावच्छेदेन संयोगसामान्याभावसत्त्वं वृक्षेऽपि स्यादेवेति तत्साधनायासो (वृक्षे सामान्याभावसाधनायासो) वृथेति वाच्यम् । (न च वृक्षः संयोगसामान्याभाववान् तदीययावद्विशेषाभावादित्यनुमानेन वृक्षे संयोगसामान्या-भावसाधनं व्यर्थमिति वाच्यम्) । समवायेन गुणं प्रति तादात्म्येन द्रव्यत्वेन द्रव्यस्य कारणत्वे एवोत्पत्तिकाले संयोगाद्यभावस्तत्रैव (तादृशकार्यकारणभावे एव) न मानम् । लाघवेन तत्तद्गुणविशिष्टावयविनं प्रति तत्तज्जातीयगुण-विशिष्टावयवत्वादिना कारणत्वस्यैव वाच्यत्वादिति चिन्त्यम् । भट्टाचार्यैस्तु वृक्षे संयोगसामान्याभावसाधनपरित्यागस्तु प्रौढिप्रकटनाशया कृतः । तैरपि प्राचां मतेन वृक्षे यावत्संयोगाभावोऽभ्युपेय एवेति न संयोगाभावे केवलान्वयित्व-प्रतिपादकस्य वैयर्थ्यप्रतिपादकस्य तद्ग्रन्थस्यासङ्गतिरित्यलम् ।

ननु यद्यपि वृक्षे संयोगसामान्याभावस्योपाधेर्न साध्यव्यापकत्वनिश्चय-संभवः । न चोपाधौ साध्यव्यापकत्वसंशयादस्तु सन्दिग्धोपाधितेति वाच्यम् । साध्यवत्तया निश्चित उपाधिसंशयस्थले एव संदिग्धोपाधेः स्वीकरणीयत्वात् । अन्यथा (उपाधौ साध्यव्यापकत्वसंशयेन संदिग्धोपाधिस्वीकारे) पक्षे साध्यसंशयस्य सत्त्वेनोपाधौ साध्यव्यापकत्वसंशयात् पक्षेतरत्वस्य सर्वत्रोपाधित्वप्रसङ्गात् । तथापि साध्योपाध्योः साध्यसाधनयोश्च यत्र व्याप्तिग्राहकसाम्यं तत्रैव संदिग्धोपाधेः

स्वीकारेण प्रकृते व्याप्तिग्राहकवैपम्यस्य तर्कस्वरूपस्य विरहेण संदिग्धोपाधिः संभवत्येवेति तत्फले (उपाधिफले) व्यभिचारग्रह एव शङ्कामाविष्करोति । अत्र निर्गुणत्वोपाधेर्न स्वभावेन साध्याभावोन्नायकतया दोषत्वं, संयोगस्यैव साध्याभावतया वृक्षादौ तस्येष्टत्वात् । नापि व्यभिचारोन्नायकतया तत एव तथापि ।

**स्वाव्याप्यत्वेन साध्यस्य पक्षवृत्तित्वाभावोन्नायकतया दूषकत्वं बोध्यमिति जा० टी० ।**

वस्तुतस्तु संयोगत्वं यदि किञ्चिदवच्छिन्नद्रव्यनिष्ठाभावप्रतियोगितावच्छेकं स्यात् तदा किञ्चिदवच्छिन्नद्रव्योत्पत्तिका(संयोगा)वृत्ति स्यात् कपिसंयोगवदिति तर्केण बाधोन्नीतपक्षेतरत्ववद् निश्चितोपाधितैव । वृक्षत्वास्यावच्छेदकत्व(संयोगसामान्याभावावच्छेदकत्व)शङ्का चाग्रे (दीधितौ "न च प्रतियोग्यनवच्छेदकतयेत्यादिना) निराकरिष्यति ।

यद्वा संयोगसामान्याभावो यदि गुणाभावद्रव्यत्वाद्यभावव्यभिचारी स्यात् तर्हि (गुणादिः व्यापको यस्येति बहुव्रीहिः) गुणादिव्यापकप्रतियोगिको न स्यात् रूपाद्यभाववत् । व्याप्याभावव्याप्यत्वनियतो व्यापकाभावे गृहीतोऽत्र विपक्षबाधकः । यस्य च न यद्व्यापकप्रतियोगिकत्वं न तस्य तदभावव्याप्यत्वं यथा वह्न्यभावस्य न धूमाभाव इति व्यतिरेकस्यापि ग्रहः । न च विपक्षबाधकनियमे व्याप्यवृत्त्यभावत्वमुपाधिः । कथमन्यथा कपिसंयोगाभावस्य नैतद्वृक्षत्वाभावव्याप्यत्वमिति वाच्यम् । संयोगाभावे तत्तद्दिग्देशस्यावच्छेदकत्वविरहात् । वृक्षत्वादीनामवच्छेदकत्वस्य निराकरिष्यमाणत्वादिति निश्चितोपाधिता । अतएव (निश्चितोपाधित्वादेव) तथापीत्यादिग्रन्थासङ्गतिरपि न । अन्यथा वृक्षे संयोगसामान्याभावस्य गुणाद्यभावस्य संदिग्धत्वेन नानुमापकत्वसंभवः । हेतुमत्तानिश्चयस्यैवानुमितिजनकत्वादित्यसङ्गतिः स्यादिति ।

अथवा स्वमतसिद्धव्याप्तिमतो विनानुकूलतर्केण संयोगयावद्विशेषाभावस्य

हेतुतया यथोपन्यासः तथा स्वमतसिद्धगुणाभावव्याप्यत्वस्य हेतुतयोपन्यासः संभवत्येव । व्यभिचारसंशयस्य यथा भवतां न प्रतिबन्धकता तथास्माकमपि । एकतरव्याप्तिग्राहकतर्कावतारे तुल्यबलत्वाभावात् न सत्प्रतिपक्षता । तेन पर्वतो बह्निमान् धूमादित्यत्र बह्निः पर्वतावृत्तिः पर्वतेतरत्वादित्यस्य न सत्प्रतिपक्षतेति हृदयम् ।

ननु यो यद्धर्मस्यानवच्छेदकः स तदभावस्यावच्छेदक इति व्याप्त्यैव वृक्षत्वादेः संयोगाभावावच्छेदकत्वं सेत्स्यतीत्याशङ्क्य निराचष्टे न चेति । गुणादीति ।

**तथा च व्यभिचारान्नोक्ताव्याप्तिरिति भावः इति जा० टी० ।**

आपत्तेरापाद्यव्यतिरेकनिश्चयाधीनतया प्रसङ्गादित्युक्त्या व्यभिचारलाभः ।

न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेः अभावस्या(संयोगसमान्याभावस्या)-वच्छेदकत्वमिति वाच्यम् । यदभावप्रतियोगितानवच्छेदकं यद् भवति तद् तदभावावच्छेदकं भवत्येवं सामान्यव्याप्तिर्न वाच्यम् । तथा सति गुणाद्यन-वच्छेदकप्रमेयत्वादेः तदभावावच्छेदकत्वप्रसङ्गात् । तथा च प्रमेयत्वस्य गुणाद्यन-वच्छेदकत्वेऽपि गुणाद्यभावावच्छेदकत्वं यथा न भवति तथा वृक्षत्वस्य संयोगाद्यन-वच्छेदकत्वेऽपि संयोगसामान्याभावस्यावच्छेदकत्वं न भवति । आपत्तिरापाद्यव्यतिरेक-निश्चयाधीना भवति । गुणाभावप्रतियोगिनां गुणानामनवच्छेदकत्वस्य प्रमेयत्वे सत्त्वात् तत्र (प्रमेयत्वे) गुणाभावावच्छेदकत्वस्य साध्यस्यासत्त्वेन व्यभिचारान्नोक्ता-व्याप्तिः साधीयसी । तथा च वृक्षत्वे संयोगसामान्याभावावच्छेदकत्वरूपापाद्य-व्यतिरेकनिश्चयस्यासत्त्वेन तस्या आपत्तेर्दातुमशक्यत्वादिति भावः । उक्तव्याप्तौ प्रमेयत्वे व्यभिचारदर्शनेन तस्या असत्त्वादिति भावः । न च वायुत्वादौ रूपाद्यनवच्छेदकतया गृहीत रूपाद्यभावस्य (वायुत्वं रूपाद्यनवच्छेदकं भवति रूपा भावावच्छेदकं यथा भवति) तत्तन्मूलशाखादौ तत्तत्संयोगानवच्छेदकतया ज्ञाते तत्तद-

भावावच्छेदकत्वस्य च गृहीततयोक्तसामान्यव्याप्तेरेव (यो यस्यानवच्छेदकः तदभावस्यावच्छेदक इति सामान्यव्याप्तेरेव) प्रमेयत्वेऽपि गुणाद्यभावावच्छेदकत्वं कुतो न सिद्ध्येदिति वाच्यम् । अतिप्रसक्तेः । स्वरूपसंबन्धावच्छिन्नावच्छेदकत्वाभावस्य निर्णीततयोक्तावच्छेदकत्वाभावनिर्णयेन प्रतिबन्धात् । (प्रमेयत्वे स्वरूपसंबन्धावच्छिन्नगुणाभावावच्छेदकत्वाभावनिश्चयेन तत्र गुणाभावावच्छेदकत्वग्रहस्याशक्यत्वात्)। देशकालादावेवोक्तव्याप्तेः (यदभावप्रतियोग्यनवच्छेदकं यद् भवति तद् तदवच्छेदकं भवतीति व्याप्तेः) प्रामाणिकतया तदितरत्र (देशकालभिन्ने) तन्नियमे मानाभावाच्च । यदभावप्रतियोग्यनवच्छेदकं यद् भवति तद् तदभावावच्छेकं भवतीति नियमे मानाभावाच्च । दीधितावापत्तिदानं च पराभ्युपगतव्याप्तिमाश्रित्य तात्पर्यं च व्यभिचार एव सर्वत्र व्याप्त्यभ्युपगमापत्तिस्थले इति बोध्यम् ।

ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यावच्छेदकत्वादिति विशिष्यैव व्याप्तिर्वाच्या, प्रमेयत्वसत्त्वादेः पक्षसमत्वादतः स्वरूपासिद्धिमाह ।

**यथा चेति । प्रतिदण्डमिति भिन्नत्वेऽपि परेणान्वय इति जा० टी० ।**

ननु वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेकत्वादित्यादि विशेषव्याप्तिर्यथा संभवति । तथा प्रमेयत्वं सत्त्वं वा गुणसामान्याभावावच्छेदकं गुणसामान्यानवच्छेदकत्वादित्यपि विशेषव्याप्त्या प्रमेयत्वादौ गुणसामान्याभावावच्छेदकत्वं सिद्ध्यतु इत्यत आह प्रमेयत्वसत्त्वादेरिति पक्षसमत्वादिति पक्षतुल्यत्वादिति । तथा च प्रमेयत्वसत्त्वादावपि गुणसामान्याभावस्य संदिग्धतया पक्षसमे व्यभिचारस्य व्याप्तिग्रहाप्रतिबन्धेन विशेषव्याप्तिग्रहोत्पत्तौ अविवाद इति भावः । तथा चोक्तं पक्षे पक्षसमे वा व्यभिचारो न दोषायेति विवृतिः ।

**पक्षसमत्वादिति जा० टी० ।**

इदं च साध्याभाववत्त्वांशे निश्चयरूपम् । शेषांशे संशयसाधारणं व्यभिचारज्ञानविरोधीति मतेन बोध्यम् ।

**दीधितौ यथा घटपूर्ववर्त्तित्वस्येति ।**

यथा घटपूर्ववृत्तित्वं प्रत्येकस्मिन् दण्डे विभिन्नमपि तादृशाव्यवहितपूर्ववृत्तिता सामान्यस्यावच्छेदकं भवितुमर्हति । यथा च बह्न्यधिकरणवृत्तित्वं प्रत्येकधूमनिष्ठं विभिन्नमपि तादृशवृत्तितासामान्यावच्छेदकं धूमत्वं तथा प्रत्येकावयवनिष्ठसंयोगादेर्विभिन्नत्वेऽपि संयोगसामान्यस्यावच्छेकं द्रव्यत्वं वृक्षत्वं वा स्वीकार्यमिति समुदितार्थः । एवञ्च वृक्षत्वरूपे संयोगसामान्यानवच्छेदकत्वस्यासत्त्वेन हेत्वभावात् (यस्यानवच्छेदकं यत् तत् तदभावावच्छेदकमित्यत्र हेत्वभावात्)स्वरूपासिद्धिरित्याशय इति विवृतिः ।

घटपूर्ववृत्तित्वेति। इदं च स्वरूपसंबन्धरूपकारणत्वस्योपलक्षणम् । स्वरूपसंबन्धरूपतदवच्छेदकस्य स्वसंबन्धरूपकारणतावच्छेदकत्वेनातिप्रसक्तेः संभवः । एतेन नियतपूर्ववृत्तितावच्छेदकत्वस्य कार्यपूर्वकालवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपस्य पारिभाषिकस्यैव व्यवहृतत्वस्वीकारेऽपि न क्षतिः ।

**बह्निसामानाधिकरण्यस्येति दीधितिः ।**

तथा च स्वरूपसंबन्धरूपावच्छेदकत्वघटितस्य प्राचीनमतसिद्धसाध्यसामानाधिकरण्यावच्छेदकत्वरूपव्याप्यतावच्छेदकत्वस्य नानुपपत्तिरिति भावः । ननु अव्यवहित(घटाव्यवहित)पूर्ववर्तितताया अवच्छेदकं न दण्डत्वम्, अतिप्रसङ्गात् । (घटाव्यवहितपूर्ववृत्तित्वाभाववति अरण्यस्थदण्डे दण्डत्वस्य सत्त्वात् । अनतिरिक्तवृत्तित्वरूपधर्मस्यैवावच्छेदकत्वनियमात् । अन्यथा द्रव्यत्वादेरपि घटाव्यवहितपूर्ववृत्तितावच्छेदकत्वापत्तेः । किन्तु अव्यवहितपूर्ववृत्तिजातीयतायाः (घटाव्यवहितपूर्ववृत्तिजातीयतायाः) सा च न भिन्ना । अतः संयोगस्थल एवानुरूपं दृष्टान्तमाह ।

**बह्निसामानाधिकरण्यस्येति जा० टी० ।**

संयोगस्य भिन्नत्वेन बह्निसामानाधिकरण्यस्यापि भिन्नत्वेऽपि अवच्छेदकं धूमत्वं भवति तथैव प्रत्येकावयवसंयोगस्य भिन्नत्वेऽपि संयोगसामान्यावच्छेदकं वृक्षत्वं द्रव्यत्वं वा स्यात् भवति स्वरूपासिद्धिः । यत् यदभावप्रतियोग्यनवच्छेदकं तत् तदभावावच्छेदकमित्यत्र वृक्षत्वे द्रव्यत्वे वा संयोगाभावप्रतियोगिसामान्यावच्छेदकत्वस्य सत्त्वेन भवति तत्र हेत्वभाव इति स्वरूपासिद्धिमता हेत्वाभासेन न वृक्षत्वे संयोगसामान्याभावावच्छेदकत्वं सेत्स्यति । तथा च वृक्षे न संयोगसामान्याभावः सिद्ध्यति ।

अनुकूलतर्कविरहस्थले साध्याभाववत्त्वांशे संशयात्मकव्यभिचारज्ञानमपि व्याप्तिज्ञानस्य प्रतिबन्धकमित्याशयेनाह ।

**केचित्तु कथितव्याप्तावप्रयोजकत्वम् अन्यथा तदभावानवच्छेदकत्वहेतुना तदवच्छेदकत्वमेव कुतो न वृक्षत्वादेः साध्यते, वृक्षत्वाद्यवच्छेदेन तत्तत्सयोगव्यक्तीनामसत्त्वेऽपि संयोगसामान्यस्य संभवादित्यभिप्रायकोऽयं ग्रन्थ इत्याहुः इति जा० टी० ।**

(वृक्षत्वं संयोगसामान्याभावावच्छेदकं संयोगसामान्यानवच्छेदकत्वादेरनुकूलतर्कविरहेणाप्रयोजकत्वात्, तेन हेतुना (संयोगसामान्यानवच्छेदकत्वहेतुना) संयोगसामान्याभावावच्छेदकत्वं न सिद्ध्यति । अन्यथा तुल्ययुक्त्या वृक्षत्वं संयोगसामान्यावच्छेदकं संयोगसामान्याभावानवच्छेदकत्वादिहेतुना संयोगसामान्यावच्छेदकत्वमपि संभवतीति दीधितिकृता यथेत्यादिना प्रदर्शितमिति केचिद् वदन्ति । तन्मतमुपन्यस्यति केचित्त्विति विवृतिः) । यथेत्यादिग्रन्थस्योक्तावच्छेदकत्वसाधकानुमानवाधनिरासपरतां दर्शयति वृक्षत्वाद्यवच्छेदेन तत्तत्संयोगव्यक्तीनामसत्त्वेऽपि संयोगसामान्यस्य संभवादिति । तथा च संयोगसामान्यावच्छेदकत्वस्य वृक्षत्वे संभवेन न तस्य बाधः । प्रथमक्षणे घटादौ गुणो नास्तीति व्यवहारादिकञ्च संदिग्धप्रामाण्यकमतः स्थलान्तरमाह—

**प्रलयावच्छेदेनेति जा० टी० ।**

व्यवहारेति । प्रथमक्षणे घटादौ गुणो नास्तीति शब्दप्रयोगः संदिग्धप्रामाण्यकम् । संदिग्धप्रामाण्यकमिति आप्तोक्तत्वानिश्चय इत्यादिः । प्रथमक्षणे घटादौ गुणो नास्तीति शब्दे आप्तोक्तत्वस्यानिश्चयेन संदिग्धप्रामाण्यकत्वमस्ति । नन्वाद्यक्षणावच्छिन्नो घटो गुणसामान्याभाववान् गुणसमवायिकारणस्वाव्यवहितोत्तरत्वशून्यत्वादित्याद्यनुमानमेवास्तु प्रथमक्षणे घटादौ गुणो नास्तीत्यत्र प्रमाणमिति चेन्न । द्रव्योत्पत्तौ अवयवसंयोगस्यासमवायिकारणतया तत्(संयोग)-सद्भावार्थमस्तु समवायिकारणस्य प्रथमक्षणत्वापेक्षा असमावायिकारणगुणजन्ये गुणे समवायिकाकरणं कार्येण (असमवायिकारणगुणजन्यगुणेन कार्येण) सहभावेनैवापेक्ष्यत इत्येतदर्थे नाप्रयोजकत्वशङ्काकवलितत्वमनुमानस्येति भावः । (अवयविगुणं प्रति अवयवगुणोऽसमवायिकारणम् । असमवायिकारणकपालगुणजन्यं घटगुणं प्रति घटस्य कपालगुणसहभावेन कारणत्वं न तु स्वगुणं प्रति स्वगुणपूर्ववृत्तित्वेन कारणत्वमिति घटे उत्पत्तिकालावच्छेदेन रूपासत्त्वे न प्रमाणमिति तस्मिन्नपि काले घटे गुणो वर्तते एवेत्यप्रयोजकत्वशङ्काकवलितत्वेन तत्र न प्रमाणम्) ।

**तदानीं (प्रलयकाले) जन्यभावसत्त्वे प्रलय एव व्याहन्येतेति भावः । इति जा० टी० ।**

जन्यभावानधिकरणत्वं महाप्रलयत्वमिति प्रलयावच्छेदेन गगने जन्यसंयोगसत्त्वे प्रलय एव व्याहन्येत, अतः सयोगसामान्याभावो गगनादौ वर्तते इति भावः । भावकार्यत्वं स्वाश्रय(भावकार्य)प्रागभावानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति स्वाश्रयानधिकरणस्वाश्रयप्रागभावासमानकालीनवृत्तिध्वंसप्रतियोगिवृत्ति वा कार्यैकवृत्तित्वात्, चैत्रत्ववदित्यनुमानस्यैव प्रलये प्रमाणतया तेनैव (तदनुमानेनैव) कार्यानधिकरणतयैव तत्(प्रलय)सिद्धेः । तदभावे (जन्याभावानधिकरणत्वाभावे गगने जन्यसंयोगसामान्याभावास्वीकारे) प्रलयत्वस्यैवासिद्धिप्रसङ्गादिति भावः ।

ननु महाप्रलये मानाभावात् तदवच्छेदेनेत्ययुक्तमत आह।

**तथा धूमवत्यपि विरहो दहनस्येति दीधितिः।**

मानाभावादिति। स्वत्वस्याननुगततया दृष्टान्तपक्षयोरनुगतसाध्याभावेनानुगमासंभवात् (महाप्रलयेऽनुमानासंभवात्), आगमस्य च (महाप्रलयबोधकागमस्य च) तात्पर्यानिर्णयादिना संदिग्धार्थतया प्रामाण्यनिर्णयानिर्णयात्। तथा च महाप्रलये प्रमाणमेव नास्तीति तदवच्छेदेन (महाप्रलयावच्छेदेन) गगने संयोगसामान्याभावो वर्तते इत्यत्रापि न प्रमाणमस्तीति भावः।

अथोक्तरूपेण प्रतीतिविषयत्वस्यावच्छेदकत्वाभावे, वृत्तित्वाभावे वा कल्पने कुत्रापि अभावस्याव्याप्यवृत्तित्वं न स्यादित्यस्वरसादाह—ननूक्तप्रतीतिः पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे, शिखरावच्छिन्नपर्वतवृत्तित्वाभावं वा हुताशनेऽवगाहते न तु पर्वते हुताशनाभावमिति यदि ब्रूयात् तदाऽप्याह—वृत्तेरिति। ननूक्तप्रतीतिः (इह पर्वते नितम्बे हुताशनो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्याप्यव्याप्यत्वादिति दीधितिः। इह पर्वते नितम्बे हुताशनो न शिखरे इति प्रतीतिः) पर्वतवृत्तिहुताशनावच्छेदकत्वाभावं शिखरे शिखरावच्छिन्नपर्वतवृत्तिवृत्तित्वाभावं वा हुताशनेऽवगाहते न तु पर्वते हुताशनाभावमिति यदि ब्रूयात् तदाप्याह—

**वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसंभावितत्वाच्चेति जा० टी०।**

संबन्धसत्तायाः संबन्धिसत्ताप्रयोजकतया प्रयोजकविरहे प्रयोज्यविरहस्यावश्यकत्वमित्याशयेनाह—

**तथा च यो यदवच्छेदेन यदीययत्संबन्धाभाववान् स तदवच्छेदेन तस्य तत्संबन्धावच्छिन्नाभाववानिति व्याप्त्या शिखरावच्छेदेन संयोगसंबन्धावच्छिन्नवह्न्यभावसिद्धिरिति भाव इति जा० टी०,**

यत्संबन्धवानिति। अभावश्च तत्संबन्धेन तद्वत्ताबुद्धिर्येन संबन्धेन तत्संबन्ध-

सत्तामपेक्षते तत्संबन्धावच्छिन्नप्रतियोगिताकः । तेन जलाद्यवच्छेदेन कालिकेन वह्निसंयोगाभाववति समये तदवच्छेदेन संयोगसंबन्धावच्छिन्नवह्न्यभावसत्त्वेऽपि न व्यभिचारः । तथा च संयोगेन वह्निमत्ताबुद्धिः समवायेन संयोगवत्तामपेक्षते समवायसंबन्धावच्छिन्नसंयोगसंबन्धत्वावच्छिन्नाभावः संयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नाभावप्रयोजक इति बोध्यम् । ननूक्तव्याप्तौ (यो यदवच्छेदेन यदीयसंबन्धाभाववान् स तत्संबन्धेन तस्य तत्संबन्धावच्छिन्नाभाववानिति व्याप्तौ) अप्रयोजकत्वम् । अन्यथा तुल्यन्यायेन यो यदीयतत्संबन्धवान् स तत्संबन्धेन तद्वान् इति व्याप्त्या कुण्डादिसंयोगिनो बदरादेः संयोगेन कुण्डादिमत्त्वापत्तेरित्युक्तावाह—

**एवं प्रतियोगिमतोरपि कालदेशयोर्देशकालभेदावच्छेदेन तदभाव इति दीधितिः ।**

अन्यथेति संबन्धसत्तायाः संबन्धिसत्ताप्रयोजकत्वमभ्युपेत्योक्तनियमस्य प्रयोजकत्वोपगमे इत्यर्थः । तुल्यन्यायेनेति प्रयोजकाभावस्य कार्याभाव इवोक्तसाधारणप्रयोजकस्य प्रयोज्यस्यापि नियामकतयोदीच्यव्याप्तेरपि प्रयोजकत्वमेव स्यादिति तात्पर्यार्थः ।

**यो यदीयतत्संबन्धवान् स तत्संबन्धेन तद्वानिति व्याप्त्या कुण्डादिसंयोगिनो बदरादेः संयोगेन कुण्डादिमत्त्वापत्तेरित्युक्तावाह एवमिति जा० टी० ।**

अत्र रूपसमवायवति वायौ रूपासत्त्वेन व्यभिचारः । समवायस्य नानात्वमभ्युपेत्य बदरादेरित्यत्रादिपदाद् वायोरप्यापत्तिविशेष्यतां वा स्वीकृत्य यन्निरूपितत्वविशिष्टस्य यत्प्रतियोगिकत्वविशिष्टस्य संबन्धस्यानुयोगितया व्याप्यत्वं बोरीकृत्य वारणीयः । रूपसमवायी वायुरित्यप्रत्ययात् न रूपनिरूपितत्वविशिष्टसमवायानुयोगित्वं वायौ, कुण्डसंयोगी बदर इति प्रत्ययाद्धि तत्र (बदरे)

कुण्डनिरूपितत्वविशिष्टसंयोगानुयोगित्वं च स्वीक्रियते एव । यो यदीयसंबन्धवान् स तत्संबन्धेन तद्वानित्यस्य वायौ रूपसमवायसत्त्वेऽपि रूपाभावेन व्यभिचारः । समवायस्यैकत्वेन स्पर्शसमवायस्य सत्त्वे रूपसमवायसत्त्वात् । वायौ रूपाभावेन व्यभिचारः, यदि समवायस्य नानात्वमङ्गीक्रियते । एवञ्च स्पर्शनिरूपित(प्रतियोगिक)समवायस्य सत्त्वेऽपि रूपनिरूपितसमवायस्य वायावसत्त्वेन न व्यभिचारः । यदि न रूपवान् वायुरिति प्रतीतिर्दृश्यते तदा बदरनिरूपितसंयोगः कुण्डे वर्तते अतो बदरवत्कुण्डमिति प्रतीतिर्भवति । कुण्डनिरूपितसंयोगः बदरे नास्तीति कुण्डवान् बदर इति प्रतीतिर्न भवति । अत्र नियामिका तत्तत्प्रतीतिरेव स्वीकार्या । बदरादेरित्यत्रादिपदेन वायुः रूपवानित्यापत्तिरपि ग्राह्या उभयोरापत्त्योर्वारणञ्चोक्तरूपेण बोध्यम् ।

किञ्च रूपसमवायी वायुरित्यप्रत्ययात् रूपनिरूपितत्वविशिष्टसमवायानुयोगित्वं वायौ न स्वीक्रियते बदरनिरूपितत्वविशिष्टसंयोगि कुण्डमिति प्रत्ययात् बदरनिरूपितत्वविशिष्टसंयोगानुयोगित्वं कुण्डे स्वीक्रियते, इति कुण्डं बदरवदिति, बदरः कुण्डवानित्यप्रत्ययात् कुण्डप्रतियोगिकत्वविशिष्टसंयोगानुयोगित्वं बदरे न स्वीक्रियते इति कुण्डवान् बदर इति न भवति । एवञ्च यन्निरूपितत्वविशिष्टसंबन्धवान् यः स तत्संबन्धेन तद्वानिति व्याप्तिर्वा स्वीक्रियते । तथा च समवायस्यैकत्वेऽपि न क्षतिः । एवञ्च समवायस्य नानात्वमङ्गीकृत्य रूपवान् वायुरित्यापत्तिर्वारणीया । अथवा सम्बन्धस्य (समवायस्य) एकत्वेऽपि -न्निरूपितत्वविशिष्टयत्संबन्धानुयोगित्वं यत्र तेन संबन्धेन तत्र तद् वर्तते इति व्याप्ति वा स्वीकृत्योक्तापत्तिर्वारणीया संबन्धादिपदोत्तरमत्वर्थीयस्य प्रतियोगित्वमर्थो न संभवति । घटसमवायिरूपमित्यप्रत्ययात् ।

अथ संबन्धिसत्तायाः संबन्धसत्ताप्रयोज्यत्वानभ्युपगमे संबन्धिसत्तायानियामकाभावेन ह्रदादौ न वह्निः पर्वते त्वस्ति इति नियमो न स्यादिति चेत्सत्यम् । संबन्धिसत्तायाः संबन्धसत्ताधीनत्वपक्षेऽपि संबन्धस्यासंबद्धस्य

नियामकत्वे ह्रदो बह्निमानित्यापत्तिः, ह्रदे असंबद्धस्य बह्निसंबन्धसंयोगस्य सत्त्वात् । संबद्धस्य संबन्धस्य संबन्धिसत्तानियामकत्वे त्वनवस्थापत्तिः, संबन्धसंबन्धस्यापि स्वीकारः स्यात्, तत्संबन्धस्यापि संबन्ध इत्यनवस्थाऽतः संबन्धस्य क्वचित्स्वरूपतो नियामकत्वाभ्युपगम एव कार्यः । असंबद्धस्यापि संबन्धस्य स्वभावादेव संबन्धिसत्तानियामकत्वं वाच्यमिति लाघवात्संबन्धिसत्ताया एव स्वरूपप्रयोज्यत्वमिति रूपान्तरेण प्रयोज्यप्रयोजकभावयोरेकत्राविरोधात् । संयोगसमवायादीनां संबन्धत्वं तु विशिष्टानुभवबलात् लाघवाच्चाश्रीयते इत्येतदभिमानम् । ह्रदादौ बह्निसंयोगो नास्तीति भवति बह्न्यभावस्तत्र । पर्वते वह्निसंयोगो वर्तते अतो भवति वह्निमान् पर्वत इति । अतः संबन्धसत्ताप्रयोज्या संबन्धिसत्ता भवति । एतादृशप्रयोज्यप्रयोजकभावास्वीकारे तु संबन्धसत्ताविरहेऽपि संबन्धिसत्ता स्यात् । सा च नेष्टा, ह्रदो बह्निमानित्यापत्तेः । संबन्धिसत्तायाः संबन्धसत्ताधीनत्वपक्षेऽपि संबद्धस्य संबन्धस्य सत्ता संबन्धिसत्तानियामिका वाच्या तत्रापीदं वक्तव्यम् । यत्र संबन्धस्य संबन्धस्तत्रैव संबन्धो वर्तते नान्यत्रेति पूर्वोक्तरीत्या संबन्धस्य संबन्धो यत्र वर्तते तत्रैव संबन्धो वर्तते नान्यत्रेत्यत्रापि उक्तयुक्त्या संबन्धसंबन्धस्य संबन्धो वाच्य इत्यनवस्था स्यात् । अतः संबन्धस्य क्वचित् स्वरूपतो (स्वभावतो) नियामकत्वाभ्युपगम एव कार्यः । (संबन्धस्यासंबद्धस्यैव क्वचित् स्वभावेन स्वप्रतियोगिसत्तानियामकत्वं वाच्यम्) । एवञ्च स्वभावेन यथासंबद्धसंबन्धसत्त्वस्य संबन्धप्रतियोगिनियामकत्वं तथैव संबन्धिसत्ताया एव स्वभावतः स्वप्रयोज्यत्वं वाच्यम् । तथा च संबन्धसत्तानिष्ठप्रयोजकतानिरूपितप्रयोज्यता संबन्धिसत्तानिष्ठेति न सिद्ध्यति । रूपान्तरेण (स्वभावभिन्नेन) एवात्र विरोधः । यत्रानवस्था भवति तत्र स्वरूपेण प्रयोज्यप्रयोजकभाव एवात्र स्वीकार्यः, यत्र नानवस्था तत्रैकत्र न प्रयोज्यप्रयोजकभाव इति हृदयम् ।

कुण्डादिमत्त्वापत्तिरिति । इदन्तु चिन्तनीयम् । संबन्धिसत्तायाः संबन्धसत्ताव्याप्यत्वे व्यभिचारदर्शन (कुण्डसंबन्धस्य संयोगस्य बदरे सत्त्वेऽपि कुण्डमत्त्वा-

भावरूपव्यभिचारदर्शन)सामान्याभावेन निर्णीते (बदरे कुण्डादिमत्त्वाभावस्य निर्णीते) व्यापकाभावेन व्याप्याभावसाधने (वह्न्यभावेन धूमाभावसाधने) तदुभयोर्व्याप्तेः सप्रयोजकत्वाङ्गीकारेऽपि नोक्तदोषः । प्रयोज्यप्रयोजकभावाङ्गीकारपक्षे पूर्वोक्त-व्याप्तेः सप्रयोजकत्वाङ्गीकारेऽपि तत्तन्निरूपिततत्तत्प्रतियोगिकत्वविशिष्टसंयोग-समवायादेरनुयोगितया नियतस्य संसर्गत्वस्वीकारात् । संयोगातिरिक्तसंबन्ध-वाचकपदोत्तरमत्वर्थीयस्यैवानुयोगितार्थकत्वात्; संयोगपदोत्तरस्य चाश्रयत्वमात्रार्थ-कत्वात् कुण्डादिनिरूपितत्वविशिष्टानुयोगित्वस्य सत्त्वेऽपि तत्प्रतियोगिकत्वविशिष्टा-नुयोगिकत्वविरहात् संबन्धान्तरस्थले विशिष्टानुयोगित्वाभावेऽपि संयोगस्थले तस्यास्वीकाराद्वा उक्तदोषस्य न संभव इति । (बदरे कुण्डादिमत्त्वस्य न संभवः) ।

**न चेदानीं तन्तुषु न घट इत्यादिप्रतीतेरेतत्कालावच्छेदेन तन्तुष्वेव घटाभावो विषयो न तन्त्ववच्छेदेनैतत्काले तथेति वाच्यमिति जा० टी० ।**

न चात्र विनिगमकाभाव इति वाच्यम् । स्वारसिकोक्तप्रतीतेः क्लृप्तत्वेन तन्तुनिष्ठघटाभावेन विषयपर्यवसानसंभवेऽक्लृप्तविषयकत्वस्यान्याय्यताया एव विनिगम-कत्वादिति भावः ।

ननु तन्तुषु घटाभावस्य व्याप्यवृत्तितया एतत्कालस्य तदवच्छेदकत्वा-वगाहने उक्तप्रतीतेर्भ्रमत्वापातादिति जा० टी० ।

न चैवमिदानीमत्र घटो नास्तीत्यत्रोभयाधिकरणत्वावगाहित्वं (देशकालो-भयाधिकरणत्वावगाहित्वं) भट्टाचार्योक्तं कथं संगच्छते इति वाच्यम् (भवता तु तत्रैकाधिकरणत्वावगाहित्वस्य स्वीकारात्) । अत्रेत्यस्यैतत्काल इत्यर्थकत्वात् । तत्रोभया(देशकालोभया)धिकरणत्वस्यैवाव्याप्यवृत्तित्वादिति ।

"न च तथापि एतत्कालवृत्तिघटाभाव एव तन्तुषु भासतां तत्रेति वाच्यम् । कालस्य प्रतियोगिकुक्षावग्रहेऽपि तादृशप्रतीतेः तन्त्ववच्छेदेन समये घटाभावावगाहित्वस्यानुभवसिद्धत्वादिति भाव" इति जा० टी० ।

**प्रतियोगिकुक्षावग्रहेऽपीति ।**

नन्वेतत्कालवृत्तित्वस्य तन्तुविशेषणत्वे नायं दोषः (कालस्य प्रतियोगिकुक्षावग्रहेऽपि तादृशप्रतीतेरनुभवसिद्धत्वानुपपत्तिरूपदोषो नेति भावः । घटमात्रस्य प्रतियोगिकुक्षौ भानस्य सत्त्वात्) इति चेत् । मूले वृक्षे न कपिसंयोग इत्यत्रापि वृक्षे इति सप्तम्या अवच्छेदकत्वार्थकत्वमभ्युपेत्य वृक्षावच्छेदकमूलवृत्तिकपिसंयोगाभावविषयकत्वसंभवादव्याप्यवृत्त्यभावोच्छेदप्रसङ्गः स्यात् । न चेदानीमेतत्कपाले न घट इत्यत्र कालवृत्तिकपाले कपालवृत्तिकाले वा घटात्यन्ताभावविषयकत्वेऽव्याप्यवृत्त्यभावाङ्गीकार इति वाच्यम् । तत्रापि एतत्कालावच्छिन्नैतत्कपालवृत्तित्वाभावस्य घटे विषयत्वात् । न च वृक्षावच्छेदकत्वस्य वृक्षसमवायित्वरूपस्यैव वाच्यतया शाखायां रूपे न रूपत्वमित्यस्यापि प्रामाण्यापत्तिः । नहि तत्प्रतीतेः कथंचिदपि प्रामाण्यं रूपत्वस्य व्याप्यवृत्तिवाङ्गीकारादिति वाच्यम् । मूलावच्छिन्नवृक्षवृत्तित्वाभावस्यैव तत्रापि (मूले वृक्षे न कपिसंयोग इत्यत्रापि) विषयत्वाङ्गीकारात् । अतएव एकरूपतापि उक्तप्रतीतावुपपद्यते । यदि चोपरि मूले वृक्षे न तत्संयोग इति प्रतीतौ मूलावच्छिन्नोपरि दिगवच्छिन्नवृक्षनिरूपितवृत्तित्वाप्रसिद्धया तदभावस्य न विषयत्वसंभव । यस्य वृत्तिर्न सार्वदेशिकी न सार्वकालिकी तन्निरूपितवृत्तिताया एव सावच्छिन्नत्वस्याभ्युपेयत्वादिति मूलावच्छेदेनोपरिदिगवच्छेदेन वृक्षे तत्संयोगाभाव एव विषय इत्यव्याप्यवृत्त्यभावसिद्धान्तस्य न हानिरित्युच्यते । तदेदानीमस्ताचले प्राच्यां न ज्योतिरित्यत्र प्राचीदिगवच्छिन्नैतत्कालावच्छिन्नस्यास्ताचलवृत्तित्वस्य अस्ताचलावच्छिन्नैतत्कालवृत्तित्वस्य चाप्रसिद्धिः । प्राचीदिगवच्छिन्नास्ताचलावच्छिन्नैतत्कालवृत्तित्वस्यापि न संभवः, तादृशवृत्तिमतोऽभावादिति काले एवाभावोऽभ्युपगन्तव्यः । तत्कालसंबद्धौ अस्ताचलप्राचीदिग्विशेषौ च तत्कालनिष्ठाधिकरणतावच्छेदकौ संभवत इति कालवृत्तितावच्छेदकत्वं देशस्य नाप्रामाणिकम् । यैस्तु अव्याप्यवृत्तिपदार्थौ नाङ्गीक्रियते तैस्तु विशेषरूपेण संसर्गतामभ्युपेत्य वृत्तित्वविशेषीयस्वरूपसंबन्धावच्छिन्नवृत्तित्वाभावविषयकत्वेन सर्वप्रतीतिरुपपाद्यते इति ।

**"येन रूपेण येन संबन्धेन यद्व्याप्यवृत्ति तेन संबन्धेन (तेन रूपेण) तत्साध्यतायां नोपादेयमित्यर्थः इति जा० टी० ।**

यत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठतत्संबन्धावच्छिन्नाभावप्रतियोगितानवच्छदकतद्धर्मवत्वं तेन संबन्धेन तेन रूपेण व्याप्यवृत्तित्वमित्यर्थः । नित्यज्ञानानुयोगिकविषयित्वादिना व्याप्यवृत्तित्वसंपत्तये तादृशाधिकरणतावन्निष्ठाभावीयप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभाववत्वमेव विवक्षणीयमिति । अन्यथा नित्यज्ञानानुयोगिकविषयित्वसंबन्धेन नित्यज्ञाने सर्वेषां पदार्थानां वृत्तित्वेन तत्संबन्धावच्छिन्नप्रतियोगिताकाभावस्य तत्राप्रसिद्ध्या तदीयप्रतियोगितानवच्छेदकत्वस्याप्यप्रसिद्ध्या व्याप्यवृत्तित्वानुपपत्तेः ।

**"कालिकतयाऽव्याप्यवृत्तेरपि द्रव्यत्वस्य समवायेन साध्यतायाञ्च प्रतियोगिवैयधिकरण्यं नोपादेयमिति जा० टी० ।**

घटे गुणे न द्रव्यत्वमित्यादौ गुणावच्छेदेन घटे द्रव्यत्वाभावो न विषयः । किन्तु घटे द्रव्यत्वं गुणे तदभावः । घटवृत्तिगुणे वा द्रव्यत्वाभावो विषयः । तादृशप्रतीतिरेव वाऽप्रामाणिकी च घटे द्रव्यत्वं न तु गुणे इत्यादिर्न घटे द्रव्यत्वाभावसाधनायालम् । इदानीं यद्द्रव्यत्वं तद्घटे न गुणे इत्यादयः काले स्वरसत एवाभावं साधयन्तीति कालिकेनाव्याप्यवृत्तित्वं न तु समवायेनेत्याशयः ।

**संयोगाभाववान् नित्यगुणत्वादित्यादौ अव्याप्यवृत्तिसाध्यके क्वचिदेव न देयं व्याप्यवृत्तिसाध्यके तु प्रयोजनविरहात् सर्वत्रैव नोपादेयमित्यावेदयितुं व्याप्यवृत्तिसाध्यके सर्वथैवेत्युक्तम् इति जा० टी० ।**

नित्यगुणत्वादिति गुणत्वाधिकरणे जन्ये कालिकेन कपिसंयोगात्मकाभावस्य (साध्याभावस्य) वृत्तित्वात् अव्याप्तिवारणाय तत्र प्रतियोगिवैयधिकरण्योपादानं संभाव्येतेति अत उक्तं नित्येति ।

"द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य द्रव्यत्वानतिरेकादिति जा० टी० ।

ननु द्रव्यभिन्नत्वप्रकारकप्रमीयविशेष्यत्वाभावस्यातिरिक्तत्वेऽपि तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके विरहात् अतिव्याप्तिसंभवे ऽनतिरिक्तत्वानुधावनमफलमिति चेदत्र केचित् पारिभाषिकावच्छेदकत्वघटितकल्पे (हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत्समानाधिकरणाभावप्रतियोगितानवच्छेदकं तदेव पारिभाषिकं प्रतियोगितावच्छेदकमिति तद्घटितकल्पे) हेतुरूपसत्ताधिकरणे द्रव्ये द्रव्यभिन्नत्वप्रकारकप्रमीयविशेष्यत्वाभावाभावप्रतियोगितावच्छेदकतादृशविशेष्यत्वाभावत्वस्य द्रव्यत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेन साध्यतावच्छेदकस्य तादृशप्रतियोगितावच्छेदकत्वात् द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्त्यप्रसक्तेरनतिरिक्तेति । तथा च द्रव्यत्वाभाववान् सत्वादित्यत्रातिव्याप्तिः । हेत्वधिकरणे द्रव्ये द्रव्यत्वाभावाभावरूपसाध्याभावस्य द्रव्यत्वरूपस्य द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावस्य द्रव्यत्वरूपस्य च स्वरूपेण हेत्वधिकरणावृत्त्या तत्तदभावो न लक्षणघटक इत्यन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । द्रव्यभिन्नत्वप्रकारकप्रमीयविशेष्यत्वाभावाभावस्य द्रव्यत्वरूपत्वानङ्गीकारेऽपि हेत्वधिकरणे गुणे द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावो नास्तीत्यभावप्रतियोगितावच्छेदकं द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावत्वं तच्च द्रव्यत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति भवति पारिभाषिकप्रतियोगितावच्छेदकं द्रव्यत्वं तस्य स्वरूपेण हेत्वधिकरणावृत्तित्वेन साध्याभावो न लक्षणघटक इत्यन्याभावमादाय द्रव्यत्वाभाववान् सत्त्वादित्यत्र स्वरूपेण हेत्वधिकरणेऽभावस्य वृत्तित्वकथनेऽतिव्याप्तिर्दुर्वारेति तस्यातिरिक्तत्वे तु (अभावरूपत्वे तु) नोक्तदोषः, साध्याभावस्य स्वरूपेण हेत्वधिकरणे वृत्तित्वात् । अतः साध्याभावस्य द्रव्यत्वानतिरिक्तत्वकथनं युक्तमिति तत्रातिव्याप्तिः संगतेति भावः ।

यत्तु अत्र (द्रव्यत्वाभाववान् सत्त्वादित्यत्र) तस्य (द्रव्यत्वाभावाभावरूपसाध्याभावस्य) अनतिरिक्तत्वेऽपि (द्रव्यत्वरूपत्वेऽपि) घटध्वंसाद्यात्मकाभावमादाय न दोषः। तद्रूपभिन्नं गुणत्वादित्यादावपि विषयत्वस्य जन्यत्वे तद्ध्वंसात्मकाभावं, विषयत्वस्यातिरिक्तत्वे नित्यत्वेऽपि च तस्य तत्स्वरूपाभावं, तद्रूपभेदतद्रूपत्वप्रकारकयत्किञ्चिज्ज्ञानान्यतरस्य विषयत्वस्वरूपान्यतरसंबन्धावच्छिन्नप्रतियोगिताकाभावादिकं वादाय न दोष इति। तत्तुच्छम्, द्रव्यवृत्त्यवृत्तिधर्मावच्छिन्नप्रतियोगिकस्वरूपसंबन्धेन द्रव्यत्वाभावसाध्यकस्थले, वृत्त्यनियामकसंबन्धस्य प्रतियोगितावच्छेदकत्वे यथाश्रुतसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकस्यैव विवक्षिततयोक्ताभावस्यानतिरिक्तत्वेऽतिव्याप्तिवारणायोगात्। घटध्वंसाद्यभावादीनां साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानां केवलान्वयितया साध्यवन्निष्ठत्वादित्याहुः।

परे तु समनियताभावयोर्भेदेऽपि (द्रव्यत्वाभाव द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावयोः समनियतत्वेऽपि भेद इति पक्षेऽपि) तदधिकरणत्वमेकमेवेति हेत्वधिकरणत्वनिष्ठविशेषणत्वसंबन्धावच्छिन्नाधिकरणत्वनिरूपकत्वस्य द्रव्यत्वस्वरूपाभावे सत्त्वान्नातिव्याप्तिः। (द्रव्यत्वाभाववान् सत्त्वादित्यत्र हेत्वधिकरणे गुणे द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावमादायातिव्याप्तिवारणं भविष्यति। स चाभावः स्वरूपसंबन्धेन वृत्तिरस्ति। समनियतयोः द्रव्यत्वाभाव,द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावयोरधिकरणत्वमेकमेव, तन्निष्ठविशेषणत्वसंबन्धावच्छिन्नाधिकरणतानिरूपकत्वं द्रव्यत्वाभावाभावरूपसाध्याभावे वर्तते तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके द्रव्यत्वाभावत्वे सत्त्वान्नातिव्याप्तिः। हेतुसमानाधिकरणाभावाधिकरणत्वनिष्ठविशेषणत्वसंबन्धावच्छिन्नाधिकरणत्वनिरूपकत्ववदभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वात्।

न च समवायसंबन्धावच्छिन्नत्व स्वरूपसंबन्धावच्छिन्नत्वाभ्यामधिकरणताभेद इति वाच्यम्। (साध्याभावद्रव्यत्वनिष्ठाधेयतानिरूपितसमवायसंबन्धावच्छिन्न-

द्रव्यनिष्ठाधिकरणता द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावाभावप्रतियोगितादृश - विशेष्यत्वाभावनिष्ठाधेयतानिरूपितस्वरूपसंबन्धावच्छिन्नाधिकरणतयोः संबन्धभेदेन भिन्नत्वमिति तादृशाभावयोरधिकरणत्वयोर्नैक्यमिति कथं तादृशनिरूपकत्वमादाय द्रव्यत्वाभाववान् सत्त्वादित्यत्रातिव्याप्तिवारणमिति वाच्यम् । व्यासज्यवृत्त्येका-वच्छेदकत्वपक्षे सावच्छिन्नत्व,निरवच्छिन्नत्व,तत्तत्संबन्धावच्छिन्नत्वादीनामव्याप्यवृत्तित्व-वदत्राप्येकस्यामेवाधिकरणतायां तत्तन्निरूपितत्वावच्छेदेन तत्तत्संबन्धावच्छिन्नत्वस्यापि स्वीकारेणाव्याप्यवृत्तित्वाभ्युपगमादिति प्राहुः । (महानसीयवह्निर्नास्तीत्यभावीय-प्रतियोगितावच्छेदकतायां महानसीयत्वावच्छेदेन सावच्छिन्नत्वं वह्नित्वावच्छेदेन निरवच्छिन्नत्वाव्याप्यवृत्तित्वञ्च वर्तते, तथा समनियताभावस्थलेऽपि एकस्या-मेवाधिकरणतायां तत्तन्निरूपितत्वावच्छेदेन तत्तत्संबन्धावच्छिन्नत्वस्यापि स्वीकारेणा-व्याप्यवृत्तित्वमिति ।

ऋजवस्तु अभावसाध्यकेऽतिव्याप्तिमुक्त्वा द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्व-रूपसाध्यकेऽपि ताम्(अतिव्याप्तिम्) आह— द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वस्यापि द्रव्यत्वानतिरेकादिति । तथा च हेत्वधिकरणे स्वरूपसंबन्धेनाभावस्य वृत्तित्व-कथने साध्याभावस्य द्रव्यत्वरूपत्वमिति तस्य स्वरूपेण हेत्वधिकरणावृत्त्या-ऽन्याभावमादायातिव्याप्तिरिति वदन्ति ।

**अतएव साध्यतावच्छेदकसंबन्धेन साध्यवत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदको यः संबन्धस्तेन संबन्धेन हेतुसामानाधिकरण्यम-भावस्य ग्राह्यमित्युक्तावपि न निस्तारः । तथाविधसंबन्धेन हेतु-सामानाधिकरण्यस्याप्रसिद्ध्या प्रागुक्तगगनत्वादिहेतौ द्रव्यत्वाभाववान् जातित्वादित्यादौ चाव्याप्तेरिति जा० टी० ।**

समवायेन घटत्वं नास्तीत्यभावस्य कालिकेन योऽभावस्तस्य स्वरूपेण साध्यत्वे गगनत्वहेतावव्याप्तिः (गगनं घटत्वाभावाभाववान् गगनत्वादित्यत्रा-

व्याप्तिः) । हेत्वधिकरणे गगने स्वरूपेण वर्तमानो यः साध्यग्य घटत्वाभावाभावस्याभावो घटत्वाभावरूपः तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके घटत्वाभावाभावत्वे सत्त्वात् अव्याप्तिरतः स्वरूपसंबन्धेन हेत्वधिकरणत्वघटितं व्याप्यवृत्तिसाध्यकस्थलीयलक्षणं न भवितुमर्हतीति तु घटत्वाभावस्य कालिकसंबन्धावच्छिन्नेत्यादिना जागदीश्यां पूर्वम् प्रतिपादितम् ।

अतएव निरुक्तगगनत्वहेतावव्याप्तिप्रसङ्गादेवेत्यर्थः । साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितकिञ्चिद्धर्मावच्छिन्नविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकसंबन्धेनाभावस्य हेत्वधिकरणवृत्तित्वं ग्राह्यमित्यपि न युक्तम् । तादृशघटत्वाभावाभाववान् गगनत्वादित्यत्राव्याप्तेः । तादृशप्रतिबन्धकतावच्छेदककालिकसंबन्धेन हेतुसामानाधिकरण्यस्याप्रसिद्धेः नित्येषु कालिकायोगादिति द्रव्यत्वाभाववान् जातित्वादित्यादौ चाव्याप्तेः । तादृशप्रतिबन्धकतावच्छेदकसमवायेन हेतुसामानाधिकरण्यस्याप्रसिद्धेः । समवायेन जातौ न कस्यापि वृत्तित्वमस्ति । तत्वालोके संबन्धेनेत्यादि । घटत्वाभावस्य कालिकेन योऽभाव इत्युपलक्षणम् । अभावाभावसाध्यकेऽपि द्रष्टव्यम् । घटत्वाभावस्य स्वरूपादिसंबन्धावच्छिन्नप्रतियोगिताको बोध्यः । तस्यैव व्याप्यवृत्तित्वम् (व्यधिकरणसंबन्धेन घटत्वाभावो बोध्यः) । व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात् समवायादिसंबन्धावच्छिन्नघटत्वाभावस्य कालिकादिनाऽव्याप्यवृत्तितया तदभावसाध्यकस्थलस्याव्याप्यवृत्तिसाध्यकस्थलत्वादिति ।

**तथापि साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगिमत्त्वबुद्धेर्विषयतया प्रतिबन्धकतावच्छेदको यः संबन्धस्तेन हेत्वधिकरणवृत्तित्वमभावस्य विवक्षितमित्यदोष इति जा० टी० ।**

तथा च तत्तदभावप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालिबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसंबन्धेन हेत्व-

धिकरणवृत्तित्वमभावस्य वक्तव्यमिति समुदायस्यार्थः । तथापि साध्यतावच्छेदकसंबन्धेनेत्यादि । प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वै० स्वतादात्म्य स्वविशिष्टप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकसबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वोभयसंबन्धेन । वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन । एवं च घटत्वाभावाभाववान् गगनत्वादित्यत्र साध्याभावस्य घटत्वाभावरूपतया तदीयघटत्वनिष्ठप्रतियोगितावच्छेदकतावच्छिन्नग्रहविरोधितावच्छेदकसंबन्धत्वस्य स्वरूपे सत्त्वेऽपि न क्षतिः । स्वपदेन घटत्वाभावरूपो घटत्वाभावाभावाभावो न ग्राह्यः, तदभावप्रतियोगिसाध्यवत्ताबुद्धेः प्रतिबन्धकतावच्छेदककालिकसंबन्धेन हेत्वधिकरणे गगने वृत्तित्वाप्रसिद्धेः । अतः स्वपदेन गगनत्वाभावाभावो ग्राह्यस्तत्प्रतियोगिगगनत्वाभावबुद्धौ स्वरूपेण गगनत्ववानित्याकारकज्ञानस्य प्रतिबन्धकतया तदवच्छेदकीभूता या गगनत्वनिष्ठा प्रकारता तदवच्छेदकस्वरूपसंबन्धेन हेत्वधिकरणे गगने गगनत्वरूपाभावस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य गगनत्वाभावत्वे सत्त्वेन तदनवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वाभावाभावत्वे सत्त्वाल्लक्षणसमन्वय इति । स्वावच्छेदकधर्मावच्छिन्नत्वं विहाय स्वसामानाधिकरण्यस्य प्रवेशे वह्न्यधिकरणत्व, कालिकसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावान्यतरस्य स्वरूपेण साध्यतायां धूमे सद्धेतौ वह्न्यधिकरणत्व, तादृशप्रमेयाभावान्यतरवान् धूमादित्यत्र साध्याभावप्रतियोगितासमानाधिकरणतादृशप्रतियोगिताकप्रमेयाभावत्वावच्छिन्नप्रकारताकग्रहविरोधिताघटककालिकसंबन्धमादायाव्याप्त्यापत्तेः । हेत्वधिकरणे पर्वते वह्न्यधिकरणत्वाभावस्य कालिकेन वृत्तित्वेन तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । तादृशान्यतरत्वेन साध्यं वह्न्यधिकरणत्वं तदभावीया प्रतियोगिता वह्न्यधिकरणत्वनिष्ठा तत्समानाधिकरणप्रकारता वह्न्यधिकरणत्वरूपप्रमेयनिष्ठा तादृशप्रकारताशालिग्रहः वह्न्यधिकरणत्वप्रमेयवानिति ज्ञानं, तदीया

प्रमेयनिष्ठा प्रकारता तदवच्छेदककालिकसंबन्धावच्छिन्नहेत्वधिकरणपर्वतनिरूपित-वृत्तितावद्वह्न्यधिकरणत्वाभावीयत्वस्य स्वतादात्म्यस्य वह्न्यधिकरणत्वाभावीयप्रतियोगितायां सत्त्वात् । न च प्रतिबध्यतायां तादृशग्रहत्वव्यापकत्वासंभवः । वह्न्यधिकरणत्वविषयकप्रमेयविषयकसमूहालम्बनज्ञानं वह्न्यधिकरणत्ववान् प्रमेयवानित्याकारकं तच्च निर्धर्मितावच्छेदकं, निर्धर्मितावच्छेदकश्च ज्ञानं न प्रतिबध्यं न वा प्रतिबन्धकञ्चेति तादृशग्रहत्ववति तादृशसमूहालम्बनज्ञाने प्रतिबध्यताया असत्त्वात् तत्र वह्न्यधिकरणत्वप्रकारकग्रहत्वस्य सत्त्वात् कथं तादृशग्रहत्वव्यापिका प्रतिबध्यतेति वाच्यम् । तादृशप्रतिबध्यतासिद्ध्यर्थम् (स्वविशिष्टप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतासिद्ध्यर्थं) किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपित स्व(प्रतियोगिता)विशिष्टप्रकारतानिरूपकग्रहत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वं नास्तीति सिद्धाभावरूपस्यैव व्यापकत्वस्य प्रतिबध्यतायां प्रवेश्यत्वात् स्वा(प्रतियोगित्वा)वच्छेदकावच्छिन्नत्वञ्च (प्रकारतायाम्) स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वरूपम् । तेन विषयितासंबन्धेन वह्निधूमोभयसाध्यकव्यभिचारिणि वह्निधूमोभयवान् वह्नेरित्यादौ साध्याभावप्रतियोगिताविशिष्टप्रकारताकग्रहत्वव्यापकप्रतिबध्यत्वाप्रसिद्धावपि नातिव्याप्तिः । वह्निधूमोभयाभावीया प्रतियोगिता वह्निनिष्ठा धूमनिष्ठा च तत्र वह्निनिष्ठप्रतियोगिताविशिष्टा प्रकारता वह्निनिष्ठा तादृशप्रकारताकग्रहत्वम् वह्निमदयोगोलकमिति ज्ञाने वर्तते । तत्र धूमाभाववदयोगोलकमिति निश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं नास्ति । एवं साध्याभावीयप्रतियोगिताधूमनिष्ठा तत्प्रतियोगिताविशिष्टा प्रकारता धूमनिष्ठा तादृशप्रकारताकग्रहत्वं धूमवान् पर्वत इति ज्ञाने, तत्र वह्निमान् पर्वत इति निश्चयीयप्रतिबध्यत्वं नास्तीति तादृशग्रहत्वव्यापकप्रतिबध्यत्वाप्रसिद्धिरिति बोध्यम् । तादृशपर्याप्तिनिवेशे च नोक्तदोषः । तादृशावच्छेदकताकप्रकारताकज्ञान वह्निधूमोभयविषयकं तद्ग्रहत्वव्यापकत्वस्य तत्तत्प्रतिबध्यत्वे सत्त्वात् ।

न च प्रतियोगिताविशिष्टप्रकारत्वावच्छिन्नत्वमेव प्रतिवध्यतायां विवक्षणीयमिति वाच्यम् । न च प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकत्वान्तार्थ इत्यत्र वै० स्वातादात्म्य स्वविशिष्टप्रकारताशालिग्रहत्वव्यापकप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकप्रकारतावच्छेदकसंवन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वोभयसंवन्धेन । अत्र वै० स्वावच्छेदकसंवन्धावच्छिन्नत्व, स्वावच्छेदकधर्मावच्छिन्नत्वोभयसंवन्धेन । तत्र प्रतियोगितायां प्रतियोगितावैशिष्ट्यम् स्वतादात्म्यस्वविशिष्टप्रकारतावच्छिन्नप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकप्रकारतावच्छेदकसंवन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वोभयसंवन्धेन । अत्र वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वावच्छेदकसंवन्धावच्छिन्नत्वोभयसंवन्धेन । अलं गुरुभूतेन प्रतिवध्यतायां स्वविशिष्टप्रकारताशालिग्रहत्वव्यापकत्वनिवेशेनेति वाच्यम् । कालिकसंवन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकात्मत्वहेतुके अयं प्रमेयाभाववान् आत्मत्वादित्यत्र प्रमेयाभाव,. ज्ञानानधिकरणत्वोभयाभावत्वावच्छिन्नस्वरूपसंवन्धावच्छिन्नप्रकारत्वावच्छिन्नप्रतिवन्धकतानिरूपितां साध्याभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारत्वावच्छिन्नाम् उभयवत्ताज्ञानसाधारणप्रतिवध्यताम् आदायाव्याप्त्यापत्तेः । (हेतुसमानाधिकरणप्रमेयाभाव, ज्ञानानधिकरणत्वोभयाभावीयप्रतियोगिता प्रमेयाभावज्ञानानधिकरणत्वोभयनिष्ठा तत्र स्वतादात्म्यस्य स्वविशिष्टप्रकारत्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकप्रकारतावच्छेदकस्वरूपसंबन्धावच्छिन्नहेत्वधिकरणात्मनिरूपितवृत्तितावदभावीयत्वस्य स्वतादात्म्यत्वस्य च सत्त्वात् तादृशप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके प्रमेयाभावत्वे सत्त्वेनाव्याप्त्यापत्तेः । तादृशग्रहत्वव्यापकत्वस्य प्रतिवध्यतायां निवेशे तु नोक्तदोषः । ज्ञानानधिकरणत्वप्रकारकबुद्धित्वव्यापकत्वस्य तादृशप्रतिवध्यतायामसत्त्वात् । तादृशोभयाभावो न लक्षणघटक इति घटाभावमादाय लक्षणसमन्वयो बोध्यः ।

प्रकारतायां स्वावच्छेदकसंवन्धावच्छिन्नत्वनिवेशात् कालिकेन प्रमेयाद्यभाववत्ताबुद्धिप्रतिवन्धकताघटकस्वरूपसंवन्धमादाय प्रमेयाभावसाध्यकस्थले नाव्याप्त्या-

पत्तिः । अन्यथा कालिकेन प्रमेयाभावसाध्यके आत्मत्वे प्रमेयाभाववान् आत्मत्वादित्यत्राव्याप्त्यापत्तेः । तथा हि साध्याभावीया प्रतियोगिता विशिष्टा प्रतियोगिता स्वैव, स्वतादात्म्यस्य स्वविशिष्टप्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपित-प्रतिबन्धकतावच्छेदकप्रकारतावच्छेदकस्वरूपसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तिता-वदभावीयत्वस्य च स्वरूपेण साध्याभावीयप्रतियोगितायां सत्त्वात् । प्रकारतायां स्वावच्छेदकसंबन्धावच्छिन्नत्वं वर्तते । तन्निवेशे तु नोक्तदोषः । प्रकारतायां तादृशकालिकसंबन्धावच्छिन्नत्वाभावात् सा प्रतियोगिता न ग्राह्या तदन्या प्रतियोगिता ग्राह्या तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

अथ घटभिन्नं कपालत्वादित्यत्र घटभेदाभावरूपसाध्याभावस्य घटघटत्वो-भयात्मकत्वे (प्रतियोगिप्रतियोगितावच्छेदकोभयात्मकत्वे) उक्तविरोधिताघटव समवायेन घटात्मकसाध्याभावाधिकरणे कपाले हेतोः कपालत्वस्य वृत्तित्वेनाव्याप्तिरिति चेत् । घटभेदाभावस्य घटत्वमात्ररूपत्वाभ्युपगमात् आधाराधेयभावानुरोधात् । घटो घटभेदाभाववानिति प्रतीतेः । तथा च तादृशसाध्याभावाधिकरणे घटे कपालत्वरूपहेतोरवृत्तित्वेन तत्राव्याप्त्यभावोपपत्तेः । घटभेदाभावस्य प्रतियोगि-प्रतियोगितावच्छेदकोभयरूपत्वेऽपि समवायेन घटत्वावगाहिन एव, तादात्म्येन घटावगाहिन एव, घटभेदाभावविषयकज्ञानस्य घटभेदज्ञानं प्रति विरोधितया विरोधितावच्छेदकप्रकारतावैशिष्ट्यस्य वृत्तितायां विवक्षितत्वाद्वा दोषस्य न संभवः । वै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वो-भयसंबन्धेनेति । एवञ्च घटभेदाभावस्य घटरूपत्वे घटनिष्ठा वृत्तिता तादात्म्य-संबन्धावच्छिन्ना घटभेदाभावस्य घटत्वरूपत्वे च घटत्वनिष्ठा वृत्तिता च समवायसंबन्धावच्छिन्ना । तथा च विरोधितावच्छेदकघटनिष्ठप्रकारताविशिष्टा वृत्तिता स्वावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्व, स्वावच्छेदकघटत्वावच्छिन्नत्वोभयसंबन्धेन घट-निष्ठैव ग्राह्या न तु घटत्वनिष्ठा । तथा च तादृशवृत्तितावति घटे कपालत्व-रूपहेतोरसत्त्वात् । एवं तादृशविरोधितावच्छेदकघटत्वनिष्ठप्रकारताविशिष्टा वृत्तिता

घटत्वनिष्ठैव तद्वद्घटत्वमेव। तत्र स्वावच्छेदकसमवायसंबन्धावच्छिन्नत्वस्य स्वानवच्छेदकानवच्छिन्नत्वरूपपारिभाषिकस्वावच्छेदकावच्छिन्नत्वस्य च घटत्वनिष्ठायां सत्त्वात्। तथा च तादृशवृत्तितावद्घटत्ववति घटे कपालभिन्नरूपहेतोः सत्त्वात्।

ननु कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटाभावसाध्यकपटाभावत्वे सद्धेतौ पटाभावो घटाभाववान् पटाभावत्वादित्यादौ घटाभावाभावो घटाभाववानिति बुद्धिं प्रति घटाभावाभावे कालिकेन घटाभावाभाव इति बुद्धेः प्रतिवन्धकतया तदवच्छेदकप्रकारतावच्छेदककालिकसंबन्धावच्छिन्नाधेयतासंबन्धेन साध्याभावस्य हेत्वधिकरणवृत्तितयाऽव्याप्तिरिति चेन्न (तथा च साध्याभावप्रतियोगिताविशिष्टा स्वैव तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिरिति) घटाभावाभावो घटाभाववानिति बुद्धिं प्रति यथा घटाभावाभावो घटाभावाभाववानिति बुद्धिः प्रतिवन्धिका भवति तथैव घटाभावाभावे कालिकेन घटाभावाभाव इति बुद्धिरपि प्रतिवन्धिका भवति। समानविषयकत्वेन प्रतिवध्यप्रतिवन्धकभावः, न तु समानप्रकारकत्वेनेति अङ्गीकारात्। भवति पर्वतो वह्निमान् इति बुद्धिं प्रति वह्न्यभाववान् पर्वतः पर्वते वह्न्यभाव इति बुद्धिः प्रतिवन्धिके इति। तथा च घटाभावे कालिकेन घटाभावाभाव इति साध्याभावीयप्रतियोगिताविशिष्टा स्वैव प्रतियोगिता। तत्र स्वतादात्म्यस्य स्वविशिष्टा प्रकारता घटाभावाभावे घटाभावाभाव इति ज्ञानीया घटाभावनिष्ठा तादृशप्रकारताशालिघटाभावाभावे कालिकेन घटाभावाभाव इति ग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिवन्धकतावच्छेदिका प्रकारता घटाभावनिष्ठा तदवच्छेदककालिकसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नहेत्वधिकरणपटाभावनिरूपितवृत्तितावदभावीयत्वस्य च सत्त्वात् तदवच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वेनाव्याप्तिरिति चेन्न। तादृशप्रतिबध्यताविशिष्टप्रकारताविशिष्टवृत्तित्वस्य विवक्षणात्। प्रकारतायाम् प्रतिबध्यतावैशिष्ट्यञ्च स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्य स्वनिरू-

पितप्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेन । वृत्तितायाम् प्रकारतावैशिष्ट्यञ्च प्रागुक्तसंबन्धेन (स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसबन्धेन)। प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। वै० स्वतादात्म्य, स्वविशिष्टप्रकारतावग्रहत्वव्यापकप्रतिबध्यताविशिष्टप्रकारताविशिष्टवृत्तितावदभावीयत्वोभयसंबन्धेन। प्रकारतायां प्रतिबध्यतावैशिष्ट्यञ्च स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्य स्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेन। वृत्तितायां प्रकारतावैशिष्ट्यञ्च स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन। प्रकारतायां प्रतियोगितावैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन। घटाभावः कालिकसंबन्धावच्छिन्नप्रतियोगिताकघटाभाववान् पटाभावत्वादित्यत्र घटाभावो घटाभाववानिति बुद्धिं प्रति घटाभावे कालिकेन घटाभावाभाव इति बुद्धेः प्रतिबन्धकतया तदवच्छेदकप्रकारतावच्छेदककालिकसंबन्धावच्छिन्नाधेयतासंबन्धेन साध्याभावस्य हेत्वधिकरणपटाभावनिरूपितवृत्तितया ऽऽव्याप्तिः साऽव्याप्तिर्न संभवति। प्रकारतायां प्रतिबध्यतावैशिष्ट्यस्य स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्यस्य विरहेण तादृशप्रतिबध्यतावैशिष्ट्यस्य प्रकारतायामसत्वात्। घटाभावो घटाभाववानिति ज्ञाननिष्ठप्रतिबध्यता घटाभावे घटाभावाभाव इति ज्ञानीयप्रतिबन्धकतानिरूपिता, तस्याः प्रतिबध्यताया अवच्छेदिका विशेष्यता घटाभावाभावनिष्ठा तदवच्छेदकं घटाभावाभावत्वं तत्सामानाधिकरण्यस्यैव प्रतिबध्यतावच्छेदकघटाभावाभावनिष्ठप्रकारतायां सत्त्वात्। न च कालिकेनाभाववान् वह्न्यभाववान् कालिकेनाभाववान् ह्रद इति ज्ञानस्यापि ज्ञानविशिष्टज्ञानत्वेन ह्रदो वह्निमानिति ज्ञानं प्रति प्रतिबन्धकतया तदवच्छेदकप्रकारतामादाय वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम्। न च वह्न्यभावीया वह्निनिष्ठा प्रतियोगिताविशिष्टा स्वैव, स्वतादात्म्यस्य स्वविशिष्टप्रकारतानिरूपकग्रहत्वव्यापकप्रतिबध्यताविशिष्टप्रकारताविशिष्टहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वस्य च सत्त्वात्। स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसंबन्धावच्छिन्नत्वाभ्यां वह्न्य-

भावीयप्रतियोगितावैशिष्ट्यं वह्निनिष्ठप्रकारतायां वर्तते । तादृशप्रकारताशालि (ह्रदो वह्निमानिति) ग्रहत्वव्यापकप्रतिबध्यताविशिष्टा प्रकारता (ह्रदो वह्न्यभाववानिति ज्ञानीया) वह्न्यभावनिष्ठा स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्यस्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेन । तादृशप्रकारताविशिष्टा वृत्तिता वह्न्यभावनिष्ठा तत्र स्वसामानाधिकरण्यस्य स्वावच्छेदककालिकसंबन्धावच्छिन्नत्वस्य च सत्त्वादिति वाच्यम् । प्रकारतायां प्रतिबध्यतावैशिष्ट्यनियामकसंबन्धघटकप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वस्य निवेशेनोक्तदोषाभावात् । तथा च प्रतिबध्यताविशिष्टप्रकारतेत्यत्र वैशिष्ट्यं स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्य स्वनिरूपितज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेन बोध्यम् ।

न चैवमपि वह्न्यभावस्य कालिकेन यद्व्याप्यं कालिकेन तद्वत्ताबुद्धेरपि प्रतिबन्धकतया तदवच्छेदकवह्न्यभावनिष्ठप्रकारताविशिष्टवृत्तित्वमादायाव्याप्तितादवस्थ्यमिति वाच्यम् । (न च तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धिरिव तदभावव्याप्यवत्ताबुद्धिरपि प्रतिबन्धिकेति पर्वतो वह्निमानिति ज्ञानं प्रति पर्वतो वह्न्यभावव्याप्यवानिति ज्ञानस्यापि प्रतिबन्धकत्वमिति प्रतियोगिताविशिष्टप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यतानिरूपितायाः ज्ञानवैशिष्ट्यानवच्छिन्नायाः वह्न्यभावस्य कालिकेन व्याप्यो यो घटः कालिकेन तद्घटवान् पर्वत इति ज्ञानप्रतिबन्धकतायाः अवच्छेदिका प्रकारता घटनिष्ठा तदवच्छेदककालिकसंबन्धावच्छिन्नहेत्वधिकरणपर्वतनिरूपितवृत्तितावद्वह्न्यभावीयत्वस्य स्वतादात्म्यस्य च संयोगेन वह्न्यभावीयप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् पर्वतो वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम्) । तादृश प्रतिबध्यताविशिष्टप्रकारतायां भ्रमानिरूपितत्वस्य विशेषणत्वेन तद्दोषस्य वारणात् । यदि चोक्तदोषवारणाय स्वसामानाधिकरण्यं विहाय स्वावच्छेदकधर्मावच्छिन्नत्वस्य संसर्गत्वमुच्यते । तदा प्रतियोगिताविशिष्टप्रकारत्वावच्छिन्नत्वमेव प्रतिबध्यतायां

वाच्यं न तु प्रतियोगिताविशिष्टप्रकारताशालिग्रहत्वव्यापकत्वं प्रतिवध्यतायां वाच्यं प्रयोजनाभावात् । कालिकसंवन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकात्मत्वहेतुके अयं प्रमेयाभाववान् आत्मत्वादित्यत्र प्रमेयाभावज्ञानानधिकरणत्वोभयाभावीया स्वरूपसंवन्धावच्छिन्ना या प्रतियोगिता स्वावच्छेदकधर्मावच्छिन्नत्वस्वावच्छेदकसंवन्धावच्छिन्नत्वोभयसंवन्धेन तद्विशिष्टा या प्रकारता तदवच्छिन्नप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकप्रकारतावच्छेदकस्वरूपसंवन्धावच्छिन्नहेत्वधिकरणात्मनिरूपितवृत्तितावत् तादृशोभयाभावीयत्वस्य स्वतादात्म्यस्य च प्रतियोगिताविशिष्टप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद् भवति तत्राव्याप्तिरिति तु न वाच्यम् । प्रतियोगिताविशिष्टत्व प्रकारतायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकत्वरूपं स्वावच्छेदकावच्छिन्नत्वं तच्च साध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकाभाववत्ताज्ञाननिष्ठप्रतिवन्धकतानिरूपितप्रतिवध्यतायां वर्तते न तु साध्यघटिततादृशोभयाभाववत्ताज्ञाननिष्ठप्रतिबन्धकतानिरूपितप्रतिवध्यतायामिति नात्र दोषः । स्वसामानाधिकरण्यं विहाय तादृशस्वावच्छेदकावच्छिन्नत्वस्य प्रवेशात् । अन्यथा साध्यघटितोभयाभाव(वह्निघटोभयाभाव)मादाय वह्निमान् धूमादित्यत्राप्यव्याप्त्यापत्तेः, असंभवो वा स्यात् । न च साध्यतावच्छेदकसंवन्धावच्छिन्नप्रकारत्वावच्छिन्नत्वमात्रं प्रतिवध्यतायां वाच्यमिति वाच्यम् । (न च प्रतियोगिताविशिष्टप्रकारतावच्छिन्नप्रतिवध्यतेत्यत्र वै० स्वावच्छेदकसंवन्धावच्छिन्नत्व स्वावच्छेदकधर्मावच्छिन्नत्वोभयसंवन्धं विहाय स्वावच्छेदकसंवन्धावच्छिन्नप्रकारत्वावच्छिन्नत्वमात्रं वाच्यमिति वाच्यम् ।) स्वरूपेण वह्न्यधिकरणत्वसाध्यके वह्न्यधिकरणत्वाभावस्य कालिकेन योऽभावः स्वरूपेण तद्वानिति बुद्धिं प्रति कालिकेन वह्न्यधिकरणत्वाभाववानिति ज्ञानस्य प्रतिवन्धकतयाऽव्याप्तेः । वह्न्यधिकरणत्ववान् धूमादित्यत्र वह्न्यधिकरणत्वाभावस्य साध्याभावस्य कालिकेन योऽभावः स्वरूपेण तद्वानिति बुद्धिं प्रति (साध्याभावप्रतियोगिकाभाववानिति बुद्धिं प्रति) कालिकेन वह्न्यधिकरणत्वाभाववानिति बुद्धेः

प्रतिबन्धकतया तदवच्छेदकप्रकारतावच्छेदककालिकसंबन्धेन हेत्वधिकरणनिरूपित-वृत्तितावत्साध्याभावीयत्वस्य स्वतादात्म्यस्य च प्रतियोगिताविशिष्टप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्त्यापत्तेः । साध्यता-वच्छेदकस्वरूपसंबन्धावच्छिन्नप्रकारत्वावच्छिन्नवह्न्यधिकरणत्वाभावाभावज्ञाननिष्ठप्रति-बध्यतानिरूपिता कालिकेन वह्न्यधिकरणत्वाभाववानिति ज्ञाननिष्ठा प्रति-बन्धकता तदवच्छेदिका वह्न्यधिकरणत्वाभावनिष्ठा प्रकारता तदवच्छेदक-कालिकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावीयत्वस्य स्वतादात्म्यस्य च प्रतियोगिताविशिष्टप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके वह्न्यधिकरणतात्वे सत्त्वात् । प्रतियोगितासामानाधिकरण्यं साध्यतावच्छेदक-संबन्धमात्रावच्छिन्नत्वं च प्रकारतायां निवेश्य तादृशप्रकारत्वावच्छिन्नत्वं प्रति-बध्यतायां निवेश्यं, तथा च नोक्तदोषः । वह्न्यधिकरणत्वाभावनिष्ठप्रकारतायां साध्यरूपवह्न्यधिकरणत्वनिष्ठप्रतियोगितासामानाधिकरण्यविरहात् । तथापि अप्रमेयस्य-(अभावविशिष्टप्रमेयस्य) घटाद्यनुयोगिकस्वरूपेण साध्यतायां सद्धेतौ अव्याप्तिः स्यात् । (घटः अभावविशिष्टप्रमेयवान् घटत्वादित्यत्राव्याप्तिः स्यात् ।) साध्या-भावस्य अभावविशिष्टप्रमेयाभावस्य कालिकेन योऽभावः स्वरूपेण तद्वानिति बुद्धिं प्रति कालिकेन अभावविशिष्टप्रमेयाभाववानिति बुद्धेः प्रतिबन्धकत्वमिति साध्यम् अभावविशिष्टप्रमेयं तन्निष्ठा प्रतियोगिता तद्विशिष्टा अभावविशिष्ट-प्रमेयाभावाभावनिष्ठा प्रकारता स्वसामानाधिकरण्यस्वावच्छेदकसंबन्धावच्छिन्नत्वाभ्यां भवति, तत्प्रकारत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकप्रकारतावच्छेदक-कालिकसंबन्धावच्छिन्नहेत्वधिकरणघटनिरूपितवृत्तितावत्साध्याभावीयत्वस्य स्व-तादात्म्यस्य च साध्याभावीयसाध्यनिष्ठप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । प्रकारतायां स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्व-सामानाधिकरण्य स्वावच्छेदकधर्मावच्छिन्नत्वसंबन्धैः प्रतियोगितावैशिष्ट्यस्य निवेशे नोक्त-दोषः । अभावविशिष्टप्रमेयाभावाभावनिष्ठप्रकारतायां साध्याभावप्रतियोगितावच्छेदकं अभावविशिष्टप्रमेयत्वं तदवच्छिन्नत्वाभावेन साध्याभावीयप्रतियोगिता न लक्षण-

घटिका लक्षणघटकाभावीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्। अभावस्य घटानुयोगिकस्वरूपेण साध्यतायां सद्धेतौ घटो घटानुयोगिकस्वरूपेण अभाववान् घटत्वादित्यादावभावाभावस्य कालिकेनाभाववत्ताबुद्धिप्रकारतायां प्रतियोगिताका(साध्याभावीयप्रतियोगितावच्छेदका)भावत्वावच्छिन्नत्व, स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वसंबन्धैः प्रतियोगितावैशिष्ट्यस्य सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके अभावत्वे सत्त्वात् । तथाहि अभावाभावरूपस्य साध्याभावस्य कालिकेन योऽभावः स्वरूपेण तद्वानिति बुद्धिं प्रति कालिकेनाभावाभाववानितिबुद्धेः प्रतिबन्धकत्वं तत्प्रतिबन्धकतानिरूपित प्रतिबध्यतावच्छेदकीभूतप्रकारतायां स्वसामानाधिकरण्य स्वावच्छेदकसंबन्धावच्छिन्नत्व-स्वावच्छेदकधर्मावच्छिन्नत्वसंबन्धैः प्रतियोगितावैशिष्ट्यस्य सत्त्वेन तत्प्रकारत्वावच्छिन्नप्रतिबध्यताविशिष्टा स्वावच्छेदकविशेष्यतावच्छेदकासामानाधिकरण्य स्वनिरूपित प्रतिबन्धकतावच्छेदकत्वोभयसंबन्धेनाभावनिष्ठा कालिकसंबन्धावच्छिन्ना प्रकारता तदवच्छेदककालिकसंबन्धावच्छिन्नहेत्वधिकरणघटनिरूपितवृत्तितावत्साध्याभावीयत्वस्य स्वतादात्म्यस्य च साध्याभावीयप्रतियोगितायां सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके अभावत्वे सत्त्वादव्याप्तिरिति तद्वारणाय प्रतियोगितावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्वस्यापि निवेश्यत्वात् । तथा च नोक्तदोषः । प्रतियोगितावच्छेदकाभावत्वातिरिक्तेनाभावाभावत्वेनापि प्रतिबध्यताविशिष्टप्रकारता अवच्छिन्नेति साध्याभावीया प्रतियोगिता न लक्षणघटिका तद्भिन्नाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । स्वावच्छेदकसंबन्धावच्छिन्नत्वं च पर्याप्त्यघटितमेवोपादेयं पर्याप्तिनिवेशस्य प्रयोजनविरहादिति दिक् ।

हेत्वधिकरणनिरूपितवृत्तितायां प्रकारतावैशिष्ट्यनियामकघटकस्वावच्छेदक संबन्धावच्छिन्नत्वं च स्वनिरूपितसंसर्गतावच्छेदकतापर्याप्त्यधिकरणधर्मनिष्ठावच्छेदकताकसंसर्गताकत्वम् तेन स्वरूपकालिकोभयसंबन्धेन वह्न्यभाववत्ता बुद्धेः (वह्निमत्ता बुद्धिं प्रति) प्रतिबन्धकत्वेन प्रकारता(प्रतिबन्धकतावच्छेदकीभूतप्रकारता) निरू-

पितसंसर्गतावच्छेदककालिकत्वावच्छिन्ननिरूपितसंसर्गताकहेत्वधिकरणनिरूपितवृत्तितावद्-वह्न्यभावीयत्वस्य स्वतादात्म्यस्य च साध्याभावीयप्रतियोगितायां सत्त्वेन तद-वच्छेदकत्वस्य साध्यतावच्छेदकत्वे सत्त्वेऽपि वह्निमान् धूमादित्यत्र नाव्याप्तिः । तादृशप्रकारतानिरूपितसंसर्गतावच्छेदकस्वरूपकालिकोभयत्वावच्छिन्नसंसर्गताकहेत्वधि-करणपर्वतनिरूपितवृत्तित्वस्य वह्न्यभावरूपसाध्याभावेऽसत्त्वात् ।

तथा च प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न सामानाधिकरण्यं हेतौ व्याप्तिः । वै० स्वतादात्म्य, स्वविशिष्टप्रकारत्वा-वच्छिन्नप्रतिबध्यताविशिष्टभ्रमानिरूपितप्रकारताविशिष्टवृत्तितावदभावीयत्वोभय-संबन्धेन । प्रकारतायां स्ववै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धा-वच्छिन्नत्व, स्वावच्छेदकधर्मावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्वैतच्चतुष्टयसंबन्धेन । भ्रमानिरूपितप्रकारतायां तादृशप्रतिबध्यता वै०— स्वनिरूपितज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिबन्धकतावच्छेदकत्व, स्वावच्छेदकविशेष्यतावच्छेदकासमानाधिकरण्योभय-संबन्धेन । वृत्तितायां भ्रमानिरूपितप्रकारतावै० स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन ।

**वस्तुतो व्याप्यवृत्तित्वमत्र साध्यतावच्छेदकसंबन्धेन यत्स्वाधि-करणं तद्वृत्त्यभावस्य तादृशसंबन्धावच्छिन्नप्रतियोगित्वाभावरूपं ग्रन्थकृतोऽभिप्रेतमिति जा० टी० ।**

अत्र "नोपादेयं सर्वथा व्याप्यवृत्तिसाध्यके" इत्यत्रेत्यर्थः । साध्यतावच्छेदक-संबन्धेनेति । तथा च साध्यतावच्छेदकसंबन्धेन यत्साध्याधिकरणं तत्र वृत्तिनियामक संबन्धसामान्येन वर्तमानो योऽभावस्तन्निरूपिता या साध्यतावच्छेदकसंबन्धा-वच्छिन्ना प्रतियोगिता तदभाववत्वं व्याप्यवृत्तित्वम् । तादृशव्याप्यवृत्तिसाध्यक-स्थले एव प्रतियोगिवैयधिकरण्यं अभावविशेषणं नोपादेयम् । तादृशं च साध्यम् आत्मत्वं गगनत्वादिकं वा ।

वस्तुतो व्याप्यवृत्तित्वमत्रेत्यादि । अत्र स्वपदं साध्यतावच्छेदकावच्छिन्नपरम् । तेनात्मवृत्तित्वविशिष्टसत्तासाध्यकस्य न व्याप्यवृत्तित्वहानिः । अन्यथा विशिष्टः शुद्धान्नातिरिच्यते इति साध्याधिकरणे घटे कालिकेन स्वरूपेण वा समवायसंबन्धावच्छिन्नसत्तात्वावच्छिन्नप्रतियोगिताकात्मवृत्तित्वविशिष्टसत्त्वाभावस्य वृत्तित्वेन तत्प्रतियोगित्वस्यैवात्मवृत्तित्वविशिष्टसत्तायां सत्त्वेन तस्या व्याप्यवृत्तित्वानुपपत्तेः । तदुक्तौ तु नोक्तदोषः । साध्यतावच्छेदकावच्छिन्नाधिकरणे आत्मनि आत्मवृत्तित्वविशिष्टसत्त्वाभावस्य साध्याभावस्य केनापि संबन्धेन न वृत्तिरवं नित्येषु कालिकायोगादिति साध्यतावच्छेदकसमवायसंबन्धावच्छिन्नघटत्वावच्छिन्नाभावप्रतियोगित्वाभावस्य साध्ये सत्त्वाद् व्याप्यवृत्तित्वं तत्रोपपन्नम् ।

साध्यतावच्छेदकसंबन्धावच्छिन्नत्वञ्च साध्यतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वम् । तेन आत्मत्वस्य समवायस्वकालीनद्रव्यत्ववत्त्वोभयसंबन्धेन साध्यतायां (अयमात्मा ज्ञानादित्यत्र) आत्मानुयोगिकसमवायेन द्रव्यत्वसाध्यतायाञ्च (इदं द्रव्यं ज्ञानादित्यत्र वा) न व्याप्यवृत्तित्वहानिः । अन्यथा स्वकालीनद्रव्यत्ववत्त्वसंबन्धेन साध्याधिकरणे घटे साध्याभावस्य कालिकेन वृत्तित्वतत्प्रतियोगित्वस्यैव साध्ये सत्त्वेन तत्र व्याप्यवृत्तित्वानुपपत्तेः । तथा विवक्षणे च नोक्तदोषः । साध्याधिकरणे आत्मनि केनापि संबन्धेन वृत्तिनियामकेन साध्यतावच्छेदकतादृशोभयसंबन्धावच्छिन्नसाध्यतावच्छेकावच्छिन्नप्रतियोगिताकाभावस्यावृत्तित्वेन वृत्तिमदन्याभावप्रतियोगित्वस्य तत्रासत्त्वात् । एवमात्मानुयोगिकसमवायेन इदं द्रव्यं ज्ञानवत्त्वादित्यत्र शुद्धसमवायेन द्रव्यत्वरूपसाध्याधिकरणे घटे साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावस्य कालिकेन वृत्तित्वात् तत्प्रतियोगित्वस्य साध्ये सत्त्वेन तदनुपपत्तेः । तथाविवक्षणे च नोक्तदोषः । आत्मानुयोगिकसमवायेन साध्याधिकरणे आत्मनि तादृशसाध्याभावस्य वृत्तिनियामकेन केनापि संबन्धेनावृत्तित्वेन तत्र वृत्तिमदभावाप्रतियोगित्वस्य साध्ये सत्त्वान्नोक्तानुपपत्तिरिति बोध्यम् ।

अथात्र हेत्वधिकरणवृत्तित्वं संबन्धसामान्येनैवाभावेऽभिप्रेतम् । कथमन्यथा सत्तावान् जातेरित्यत्र प्रतियोगिवैयधिकरण्योपादानमुक्तम् । अन्यथा हेत्वधिकरणे साध्याभावस्य स्वरूपेणावृत्तित्वेन तत्र स्वरूपेण वृत्तिमतोऽन्याभावस्य साध्यरूपसत्तायामप्रतियोगित्वस्य सत्त्वेन व्याप्यवृत्तित्वोपपत्तौ वस्तुतस्तुकल्पानुसरणवैयर्थ्यापत्तेः । एवञ्च हेत्वधिकरणसंबंधित्वस्य प्रवेशे व्याप्यवृत्तिसाध्यकेऽसंभवापत्त्या (अयमात्मा ज्ञानादित्यत्र समवायेनात्मत्वाभावस्य स्वसमानकालीनघटाभाववत्त्वसंबन्धेनात्मनि सत्त्वेन तत्प्रतियोगित्वस्य साध्ये सत्त्वान्न कस्यापि व्याप्यवृत्तित्वं स्यात्) वृत्तित्वस्यैव (अभावे हेत्वधिकरणवृत्तित्वस्यैव न तु संबन्धित्वस्य) प्रवेशनीयतया विषयितया गगनरूपवद्भेदसाध्यकव्यभिचारिणि (घटो विषयितया गगनवद्(ज्ञान)भिन्नः सत्तावत्त्वादित्यादौ) गगनसाध्याभावस्य हेत्वधिकरण(ज्ञान) वृत्तित्वविरहेण साध्याभावो न लक्षणघटक इत्यभावान्तरमादायातिव्याप्तिः । न च साध्यतावच्छेदकतदन्यत्किञ्चिदन्यतरविशिष्टभेदाभावमादाय दोषवारणसंभव इति वाच्यम् । हेत्वधिकरणे ज्ञाने विषयितया गगनघटान्यतरविशिष्टभेदाभावमादाय विषयितया गगनवद्भिन्नः सत्त्वादित्यत्र नातिव्याप्तिः, तादृशाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके विषयितया गगनवद्भिन्नत्वे सत्त्वादिति तु न वाच्यम् । उक्तभेदस्य (विषयितया गगनवद्भेदस्य) स्वरूपतादृशभेद(विषयितया गगनवद्भेद)त्वावच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वान्यतरसंबन्धेन साध्यतायां व्यभिचारिणि (प्रमेयत्वादौ) तत् (अतिव्याप्ति)संभवादिति चेन्न (तत्र साध्याभावस्य विषयितया गगनविशिष्ट (ज्ञान) भेदाभावस्य विषयितया गगनवद्भेदत्वावच्छिन्नाविषयकस्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन हेत्वधिकरणे प्रतियोगिवैयधिकरण्यं संभवति । तस्य गगनरूपत्वेन हेत्वधिकरणेऽवृत्तित्वं गगनमवृत्तमिति सिद्धान्तात् । अतएव न स्वरूपेण हेत्वधिकरणे साध्याभावः कथयितुं शक्यः, किन्तु अभावान्तर एव लक्षणघटक इति तदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेन तत्रातिव्याप्तिरिति चेन्न) । हेत्वधिकरणनिरूपितसंबन्धत्वे साध्याधिकरणत्व,

वृत्त्यनियामकसंबन्धावच्छिन्नत्वोभयाभाववत्त्वस्य विशेषणीयत्वात् । उक्तव्यभिचारिणि (स्वरूपविषयित्वेन गगनवद्भेदत्वावच्छिन्नप्रतियोगिकस्ववृत्तिवाच्यत्ववत्त्वान्यतर-संबन्धेन विषयितया गगनवद्भेदवान् प्रमेयत्वादित्यत्र) हेत्वधिकरणनिरूपित-साध्याभावनिष्ठसंबन्धितायां साध्यवन्निरूपितत्वविरहेणोभयाभावसत्त्वान्नातिव्याप्तिः । सद्धेतौ च हेत्वधिकरणनिरूपितवृत्त्यनियामकसंबन्धावच्छिन्नसंबन्धितायामुक्तोभयाभावस्य सत्त्वेन नाव्याप्तिरिति ।

व्याप्यवृत्तित्वघटक—स्वाधिकरणवृत्तित्वस्य संबन्धसामान्येन प्रविष्टत्वात् एतल्लाभार्थमेव सर्वथैव व्याप्यवृत्तिसाध्यक इत्युक्तं, तस्य संबन्धविशेषा-नियन्त्रितत्वादिति जा० टी० ।

तस्य सर्वथा व्याप्यवृत्तित्वस्य । इदं च तल्लाभार्थतायां हेतुः । तथा च स्वाधिकरणे यस्याभावः कथञ्चिदपि न वर्तते स एव यत्र सर्वथा व्याप्यवृत्तित्वेन व्यवह्रियते अतः सर्वथेति पदसमभिव्याहृतपदात् अनुपदोक्त-तादृशाप्रतियोगित्वमेव व्याप्यवृत्तित्वं बोध्यते इति भावः ।

अनुपदोक्ततादृशाप्रतियोगित्वमेवेति । साध्यतावच्छेदकसंबन्धेन स्वाधिकरणे वृत्तिनियामकेन येन केनापि संबन्धेन वृत्त्यभावाप्रतियोगित्वमेवेत्यर्थः । यद्वा उक्तपञ्चम्यन्तस्य (संबन्धसामान्येन प्रविष्टत्वादित्यत्र प्रविष्टत्वादिति पञ्चम्यन्तस्य) तेनेत्यत्रान्वयः । तथा च यतः उक्तव्याप्यवृत्तित्वस्य वृत्तित्वांशे न संबन्धविशेषावच्छिन्नत्वम्, अतो व्यभिचारित्वा-दीनां वृत्त्यनियामकत्वेनैव नात्मत्वादेर्व्याप्यवृत्तित्वहानिः । अन्यथा तत् (वृत्त्यनियामक)संबन्धानां वृत्तिनियामकत्वेऽपि आत्मत्वादीनां व्याप्यवृत्तित्वं न स्यादेवेति भावः । स्वसमानकालीनद्रव्यत्ववत्त्वसंबन्धेन समवायेनात्मत्वाभाव-स्यात्मनि वृत्तित्वेन तत्प्रतियोगित्वस्यैवात्मनि सत्त्वात् । अथवा न वृत्तिनियामकोऽभ्युपेयः । अत्रैवोक्तपञ्चम्यन्तस्यान्वयः (प्रविष्टत्वादित्यस्यान्वयः) न चोक्तसंबन्धस्य (व्यभिचारित्वसंबन्धस्य) वृत्तिनियामकत्वे एव तत्प्रतिषेधो

युज्यते (व्याप्यवृत्तित्वप्रतिषेधो युज्यते) इति वाच्यम् । इह हेतावुपाधिरित्यादि व्यवहारेण व्यभिचारित्वसंबन्धस्य वृत्तिनियामकत्वस्याभ्युपेयत्वात् ।

न चोक्तव्यवहारस्य का गतिरिति वाच्यम् । षष्ठ्यर्थेऽपि सप्तमीप्रयोगस्य शास्त्रे स्वीकरणीयत्वात् । दृश्यते चैवमन्यत्रापि भ्रमति गगने रात्रौ रात्रावखण्डकलः शशीत्यादौ । (रात्रिसंबन्धिनी अखण्डा कला यस्य सः शशी) । अतएव न वृत्तिनियामक इत्यस्यानुवादत्वे वृत्त्यनियामकघटितस्यैव व्यभिचारित्वस्य वृत्तिनियामकत्वप्राप्त्या जन्यत्वाभावादीनां व्याप्यवृत्तित्वमनुभवसिद्धमवलुप्येतेत्यपि निरस्तम् ।

क्वचिच्च संबन्धविशेषनियन्त्रितत्वादिति पाठः । तत्र स्वा(साध्या)धिकरणत्वांशे इति शेषः । पञ्चम्यन्तस्य (व्याप्यवृत्तित्वघटकस्वाधिकरणवृत्तित्वस्य संबन्धसामान्येन प्रविष्टत्वादित्यस्य) आत्मनो न व्याप्यवृत्तित्वहानिरित्यत्रान्वयः । तेनादिग्राह्य(तेनात्मादेरित्यत्रादिपदग्राह्य)नित्यज्ञानादीनां विषयितयाधिकरणे कालिकेनात्मत्वाधिकरणे स्वाभावस्य सत्त्वेऽपि न व्याप्यवृत्तित्वहानिरित्यर्थ इति । विषयितया नित्यज्ञानाधिकरणे जन्ये कालिकेन समवायावच्छिन्ननित्यज्ञानाभावस्य सत्त्वेन, एवं कालिकेनात्मत्वाधिकरणे जन्ये समवायसंबन्धावच्छिन्नात्मत्वाभावस्य सत्त्वेन च तत्तदभावप्रतियोगित्वस्य नित्यज्ञाने आत्मत्वे च सत्त्वेऽपि न व्याप्यवृत्तित्वहानिः । स्वाधिकरणत्वस्य (साध्याधिकरणत्वस्य) साध्यतावच्छेदकसंबन्धेन विवक्षितत्वात् ।

न च विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशादिदमसङ्गतमिति वाच्यम् इति जा० टी० । तेन (अभावे प्रतियोगिव्यधिकरणत्वप्रवेशेन)—

**अयं गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः, भूतत्वमूर्तत्वोभयवान् मूर्तत्वादित्यादौ नातिव्याप्तिरिति दीधितिः ।**

ननु व्यभिचारिणः सर्वलक्षणा(व्याप्यवृत्तिलक्षणाव्याप्यवृत्तिलक्षणयोर)

लक्ष्यतया कथं न (विशिष्टसत्तासाध्यकजातौ) अतिव्याप्तिः (व्याप्यवृत्तिसाध्यकव्याप्तिलक्षणस्यातिव्याप्तिः) इति चेदत्र केचित् अव्याप्यवृत्तिसाध्यकस्थलीयव्याप्तिलक्षणे साध्यतावच्छेदकेऽव्याप्यवृत्तितावच्छेदकत्वस्य (व्याप्यवृत्तितावच्छेदकत्वाभावस्य विशेषणतया विशिष्टसत्तात्वे तत् (अव्याप्यवृत्तिताकत्वरूपविशेषण-व्याप्यवृत्तितावच्छेदकत्वाभावरूपविशेषण,विरहेण नातिव्याप्तिरित्याशयः (न चेत्यादि ग्रन्थाशयः) इति वदन्ति। तन्नातिचारु। अभ्रान्तस्य व्यभिचारिलिङ्गकानुमितिप्रसङ्गरूपवक्ष्यमाणदोषस्यासङ्गतेः। साध्यतावच्छेदकस्या (विशिष्टसत्त्वस्या) व्याप्यवृत्तितानवच्छेदकत्वात्। तथा च व्याप्यवृत्तिलक्षणघटकाव्याप्यवृत्तितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यरूपव्याप्तिज्ञानाभावेन कथं विशिष्टसत्तावान् जातेरित्यनुमितिरभ्रान्तस्य स्यादिति तादृशानुमितिप्रसङ्गरूपदोषस्यासङ्गतेः। व्यभिचारग्रहकालेऽनुमितिप्रसङ्गमात्रस्य वक्ष्यमाणतात्पर्यविषयत्वे तु उक्तोत्तरस्यापि (केचिदुक्तोत्तरस्यापि) संभव एवेति। (जातौ विशिष्टसत्त्वव्यभिचारज्ञानदशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वज्ञानाद् विशिष्टसत्त्वसाध्यकानुमितिप्रसङ्गस्यैव प्रकृतेऽतिप्रसङ्गपदार्थत्वादिति केचिदुक्तस्य संभव एवेति)।

वस्तुतस्तु प्रकृतसाध्यहेत्वादेरननुगतत्वेनाननुगत एव व्याप्यत्वव्यवहारप्रयोजकः। तत्र व्याप्यवृत्तितत्तत्साध्यनिरूपितव्याप्यत्वव्यवहारे लाघवेन प्रतियोगिवैयधिकरण्याविशेषितस्वोद्देश्यतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदक (व्याप्यवृत्तिसाध्यकव्याप्यत्वव्यवहारोद्देश्यतावच्छेदकहेतुतावच्छेदकावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदक) तत्तद्धर्मावच्छिन्नसामानाधिकरण्यमेव प्रयोजकमिति न जातित्वावच्छिन्ने द्रव्यत्वत्वावच्छिन्न इव विशिष्टसत्त्वनिरूपितव्याप्यत्वहानिप्रयोजकस्योक्तसामानाधिकरण्यस्य हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदका (विशिष्टसत्तात्वा) वच्छिन्नसामानाधिकरण्यस्य तत्र (जातौ) सत्त्वात्। सतश्च प्रतियोगिवैयधिकरण्यघटितसामानाधिकरण्यस्य तदप्रयोजकत्वादित्यत्र तात्पर्यम् (तादृशव्यवहारप्रयोजकत्वादित्यत्र तात्पर्यम्।)

जातौ विशिष्टसत्त्वव्यभिचारग्रहदशायामपि विशिष्टसत्त्वधर्मिकजातिमन्निष्ठ-प्रतियोगिव्यधिकरणाभावाप्रतियोगित्वज्ञानात् विशिष्टसत्त्वसाध्यकानुमितिप्रसङ्गस्यैव प्रकृतेऽतिप्रसङ्गपदार्थत्वादिति जा० टी० ।

विशिष्टसत्तात्ववृत्तिस्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणजातिमद्वृत्त्य-भावप्रतियोगितावच्छेदकत्वघटकस्वग्रह इत्यर्थः । (स्वप्रतियोगितावच्छेदकावच्छि-न्नानधिकरणवृत्ति जातिमद्वृत्त्यभावावच्छेदकं विशिष्टसत्तात्वमिति ग्रहे इत्यर्थः) । इदञ्चेष्टापत्तिवारणायोक्तम् । (व्यभिचारज्ञानकाले तद्धेतुकानुमितेरिष्टापत्तिः कर्तुमशक्येति व्यभिचारदर्शनं बोध्यम्) । अथ व्याप्यत्वव्यवहार इव व्याप्यवृत्तिसाध्यकानुमितावपि प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्यैव कारणत्व-कल्पनात् कथं प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानात् विशिष्टसत्तावान् जाते-रित्यनुमितिप्रसङ्ग इति चेन्न । व्याप्यवृत्तिसाध्यकस्थलेऽपि अव्याप्यवृत्तित्व-ग्रहदशायां अनुमित्युपपत्तये प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानहेतुताया व्याप्ति-ग्रहग्रन्थे वक्ष्यमाणतया तत्काले (व्याप्यवृत्तेरव्याप्यवृत्तित्वग्रहकाले) आपत्ति-संभवात् (विशिष्टसत्तावान् जातेरित्यनुमितेरापत्तिसंभवात्) । न चैवं नोपादे-यञ्चेत्यादिग्रन्थासङ्गतिरिति वाच्यम् । यथा सल्लिङ्गकानुमितेः भ्रान्तमात्र-पुरुषीयतया असिद्धान्ततया तद्वारणाय (भ्रान्तानुमितिवारणाय) अव्याप्य-वृत्तिसाध्यकानुमितौ प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानस्यैव हेतुत्वं न तथा व्याप्यवृत्तसाध्यके । तत्र (व्याप्यवृत्तिसाध्यकस्थले) प्रतियोगिवैयधिकरण्याघटित-व्याप्तिज्ञानस्यापि प्रमात्वसंभवादित्याशयाद् व्यवहारप्रयोजकनिर्वचनपरत्वाद्वेति ।

व्याप्यत्वव्यवहारप्रसङ्गरूपसार्वत्रिकातिप्रसङ्गपदार्थं प्रकृते संग-मयितुमाह विशिष्टसत्त्वस्यापि उक्तरीत्या व्याप्यवृत्तित्वविरहाच्चेति जा० टी० ।

विशेष्यसंबन्धविशेषणावगाहित्वरूपप्रमात्वस्यापारिभाषितत्वसंपत्यर्थं विशिष्टा-तिरिक्तादरः । विशिष्टं गुणकर्मान्यत्वविशिष्टसत्त्वं किं सत्ताविशिष्टं गुणकर्मान्यत्वं

किं वा गुणकर्मान्यविशिष्टं सत्त्वं विनिगमनाविरहेण तत्तदुभयरूपं वाच्यम्। तथा च साध्यतावच्छेदकसंबन्धः समवाय इव स्वरूपमपि भविष्यति । अभिलषितश्च समवाय एव साध्यतावच्छेदकसंबन्धः स न सिद्ध्यति । अतो विशिष्टसत्त्वमतिरिक्तं मन्यते । किं वा येन संबन्धेन विशिष्टघटकविशेष्ये विशेषणावगाहित्वं यत्र तत्र तस्य प्रमात्वं वक्तव्यम् । भवति च समवायेन गुणकर्मान्यत्वविशिष्टसत्त्ववद् द्रव्यमिति ज्ञानं प्रमा तस्यां न पारिभाषिकत्वं तद्वति तत्प्रकारकत्वस्य तत्र सत्त्वादिति भावः । यद्वा विशिष्टाधिकरणत्वस्यातिरिक्तत्वकल्पनापेक्षया विशिष्टस्यातिरिक्तकल्पनाया एव युक्तत्वात् तदादरः विशिष्टस्य शुद्धादतिरिक्तत्वादरः । अन्यथा विशिष्टाधिकरणत्वेऽतिरिक्तत्वस्यास्वीकारे सत्तावान् गुण इव गुणो विशिष्टसत्तावानित्यप्यापद्येत । न च गुणकर्मान्यत्वविशिष्टसत्त्वाधिकरणत्वं क्लृप्तद्रव्यत्वाधिकरणत्वरूपं न तदतिरिक्तमिति न गौरवमिति वाच्यम् । निरूपकत्वस्योभयधर्मावच्छिन्नस्यातिरिक्तस्य तथापि प्रसङ्गात् तत्तत्क्षणविशिष्टसत्त्वनिरूपितानन्ताधिकरणत्वस्याप्यतिरिक्तस्यैव कल्पनीयतया गौरवाच्चेति बोध्यम् । विशिष्टस्यातिरिक्तत्वे तदधिकरणत्वमपि अतिरिक्तमित्युभयातिरिक्तत्वापेक्षयाऽधिकरणत्वस्यातिरिक्तत्वं लाघवाद्युक्तमिति केचित् ।

प्राञ्चस्तु विशिष्टसत्त्वस्य व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्याप्रवेशात् भूतत्वेति साध्यान्तरं, तत्र च भूतत्वं आत्मान्यत्वे सति विशेषगुणवत्त्वं, मूर्तत्वम् अवच्छिन्नपरिमाणवत्त्वं, तदुभयञ्चाव्याप्यवृत्त्येव, घटादावुत्पत्तिकालावच्छेदेन तदुभयाभावसत्त्वादित्याहुरिति जा० टी० ।

**विशिष्टसत्त्वसाध्यकेति ।**

इदमुपलक्षणम् । गुणरूपयोः भूतत्वमूर्तत्वयोर्व्याप्यवृत्तिगुणात्मकत्वे सांकर्येण तयोर्जातित्ववारणं न घटते, स्वाश्रयेऽसार्वदिकवृत्तेः जातित्वस्याप्रसक्तेः । नित्यत्वे सति अनेकसमवेतत्वरूपजातेः नित्यत्वेन सार्वदिकत्वात्, असार्वदिके जातित्वमेव नास्ति । तस्मात् स्पर्शवदवृत्तित्वे सति शब्दवदवृत्तिधर्मशून्यत्वं विशेषगुणवद्वृत्त्यात्मा-

वृत्तिगुणधर्मवत्त्वं वा भूतत्वम् । अवच्छिन्नपरिमाणवेगवदाद्यवृत्तिगगनावृत्तिधर्मसमवायित्वं वा मूर्तत्वमित्यवश्यमभ्युपेयमिति भूतत्वमूर्तत्वयोरपि न व्याप्यवृत्तित्वसंभव इति ।

**दीधितौ उभयत्वं हि न विशिष्टत्वादनतिरिक्तमिति ।**

न च नञ्द्वयोक्तिर्विफलेति वाच्यम् । (उभयत्वं हि विशिष्टादतिरिक्तमित्येवोच्यतामिति शङ्का) । तथा सति उभयत्वमात्रस्य विशिष्टत्वातिरिक्तत्वाभावात् । तदुक्तौ च (नञ्द्वयोक्तौ च) अभावान्वयस्यानुयोगितावच्छेदकावच्छेद्यत्वनियमेन तल्लाभादिति । उभयत्वमात्रस्य विशिष्टत्वातिरिक्तत्वलाभादिति ।

वृत्तिमति व्याप्त्यभावस्य व्यभिचारनियतत्वाद् व्यभिचारं ग्राहयति नात्रोभयमिति प्रतीतेर्दुर्वारत्वात् । अत्र मूर्तत्वाश्रये मनसि इति जा० टी० । गगनादिहेतोरव्याप्यत्वस्य साध्यासामानाधिकरण्याधीनत्वादिदमुक्तम् वृत्तिमतीत्युक्तम्) वह्निमान् गगनादित्यत्र गगनस्य साध्याभाववदवृत्तित्वेन कथमव्याप्यत्वं वाच्यमिति तु न वाच्यम् । वृत्तिमति हेतौ व्याप्त्यभावस्य व्यभिचाराधीनत्वं नियतम् । अवृत्तिहेतौ व्याप्त्यभावस्य च न व्यभिचाराधीनत्वं नियतं किन्तु साध्यासामानाधिकरण्याधीनत्वमिति विवेकः ।

अनवस्थाभयेनेत्यादिरिति । ननु वह्न्यादिभेदमादायाव्याप्तेः प्रतियोग्यसमानाधिकरणपदेनैव वारणादत्यन्तपदं व्यर्थमत आह—

**अत्यन्तपदञ्चेति ।**

अत्यन्ताभावत्वनिरूपकं यत्प्रतियोगित्वं तदाश्रयवैयधिकरण्यविवक्षायाः फलमाह—अन्यथेति । तद्भेदस्य स्वसमानाधिकरणाभावान्तरभेदस्य स्व स्वरूपानतिरिक्ततयेति ।

**अनवस्थाभयेनेत्यादिरिति जा० टी० ।**

पटाभावभेदस्य (घटाभावसमानाधिकरणो यः पटाभावस्तद्भेदस्य) अतिरिक्तत्वे घटाभावातिरिक्तत्वे भेदभेदस्य (स्वभेदभेदस्य) न स्वस्वरूपत्वं किन्तु

अतिरिक्तत्वमिति तद्भेदस्यापि अतिरिक्तत्वमित्यनवस्थापत्तिरित्यर्थः । यद्यपि एवमपि अभावाभावस्यातिरिक्तत्वेऽपि प्रतियोगित्वादिकल्पनानवस्थितिस्तदवस्था । अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति घटनिष्ठप्रतियोगिता घटाभावाभावरूपा घटाभावनिष्ठा प्रतियोगिता घटस्य तृतीयाभावरूपा । घटस्यचतुर्थाभावप्रतियोगिता द्वितीयाभावरूपा । अन्यथाऽभावभेदेन तत्प्रयुक्तप्रतियोगित्वस्यानवस्था स्यात् । पटाभावभेदस्यातिरिक्तत्वे भेदभेदस्यापि अतिरिक्तत्वमित्यनवस्थापत्तिरित्यर्थः । यद्यप्येवमपि प्रतियोगित्वकल्पनानवस्थितिस्तदवस्था । तथापि (प्रतियोगित्वानवस्थाभयेनाभावाभावस्य प्रतियोगित्वस्वरूपत्वेऽपि) अनन्तभेदकल्पनालाघवं भवत्येवेति । घटभेदभेदस्य घटरूपत्वमेव । तस्य घटभिन्नत्वे अनवस्थापत्तिः । मम पक्षे तृतीयभेदस्येव चतुर्थभेदस्य घटभेदरूपत्वेन नानवस्थेति । एवमग्रेऽपि बोध्यम् । न चैवमपि पटाभावेऽपि घटाभावभेदस्येव पटाभावभेदस्यापि सत्त्वप्रसङ्गः, तद्भिन्नस्य (घटाभावसमानाधिकरणपटाभावभेदाभिन्नस्य) घटाभावस्य तत्र (पटाभावे) सत्त्वादिति वाच्यम् । घटाभावस्य तादात्म्येनैव पटाद्यभावभेदव्यवहारप्रयोजकत्वाभ्युपगमात् । पटाभावे घटाभावस्य स्वरूपसंबन्धेन सत्त्वेऽपि तत्र (पटाभावे) घटाभावतादात्म्येनासत्त्वात् । अभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणात्मकत्वेऽपि नान्यात्यन्ताभावोऽधिकरणात्मा (अभावाभावो नाधिकरणस्वरूपः । अनवस्थितेरभावात् । तथाहि समानाधिकरणसंबन्धावच्छिन्न(संयोगादिसंबन्धावच्छिन्न)प्रतियोगिताकाभावस्याभावः (भूतले घटाभावाभावः) प्रथमाभावस्य (घटाभावस्य) प्रतियोगिस्वरूपः घटस्वरूपः । तदभावः (घटाभावाभावाभावः) प्रथमाभावः (घटाभावस्वरूपः) । व्यधिकरणसंबन्धावच्छिन्नाभावस्य (संयोगेन घटत्वाभावस्य) स्वरूपेणाऽभावोऽसिद्ध एव । (व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वेन स्वरूपेण सर्वत्र विद्यमानत्वेन तदभावस्य स्वरूपेणाभावोऽसिद्ध एव) । भावस्य व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकसर्वोऽप्यभावो गगनाभावस्वरूपः । समनियताभावानामैक्यात् गगनमवृत्तमिति गगनस्य न कुत्रापि

वृत्तित्वमिति गगनाभावः केवलान्वयी । अभावस्य स्वप्रतियोगिना सहैव विरोधात् । यत्र प्रतियोगी न वर्तते तत्र तदभावो वर्तत एव । नित्याभावस्य (भेदस्यात्यन्ताभावस्य च) कालिकेन सर्वोऽभावः कालिकेन घटत्वाभावात्मक एव । स्वरूपेण तदभावश्च तत्प्रतियोगिरूपः । घटत्वभेदाभावो घटत्वरूपः (घटत्वात्यन्ताभावाभावो घटत्वरूपः) । एवं विशेषरूपेण संसर्गता च न स्वीक्रियत इत्यधिकरणात्मकता चाभावभेदमात्रस्यैव (अत्यन्ताभावभेदस्यैव)इदानीं ग्रन्थकर्तुरभिमता । अतएव (नित्याभावस्य कालिकेन सर्वाभावः कालिकेन घटत्वाभाव एवेति स्वीकारादेव, घटाभावे यः स्वसमानाधिकरणपटाभावभेदः स एव घटाभावरूप इत्यस्य स्वीकारादेव) अभावाभावस्य प्रतियोगिरूपतामेवावलम्ब्य संप्रदाय इत्यस्वरस इत्यादिना अत्रास्वरसं वक्ष्यति । एवञ्च नित्याभावस्य भेदस्यात्यन्ताभावस्य च कालिकेनाभावस्य कालिकेन घटत्वाभावरूपत्वे घटाभावस्य कालिकसंबन्धावच्छिन्नपटाभावाभावात्मकतयात्यन्ताभावत्वनिरूपितपटाभावनिष्ठप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वात् लक्षणघटक प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तितादवस्थ्यमिति निरस्तम् । पटाभावस्य कालिकेनाभावो घटत्वाभावरूपो न घटाभावरूपः । कालिकसंबन्धावच्छिन्नात्यन्ताभावत्वावच्छिन्नप्रतियोगिताकाभावो लाघवाद् घटत्वाभावरूपः । अत्यन्ताभावस्य स्वरूपेण योऽभावः स एव प्रथमाभावप्रतियोगिरूप इति सिद्धान्तः । तथा च घटाभावो लक्षणघटकः प्रतियोगिव्यधिकरणः प्रसिद्ध इति नाप्रसिद्धनिबन्धनाऽव्याप्तिः ।

अतएव (पटाभावस्य यः कालिकेनाभावः स घटत्वाभावरूपो न घटाभावरूप इति स्वीकारादेव), अभावाभावस्य प्रतियोगिरूपतामेवावलम्ब्य "संप्रदाय" इत्यस्वरसः । तद्वीजन्तु इत्यादिना अस्वरसं वक्ष्यति । एवञ्च (पटाभावस्य कालिकेन योऽभावस्तस्य घटत्वाभावरूपत्वे) घटाभावस्य स्वसमानाधिकरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावत्व-

निरूपितपटाभावनिष्ठप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिः । प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वविशेषणेऽपि तादवस्थ्यमिति निरस्तम् । तादृशाभावस्य घटाभावसमानाधिकरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावस्य घटत्वाभावरूपत्वेन घटाभावानात्मकत्वात् । "संप्रदाय इत्यस्वरस" इत्यादिना वक्ष्यमाणदोषतुल्यत्वेनेष्टत्वाच्चेति । संप्रदाय इति यथात्रास्वरसं ध्वनयति तथात्यन्ताभावत्वनिरूपितत्वनिवेशेन घटाभावसमानाधिकरणपटाभावभेदमादायाव्याप्तिरूपदोषवारणेऽपि । घटाभावसमानाधिकरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावमादायाव्याप्तिरूपदोषोऽस्त्येवेति तद्दोषस्यास्मिन् मते इष्टत्वादिति भावः ।

परे तु वह्निमान् धूमादित्यत्र हेतुसमानाधिकरणप्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याव्याप्तिः । तथा हि लक्षणघटकघटाभावस्य स्वसमानाधिरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावत्वनिरूपितपटाभावनिष्ठप्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्येन लक्षणघटकप्रतियोगिव्यधिकरणाभावस्याप्रसिद्धेः । कालिकसंबन्धावच्छिन्नतादृशपटाभावाभावीयप्रतियोगितावारणाय स्वप्रतियोगिमत्ताग्रहविरोधिताघटकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेदकं यदत्यन्ताभावत्वरूपमनुयोगित्वं तन्निरूपितत्वं लक्षणघटकाभावीयप्रतियोगितायां निवेश्यम् । तथा च लक्षणघटकघटाभावसमानाधिकरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावत्वरूपानुयोगितायां स्व(घटाभाव)-प्रतियोगि(घटरूपप्रतियोगि)मत्ताग्रहविरोधितावच्छेदकस्वरूपसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वस्य विरहेण तन्निरूपितपटाभावनिष्ठा प्रतियोगिता न ग्राह्या किन्तु घटनिष्ठा प्रतियोगितैव ग्राह्या तदवच्छेदकावच्छिन्नासामानाधिकरण्यस्य घटाभावे सत्त्वेन न प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याव्याप्तिः ।

यत्तु अत्यन्ताभावत्वनिरूपितप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं विशेषणमस्ति । लक्षणघटकघटाभावसमानाधिकरणपटाभावत्वावच्छिन्न-

कालिकसंबन्धावच्छिन्नप्रतियोगिताकपटाभावाभावीयपटाभावनिष्ठप्रतियोगितायामत्यन्ताभावत्वरूपानुयोगितानिरूपितत्वस्य सत्त्वेऽपि साध्यतावच्छेदकसंयोगादिसंबन्धावच्छिन्नत्वविरहेण सा प्रतियोगिता न ग्राह्या किन्तु घटनिष्ठैव प्रतियोगिता ग्राह्या तदवच्छेदकावच्छिन्नासामानाधिकरण्यस्य घटाभावे सत्त्वेन न तादृशाभावाप्रसिद्ध्याव्याप्तिः । न च लक्षणघटकाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशेनैव भेदत्वनिरूपितप्रतियोगिताया वारणेन प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वविशेषणं व्यर्थमिति वाच्यम् । स्वरूप, कालिकोभयसंबन्धावच्छिन्नप्रतियोगिताकाभावमादायाव्याप्तिरूपदोषवारणाय लक्षणघटकघटाभावसमानाधिकरणपटाभावाभावस्य घटाभावरूपत्वेन तदीयप्रतियोगितावच्छेदकपटाभावत्वावच्छिन्नप्रतियोगिसामानाधिकरण्यस्य घटाभावे सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याव्याप्तेः । अभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकरणस्वरूपत्वं संप्रदायमते बोध्यम् । साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वस्यैव साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य वाच्यतया भेदत्वनिरूपितप्रतियोगितायां संबन्धानवच्छिन्नत्वपक्षे तत्सार्थक्यसंभवात् (लक्षणघटकाभावीयप्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वविशेषणस्य सार्थक्यसंभवात्) । अत्यन्ताभावत्वनिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायामनिवेशे साध्यतावच्छेदकसंबन्धावच्छिन्नस्योक्तरूपस्य पारिभाषिकस्य निवेशेऽपि घटाभावसमानाधिकरणपटाभावभेदीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धभिन्नसंबन्धानवच्छिन्नत्वस्य सत्त्वेनाव्याप्तिः स्यात् । तत्तुच्छम्, कालिकेन घटसाध्यकतत्क्रियात्वे सद्धेतौ (इयं कालिकेन घटवती तत्क्रियात्वादित्यत्र) अव्याप्त्यापत्तेः । तत्रात्यन्ताभावत्वनिरूपितप्रतियोगितायाः कालिकसंबन्धावच्छिन्नाया गगननिष्ठायाः साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वादिति वदन्ति । (तथा च लक्षणघटकविभिन्नकालीनपटाभावस्य स्वसमानाधिकरणगगनाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकगगनाभावाभावत्वरूपानुयोगितानिरूपिता साध्यतावच्छेदककालिकसंबन्धावच्छिन्ना गगनाभावनिष्ठा प्रतियोगिता तदवच्छेदकगगनाभावत्वावच्छिन्नसामानाधिकरण्यस्य लक्षणघटकघटाभावे सत्त्वेन प्रतियोगिव्यधिकरण-

लक्षणघटकाभावाप्रसिद्ध्याऽव्याप्त्यापत्तिरिति वदन्ति)। तन्न, घटभिन्नं नित्यत्वादित्यत्राव्याप्तितादवस्थ्यात्। हेत्वधिकरणे गगने यो घटाभावस्तत्समानाधिकरणपटाभावत्वावच्छिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकाभावीयप्रतियोगिमत्ताग्रहप्रतिबन्धकतावच्छेदकस्वरूपसंबन्धावच्छिन्नहेत्वधिकरणगगननिरूपितवृत्तितावच्छेदकपटाभावाभावत्वनिरूपितपटाभावनिष्ठप्रतियोगितावच्छेदकपटाभावत्वावच्छिन्नसामानाधिकरण्यस्य घटाभावे सत्त्वेन लक्षणघटकप्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या गगनं घटभिन्नं नित्यत्वादित्यत्राव्याप्तेस्तादवस्थ्यात्। एवं घटाभावस्य पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावस्य चैकतया घटाभावनिरूपिताया हेत्वधिकरणनिरूपितवृत्तितावच्छेदकतादृशाभावत्वनिरूपिताया (पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाभावत्वनिरूपिताया) पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावनिष्ठाया अवच्छेदकीभूतपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वावच्छिन्नसामानाधिकरण्यस्य द्वितीयक्षणावच्छेदेन घटाभावे सत्त्वेन वह्निमान् धूमादित्यत्र लक्षणघटकप्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याव्याप्तितादवस्थ्यात्। न च पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य पूर्वक्षणमात्रवृत्तित्वं घटाभावस्य च पूर्वापरादिक्षणवृत्तित्वमिति कथं पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य घटाभावरूपत्वमिति वाच्यम्। घटभेदस्य स्वरूप पटत्वावच्छिन्नप्रतियोगित्वान्यतरसंबन्धेन साध्यतायां सद्धेतौ पटाभावो घटभिन्नः पटाभावत्वादित्यत्राव्याप्तेः। पटाभावान्याभावस्यैव प्रतियोगिव्यधिकरणतया तस्य च पूर्वक्षणावच्छिन्नपटाभावत्वाभावेन स्वनिष्ठेनाभिन्नतया तादृशाभावत्वस्य च हेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वेन तन्निरूपितप्रतियोगित्वमादायाव्याप्तेरुद्धारासंभवादिति।

स्वरूप,पटत्वावच्छिन्नप्रतियोगितान्यतरसंबन्धेन घटभिन्नं पटाभावत्वादित्यत्राव्याप्तेः। तथा च लक्षणघटकघटाभावः स्वसमानाधिकरणपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्वरूपः, अभावाधिकरणकाभावप्रतियोगिकाभावः किं वा स्वसमानाधिकरणाभावस्याभावः स्वरूपमिति स्वीकारात्। तथा च पूर्वक्षण-

वृत्तिपटाभावाभावीया पूर्वक्षणवृत्तिपटाभावनिष्ठा प्रतियोगिता साध्यतावच्छेदकस्वरूपसंबन्धावच्छिन्ना हेत्वधिकरणनिरूपितवृत्तितावच्छेदकपूर्वक्षणवृत्तिपटाभावाभावत्वनिरूपिता च तादृशप्रतियोगितावच्छेदकपूर्वक्षणवृत्तित्वविशिष्टपटाभावत्वावच्छिन्नसामानाधिकरण्यस्य लक्षणघटकघटाभावे सत्त्वेन लक्षणघटकप्रतियोगिव्यधिकरणाभावाप्रसिद्धयाऽव्याप्तेरुद्धारासंभवात् ।

अग्रे विवक्षणीयस्य साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यस्य वह्निमान् धूमादित्यादौ घटाद्यभावे सत्त्वान्न सर्वत्रासिद्धिः, किन्तु स्वरूपसंबन्धेन साध्यतायामेवेति सूचयितुमसिद्धिमपहाय दुर्लभत्वमुक्तमिति जा० टी०।

अग्रे विवक्षणीयस्येति । ननु वह्निमान् धूमादित्यत्राव्याप्तिः संभवत्येवेति तज्जागदीशी न संगता । तथा हि घटाभावस्य स्व(घटाभाव)निष्ठेन वह्नि तद(वह्न्य)भावाननुयोगिकस्वरूपेण पटाभाववद्भिन्नभेदेन घटाभावत्ववद्भिन्नभेदेन चैकतया तत्प्रतियोगितावच्छेदकावच्छिन्नस्य वह्नेः संयोगेनाधिकरणत्वस्य पर्वते सत्त्वादिति चेन्न । (ननु घटाभावस्य स्व(घटाभाव)निष्ठेन वह्निवह्न्यभावाननुयोगिकस्वरूपेण घटाभाववद्भिन्नभेदेन वह्निवह्न्यभावभेदेन) घटाभावत्ववद्भिन्नभेदेन च घटाभावस्यैक्यम्, अभावाधिकरणकाभावस्य स्वाधिकरणस्वरूपत्वात् । तथा च घटाभावस्य घटाभावीयप्रतियोगितावच्छेदकं यथा घटत्वं तथा घटाभाववद्भिन्नत्वं पटाभाववद्भिन्नत्वञ्चेति तादृशप्रतियोगितावच्छेदकावच्छिन्नवह्नेः संयोगेन सामानाधिकरण्यं घटाभावे वर्तते तस्यापि प्रतियोगिसामानाधिकरण्यात् लक्षणघटकघटाभावादौ प्रतियोगिवैयधिकरण्याप्रसिद्धयाऽव्याप्तिसंभवेन कथं तत्र घटाभावस्य साध्यतावच्छेदकसंयोगसंबन्धेन प्रतियोगिवैयधिकरण्योक्तिः जगदीशस्य संगतेति चेन्न) । अभावमात्रप्रतियोगिकाभावस्याधिकरणस्वरूपत्वाभ्युपगमेन तादृशभेदस्य भावाभावसाधारणत्वेनाधिकरणस्वरूपत्वाभावात् । विशेषरूपेण संसर्गतानभ्युपगमेन वह्निवह्न्यभावाननुयोगिकस्वरूपस्य संबन्धत्वाभावात् । घटाभावस्य स्वरूपेण वह्नौ सत्त्वेन घटाभाववद्भिन्नत्वेन वह्नेरग्रहणात्,

घटाभावो भवति प्रतियोगिव्यधिकरण इति वह्निमान् धूमादित्यादौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धया नाव्याप्तिः । यद्वा विषयितया रूपत्ववदभावमादाय रूपवान् पृथिवीत्वादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकनिष्ठावच्छेदकताकनिरूपकताकाधिकरणतावदन्यत्वस्यैव हेत्वधिकरणे वाच्यतया (हेत्वधिकरणे प्रतियोग्यनधिकरणत्वेन वाच्यतया) नोक्तदोषसंभवः । घटाभावत्ववद्भिन्नभेदीयप्रतियोगितावच्छेदकतादृशभिन्नत्वनिष्ठा स्वरूपसंबन्धावच्छिन्ना न तु साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नेति तादृशाभावो न लक्षणघटकः, लक्षणघटको घटाभावस्तस्य प्रतियोगिव्यधिकरणत्वमुपपद्यते । प्रतियोगितावच्छेदक(साध्यतावच्छेदक)संयोगसंबन्धेन हेत्वधिकरणे प्रतियोग्यसामानाधिकरण्यस्य घटाभावे सत्त्वात् । तथा च जागदीश्यां वह्निमान् धूमादिति भावसाध्यकेऽव्याप्त्यभावेनाभावसाध्यकेऽव्याप्तिरस्तीति तात्पर्येण दुर्लभत्वोक्तिः सङ्गच्छते ।

न च वह्नित्वप्रतियोगिकसमवायसंबन्धेन वह्नित्वविशिष्टस्य साध्यकस्थले वह्निमान् धूमादित्यत्र तादृशप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाप्रसिद्धयाव्याप्तिवारणाय पारिभाषिकस्यैव साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य (स्वानवच्छेदकसंबन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकताविशिष्टावच्छेदकत्वानिरूपितत्वरूपस्य) लक्षणघटकाभावीयप्रतियोगितायां वाच्यतयोक्तदोषतादवस्थ्यमिति वाच्यम् । न च वह्नित्वह्न्यभावाननुयोगिकस्वरूपसंबन्धेन घटाभावत्ववद्भिन्नभेदस्य घटाभावनिष्ठस्य घटाभावेनैक्यात् प्रतियोगितावच्छेदकघटाभावत्ववद्भिन्नत्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकसमवायसबन्धभिन्नस्वरूपसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि स्व(साध्यतावच्छेदकता)सामानाधिकरण्यस्य विरहात् पारिभाषिकसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य सत्त्वेन तादृशाभावप्रतियोगितावच्छेदकघटाभावत्ववद्भिन्नवह्नित्वावच्छिन्नावच्छिन्नसंयोगसंबन्धावच्छिन्नवह्नित्वावच्छिन्नसामानाधिकरण्यस्यैव घटाभावे सत्त्वात् लक्षणघटकप्रतियोगिव्यधिकरणाभावा-

प्रसिद्धचा वह्निमान् धूमादित्यत्राव्याप्तिसंभव इति वाच्यम् । साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकनिरूपकताकाधिकरणत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वाभावस्यैव हेत्वधिकरणे विवक्षितत्वात् । पारिभाषिकसाध्यतावच्छेकताघटकसंबन्धावच्छिन्नत्वस्य प्रतियोगितावच्छेदकत्वे विवक्षायां प्रयोजनाभावात् । एवञ्च घटाभावे साध्यतावच्छेदकसंयोगसंबन्धेन प्रतियोग्यसामानाधिकरण्यस्य सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धचा वह्निमान् धूमादित्यत्राव्याप्त्यभावात् । न चैवमपि पर्वतो वह्नयधिकरणत्ववान् धूमादित्यत्राव्याप्तिरिति वाच्यम् । घटाभावपूर्वक्षणवृत्तित्वविशिष्टघटाभावयोरैक्येन प्रथमाभावतृतीयाभावयोरैक्यात् प्रथमाभाव प्रतियोगिनोऽपि तृतीयाभावप्रतियोगिनस्तत्सामानाधिकरण्यस्य (पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावसामानाधिकरण्यस्य) साध्यतावच्छेदकस्वरूपसंबन्धेन घटाभावे सत्त्वेन लक्षणघटकप्रतियोगिव्यधिकरणाभावाप्रसिद्धचाऽव्याप्तिरिति वाच्यम् । प्रतियोगितायां (लक्षणघटकाभावीयप्रतियोगितायां) साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे स्वप्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्य साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्य पर्यवसायितया अग्रे विवक्षणीयस्य साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसामानाधिकरण्यास्यात्रैव तात्पर्येण, संयोगेन साध्यतास्थले प्रतियोगितायां भेदत्वनिरूपितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविरहेण दोषासंभवात् । (वह्निमान् धूमादित्यत्र घटाभावस्य घटाभावत्ववद्भिन्नभेदयोरैक्यमादायाव्याप्तिरूपदोषाभावात्) इत्यन्ये प्रलपन्ति ।

तन्न साधु । साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य भावरूपत्वे भेदत्वनिरूपितप्रतियोगित्वमादाय दोषासंभवेनात्यन्ताभावत्वनिरूपितत्वस्य ग्रन्थोक्तस्य वैयर्थ्यापत्तेः । (प्रतियोगितायाः प्रतियोगिस्वरूपत्वमिति पक्षे प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य भावरूपत्वम् । अभावनिष्ठप्रतियोगितायां संबन्धावच्छिन्नत्वस्याभावरूपत्वम् अभावनिष्ठप्रतियोगिताया अभावरूपत्वादिति बोध्यम्) । अन्यथा सर्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्

तद्भेदस्य स्वस्वरूपानतिरिक्ततया प्रतियोग्यसामानाधिकरण्यैव दुर्लभत्वापत्तेरिति दीधितिग्रन्थः । तथा च वह्निमान् धूमादित्यत्र हेत्वधिकरणवृत्तिघटाभावस्य स्वसमानाधिकरणपटाभावभेदरूपत्वेऽपि तदीयपटाभावनिष्ठप्रतियोगितायां स्वरूप-संबन्धावच्छिन्नत्वस्य सत्त्वेन साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वाभावात् तदवच्छेदकावच्छिन्नसामानाधिकरण्यस्य घटाभावे सत्त्वेऽपि न तस्य प्रति-योग्यसामानाधिकरण्यस्य हानिः । साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नप्रति-योगितावच्छेदकावच्छिन्नसामानाधिकरण्यस्य घटाभावेऽसत्त्वाद् वह्निमान् धूमादित्यत्र घटाभावमादाय लक्षणसमन्वयेन प्रतियोगितायामत्यन्ताभावत्वनिरूपितत्वकथनं दीधितिकारस्यासङ्गतं स्यात् । अभावरूपत्वे (अभावनिष्ठप्रतियोगिताया अभावरूपत्वेन तन्निष्ठसंबन्धावच्छिन्नत्वस्याभावरूपत्वे) वह्नित्वविशिष्टाधिकरणत्व-साध्यकेऽपि दोषतादवस्थ्यात् । पर्वतो वह्नित्वविशिष्टाधिकरणत्ववान् धूमादित्यत्रापि अव्याप्तिरूपदोषतादवस्थ्यात् । हेतुसमानाधिकरणघटाभावस्य स्वसमानाधिकरणपटाभावभेदरूपत्वेन तदीयपटाभावनिष्ठप्रतियोगितायाः साध्यता-वच्छेदकस्वरूपसंबन्धावच्छिन्नत्वमभावनिष्ठप्रतियोगितानिष्ठमभावरूपमिति तत्प्रति-योगितावच्छेदकपटाभावत्वावच्छिन्नसामानाधिकरण्यस्य घटाभावे सत्त्वेनात्र प्रति-योग्यसामानाधिकरण्यस्य लक्षणघटकाभावेऽप्रसिद्ध्याव्याप्तिरतोऽत्यन्ताभावत्वनिरू-पितत्वं लक्षणघटकघटाभावीयप्रतियोगितायां निवेश्यम् । तथा च स्वरूपसंबन्धा-वच्छिन्नघटाधिकरणत्वाभावीया प्रतियोगिता ग्राह्या तत्र स्वसमानाधि-करणाभावान्तरभेदमादायाव्याप्तिरूपदोषवारणायात्यन्ताभावत्वनिरूपितत्वं लक्षणघटका-भावीयप्रतियोगितायां विशेषणं सार्थकम् । अव्याप्यवृत्त्यधिकरणत्वस्या-व्याप्यवृत्तित्वे तादृशाधिकरणत्वाभावस्य (साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना-वच्छेदकताकनिरूपकताकाधिकरणत्वीयस्वरूपसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्ना-धिकरणत्वाभावस्य हेत्वधिकरणे) विवक्षितुमशक्यत्वात् । भेदस्य वह्नित्व-प्रतियोगिकसमवायेन वह्नित्वविशिष्टसाध्यकस्थलेऽप्रसिद्धत्वात् । साध्यतावच्छेदकता-घटकसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य लक्षणघटकघटाभावसमानाधि-

करणपटाभावभेदस्याप्रसिद्धत्वात् । अवच्छेदकतायां साध्यतावच्छेदकनिष्ठत्वस्य निरूपकत्वे साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य विशेषणत्वे घटभिन्नं कपालत्वादित्यादावपि घटभेदमादाय लक्षणसमन्वयसंभवाच्चेति । समवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदः कपालो घटो नेत्याकारकः तदीयप्रतियोगितावच्छेदकघटत्वावच्छिन्नसाध्यतावच्छेदकस्वरूपसंबधावच्छिन्न निरूपकतानिरूपिताधिकरणत्वाभावस्य हेत्वधिकरणे कपाले सत्त्वात् । तदीयप्रतियोगितावच्छेदकघटत्वभेदस्य साध्यतावच्छेदके घटभिन्नत्वे सत्त्वात् ।

**अभावसाध्यकाव्याप्तिश्चेति संप्रदायविद इति दीधितिः ।**

यद्यपि पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावसाध्यके धूमे घटाभावस्य प्रतियोगिव्यधिकरणस्य साध्याभावात्मकत्वेन(पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावरूपसाध्याभावस्य तत्तृतीयाभावस्य प्रथमाभावरूपत्वमिति विशिष्टः शुद्धान्नातिरिच्यते इति पूर्वक्षणवृत्तित्वविशिष्टघटाभावस्य घटाभावरूपत्वं बोध्यम्) साध्यतावच्छेदके पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावत्वे तत्(घटाभाव)प्रतियोगितावच्छेदकत्वनिबन्धनाव्याप्तिः प्रदर्शयितुमुचिता । तथापि प्रतियोगिव्यधिकरणाभावप्रसिद्धादेवोक्तरीत्याव्याप्तिः संभवति तत्प्रसिद्धिश्च (प्रतियोगिव्यधिकरणाभावप्रसिद्धिश्च) न कथंचिदपि एतत्कल्पे (संप्रदायकल्पे) इति तदुपेक्षा कृता ।

न च दैशिकविशेषणतया यद्गोध्वंसाधिकरण तत्रैव गवात्यन्ताभावस्य विरोधात्, कालिकेन गोध्वंसवत्यपि प्रलये तदत्यन्ताभावसत्त्वे, बाधकाभावान्नातिव्याप्तिरिति वाच्यम् इति जा० टी० ।

अथ दैशिकविशेषणतया गोध्वंसविरोधिनोः समवाय, संयोगसंबन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावयोः गोमान् गोत्वादित्यत्र साध्यतावच्छेदक(कालिक)संबन्धावच्छिन्नप्रतियोगिताकत्वविरहात् । तादृश(गोत्वावच्छिन्न)प्रतियोगिताकस्य कालिकसंबन्धावच्छिन्नगवात्यन्ताभावस्य लक्षणघटकस्य प्राचां मते कालिकसंबन्धावच्छिन्नध्वंसाद्यभावात्मकत्वेन स्वप्रतियोगितावच्छेदककालिकेन स्व-

प्रतियोगितावच्छेदकावच्छिन्नध्वंसविरोधित्वसंभवात् साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यघटितकल्पे समवायसंबन्धावच्छिन्नगवात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यस्यैवासत्त्वेन तस्य (गवात्यन्ताभावस्य) कालावृत्तित्वसंपत्तये स्वरूपेण गोध्वंससत्त्वोपपादनस्य व्यर्थत्वाच्चेदमसङ्गतमिति चेन्मैवम्। (ननु प्राचां मते साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकत्वं साध्यतावच्छेदकसंबन्धेनैव प्रतियोगिवैयधिकरण्यमिति स्वरूपसंबन्धेन विरोधी संयोगसमवायान्यतरसंबन्धेन गवात्यन्ताभावस्तत्र साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वं नास्ति इति तस्य लक्षणघटकत्वं नोचितम् । लक्षणघटककालिकसंबन्धावच्छिन्नगवात्यन्ताभावस्य कालिकेन गोध्वंसं प्रति विरोधित्वम् न तु दैशिकविशेषणतया गोध्वंसंप्रतीतिः । "न च दैशिकविशेषणतयेति जागदीशीग्रन्थः कथं संगच्छते इति चेन्न) सामान्यतो हि स्व(अभाव)सत्ताया न स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नविरोधित्वम् । तथा सति गगनाभावस्य केवलान्वयित्वानुपपत्तेः । कालिकसंबन्धावच्छिन्नस्वा(गगनाभावा)भावस्यापि स्व(गगनाभाव,प्रतियोगितावच्छेदकावच्छिन्नत्वादिति तत्तदभावत्वेन स्वसत्तायां तत्तदभावत्वनिरूपितप्रतियोगितावच्छेदकसंबन्धेन तत्(अभाव)निरूपितप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्यैव विरोधित्वं वाच्यम् । तथा च गवात्यन्ताभावत्वेन सत्तायां कालिकेन गोध्वसवत्वस्य न विरोधित्वम् । उक्तविरोधितावच्छेदकरूपानाक्रान्तत्वात् । तत्तत्प्रतियोगिताकाभावत्वेन स्वसत्तायां तत्तत्प्रतियोगिकध्वसस्यातिरिक्तविरोधित्वञ्च न कालिकेन कपालेऽपि समवायेन गवात्यन्ताभावासत्त्वप्रसङ्गादिति स्वरूपेणैव तस्य (अत्यन्ताभावं प्रति ध्वंसे विरोधित्वस्य) वाच्यतया दैशिकविशेषणतया काले तत्(गोध्वंस)सत्त्वे एव गवात्यन्ताभावस्यासत्त्वमुपपद्यत इति नोक्तग्रन्थासंगतिः । (गोमान् गोत्वादित्यत्राव्याप्तिपरकग्रन्थासंगतिः) । न चोक्तविरोधितायां स्वरूपसंबन्धावच्छिन्नगवात्यन्ताभावस्य गोध्वंसविरोधित्ववारणाय प्रतियोगितायां संबन्धविशेषावच्छिन्नत्वस्य प्रवेशनीयतया समवायादिसंबन्धावच्छिन्नगवात्यन्ताभावे स्वरूपेण तस्य (गोध्वंसस्य)

विरोधित्वेऽपि कालिकसंबन्धावच्छिन्नाभावे कालिकेन विरोधित्वमिति न क्षतिरिति वाच्यम् । लाघवानुरोधेन केवलान्वयिभिन्नत्वस्य तत्र (प्रतिबध्यप्रतिबन्धकभावे) प्रवेश्यत्वात् । भट्टाचार्येण कालिकेन ध्वंसविरोधित्वप्रतिपादनञ्च। भावरूपतत्तत्प्रतियोगिकत्वविशिष्टाभावत्वेनैव स्वसत्तायाः (गवात्यन्ताभावसत्तायाः) भावरूपतत्तत्प्रतियोगिनेव प्रतियोगितावच्छेदकसंबन्धेन तत्तत्प्रतियोगिकध्वंसप्रागभावाभ्यामपि प्रतियोगिभ्यामनुभवानुरोधेन विरोधित्वमादृत्येति बोध्यम् । न चायं पक्षः (भट्टाचार्यपक्षः) युज्यते । अन्यथा स्वरूपेण ध्वंसासत्त्वनिबन्धनपूर्वपक्षस्य (न च दैशिकविशेषणतयेत्यादिना पूर्वपक्षस्य। स्वरूपतत्सत्त्व(ध्वंससत्त्वप्रतिपादनैव (प्राचां मते भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गवादिध्वंसवत्त्वादिति ग्रन्थेन स्वरूपसंबन्धेन काले गवादिध्वंस प्रतिपादनेनैव) समाहिततया समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य तेन संबन्धेन (कालिकसंबन्धेन) कालवृत्तिजन्याभावस्यापि (घटात्यन्ताभावस्यापि) कालावृत्तित्वप्रसङ्गात् (काले घटादिध्वंसस्य विरोधिनः सत्त्वेनात्यन्ताभावस्यासत्त्वप्रसङ्गात्) इति वाच्यम् । इदानीं तदाशङ्कनस्य (काले गवात्यन्ताभावशङ्कनस्य) कालिकसंबन्धावच्छिन्नगवात्यन्ताभावस्य कालावृत्तित्वप्रसङ्गेन उत्तरग्रन्थप्रतिपादनेन समानत्वात् । (कालो गोमान् गोत्वादित्यत्र हेत्वधिकरणे काले दैशिकविशेषणतया गोध्वंसस्य सत्त्वेन कथं तत्र गवात्यन्ताभावस्तिष्ठेत् इति शङ्कायाः उत्तरग्रन्थेन (प्राचां मते इत्यादिग्रन्थेन) गवात्यन्ताभावस्य प्रलयरूपहेत्वधिकरणकाले असत्त्वेन साध्याभावो न लक्षणघटक इति तत्राति-व्याप्तिसमर्थनस्य समानत्वात् इति बोध्यम् । किञ्च अग्रे स्वरूपेण ध्वंससत्त्व काले प्रतिपादितवतो भट्टाचार्यस्य ग्रन्थेऽपि उक्तपर्यनुयोगस्य समानत्वाच्च । नचैतदस्वरसेनैवाथवेत्यादिना प्रतियोगिवैयधिकरण्यघटितकल्पाभिप्रायकत्वं संसर्गाभावमात्रोक्तावपीत्यादिग्रन्थस्य वक्ष्यतीति वाच्यम् ।

अथवेत्यादावेव निर्भरत्ववर्णने अथ यदेत्यादिदीधितिशङ्काग्रन्थस्य दैशिक-

विशेषणतया वृत्तित्वघटितलक्षणाभिप्रायकताया वर्णिततया शङ्कोत्तरग्रन्थस्य भिन्नालम्बनत्वापत्त्या न्यूनतापत्तेः । अथ वेत्यादिग्रन्थस्य सम्यक्पर्यालोचने अथवेत्यादि पूर्वपक्षाशयस्य संसर्गाभावमात्रोक्तावपीति मध्यमपक्षाशयस्य च तत्रैव प्रकाशमानतया तस्य संसर्गाभावमात्रोक्तावपीति मध्यमपक्षव्याख्योक्तस्वरूप-संबन्धेन ध्वंसवृत्तित्वकल्पापेक्षया न कल्पान्तरत्वमपि तु अथवेत्यादिग्रन्थ-समुदितव्याख्यापेक्षयैवेति न न्यूनतावसरः ।

अतएव अथ यदेत्यादिशङ्कायाः प्रतियोगिव्यधिकरणाघटितकल्पाभि-प्रायकउत्तरग्रन्थे तच्छून्ये चेत्यादिप्रतियोगिवैयधिकरण्यसद्भावप्रतिपादनग्रन्था-सङ्गतिरपि नेति चेदस्तु एतद्ग्रन्थस्यातिरमणीयत्वं तथापि जगदीशग्रन्थस्या-युक्तता न प्राप्ता । भवति च सैव परिहरणीयेति परिहृतेदानीं तदाशङ्कते नेत्यादिना अतएवेत्यादिनानुपदोक्तासंगतिश्च परिहरिष्यत इत्यलम् ।

**कालिकसंबन्धेन गोध्वंसवत्यपि प्रलये तदत्यन्ताभावसत्त्वे बाधकाभावान्नातिव्याप्तिरिति वाच्यम् इति जा० टी० ।**

इदानीं भूतले घटो नष्ट इत्यादिप्रतीतेः कालिकविशेषणत्वा-वगाहित्वस्य जले घटो नष्ट इत्यादिप्रतीत्यापत्तेः वक्तुमशक्यत्वात् । विशेषणत्वस्य दैशिकस्य तद्विषयताया वाच्यतया प्रतियोग्यसमवायिनि भूतले यथा घटध्वंसस्य दैशिकविशेषणत्वं संसर्गः तथेत्यर्थः । (तथा कालस्येत्यर्थः) ।

**प्राचां मते भूतलादिदेशस्येव कालस्यापि दैशिकविशेषणतया गोध्वंसवत्वात् इति ज़ा० टी० ।**

न चेदानीं घट इत्यत्रेव इदानीं घटो नष्ट इत्यत्रापि कालिकविशेषणतै-वास्तु संसर्गो दैशिकसंबन्ध(दैशिकविशेषणतासंबन्ध)स्वीकारे मानाभाव इति वाच्यम् । आश्रयनाशाधीनद्रव्यगुणादिनाशस्य प्रत्यक्षतोपपत्तये काले दैशिक-

विशेषणताया अवश्यं स्वीकरणीयत्वात्। इन्द्रियसंवद्धकालविशेषणतामात्रस्य तत्र सन्निकर्षत्वसंभवात् । न हि तत्र कालिकविशेषणत्वस्य सन्निकर्षत्वसंभवः। तथा सति घटादिवृत्तिकालपरिमाणाद्यभावस्य काले प्रत्यक्षापत्तेः । अथ कालानुयोगिकविशेषणता कालिकीत्युच्यत इति चेत् उच्यताम्। विशेषणता हि त्रयी इदानीं घट इति प्रतीतौ भासमानोपाध्यवच्छिन्नकालानुयोगिकी कालिकी । प्राच्यां घट इत्यादिप्रतीतौ भासमानोपाधिविशेषावच्छिन्ना दिगनुयोगिकी दिक्कृता स्वासाधारणधर्मावच्छिन्नानुयोगिकी दैशिकी। कालिकदैशिकविशेषणतयोश्च कालानुयोगिकयोरपि भेदः प्रतीयत एव । यत् (यस्मात्)इदानीं समवायसंवन्धावच्छिन्नकालपरिमाणाभाव इति प्रतीतिः घटादौ जायते काले तादृशाभाव इति प्रतीतिस्तु न जायते (अतः स्वासाधारणधर्मावच्छिन्नानुयोगिकी दैशिकी मन्तव्या) ।

**अतएव त्वक्संयुक्तकाले विशेषणतया वायुस्पर्शनाशस्य ग्रहः शब्दानित्यतायां मिश्रैरुक्तः इति जा० टी०।**

ध्वंसस्य स्वप्रतियोगिसमवायिकारणभिन्ने भूतले काले दिशि च सत्त्वं भूतले घटो नष्टः, इदानीं घटो नष्टः, प्राच्यां घटो नष्टः, इत्यादिप्रतीत्यनुरोधात् स्वीकार्यम् मिश्रेणापि त्वक्संयुक्तकाले वायुस्पर्शनाशस्य (ध्वंसस्य) ग्रहः स्वीकृतः । न च ध्वंसप्रत्यक्षे प्रतियोगियोग्यत्वस्य तन्त्रत्वे वायुस्पर्शध्वंसोऽपि (वायौ घटादौ वा) प्रत्यक्षः स्यादिति वाच्यम् । आश्रयनाशजन्यस्पर्शध्वंसस्य ग्राहकेन्द्रियसन्निकर्षाभावादिति शब्दानित्यता चिन्तामणेरालोके ग्राहकेत्युपलक्षणं काले गृह्यते एव वायुस्पर्शध्वंस इतीष्टापत्तिरपि द्रष्टव्या । न च समयेऽपि किञ्चिद्देशावच्छेदेन वायुस्पर्शध्वंसो ग्राह्यः, अत्रेव (काले इव) असमवायिनोऽपि (ध्वंसप्रतियोगिकसमवायिकारणभिन्नस्यापि) देशत्वसंभवादिति ग्रन्थेन पक्षधरमिश्रै रुक्त इति द्रष्टव्यम् ।

**तथापि प्रतियोगिवैयधिकरण्याघटितस्य व्याप्यवृत्तिसाध्यकस्थलीय-लक्षणावश्यं दैशिकविशेषणतया (अभावे) हेतुसामानाधिकरण्यघटि-तत्वात् तस्यैवातिव्याप्तिर्बोध्या इति जा० टी० ।**

इदञ्च न प्रतियोगिवैयधिकरण्यघटितेऽतिव्याप्त्यभावाभिप्रायकं किन्तु प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वादिति दीधितिग्रन्थसमर्थनार्थं तस्य दीधितिग्रन्थस्य प्रतियोगिवैयधिकरण्यघटितातिव्याप्त्यभिप्रायकत्वे ध्वंसरूप-प्रतियोगिसत्त्वमात्रमुच्येत । तत्र तद्धेतुकगवात्यन्ताभावानधिकरणत्वप्रतिपादनमफलं स्यात् । एवञ्च प्रतियोगिव्यधिकरणेऽपि अतिव्याप्तिसंभवे तदुपेक्षा निरर्थिकेति निरस्तम् । न च प्रतियोगिव्यधिकरणत्वघटितेऽतिव्याप्तेः संभव एव नेति वाच्यम् । गवात्यन्ताभावप्रतियोगिगोध्वंसाधिकरणत्वस्यैव हेत्वधिकरणे सत्त्वात् तत्र गवात्यन्ताभावो न वर्तते अन्याभावमादायातिव्याप्तेः सत्त्वात् । इत्थमेवातिव्याप्तिरथवेत्यादिग्रन्थेन भट्टाचार्येण प्रतिपादिता । न च स्व-प्रतियोग्यनधिकरणवृत्तित्वविशिष्टस्य हेत्वधिकरणवृत्तित्वघटिते प्रतियोगिवैयधिकरण्य-घटितेऽपि गवात्यन्ताभावस्य प्रलयावृत्तित्वप्रयुक्त एवातिव्याप्तिसंभवः (प्रलये गोध्वंसत्त्वेन गवात्यन्ताभावो न वर्तते) तस्य (गवात्यन्ताभावस्य) स्वप्रति-योग्यनधिकरणात्मवृत्तित्वात् । अवश्यं चात्र हेत्वधिकरणवृत्तित्वं संबन्धेन विशेषेण वाच्यम् । अन्यथा गुणवृत्तेरपि संयोगाभावस्य कालिकेन वृक्षवृत्तित्व-संभवादिति प्रतियोगिवैयधिकरण्यघटितलक्षणातिव्याप्तिपरतापरित्यागो नोचित इति वाच्यम् । (स्वरूपेण गोध्वंसवति प्रलयरूपहेत्वधिकरणे स्वरूपेण गवात्यन्ता-भावासत्त्वादन्याभावमादाय तत्रातिव्याप्तिः विरोधिनोर्मध्ये एकस्य सत्त्वेऽन्या-सत्त्वात्) स्वयं प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वस्यैव निष्कर्षितत्वेन तत्र वृत्तित्वे स्वरूपसंबन्धविशेषावच्छिन्नत्वस्य निष्प्रयोजनतयाऽतिव्याप्तिसंपत्त्यर्थं गवा-त्यन्ताभावानधिकरणत्वप्रतिपादनमफलं स्यादिति तत्परता (अतिव्याप्तिपरता)-परित्यागस्यैवोचितत्वात् । (प्रलये कालिकेन प्रतिकिञ्चिदात्मवृत्तित्वविशिष्टत्वा-

न्यन्ताभावस्य प्रलये सत्त्वात्) । यद्यापाततस्तदुक्तार्थविलम्बनेनापि तद्ग्रन्थ-सङ्गत्या भवत्युचिता । तदा प्रतियोगिवैयधिकरण्याघटितस्येत्याद्युक्तिः उप-लक्षणविधयेति बोध्यम् । न च शङ्काग्रन्थस्य प्रतियोगिवैयधिकरण्याघटित-कल्पाभिप्रायकत्वे तच्छून्येत्याद्युत्तरग्रन्थासङ्गतिरिति वाच्यम् । (नन्वेवं प्रतियोगिवैयधिकरण्यघटितस्याव्याप्यवृत्तिसाध्यकलक्षणस्य कालो गोमान् गोत्वा-दित्यादावतिव्याप्तिरेव गवाद्यभावस्य सृष्टिकाल प्रतियोगिसमानाधिकरणतया लक्षणाघटकत्वादत आह ।

तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वादिति । तच्छून्ये इति गवादिशून्ये इत्यर्थः । तथा च यत्किञ्चिद्धेत्वधिकरणावच्छेदेन प्रति-योगिवैयधिकरण्यं यदग्रे वाच्यं तस्य गवाद्यभावेऽपि सत्त्वान्न तत्रापि लक्षणे-ऽतिव्याप्तिरिति भाव इति शङ्कोत्तरग्रन्थः । (शङ्काग्रन्थस्याव्याप्यवृत्ति-साध्यकव्याप्त्यभिप्रायकत्वम् । तच्छून्ये इत्याद्युत्तरग्रन्थस्य व्याप्यवृत्तिसाध्यक-व्याप्त्यभिप्रायकत्वमित्युभयोः ग्रन्थयोरेकाभिप्रायकत्वाभावेनोत्तरग्रन्थस्य प्रश्नोत्तरार्थ-कत्वाभावादसंगतिरिति बोध्यम्) । प्राचीनमतखण्डनेन व्याप्यवृत्तिसाध्यकस्थलीय-लक्षणातिव्याप्तिवारणेऽपि अत्यन्ताभावस्य न त्रितयप्रतियोगिकत्वमिति गोध्वंस-वति हेत्वधिकरणे प्रलये गवात्यन्ताभावस्य सत्त्वेन नातिव्याप्तिः) । प्रति-योगिसामानाधिकरण्यघटितकल्पे कथं तद्(गोमान् गोत्वादित्यत्रातिव्याप्ति)वारण-मिताशङ्कायां तद्ग्रन्थावतारस्य वक्ष्यमाणत्वात् । वस्तुतस्तु काले तच्छून्ये (गोशून्ये) सति प्रतियोग्यनधिकरणकालवृत्तित्वादित्यर्थे हेतुसमानाधिकरणत्व-मात्रपर्यवसायित्वात् । तथा हि कालस्य गोशून्ये भवति प्रतियोग्यनधि-करणत्वम् । ध्वंसादीनामप्रतियोगित्वात् । यतः कालस्य प्रतियोग्यनधि-करणत्वमतोऽभावः (गोरूपस्य साध्यस्याभावः) हेत्वधिकरणवृत्तिरित्येव व्याख्येयम् । अन्यथा प्रतियोगिवैयधिकरण्यघटितकल्पाभिप्रायकत्वेऽपि कालस्य तदनधि-करणत्वादित्यस्यैव (प्रतियोग्यनधिकरणत्वादित्यस्यैव) वक्तुमुचितत्वात् । प्रतियोग्य-समानाधिकरण्यघटितकल्पाभिप्रायकत्वे प्रतियोग्यसमानाधिकरणत्वादित्येव ब्रूयादिति ।

केचित्तु स्वप्रतियोग्यधिकरणवृत्तित्वरूपप्रतियोग्यसामानाधिकरण्यघटिते घटाभावस्य तादृशवृत्तित्वसंपत्त्यर्थं वृत्तित्वस्य (हेत्वधिकरणवृत्तित्वस्याभावे) संबन्धविशेषेण वाच्यतया गवात्यन्ताभावस्य नासंग्रह इति तत्कालोपेक्षा भवत्युचिता (स्वरूपसंबन्धेन गोध्वंसवति काले कालिकेन गवात्यन्ताभावस्य सत्त्वात् गोमान् गोत्वादित्यत्र नातिव्याप्तिरतस्तदुपेक्षा युक्ता) इति प्रलपन्ति । तन्न, संयोगसाध्यकातिव्याप्त्या तदर्थस्य (प्रतियोग्यधिकरणावृत्तित्वं प्रतियोगिवैयधिकरण्यपदार्थस्य) परित्यक्तत्वेन (अन्यथा साध्याभावस्याव्याप्यवृत्तितया प्रतियोग्यधिकरणे द्रव्ये वृत्तित्वेन तदन्यघटाद्यभावमादाय संयोगी सत्त्वादित्यत्रातिव्याप्तिः स्यात्) तद्विषयकत्वम् (प्रतियोग्यधिकरणावृत्तित्वरूपप्रतियोगिवैयधिकरण्यघटितकल्पविषयकत्वम्) उक्तग्रन्थस्याङ्गीकृत्य समाधानस्यानुचितत्वात् ।

अन्ये तु प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वकल्पे नातिव्याप्तिः । अत्यन्ताभावत्वनिरूपितध्वंसनिष्ठप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वस्यैवानुमितिग्रन्थे प्रतिपादिततया ध्वंसनिष्ठप्रतियोगितायां साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वविरहात् भवति कालो गोमान् गोत्वादित्यत्र प्रलयरूपहेत्वधिकरणे गवात्यन्ताभावो लक्षणघटक इति प्रतियोगिव्यधिकरणघटितलक्षणे नातिव्याप्तिरिति वदन्ति । (हेत्वधिकरणे साध्याभावो लक्षणघटक इति बोध्यम्) । तदप्यसत् प्रतियोगिवैयधिकरण्यघटिते कस्मिंश्चिदपि कल्पेऽतिव्याप्तिसंभवे प्रतियोगिवैयधिकरण्यघटितकल्पातिव्याप्त्युपेक्षा कथं कृतेत्येवं पूर्वपक्षस्यासमाहितत्वात् ।

स्वप्रतियोगिमत्ताबुद्धिप्रतिबन्धकतावच्छेदकसंबन्धेनाभावस्य हेत्वधिकरणवृत्तित्वकल्पे हेत्वधिकरणे प्रलये स्वरूपेण गोध्वंसवति स्वरूपेण तद्विरोधिगवात्यन्ताभावस्यासत्त्वात् अभावान्तरमादाय तत्रातिव्याप्तिः प्रतियोगिवैयधिकरण्यघटितकल्पे संभवति कथमत्रातिव्याप्तिरुपेक्षितेत्यस्य समाधानं न जातम् । अन्योक्तसमाधानस्यैकदेशीयत्वात् । साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणे स्वरूपेणाभावस्य

वृत्तित्वमिति यत्किञ्चित्पक्षे समाधानं भवति । किमु साध्यतावच्छेदक-संबन्धेन प्रतियोग्यनधिकरणत्वघटिते सिद्धान्तकल्पे ।

यत्तु अभावाघटितस्यैव (यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नेत्यस्यैव) प्रति-योगिवैयधिकरण्यघटितस्य सर्वथा सिद्धान्ततया तत्र गोमान् गोत्वादित्यत्र नातिव्याप्तिसंभवः । (कालिकेन गोशून्ये हेत्वधिकरणे प्रलये गवात्यन्ता-भावस्य सत्त्वात्) तस्याः (प्रतियोगिवैयधिकरण्यघटितव्याप्तौ गोमान् गोत्वादित्य-त्रातिव्याप्तेः) उपेक्षा युज्यते इति । तदपि न रमणीयम् । यद्यप्येवमपि नातिव्याप्तिसंभवः कालिकसंबन्धावच्छिन्नगवात्यन्ताभावस्यैव प्रलये वर्तमानत्वा-दित्यादिग्रन्थालोचने कृतेऽभावघटितकल्पस्यैव (अभावघटितप्रतियोगिवैयधिकरण्य-घटितकल्पस्यैव) इदानीमङ्गीकारविषयत्वप्रतिभासात् ।

वस्तुतस्तु अभावघटितकल्पस्य (अभावघटितवैयधिकरण्यघटितकल्पस्य) स्वनिरूपितयादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयतादृश-प्रतियोगितानवच्छेदकत्वघटितस्यैव निष्कृष्टतया तत्र नातिव्याप्तिः (काले गोमान् गोत्वादित्यत्र नातिव्याप्तिः । गोत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छि-न्नानधिकरणे प्रलये गवात्यन्ताभावस्य सत्त्वात् । गवात्यन्ताभावस्य लक्षण-घटकत्वादित्यत्रैव यद्यपीत्यादिग्रन्थस्य तात्पर्यान्न कोऽपि दोषः ।

**सृष्टिकालवृत्तित्वविशिष्टगोत्वादेरत्यन्ताभावस्यैव तादृशस्य प्रसिद्धत्वादिति भाव इति जा० टी० ।**

न च तत्प्रतियोगितायाम् (गोत्वात्यन्ताभावप्रतियोगितायाम्) निर-वच्छिन्नावच्छेदकताकत्वविरह इति वाच्यम् । (गोत्वनिष्ठप्रतियोगितायाः गोत्वत्वेनावच्छिन्नत्वात् निरवच्छिन्नसाध्यतावच्छेदकतास्थले महानसीयवह्निवृत्तित्व-विशिष्टजातिमान्नास्तीत्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणाय निर-

वच्छिन्नावच्छेदकताकत्वस्य प्रतियोगितायां निवेश इति बोध्यम्) । एतन्मते (संप्रदायमते) सद्धेतावपि तादृशाभावस्यैव (निरवच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्यैव) लक्षणघटकतया तत्प्रतियोगितासंपत्त्यर्थं साध्यतावच्छेदकनिष्ठसावच्छिन्नावच्छेदकत्वानिरूपकत्वार्थस्य तस्य निरवच्छिन्नावच्छेदकत्वनिरूपितत्वस्य वाच्यत्वादिति ।

**न च गोध्वंसस्य गोत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेऽपि (ध्वंसप्रागभावयोः प्रतियोगितावच्छेदकसंबन्धास्वीकारेण) साध्यतावच्छेदकीभूतकालिकसंबन्धावच्छिन्नप्रतियोगिताकत्वविरहात् कुतस्तमादाया(ध्वंसमादाया)तिव्याप्तिव्युदास इति जा० टी० ।**

यद्यपि ध्वंसस्य (गौर्नष्ट इत्यादौ तद्व्यक्तिप्रतियोगिकत्वस्यैवानुभाविकतया प्रतियोगित्वातिप्रसक्तस्य गोत्वस्य न ध्वंसप्रतियोगितावच्छेदकत्वसंभवः । न च गौर्नास्तीतिप्रतीतिरिव गौर्नष्ट इत्यपि प्रतीतिर्दृश्यते इति । तत्र सामान्यधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावविषयकत्वमिव सामान्यधर्मावच्छिन्नप्रतियोगिताकध्वंसविषयकत्वमत्रापि (ध्वंसेऽपि) स्यादिति वाच्यम् । भवेदेव यदि हि प्रतियोग्यंशे भासमानधर्मस्य प्रतियोगितावच्छेदकत्वनियमोऽकारणकृतः (प्रयोजनं विनाऽपि) स्यात् । नास्त्येव तादृशः (अकारणकृतः) सः (अवच्छेदकत्वनियमः) । अत्यन्ताभावस्य तत्त्वं (सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं) बाधबुद्धिविरोधित्वानुरोधेनाभ्युपेयते । गौरस्तीति बुद्धिकाले अत्र गौर्नष्ट इति बुद्ध्युत्पत्तेः । ध्वंसस्य तत्त्वं (प्रतिबन्धकत्वं) नाभ्युपेयम् । तथापि एकजातीयेषु चरमव्यक्तिध्वंससमये तज्जातीयसामान्यध्वंसप्रतीतेरानुभविकत्वे तस्य (चरमध्वंसस्य) तज्जातीयबुद्धावेव विरोधितया तदनुरोधेनैव सामान्यधर्मावच्छिन्नप्रतियोगिताकत्व ध्वंसेऽभ्युपेयम् । तत् (चरमध्वंस)प्रतियोगितायां अतीतनिखिलव्यक्तिसाधारणतया अनागतस्य तज्जातीयस्याविद्यमानतया च सामान्यधर्मः न तद(प्रतियोगित्वा)तिप्रसक्त इत्याशयः । अपिना

उक्तसामान्यध्वंसप्रतीतेः प्रामाणिकत्वे विवादाभिव्यक्तिः कृतेति । चरमध्वंस एव नास्ति, किं वा ध्वंसबुद्धेः प्रतिबन्धकत्वमेव नास्ति कुतस्तदीयप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वं सेत्स्यति ।

**साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नस्यैव हेतुसमानाधिकरणाभावप्रतियोगित्वस्य लक्षणे प्रवेशनीयत्वात् । तावतैव समवायाद्यवच्छिन्नवह्न्यभावमादायाव्याप्तेर्वारणात् । तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भाव इति जा० टी० ।**

तादृशसंबन्धानवच्छिन्नत्वं च (साध्यतावच्छेदकान्यसंबन्धानवच्छिन्नत्वञ्च) साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं पारिभाषिकमेव बोध्यम् । तेन न तादात्म्येन घटाभावसाध्यकसद्धेतौ अयं घटाभावः तद्व्यक्तित्वादित्यत्र हेतुसमानाधिकरणसंसर्गाभावीयतादृशसंबन्धावच्छिन्न(साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्न)प्रतियोगित्वाप्रसिद्धिः । संसर्गाभावीयप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धानवच्छिन्नत्वस्य सत्त्वेन तत्र तादात्म्यसंबन्धावच्छिन्नत्वं न प्रसिद्ध्यतीति न वाच्यम् । पारिभाषिकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्योक्तरूपस्य सत्त्वात् । ध्वंसाभावीयप्रतियोगितायाः संबन्धानवच्छिन्नत्वेन साध्यतावच्छेदकान्यसंबन्धानवच्छिन्नत्वरूपपारिभाषिकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य तत्र सत्त्वात् । न च विषयत्वध्वंसमादाय लक्षणसंगतिरिति वाच्यम् । (अयं घटाभाव इति ज्ञानसमानकालीनायाः घटाभावनिष्ठविषयतायाः ज्ञाननाशेन नाशात् तदीयप्रतियोगिता भवति साध्यतावच्छेदकतादात्म्यसंबन्धान्यसंबन्धानवच्छिन्नेति वाच्यम् । तथा सति तादृशसाध्यकव्यभिचारिणि अयं घटाभावः प्रमेयत्वादित्यादौ अतिव्याप्तेः । तत्र साध्याभावो न लक्षणघटकः संसर्गाभावीयप्रतियोगियां तादात्म्यसंबन्धानवच्छिन्नत्वात्, अन्याभावमादायातिव्याप्तेः साधारण्यादिति ।

**तस्य च ध्वंसप्रतियोगितासाधारण्यादिति भाव इति जा० टी० ।**

तस्य साध्यतावच्छेदकान्यसंबन्धानवच्छिन्नत्वस्य । ध्वंसप्रतियोगितेति ध्वंसीयप्रतियोगितायाः संबन्धानवच्छिन्नत्वेन सुतरां साध्यतावच्छेदकान्यसंबन्धानवच्छिन्नत्वात् ।

साधारण्यादिति । इदञ्च भेदभिन्नाभावत्वस्य संसर्गाभावत्वात्मकत्वमभ्युपेत्य बोध्यम् । संसर्गारोपजन्यप्रतीतिविषयाभावत्वम् अत्यन्ताभावत्वमिति पक्षे ध्वंसीयप्रतियोगितायां संबन्धावच्छिन्नत्वस्य स्वीकृततया तस्यां साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नत्वस्य सत्त्वेन तत्र साध्यतावच्छेदकसंबन्धान्यसंबन्धानवच्छिन्नत्वस्यासत्त्वादिति ।

**न च खण्डप्रलये स्पन्दसत्त्वे मानाभाव इति जा० टी० ।**

न च प्रलय एव मानाभाव इति वाच्यम् । समय,समवायभिन्नवृत्तिध्वंसप्रतियोग्यवृत्तिकार्यद्रव्यं कार्यद्रव्यप्रागभावसमानकालीनारम्भकातिरिक्तकार्यद्रव्यानधिकरणवृति ध्वंसप्रतियोगिवृत्तिकार्यमात्रधर्मत्वात् शब्दत्ववत् इत्यनुमानस्यैव मानत्वादिति ।

**ब्रह्मणो वर्षशतमायुरित्यागमप्रसिद्धेरेव मानत्वादिति जा० टी० ।**

इदमुपलक्षणम् । सर्गान्तरीयद्व्यणुकोत्पत्त्यनुरोधेनापि प्रलये स्पन्दः स्वीकरणीय इति । प्रलये स्पन्दस्यासत्त्वे परमाणुषु स्पन्दरूपक्रियायाः असत्त्वे द्व्यणुको नोत्पद्येत । संयोगं प्रति क्रिया कारणं संयोगो द्व्यणुकस्यासमवायिकारणम् । न कारणं विना कार्यं भवतीति विज्ञेयम् ।

**ननु महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः, तदानीमपि चरमद्व्यणुकनाशानुगुणस्य परमाणुस्पन्दस्य सत्त्वादिति जा० टी० ।**

महापवनजलवर्षानलादिभिः अदृष्टसहितैः स्थूलेषु विनष्टेषु त्रसरेणु-

नाशार्थं परमाणुषु ईश्वरेच्छावशात् क्रिया जायते । ततो विभागः (क्रियातो विभागः) तदनन्तरं पूर्वसंयोगस्य नाशस्तत उत्तरदेशेन क्षणैकस्थायिना त्रसरेणुना संयोगो द्व्यणुकनाशश्च ततः क्रियानाशः तत उत्तर संयोगनाशः स एव क्षणो निखिलजन्यानाधारत्वात् महाप्रलय इत्युच्यते । तत्क्षणमादाय पूर्वे तृतीयक्षणे इत्यर्थः । तथा च निखिलजन्यानाधारत्वम् निखिलजन्यभावध्वंवत्त्वं वा महाप्रलयत्वं बोध्यम् ।

तत्कालोत्पन्नपरमाणूत्तरसंयोगेन प्रलयपूर्वक्षणे एव पश्चात् तस्य विनाश्यत्वात् तादृशपरमाणूतरसंयोगस्य च कार्यद्रव्येण सहैव स्वीकारान्न नित्यत्वम् आश्रयनाशादेव तन्नाशसंभवादित्यत आह—

**यदाऽदृष्टं तदा जन्यं ज्ञानं दुःखं वेति जा० टी० ।**

महाप्रलयपूर्वतृतीयक्षणे द्व्यणुकनाश-परमाणुसंयोगयोरुत्पत्तिक्षणे । तदानीमपि तादृशतृतीयक्षणेऽपीत्यर्थः । चरमद्व्यणुकनाशानुगुणस्य अन्तिमद्व्यणुकनाशप्रयोजकस्य । परमाणुस्पन्दस्य परमाणुक्रियायाः तत्कालोत्पन्नेति महाप्रलयपूर्वतृतीयक्षणोत्पन्नेत्यर्थः । कार्यद्रव्येण सहैवेति त्रसरेणुना सहैवेत्यर्थः । आश्रयनाशात् त्रसरेणुनाशात् तन्नाशसंभवात् परमाणूत्तरसंयोगनाशसंभवात् । कार्यद्रव्येण सहैवेत्यत्र एवकारेण गगनादिभिः संयोगो व्यवच्छिद्यते ।

ननु मूर्तसंयोगानुगुणक्रियात एव विभुसंयोगोऽभ्युपेयो विभुमात्रसंयोगानुगुणक्रियायाः प्रयोजनविरहेणानभ्युपेयत्वात् । तथा चात्रापि उत्तरदेशसंयोगानुगुणक्रियया विभुसंयोगः स्यादेवेत्येवकारासंगतिरित्यत आह—न नित्यमिति । तथा च भावकार्यत्वस्यानित्यत्वव्याप्यतया तदानीं गगनादिसंयोगस्वीकारे गगनादिसंयोगस्य नाशकाभावेन नित्यत्वापत्त्या गगनादिसंयोगे अनित्यत्वरूपव्यापकविरहेण गगनादिसंयोगे कार्यत्वप्रक्षेपे (निषेधे) तत्स्वरूपप्रतिक्षेपः अनित्य गगनसंयोगनिषेधः । (दीपिकायाम्—ननु कस्तान्महाप्रलयः उच्यते । अदृष्टसध्रीचीनैः

कालानलझंझानिलादिभिः स्थूलेऽखिले जगति विलोपिते त्रसरेणुनाशार्थं प्रथमक्षणे परमाणुक्रियोत्पद्यते । (१) क्रियातो विभागः, (२) विभागात् पूर्वसंयोगनाशः, (३) तत उत्तरदेश(त्रसरेणु)संयोगो द्व्यणुकत्वावच्छिन्नध्वंसश्च (४) ततः क्रियानाशः त्रसरेणुनाशश्च, ५) ततः षष्ठक्षणे आश्रय(त्रसरेणु) नाशादेवोत्तरसंयोगनाशः । स एव षष्ठः क्षणो निखिलजन्यानाधारभूतो महाप्रलय इत्युच्यतेऽभियुक्तैरिति) प्रयोगश्च महाप्रलयपूर्वतृतीयक्षणोत्पन्नसंयोगः न नित्यैकवृत्तिः, नाशातिरिक्तनाशकपूर्वत्वानधिकरणत्वे सति भावकार्यत्वात्, यन्नैवं तन्नैवं यथा सृष्टिकालीनगगनपरमाणुसंयोगः । शब्दध्वंसे व्यभिचारवारणाय विशेष्यदलम् । तस्य कालेऽपि (सत्त्वात्)द्रव्यातिरिक्ते विशेषणत्वस्वीकारे तर्कस्फुरणायैव तदिति बोध्यम् ।

विपक्षबाधकश्चात्र । भावकार्यस्यानित्यत्वव्याघातः । यदि प्रलयपूर्वतृतीयक्षणोत्पन्नत्रसरेणूत्तरसंयोगानुगुणक्रियाजन्यगगनसंयोगरूपभावकार्यः स्यात् तर्हि स संयोगो नित्यः स्यात् ।

न च कारणसत्त्वे (संयोगजनकक्रियासत्त्वे) नियमक्षतिः (भावकार्यस्यानित्यत्वक्षतिः) न कार्यवारणायालमिति गगनसंयोगः स्यादेव । एवमुक्तनियमोऽप्यप्रयोजक एव (यत् भावकार्यं तदनित्यमेवेत्यप्रयोजक एव) भावकार्यस्याविनाशित्वे क्षत्यभावात् । तस्मान्नाशकपूर्ववर्त्तितैव विनाशित्वे प्रयोजिका न तु भावकार्यत्वम् । अन्यथा कार्यत्वमात्रस्य विनाशित्वप्रयोजकत्वमभ्युपेत्य नाशस्यापि (ध्वंसस्यापि)विनाशित्वं स्यात् । एवञ्चाविनाशिनोऽपि गगनसंयोगस्य स्वीकारे न कापि हानिरिति वाच्यम् । प्रलयप्रयोजकादृष्टस्यैव गगनसंयोगप्रतिबन्धकत्वाभ्युपगमेन तद(अदृष्टा)भावात्मककारणविरहात् । भावकार्यानधिकरणस्यैव (कालस्य) प्रलयत्वेनोक्तसंयोगोत्पत्तौ (गगनैकमात्रवृत्तिगगनसंयोगोत्पत्तौ) प्रलयत्वव्याहतेः । जन्यभावानधिकरणत्वे सति कालत्वमिति प्रलयलक्षणात् । न चोपभोगयोग्यभावकार्यानधिकरणत्व (विशिष्टकालत्व)मेव

प्रलयत्वम् । प्रलये भावकार्यसत्त्वनिर्णये एवोपभोगयोग्यभावकार्यत्वेन पक्षतायां गौरवस्य प्रलयसाधकानुमानसह्यत्वात् । भावकार्यत्वेन पक्षताऽपेक्षयोपभोग-योग्यभावकार्यत्वेन पक्षतायां गौरवं स्यादिति बोध्यम् । अन्यथा (गगन-संयोगस्येव) द्व्यणुकस्यापि कस्यचित् सत्त्वे क्षत्यभावेन तत् (द्व्यणुक) सत्त्वस्यापि (प्रलये) आपत्तेः । एवं भावकार्येषु सर्वेषूपलब्धं विनाशित्वं भावकार्यत्वव्यापकतयैव गृहीतं न च तत्(भावकार्येषु उपलब्धं विनाशित्वं) भावकार्यत्वव्यापकम् । नित्यभाव(गगनैकमात्रवृत्तिसंयोग)संभावनामात्रेण ह्यातुमुचितम् । एतद(भावकार्यत्वव्यापकविनाशित्वा)नुरोधेन तदभावस्यैव (नित्यगगनसंयोगाभावस्यैव) व्यवस्थापनीयत्वात् । न चात्र भावत्वमकिञ्चित्करम्, ध्वंसस्य ध्वंसे प्रलये सर्वभावोन्मज्जनप्रसङ्गात् । अनन्तध्वंसस्वीकारप्रसङ्गेन (एकस्यानन्त-ध्वंसस्वीकारप्रसङ्गेन) गौरवप्रसङ्गाच्च । यावद्ध्वंप्रतियोगिप्रतियोगिकैकध्वंसवत्त्वं प्रलयत्वमिति स्वीकारात् । न च प्रलये विभागावस्था न संभवः । तस्यो(विभागस्यो)त्तरदेश(त्रसरेणूत्तरदेश)संयोगेनैव प्रायो विनाश्यत्वात् । अन्यथा (उत्तरदेशसंयोगेन विभागस्य नाशास्वीकारे) प्रहरादिपूर्वोत्पन्नविभागावनुत्पन्न-विभागौ च घटावालोचयतां जायमानविभक्तप्रतीतिः समानाकारत्वेनानुभूय-माना, एकत्र विभागविषयिणी परत्र संयोगाभावविषयिणीति स्यात् । सति विभागे (उत्तरसंयोगेन विनाशिते विभागे) कुत्रापि न तद्(विभाग) विषयिणीति वक्तुमशक्यत्वात् । न चेष्टापत्ति । अनुभूयमानसमाना-कारकत्वभङ्गापत्तेः । न च संयोगाभावेनैव विभक्तप्रतीतेर्गतार्थता । भावत्वेन विभक्तप्रतीतेरनुभूयमानत्वात् । विनिगमनाविरहेण संयोगप्रतीतेरेव विभाग-विषयत्वप्रसङ्गात् । संयोगाभावो विभागः, विभागाभावो वा संयोग इत्यत्र विनिगमकाभावः । संयुक्तप्रत्ययवत् विभक्तप्रत्ययस्य समानत्वात् । किञ्चोत्तर-संयोगस्यानाशकत्वे विभक्तयोर्ययोर्न संयोगः तयोर्विभागस्याविनाशित्वप्रसङ्गः । न च भावकार्यस्याविनाशित्वमिष्यते इत्यलमप्रस्तुतविचारबाहुल्येनेति ।

**केचित्तु स्वमते द्व्यणुकस्यासत्त्वात् स्पन्दस्य खण्डप्रलये वृत्तौ बलवत्तरप्रमाणाभावाद् यदाऽदृष्टमित्युक्तमित्याहुरिति जा० टी०।**

स्वम् रघुनाथशिरोमणिः । तस्य रघुनाथशिरोमणेः मते मेरुसर्षपयोः अनन्तावयवकत्वेन साम्यप्रसङ्गवारणाय विश्रामस्य वाच्यत्वे लाघवात् त्रुटावेव (त्रसणावेव) विश्रामो वाच्यः । तदपकृष्ट(त्रसरेण्वपकृष्ट)महत्वस्य च नित्यत्वाङ्गीकारात् (तन्महत्वस्य द्व्यणुकसंख्याजन्यत्वं न स्वीकार्यम्) । अपकृष्टमहत्वं प्रति अनेकद्रव्यत्वस्य प्रयोजकतया सप्रयोजकत्वेनाभिहितम् (अपकृष्टमहत्वम्) त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वादित्यादिद्व्यणुकसाधकमनुमानमप्रयोजकमेव । अणुत्वव्यवहारश्चाप्रकृष्टपरिमाणैरेवोपपादनीय इति न द्व्यणुकादिस्वीकारे प्रयोजनमित्याशयः (तस्येत्यन्वय.) ।

"बलवत्तरप्रमाणाभावा"दिति ब्रह्मणो वर्षशतमायुरित्यस्येदानीमागमत्वानुपलब्धेः आगमत्वेन प्रसिद्धैरैतिह्यतया तत्र (ऐतिह्ये) प्रामाण्यासंप्रतिपत्तेः । अविधित्वेन (ब्रह्मणो वर्षशतमायुः ब्राह्मं शतमायुः" इत्यस्य विधित्वाभावेन) अन्यार्थतात्पर्यकत्वसंदेहाच्च । संसर्गान्तरीयद्व्यणुकोत्पत्त्यर्थं क्रियाऽभ्युपगमोऽपि प्रलयाव्यवहितोत्तरक्षण एव हि द्व्यणुकोत्पत्तेः प्रामाणिकत्व एव तस्य (पूर्वोक्तागमस्य) सविवादत्वादिति भावः ।

**तच्चिन्त्यमिति जा० टी०।**

परं प्रत्युद्भावितस्य दोषस्य परमतेनासंभावितत्व एवादोषत्वमत्युचितम् । स्वमतेन तस्यादोषत्वं तु न दोषतयाऽनुद्भावनप्रयोजकमिति महाप्रलयस्य पराभ्युपगमतया महाप्रलयान्तर्भावेनातिव्याप्तिवारणमेव स्थलान्तरानुसरणबीजमतिसुन्दरं न तु स्वमते द्व्यणुकासंभवेन स्थलासंभवः । प्राचीनैस्तु त्रसरेणुनित्यतायाः संदिग्धतया व्यभिचारसंदेहस्य चाप्रतिबन्धकतया चाक्षुषद्रव्यत्वेऽनित्यत्वसावयवत्वादिव्याप्यत्वे निश्चिते त्रसरेणुपरिमाणस्य नित्यत्वासंभवात् ।

द्वयणुकादिसाधकानुमानं नाप्रयोजकम् । न च महदारम्भकारम्भकत्वात् परमाणुत्वेनाभिमतस्यापि सावयवत्वम् अनवस्थाभयेन कुत्रापि विश्रामस्य वाच्यत्वे परमाणाविव तत्रैव (त्रसरणावेव) अस्तु विश्राम इति वाच्यम् । महदारम्भकत्वस्यानवयवत्वे यथा महतो घटस्य महत्वानुपपत्तिः कपालस्यानेकत्वाभावेन घटस्यानेकद्रव्यत्वाभावात् (अनेकद्रव्यजन्यत्वाभावात्) न तथा महदारम्भकारम्भकानवयवत्वे महत्वानुपपत्तिरिति, तस्य (महदारम्भकारम्भकत्वस्य) अप्रयोजकत्वात् । कपालिकादीनामपि महदारम्भकत्वादेव सावयवत्वमिति परमाण्ववयवप्रसङ्ग इत्येवं द्वयणुकस्याभ्युपेयत्वादिति चिन्तावीजम् ।

**नित्यसुखाभिव्यक्तेर्मुक्तित्वमते सद्धेतुमाशङ्क्य साध्यान्तरमाह दुःखं वेति इति जा० टी० ।**

नित्यं यत् सुखं तस्य या अभिव्यक्तिः ज्ञानं तस्य नित्यसुखाभिव्यक्तिज्ञानस्य मुक्तित्वमिति मते इत्यर्थः । प्रलयेऽपि अदृष्टाधिकरणे जन्यस्य नित्यसुखविषयकसाक्षात्कारस्य सत्त्वादिति शेषः । तथा च यदाऽदृष्टं तदा जन्यं ज्ञानं हेतुसाध्ययोः प्रलये सत्त्वेन न हेतोः साध्याभाववद्वृत्तित्वम् । कालो जन्यज्ञानवान् अदृष्टादित्यस्य सद्धेतुत्वेन न तत्रातिव्याप्तिरतः स्थलान्तरमाह दुःखं वेति । कालो दुःखवान् अदृष्टादित्यत्रातिव्याप्तिः । अदृष्टाधिकरणे प्रलये साध्यस्य दुःखस्याभावसत्त्वात् ।

सुखमात्रस्य परमपुरुषार्थत्वभ्रममूलकमेवेति मते इत्युक्तं जागदीश्याम् । (सुखस्य नित्यत्वे विवादान्मत इत्युक्तम्) । दुःखाभावस्य पुरुषार्थतां व्यवस्थाप्य विस्तरेण तन्मतखण्डनस्य (नित्यसुखाभिव्यक्तिर्मुक्तिरिति मतखण्डनस्य) भट्टवार्त्तिक एवोपलब्धत्वात् तदत्यन्ताभावोऽपवर्गो मोक्ष इति न्याय सूत्रस्थ वात्स्यायनभाष्ये दृष्टत्वाच्च इति ।

**ननु कार्यमात्रं प्रत्यदृष्टस्य हेतुत्वात् प्रलयप्राक्क्षणेऽपि तस्य**

(अदृष्टस्य)सत्त्वं तथा च तदानीम् (हेत्वधिकरणे प्रलये) दुःखत्वावच्छिन्नध्वंससत्त्वान्नातिव्याप्तिः, दुखादेः स्वसाक्षात्कारनाश्यतया तदानीमसंभवात् (उत्तरक्षणें साक्षात्कारासंभवात्) अविदिते प्रमाणाभावादिति जा० टी० ।

अयमाशयः नहि प्रयोजननिमित्ताभ्यां विना कस्यचित् कार्यस्योत्पत्तिरिति सामान्यतो नियमे प्रयोजनस्य चेतनसंवद्धतयाऽनियमवारणाय (अन्यादृष्टेनान्यस्य फलवारणाय) तत्तच्चेतनादृष्टनियम्यतायाः (प्रयोजने) स्वीकरणीयतया महाप्रलयस्यापि मोक्षविरोध्यात्मविशेषगुणादिभावविरोधितया सप्रयोजनस्य तत्त्वज्ञानद्वारा मोक्षप्रयोजकादृष्टैरेवोत्पादनीयत्वाद् अदृष्टजन्यत्वम्। अतएव (सर्वेषां कार्याणां प्रयोजननिमित्ताभ्यां विना अनुत्पत्तेरेव) । महाप्रलयस्य सुखदुःखाद्यजनकतया कथमदृष्टजन्यत्वम् (निरस्तमित्यनेनान्वयः) । न चाज्ञातोत्पत्तिविनाशवताम् अंकुरादीनामपि अप्रयोजनत्वेऽपि अदृष्टजन्यत्ववदिति (प्रलयस्यादृष्टजन्यत्वम्) वाच्यम् । परमकारुणिकानां योगिनामुत्पन्नयोगजधर्माणामेवान्ततः सांसारिकजन्तुसुखजननयोग्यतथाविधानां विनाशे (तथाविधानां योगिनां विनाशे) दुःखस्य दुःखजननयोग्यतथाविधानां विनाशे सुखस्य संभवात् तत्तदंकुरक्लेदादिना क्रियाद्युत्पादकतया वा संसारे कथंचित् सर्वेषामेव प्रयोजनवत्त्वादित्यपि निरस्तम् । कार्यमात्रस्यादृष्टप्रयोजनाभ्यां विनाऽनुत्पत्त्या आत्मतत्त्वज्ञानद्वारा अदृष्टैरेव महाप्रलयस्य मोक्षविरोध्यात्मविशेषगुणादिभावविरोधिनः जननात् महाप्रलयस्य कथमदृष्टजन्यत्वमिति परास्तम् । यस्य मोक्षः तस्यादृष्टजन्यत्वं महाप्रलये बोध्यम् । न त्वन्यादृष्टजन्यत्वम् अन्यथा अन्यादृष्टैरपरेषां सुखदुःखयोरुत्पादापत्तेरिति बोध्यम् । भविष्यन्महाप्रलयसाक्षात्कारेण । योगिनामेव वा सुखाद्युत्पत्तिसंभवेन कथंचित् सप्रयोजनत्वाच्चेति ।

केचित्तु लाघवेन कार्यत्वावच्छिन्नं प्रति अदृष्टस्य कारणत्वे व्यभिचारवारणायैव प्रलयेऽपि अदृष्टोत्तरत्वस्य कल्प्यत्वादिति वदन्ति ।

तदानीमसंभवादिति नित्यत्वप्रसङ्गादिति शेषः । अविदिते प्रमाणाभावादिति क्वचित् पाठः । तस्यायं भावः, प्रलयप्रयोजकादृष्टादिविनाश्यं तदानीं दुःखमास्तामिति यदि ब्रूयात् तदपि न संभवति अविदिते असाक्षात्कृते मानाभावादिति । इदमुपलक्षणम्, शरीराद्यनवच्छिन्ने आत्मनि तस्य (सुखदुःखादेः) उत्पत्तेरपि असंभवो बोध्यः ।

**बाधनिश्चयादिप्रतिबन्धकत्वाद्यनुरोधेनैव भेदात्यन्ताभावयोर्गोत्वावच्छिन्नप्रतियोगिताकत्वोपगमादिति जा० टी० ।**

गोमत्ताबुद्धौ गौर्नास्तीतिबुद्धेः न गोप्रतियोगिकाभावावगाहित्वेन विरोधित्वं तस्य तद्गवात्यन्ताभावधीसाधारणत्वात् । नापि गोत्वसमनियतप्रतियोगिताकाभावावगाहित्वेन विरोधित्वं यावद्गौर्नास्तीति बुद्धेर्विरोधित्वापातादिति गोत्वावच्छिन्नप्रतियोगिताकाभावावगाहित्वेनैव विरोधितया वाच्यतया, अत्यन्ताभावप्रतियोगितायां सामान्यधर्मावच्छिन्नत्वसिद्धिरिति भावः ।

ननु भ्रमप्रमासाधारण्यानुरोधेन प्रतियोगित्वसंबन्धावच्छिन्नगोत्वेतरधर्मानवच्छिन्नप्रकारतानिरूपितत्वाभावत्वावच्छिन्नविशेष्यत्वाभिन्नप्रकारताकनिश्चयत्वेनैव गोमत्ताबुद्धिं प्रति विरोधित्वं वाच्यमिति न प्रतिबध्यप्रतिबन्धकभावानुरोधेनात्यन्ताभावे सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वावगाहित्वसिद्धिरत आह— आदीति । तथा च प्रतिबध्यप्रतिबन्धकभावस्य विषयविरोधाधीनतया (गवादिविरोधितदभावाधीनतया) गोप्रतियोगिकाभावादीनां न तत्त्वम् (न गोमत्ताविरोधित्वम्) । गोत्वेन गवयाभावप्रकारकज्ञानस्यापि विरोधित्वात् इति गोत्वमात्रावच्छिन्नप्रतियोगिताकाभावस्यैव तत् (गोमत्ताविरोधित्वम्) वाच्यतया (अत्यन्ताभावीयप्रतियोगितायां) सामान्यधर्मावच्छिन्नत्वसिद्धिः । न च केवलगोत्वावच्छिन्नस्य विलक्षणमेव प्रतियोगित्वं संसर्गः (न गोघटोभयत्वावच्छिन्नभिन्नतद्गोवृत्तित्वविशिष्टभिन्नकेवलगोत्वावच्छिन्नस्य विलक्षणमेव प्रतियोगित्वं संसर्गः) तेन तत्सत्त्वविलक्षणप्रतियोगित्वसंबन्धेनाभावे (अत्यन्ताभावे) तत् (प्रतियोगिसत्त्वम्) न तद्गवाद्य-

भावे (तादृशात्यन्ताभावीयप्रतियोगितासंबन्धेन विशेषाभावप्रतियोगी न विशेषाभावे) वर्तते इति प्रतियोगित्वमात्र एव धर्मावच्छिन्नत्वे मानाभावः । विलक्षणप्रतियोगितामात्रे (अत्यन्ताभावीयप्रतियोगितामात्रे) धर्मावच्छिन्नत्वं वक्तव्यं न तु प्रतियोगितामात्रे (विशेषाभावीयादिप्रतियोगितायां ध्वंसाद्यभावप्रतियोगितायां वा धर्मावच्छिन्नत्वम्) भवतापि गोत्वमात्रावच्छिन्नत्वस्य (प्रतिबध्यप्रतिबन्धकभाववादिना भवतापि गोत्वमात्रावच्छिन्नत्वस्य) विलक्षणस्यैव स्वीकरणीयत्वात् । अन्यथा तद्गवाद्यभावादेरपि गोमत्ताबुद्धिप्रतिबन्धकत्वापत्तेः । तस्याभावघटितत्वेन (तस्य गोत्वमात्रावच्छिन्नत्वस्य) गोत्वावच्छिन्नत्वे सति गोत्वेतरानवच्छिन्नत्वरूपस्याभावघटितत्वेनानवस्थापातादिति वाच्यम् । (गोत्वेतरानवच्छिन्नत्वं गोत्वेतरधर्मावच्छिन्नत्वे सति गोत्वेतरत्वेतरधर्मानवच्छिन्नत्वं वक्तव्यमन्यथा गोत्वेतरधर्मतदितरोभयावच्छिन्नत्वमादाय गोत्वमात्रावच्छिन्नत्वस्य तद्गोत्वावच्छिन्नप्रतियोगितायां सत्त्वेन तस्यां प्रतियोगितायां सत्त्वादित्यनवस्थेति बोध्यम् । यावल्लक्षयितुं शक्यं तावद्वैलक्षण्याभ्युपगमस्योचितत्वात् । प्रतियोगित्वस्य तत्तद्धर्मावच्छिन्नत्वेन लक्षयितुं शक्यते तत्त्यागस्यानुचितत्वेन (प्रतियोगितायां तद्धर्मावच्छिन्नत्वस्य विलक्षणस्य त्यागानुचितत्वेन) तद्धर्मावच्छिन्नत्वाभ्युपगमात् । तन्मात्रावच्छिन्नत्वमपि (गोत्वमात्रावच्छिन्नत्वमपि तद(गोत्वाद्य)तिरिक्तधर्मानवच्छिन्नत्वेन लक्षयितुं शक्यमिति तदपि (गोत्वमात्रावच्छिन्नत्वमपि) लक्षणीयमेव । अनवस्थितिश्च तत्त्वाद्यनुगतघटितत्वेन सामान्यतो ज्ञाने न दोषाय (तद्धर्ममात्रावच्छिन्नत्वं तद्धर्मावच्छिन्नत्वे सति तदितरधर्मानवच्छिन्नत्वरूपम्) तत्र तदितरधर्मस्य तदितरत्वेन अनुगतत्वेन ग्रहणमतस्तत्रानवस्थितिर्न दोषाय भवति । अननुगतत्वेन ग्रहणे ऽनवस्थादोपाय भवतीति भावः । अस्तु वा तत् (तन्मात्रावच्छिन्नत्वम्) विलक्षणमेव का नो हानिरित्येवानिर्वचनीयतावाद्यतिरिक्तानामवच्छिन्नत्ववादिनां निष्कर्ष इति ।

एकसंबन्धेन तद्गवात्यन्ताभावग्रहेऽपि संबन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात्

संबन्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसाधारण्यादित्याशयेनाह—

**प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधादिति जा० टी०।**

अथ गौर्नास्तीति बुद्धिः साक्षात्संबन्धेन गोमत्ताबुद्धिमात्रस्यैव विरोधिनी गवाद्यवयवे गोमति चत्वरादौ च तदनुत्पत्तेः (गोमत्ताबुद्ध्यनुत्पत्तेः) गौर्नास्तीतिबुद्धेः प्रतिबन्धिकायाः सत्त्वात्। कालिकेन गोमत्ताबुद्धिश्च ह्रदत्वावच्छिन्नविशेष्यिका इदानीं गौरस्तीत्येव तत्प्रतीतिः भवति तद्विरोधिनी (गौर्नास्तीतिबुद्धिं प्रति विरोधिनी) संबन्धविशेषानवगाहिनी गौर्नास्तीति प्रतियोगितायां सबन्धावच्छिन्नत्वे मानाभावः। न च गोसमवायिनि संयोगेन गौर्नास्तीति बुद्ध्युत्पत्तेः संबन्धावच्छिन्नत्वं प्रतियोगितायामावश्यकमिति वाच्यम् गोसंयोगाभावस्य क्लृप्तस्यैव तत्र विषयत्वात्। (यत्र संबन्धाभावस्तत्र संबन्ध्यभावो वर्तते एव)। संयोगविशिष्टगोप्रतियोगित्वेनोल्लेखेऽपि शिखी विनष्ट इतिवद् विशेषणस्य प्रतियोगित्वसंभवात्। (विशेषणस्य संयोगस्य) संयोगविशिष्टगोप्रतियोगिकाभावप्रतियोगित्वसंभवात्। न चात्र तत्रैव (इदानीं गौर्नास्तीत्यत्रैव) बाधकस्य विरहेण कथं भासमानस्य(संयोगविशिष्टस्यः विशेष्यस्य गवादेः) त्यागः (प्रतियोगित्वेन त्यागः) इति वाच्यम्। लाघवस्यैव प्रयोजकस्य बाधकस्यैव सत्त्वात्। (संयोगमात्रस्य प्रतियोगित्वे संयोगविशिष्टगोप्रतियोगित्वापेक्षया लाघवमिति प्रतिबन्धकत्वेन संयोगविशिष्टे गवि न प्रतियोगित्वं स्वीकार्यं गौरवादिति भावः। उक्तप्रतीतिबलात् (संयोगेन गौर्नास्तीतिप्रतीतिबलात्) संबन्धविशेषेणैव गोमत्ताविरोध्यभावस्येव साक्षात्संबन्धेन गोमत्तामात्रविरोध्यभावस्यापि गौर्नास्तीतिप्रतीतिसिद्धाभावस्य सत्त्वं वाऽभ्युपेयम्। एवमपि तादृशात्यन्ताभाव(गौर्नास्तीत्यन्ताभाव)ध्वंस(गौर्नष्ट)बुद्धिसाधारणैकप्रतिबन्धकत्वानुरोधेन ध्वंसप्रतियोगितायां धर्मावच्छिन्नमावश्यकमिति चेत् (अत्यन्ता-

भावप्रतियोगितायां संबन्धावच्छिन्नत्वं गोत्वादिसामान्यधर्मावच्छिन्नं च न स्वीकार्यम् केवलसंबन्धप्रतियोगिकत्वमात्रं मन्तव्यं यत्र यस्य येन संबन्धेनाभावस्तत्र तत्संबन्धाभाव इत्येव स्वीकार्यम् । संबन्धसत्ताधीनैव संबन्धितः सत्तेति यत्र संबन्ध्यभावस्तत्र तत्प्रतियोगिकसंबन्धाभावः क्लृप्त इति शङ्का बोध्या ।) हन्तानुभविकमपीदं मतं न्यायसिद्धान्तपक्षपातात् अपोह्यते (खण्ड्यते) । तथा हि संयोगेन गौर्नास्तीतिबुद्धिः प्रतियोगितया गामुल्लिखन्ती गोप्रतियोगिकत्वांशे बाधमनासादयन्ती न लाघवमात्रेण गोसंबन्धप्रतियोगिकत्वेन स्वीकर्तुं क्षमते । अनुभवापलापकस्य लाघवस्याकिंञ्चित्करत्वात् । सन्देहे एव लाघवस्य वस्तुव्यवस्थापकत्वात् । गोप्रतियोगिकत्वेन संयोगस्यानुपस्थितावपि संयोगेन गौर्नास्तीति (कपाले संयोगेन गौर्नास्तीति) बुद्ध्युत्पादाच्च । गव्येव प्रतियोगित्वं न संबन्धे तदिति बोध्यम् । एवञ्च साक्षात्संबन्धेन गोमन्मात्रे (समवायसंबन्धेन गोमति गवावयवे) गौर्नास्तीतिबुद्धिर्न जायते एवेति केन तुभ्यमभ्यधायि । संयोगसंबन्धावच्छिन्नप्रतियोगिताकाभावातिरिक्तस्य तद्विषयस्यानभ्युपगमात् (समवायसंबन्धावच्छिन्नप्रतियोगिताकाभावविषयस्य गोसमवायिन्यनभ्युपगमात्) । समवायेन गोमति संयोगसंबन्धावच्छिन्नप्रतियोगिताकगवाभावावगाहिनी सा प्रत्यक्षबुद्धिः, संयोगादिना गोमति समवायसंबन्धावच्छिन्नप्रतियोगिताकगवात्यन्ताभावावगाहिनी च बुद्धिर्जायते एव । योग्यानुपलब्धिरूपसामग्रीवशान् न जायते इतो विपरीता बुद्धिः । न चैव संयोगादिना गोमति (गवावयवे) उपलब्धगवात्यन्ताभावः परत्र स्वबोधसंक्रान्तयेऽत्र गौर्नास्तीति कथं नापलपतीति गौर्नास्तीति प्रत्ययवेद्यस्तेन गृहीत इति कल्प्यत इति वाच्यम् ।

तेन (गौर्नास्तीतिप्रत्ययेन) न गृहीत इति कल्प्यते । समवायेन गौर्नास्तीत्याद्यभिलापस्य स्पष्टप्रत्यायनेच्छानिबन्धनत्वेनार्थापत्तेरपक्षीणव्यापारत्वात् संबन्धानवच्छिन्नप्रतियोगिताकाभावविषयकत्वेन प्रत्यक्षस्यानुव्यवसीयमानतायाः

संदिग्धत्वेन न ततः तादृशाभाव(संबन्धानवच्छिन्नाभाव)सिद्धिः, तादृशानुव्यवसायस्य (संबन्धावच्छिन्नप्रतियोगिताकाभावानुव्यवसायस्य) अविवादत्वे तादृशाभाव(संबन्धावच्छिन्नप्रतियोगिताकाभाव) निराकरणम् अमरगुरूणामपि अशक्यमित्यलम् ।

एकसंबन्धेन तद्गवात्यन्ताभावग्रहेऽपि संबन्धान्तरेण तद्गोमत्ताबुद्ध्युत्पादात् संबन्धविशेषमन्तर्भाव्यैवात्यन्ताभावग्रहस्य प्रतिबन्धकतया ध्वंसवत्ताग्रहसाधारण्यासंभवादित्याशयेनाह—

**मतेऽपीत्यग्रत्र संबन्धविशेषमन्तर्भाव्यैवेति जा० टी० ।**

ननु संयोगसमवायादिसंबन्धेन गोमत्ताबुद्धौ उभयसंबन्धेन गवात्यन्ताभाववत्ताबुद्धेरविरोधित्वेन तद्वारणाय (तादृशोभयसंबन्धावच्छिन्नप्रतियोगिताकाभाववारणाय) संयोगादिना गोमत्ताबुद्धिं प्रति संयोगत्वाद्यतिरिक्तधर्मावच्छिन्नसंसर्गत्वानिरूपितत्वस्यैव विरोधित्वघटकतया वाच्यतया (तादृशसंसर्गत्वानिरूपितप्रतियोगिताकाभाववत्तानिश्चयः संयोगादिना प्रतियोगिमत्ताबुद्धिं प्रतिबन्धातीति वाच्यतया) ध्वंसवत्ताबुद्धिसाधारण्यं दुर्वारम् (संबन्धानवच्छिन्नप्रतियोगिताकध्वंसवत्तासाधारण्यं प्रतिबन्धकत्वं दुर्वारम्) इति चेन्न । ध्वंसीयप्रतियोगितायामपि संबन्धावच्छिन्नत्वस्वीकारात् । यद्वा भेदप्रतियोगित्वस्य संबन्धानवच्छिन्नत्वे (तादात्म्यस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमिति सकलमतसाधारणं भेदत्वमिति संबन्धानवच्छिन्नप्रतियोगिताकाभावत्वं भेदत्वं वक्तव्यम्) तद्ग्रहस्य (भेदग्रहस्य) संयोगेन (तद्वत्ताबुद्धिं प्रति) प्रतिबन्धकत्ववारणाय तद्धर्मातिरिक्त(संयोगत्वादिधर्मातिरिक्त) धर्मानवच्छिन्नसंसर्गतानिरूपितप्रतियोगिताकाभावप्रकारकनिश्चयस्यैव प्रतिबन्धकत्वमित्यस्य वाच्यतया न ध्वंसबुद्धेः प्रतिबन्धकत्वेन संग्रहः । (तदीयप्रतियोगितायाः संसर्गत्वानिरूपितत्वात्) । यदि च गौर्नास्तीत्यादिबुद्धिरत्यन्ताभावत्वरूपानुयोगित्वावगाहिनी तदा अत्यन्ताभावध्वंसादिबुद्ध्योर्नैकरूपेण प्रतिबन्धकत्वसंभव इति चिन्त्यम् ।

**तत्र गवात्यन्ताभावस्य दैशिकविशेषणतया कालमात्रावृत्तित्वं प्राच्यैरिष्यत एव सदातनत्वव्यवहारस्य कालिकविशेषणतयैव संभवादिति विभावनीयमिति जा० टी०।**

इदानीं गौर्नास्तीतिबुद्धेः सर्वानुमतताया अपलाप एव चिन्ताबीजम् । न च तत्र कालिकेनाभाववत्त्वं विषयः तद्गोविद्यमानतादशायामपि इदानीं गौर्नास्तीति प्रत्ययापत्तेः । न च समवायादिसंबन्धावच्छिन्नप्रतियोगिताकाभावो विषयः । प्रतियोग्यभावान्वयस्य तुल्ययोगत्वेनेदानीं गौरित्यत्र कालिकेन गोमत्त्वस्य प्रतीतत्वेन नञा तत्संबन्धा(कालिकसंबन्धा)वच्छिन्नाभावबोधस्यैवानुभविकत्वात् ।

**नन्विदानीमश्वे न गोत्वमित्यादिप्रतीतेः कालवृत्तितयाऽश्ववृत्तितया च गोत्वाभावावगाहितयैवोपपत्तौ देशस्य कालवृत्तितावच्छेदकत्वे मानाभाव इत्यत आह देश इति जा० टी०,**

अत्र कालवृत्तितावच्छेदकत्वं देशेऽभ्युपेत्येदानीं कालेऽश्वे च स्वरूपत एव गोत्वाभावस्याभ्युपगम्यतयाऽश्व इव कालेऽपि स्वरूपत एव तत्सत्त्व-(अभावसत्त्व)मङ्गीकृत्य कालाश्वोभयवृत्तित्वं गोत्वाभावे विषय आस्तामिति चेत्, एवं देशवृत्तितायां कालस्यापि अवच्छेदकत्वं न स्यात् । इदानीं गेहे गौर्नास्तीत्यत्रापि उक्तयुक्त्या वृत्तिद्वयस्यैव (देशकालवृत्तित्वद्वयस्यैव) विषयत्वसंभवात् । न चेष्टापत्तिः, अनुभवविरोधात् । अन्यथा गोस्तद्गेहे विद्यमानतादशायात् इदानीं गेहे गौर्नास्तीतिप्रतीतिरपि स्यात् । गेहे कालान्तरावच्छेदेन, तत्काले च देशान्तरावच्छेदेन गवात्यन्ताभावस्याभ्युपगततया वृत्तित्वद्वयावगाहित्वेऽबाधितत्वात् । तस्याः (तादृशप्रतीतेः) अपीष्टत्वे, भवति भवतां मतिः, जानातु तथैव भवान् किमनुरोधेन चरणपातेनापि । वयं देशकालादीनामवच्छेदकत्वमङ्गीकारयाम इत्याखण्डलार्थः ।

**स्वप्रतियोगितावच्छेदकसंसर्गेण यः प्रतियोग्यारोपः तज्जन्य-प्रतीतिविषयो योऽभावस्तत्त्वमर्थ इति जा० टी० ।**

आरोपस्य जनकता चोपलभ्येतेत्येवमापत्तिद्वारा बोध्येति ।

**प्रागभावध्वंसयोरपि पूर्वोत्तरकालावेव प्रतियोगितावच्छेदकसंबन्धौ इति ताभ्यामेव (संबन्धाभ्यामेव) प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षे हेतुरतस्तयोर्नाव्याप्तिरिति प्राचामाशय इति जा० टी० ।**

अयमिदानीं यदि स्वाश्रयोत्तरकत्वसंबन्धेन घटवान् स्यात् घटवत्त्वे-नोपलभ्येतेति ध्वंसप्रत्यक्षे । अयमिदानीं स्वाश्रयपूर्वकालकत्वसंबन्धेन घटवान् स्यात् घटवत्त्वेनोपलभ्येतेति प्रागभावप्रत्यक्षे कारणमिति उत्तरपूर्वकालयोः संबन्धघटकत्वात् संबन्धत्वमित्याशयः ।

**तथा च चक्रकादिप्रसङ्ग इति भाव इति जा० टी० ।**

स्वग्रहसापेक्षग्रहसापेक्षग्रहसापेक्षग्रहविषयत्वेन स्वभिन्नत्वप्रसङ्ग इत्यर्थः । स्वम् अत्यन्ताभावत्वम् तद्ग्रहसापेक्षो नियमग्रहः (व्यापकत्वग्रहः) तत्सापेक्षः संसर्गा-भावत्वग्रहः तत्सापेक्षत्वस्यात्यन्ताभावत्वग्रहे सत्त्वात्, आपादकसत्त्वं चक्रक-प्रसङ्गव्याप्यात्माश्रयान्योन्याश्रयप्रसङ्गाविति तौ न दर्शिताविति बोध्यम् ।

संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं जन्यताघटक-नियमघटितमिति वाच्यम्, तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्, एवं नियमान्तरस्य प्रवेशेऽपि न क्षतिरित्याहुरिति दीधितिः ।

(अत्यन्ताभावग्रहः, संसर्गारोपजन्यप्रतीतिविषयाभावग्रहः । तत्र जन्यत्वं घटकम्, जन्यत्वञ्च तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्धयनिरूपकत्वम् । जन्यता-घटकव्याप्यत्वञ्च स्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकावच्छिन्नसामाना-धिकरण्यरूपम् तत्रात्यन्ताभावस्य घटकत्वम् । अत्यन्ताभावश्च संसर्गाभावविशेषः ।

संसर्गाभावश्च संसर्गारोपजन्यप्रतीतिविषयोऽभावः जन्यताघटितः । जन्यता च व्याप्यत्वघटिता व्याप्यत्वञ्चात्यन्ताभावघटितम् । अत्यन्ताभावः संसर्गारोपजन्य-प्रतीतिविषयोऽभाव इति चक्रकप्रसङ्गः । (चक्रकादिप्रसङ्ग इति संसर्गा-भावत्वघटितनिरुक्तव्याप्तिघटितजन्यताघटितत्वरूपापादकेन स्वस्मिन् स्वभिन्नत्व-प्रसङ्ग इत्यर्थः) । तथा चोक्तं प्राचीनैः स्वज्ञानसापेक्षज्ञानसापेक्षज्ञानसापेक्षज्ञान-विषयत्वेन स्वभिन्नत्वापादनं चक्रकप्रसङ्ग इति । जन्यतायास्तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्धचनिरूपकत्वादिति भावः । आदिपदात्पवंपरया संसर्गाभावत्व-घटितत्वेनापादकेन स्वस्मिन् स्वभिन्नत्वापादनरूपस्यात्माश्रयत्वस्य संसर्गाभावत्व-घटितजन्यताघटितत्वेनापादकेन स्वस्मिन् स्वभिन्नत्वरूपापादनस्यान्योन्याश्रयस्यापि परिग्रहः ।

यत्तु मैथिलेनोक्तम् स्वमत्यन्ताभावत्वम् तद्घटिताव्याप्तिस्तद्घटितं संसर्गा-भावत्वं तद्घटितत्वरूपापादकस्यात्यन्ताभावत्वे सत्त्वात् तत्र स्वभिन्नत्वापादनं चक्रकप्रसङ्ग इति तत्तुच्छम् । अत्यन्ताभावत्वे स्वभिन्नत्वापादनस्यार्थान्तर-ग्रस्ततया प्रकृतानुपयोगित्वात् । संसर्गाभावत्वे एव स्वभिन्नत्वापादनस्य जन्यताघटकनियमघटितमित्यादिग्रन्थेन दीधितिकृता प्रतिपादितत्वादित्यलमधिकेन ।

जन्यताया घटिका व्याप्तिर्यदि न निरुक्ताव्याप्तिस्तर्हि चक्रक एव न संभवति । संसर्गाभावत्वघटितायाः स्वव्यापकसामानाधिकरण्यरूपाया व्याप्तेर्जन्य-तायामघटकत्वादित्याशयेनाह दीधितौ तद्वदन्येति साध्यवदन्येत्यर्थः । तत्र च संसर्गाभावत्वज्ञानसापेक्षपूर्वोक्तव्याप्तिज्ञानसापेक्षत्वस्य जन्यताज्ञानेऽसत्त्वात् चक्रक-प्रसङ्ग इति भाव इति विवृति ।

विवृतिकारेण यदुक्तं तत्तुच्छम् । अत्यन्ताभावत्वे स्वभिन्नत्वप्रतिपाद-नस्यार्थान्तरग्रस्ततयाप्रकृतानुयोगित्वादिति । तत्रेदं विचार्यते । संसर्गाभावविशेषो-ऽत्यन्ताभाव इति मूलमनुसृत्य स्वम् अत्यन्ताभावत्वमादाय चक्रकं दर्शितं मैथिलेन,

संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपमितिकथनम् अत्यन्ताभावस्य संसर्गाभावविशेषत्वपरिचायकतयोक्तम् ।

अत्रोच्यते प्रतियोग्यसमानाधिकरणयत्समानाधिकरणाभावप्रतियोगितानवच्छेदकेति चिन्तामणौ, अभावपदमत्यन्ताभावस्यैव बोधकम् । दीधितिकारेण तद्वदन्यावृत्तित्वरूपनियमप्रदर्शनं च साध्यसंबन्धितावच्छेदकत्वादिरूपनियमस्य संसर्गाभावे न प्रवेश इति द्योतनाय "तत्र जन्यत्वे, नियमान्तरस्य साध्यसंबन्धितावच्छेदकरूपवत्त्वादिस्वरूपस्येत्यर्थः" इति जागदीशीग्रन्थेन सुस्पष्टम् । तच्च विवृतिकारेणापि स्वीकृतम् । तद्वदन्यावृत्तित्वमित्यत्र वृत्तित्वसामान्याभावरूपात्यन्ताभावस्यैव प्रवेशो न तु संसर्गाभावसामान्यस्य किन्तु संसर्गाभावविशेषात्यन्ताभावस्यैव । जन्यताघटकनियमस्य तद्वदन्यावृत्तित्वस्य प्रदर्शनं दीधितिकारस्य लाघवार्थमपि साध्यसंबन्धितावच्छेदकधर्मत्वनियमखण्डनार्थं च बोध्यम् न तु व्यापकसामानाधिकरण्यस्य खण्डनार्थम् ।

वस्तुतस्तु निपूर्वकयमधातोर्व्यापकत्वमर्थः । व्यापकत्वञ्च स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्वम् । एवञ्च अत्यन्ताभावत्वमादाय मैथिलस्य चक्रकप्रदर्शनम् अभिधावृत्त्या भवति न तु गौणीवृत्त्येति सर्वं मनसिकृत्य चिन्तामणिसिद्धान्तलक्षणमनुसृत्य च चक्रकसंभवेऽन्यमादाय तत्प्रदर्शनं न युक्तमिति विदाकुर्वन्तु सुधियः ।

नन्वभावबुद्धौ प्रतियोग्यारोपस्य हेतुत्वे मानाभावात् उक्तसंसर्गाभावत्वघटितलक्षणस्यासंभवः कथञ्चिदभावलौकिकप्रत्यक्षं प्रति प्रतियोग्यारोपस्य हेतुतास्वीकारेऽपि अतीन्द्रियसाध्यके व्यभिचारिणि अतिव्याप्तिः, तत्र हेतुसमानाधिकरणसाध्याभावस्यातीन्द्रियतया निरुक्तसंसर्गाभावविरहादत आह—

**वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणमिति । भेदभिन्नाभावत्वं संसर्गाभावत्वं सदातनत्वविशिष्टत्वं तदेवात्यन्ताभावत्वं,**

**भेदत्वञ्च संसर्गाविधया तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वम् अनुयोगिताविशेषो वेत्याशय इति जा० टी०।**

कथंचिदिति आरोपं विना (प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यारोपं विना) जायमानप्रत्यक्षस्थलेऽपि तादृशारोपं प्रकल्प्येत्यर्थः । स्वीकारेऽपीति अपिना अत्यन्ताभावप्रत्यक्षे प्रतियोग्युपस्थितिसहकृतयोग्यानुपलम्भस्य, प्रागभावप्रत्यक्षे प्रतियोगिजनकसामग्र्युपलम्भसहकृतस्य योग्यानुपलम्भस्य, ध्वंसप्रत्यक्षे नाशकोपलम्भसहकृतस्य योग्यानुपलम्भस्य कारणत्वादेव निर्वाहात् न प्रतियोग्यारोपस्य कारणत्वं सूचितम् । न च नाशकोपलम्भसहकारो व्यर्थः असमवायिकारणमात्रनाशाधीनकार्यनाशस्थलेऽनुपलब्ध्या समवायिकारणनाशस्य ध्वंसप्रत्यक्षापत्तेः । न च कालखण्डाद्युपलब्धिस्थले ध्वंसबुद्ध्यनुपपत्तिः । आनुमानिकत्वात् । तथा हि कपालध्वंसमनुमाय घटध्वंसस्य प्रत्यक्षसंभवादिति ।

निरुक्तसंसर्गाभावविरहेति। संसर्गारोपजन्यप्रतीतिविषयवृत्त्यभावविभाजकोपाधिमत्त्वस्य संसर्गाभावत्वरूपत्वे नातिव्याप्तिरिति चिन्तनीयम् । सदातनत्वविशिष्टमिति। न च घटाभावस्य घटरूपतया (अत्यन्ताभावस्य) अनित्यत्वे सदातनत्वविरहात् अत्यन्ताभावत्वानुपपत्तिरिति वाच्यम् । अतिरिक्तत्वाभ्युपगमात् (घटाभावाभावस्यातिरिक्तत्वाभ्युपगमात्) घटकालविशिष्टस्यैव संसर्गत्वाभ्युपगमेन घटाभावदशायां तत्सत्त्वासंभवात् (घटसंबन्धसत्त्वासंभवात्) । यद्वा अभावस्य भावभेदरूपतया घटस्वरूपे तत्र तद्(भावभेद)विरहेण (घटाभावाभावे) अत्यन्ताभावत्वविरहेऽपि न दोष इति ।

अनुयोगिताविशेषो वेति । इदन्तु बोध्यम्, भेदत्वस्यानुयोगिताविशेषत्वे, अत्यन्ताभावत्वस्यापि अनुयोगिताविशेषरूपत्वमेवेति ।

**तादात्म्येन गवादेः साध्यतायां तत्संबन्धावच्छिन्नगवात्यन्ताभावाप्रसिद्ध्या सास्नावत्त्वादावव्याप्तिरिति जा० टी०।**

व्याप्यवृत्तिसाध्यके व्याप्तिघटकाभावे साध्यतावच्छेदकसंबन्धावच्छिन्न-प्रतियोगिताकत्वस्य निवेशेन प्रकृते साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगितायामप्रसिद्धया तत्राव्याप्तिरिति बोध्यम् । साध्यता-वच्छेदकसंबन्धावच्छिन्नत्वस्य पारिभाषिकत्वे (साध्यतानवच्छेदकसंबन्धानवच्छिन्नत्वस्य पारिभाषिकत्वे) न दोषसंभवः । (साध्यभेदस्य हेतुसामानाधिकरण्याभावेन साध्यभिन्नघटादिभेदमादाय लक्षणसमन्वयो भेदीयप्रतियोगितायाः तादात्म्यस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति संबन्धावच्छिन्नत्वात्) इति विभावनीयम् ।

**एवमप्यभाववृत्तिरभावो नाधिकरणस्वरूपो न वा धर्मात्यन्ता-भाव एव धर्मिभेद इति मतेन इति जा० टी० ।**

विवृतिः— नन्वाभावाधिकरणकाभावस्याधिकरणस्वरूपतया पटभेदाधिकरणक-घटभेदत्वात्यन्ताभावस्य पटभेदस्वरूपतया पटनिष्ठप्रतियोगितैव तादृशपटभेदात्मक-घटभेदत्वात्यन्ताभावरूपसंसर्गाभावनिरूपितपटनिष्ठा प्रतियोगिता तादात्म्यसंबन्धा-वच्छिन्ना, एवं समनियताभावानामैक्यमिति मते पटभेदस्य पटत्वात्यन्ताभाव-स्वरूपतया पटनिष्ठा प्रतियोगिता पटभेदात्मकपटत्वात्यन्ताभावरूपसंसर्गाभाव-निरूपिता तादात्म्यसंबन्धावच्छिन्नापीति न संसर्गाभावनिरूपिततादात्म्यसंबन्धा-वच्छिन्नप्रतियोगित्वाऽप्रसिद्धयाऽव्याप्तिः संभवतीत्यत आह—इदमपीति । निरुक्ता-व्याप्तिदानमपीत्यर्थः । अयं गौः सास्नावत्त्वादित्यत्र तादात्म्येन साध्यता-यामव्याप्तिरपीति नेति यावत् । ननु धर्मिभेदधर्मात्यन्ताभावयोरैक्ये तादात्म्य-संबन्धेन साध्यतायाम्, अत्यन्ताभावत्वनिरूपितत्वस्य लक्षणघटकाभावीयप्रति-योगितायां निवेशेऽप्यव्याप्तिविरहः (अयं गौः सास्नावत्त्वादित्यत्र हेत्वधि-करणे गवि पटभेदीयप्रतियोगिता पटत्वात्यन्ताभावत्वनिरूपिता साध्यतावच्छेदक-संबन्धावच्छिन्ना प्रसिद्धेति तादृशप्रतियोगित्वाप्रसिद्धयाऽव्याप्तिविरह इति धर्मि-भेदधर्मात्यन्ताभावयोः समनियतत्वेनैक्यात्) अभावाधिकरणकाभावस्याधिकरण-

रूपत्वे गोभेदस्यापि हेतुसमानाधिकरणात्यन्ताभावरूपतया तत्राव्याप्तिरस्त्येव । (हेत्वधिकरणे सास्नावति गवि वर्तमानः पटाभावो गोभेदाधिकरणकः तदीय-गोभेदीयप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्यात्यन्ताभावत्व-निरूपितत्वस्य च सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके गोत्वे सत्त्वेनायं गौः सास्नावत्वादित्यत्राव्याप्तिरस्त्येवेति । न चाभावाधिकरण-कोऽभावप्रतियोगिक एवाधिकरणस्वरूप इति वाच्यम् । तादात्म्येनाभावसाध्यके तथाप्यव्याप्तेरिति चेन्न । (तादात्म्येनायमभावोऽभावत्वादित्यत्र साध्यभेदाधि-करणकस्य हेतुसमानाधिकरणभावात्यन्ताभावस्य प्रतियोगितायां साध्यनिष्ठाया-मत्यान्ताभावत्वनिरूपितत्वस्य साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्य च सत्त्वेन प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न) । हेत्व-धिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितात्यन्ताभावीयसाध्यतावच्छेदक-संबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनादोषात् । साध्यभेदत्वरूपानुयोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वस्यासत्त्वात् । न च तथाविवक्षणे लक्षणघटकाभावीयप्रतियोगितायामत्यन्ताभावीयत्वनिवेशो व्यर्थ इति वाच्यम् । इष्टत्वात् । यथा यादृशप्रतियोगितावच्छेदकावच्छिन्नान-धिकरणत्वं हेतुमतस्तत्प्रतियोगितानवच्छेदकत्वघटितलक्षणे संसर्गाभावीयत्वप्रवेशे प्रयोजनविरह एव न तथा व्याप्यवृत्तिसाध्यकलक्षणेऽपि तत्र(व्याप्यवृत्ति-साध्यकलक्षणे) अव्याप्तेरपि संभवादित्यत्र तात्पर्यादिति । (लक्षणघटका-भावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नायाम् अत्यन्ताभावत्वनिरूपि-तत्वनिवेशे तादात्म्येन साध्यतायामव्याप्तेरपि संभवादित्यत्र तात्पर्यादिति) ।

**ननु विषयताया वृत्त्यनियामकत्वमते ज्ञानाभावस्य गगनादौ सहजत एव प्रतियोगिव्यधिकरणत्वात् (ज्ञानवान् द्रव्यत्वादित्यत्र) नातिव्याप्तिरत आह—विशेषणवान् मनोऽन्यद्रव्यत्वादिति । विशेष-गुणेति जा० टी० ।**

व्याप्यवृत्तिसाध्यके व्याप्तिघटकाभावे साध्यतावच्छेदकसंबन्धावच्छिन्न-प्रतियोगिताकत्वस्य निवेशेन प्रकृते साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगितायामप्रसिद्धया तत्राव्याप्तिरिति बोध्यम् । साध्यता-वच्छेदकसंबन्धावच्छिन्नत्वस्य पारिभाषिकत्वे (साध्यतानवच्छेदकसंबन्धानवच्छिन्नत्वस्य पारिभाषिकत्वे) न दोषसंभव: । (साध्यभेदस्य हेतुसामानाधिकरण्याभावेन साध्यभिन्नघटादिभेदमादाय लक्षणसमन्वयो भेदीयप्रतियोगितायाः तादात्म्यस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वमिति संबन्धावच्छिन्नत्वात्) इति विभावनीयम् ।

**एवमप्यभाववृत्तिरभावो नाधिकरणस्वरूपो न वा धर्मात्यन्ता-भाव एव धर्मिभेद इति मतेन इति जा० टी० ।**

विवृतिः—नन्वाभावाधिकरणकाभावस्याधिकरणस्वरूपतया पटभेदाधिकरणक-घटभेदत्वात्यन्ताभावस्य पटभेदस्वरूपतया पटनिष्ठप्रतियोगितैव तादृशपटभेदात्मक-घटभेदत्वात्यन्ताभावरूपसंसर्गाभावनिरूपितपटनिष्ठा प्रतियोगिता तादात्म्यसंबन्धा-वच्छिन्ना, एवं समनियताभावानामैक्यमिति मते पटभेदस्य पटत्वात्यन्ताभाव-स्वरूपतया पटनिष्ठा प्रतियोगिता पटभेदात्मकपटत्वात्यन्ताभावरूपसंसर्गाभाव-निरूपिता तादात्म्यसंबन्धावच्छिन्नापीति न संसर्गाभावनिरूपिततादात्म्यसंबन्धा-वच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिः संभवतीत्यत आह—इदमपीति । निरुक्ता-व्याप्तिदानमपीत्यर्थः । अयं गौः सास्नावत्त्वादित्यत्र तादात्म्येन साध्यता-यामव्याप्तिरपीति नेति यावत् । ननु धर्मिभेदधर्मात्यन्ताभावयोरैक्ये तादात्म्य-संबन्धेन साध्यतायाम्, अत्यन्ताभावत्वनिरूपितत्वस्य लक्षणघटकाभावीयप्रति-योगितायां निवेशेऽप्यव्याप्तिविरहः (अयं गौः सास्नावत्त्वादित्यत्र हेत्वधि-करणे गवि पटभेदीयप्रतियोगिता पटत्वात्यन्ताभावत्वनिरूपिता साध्यतावच्छेदक-संबन्धावच्छिन्ना प्रसिद्धेति तादृशप्रतियोगित्वाप्रसिद्ध्याऽव्याप्तिविरह इति धर्मि-भेदधर्मात्यन्ताभावयोः समनियतत्वेनैक्यात्) अभावाधिकरणकाभावस्याधिकरण-

रूपत्वे गोभेदस्यापि हेतुसमानाधिकरणात्यन्ताभावरूपतया तत्राव्याप्तिरस्त्येव । (हेत्वधिकरणे सास्नावति गवि वर्तमानः पटाभावो गोभेदाधिकरणकः तदीय-गोभेदीयप्रतियोगितायां साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्यात्यन्ताभावत्व-निरूपितत्वस्य च सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके गोत्वे सत्त्वेनायं गौः सास्नावत्वादित्यत्राव्याप्तिरस्त्येवेति । न चाभावाधिकरण-कोऽभावप्रतियोगिक एवाधिकरणस्वरूप इति वाच्यम् । तादात्म्येनाभावसाध्यके तथाप्यव्याप्तेरिति चेन्न । (तादात्म्येनायमभावोऽभावत्वादित्यत्र साध्यभेदाधि-करणकस्य हेतुसमानाधिकरणभावात्यन्ताभावस्य प्रतियोगितायां साध्यनिष्ठाया-मत्यान्ताभावत्वनिरूपितत्वस्य साध्यतावच्छेदकतादात्म्यसंबन्धावच्छिन्नत्वस्य च सत्त्वेन प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न) । हेत्व-धिकरणनिरूपितवृत्तितावच्छेदकीभूतानुयोगितानिरूपितात्यन्ताभावीयसाध्यतावच्छेदक-संबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनादोषात् । साध्यभेदत्वरूपानुयोगितायां हेत्वधिकरणनिरूपितवृत्तितावच्छेदकत्वस्यासत्त्वात् । न च तथाविवक्षणे लक्षणघटकाभावीयप्रतियोगितायामत्यन्ताभावीयत्वनिवेशो व्यर्थ इति वाच्यम् । इष्टत्वात् । यथा यादृशप्रतियोगितावच्छेदकावच्छिन्नान-धिकरणत्वं हेतुमतस्तत्प्रतियोगितानवच्छेदकत्वघटितलक्षणे संसर्गाभावीयत्वप्रवेशे प्रयोजनविरह एव न तथा व्याप्यवृत्तिसाध्यकलक्षणेऽपि तत्र(व्याप्यवृत्ति-साध्यकलक्षणे) अव्याप्तेरपि संभवादित्यत्र तात्पर्यादिति । (लक्षणघटका-भावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नायाम् अत्यन्ताभावत्वनिरूपि-तत्वनिवेशे तादात्म्येन साध्यतायामव्याप्तेरपि संभवादित्यत्र तात्पर्यादिति) ।

**ननु विषयताया वृत्त्यनियामकत्वमते ज्ञानाभावस्य गगनादौ सहजत एव प्रतियोगिव्यधिकरणत्वात् (ज्ञानवान् द्रव्यत्वादित्यत्र) नातिव्याप्तिरत आह—विशेषणवान् मनोऽन्यद्रव्यत्वादिति । विशेष-गुणेति जा० टी० ।**

अत्र व्यभिचारनिरूपकः कालो दिक् च । तत्र काले कालिकेन दिशि च दैशिकेन संबन्धेन विशेषगुणस्य सत्त्वात् तदभावो न प्रतियोगिव्यधिकरण इति भवत्यतिव्याप्तिः। विशेषपदं व्यभिचारित्वरक्षार्थं द्रव्यत्वादित्युक्तौ संबन्धसामान्येन विशेषगुणस्य मनस्यसत्त्वान्नातिव्याप्तिसंभव. । कालोपाधितावद्दिगुपाधित्वस्यापि मनस्यसत्त्वात् ।

**अव्यावर्तकत्वात् । अन्यथा मनसः कालोपाधित्वमपि स्यात् । अत उक्तं मनोऽन्येति इति जा० टी० ।**

अव्यावर्तकत्वादिति । विशेषपदमिति गुणवान् मनोऽन्यद्रव्यत्वादित्येतावन्मात्रोक्तौ तादृशद्रव्यस्याधिकरणे दिक्कालादौ सर्वत्र गुणस्य सत्त्वेन निरुक्तहेतोः सद्धेतुतया तत्र लक्षणगमनस्येष्टत्वादतिव्याप्तिदानमसंगतं स्यादतो विशेषपदमिति । ननु द्रव्यत्वाधिकरणेऽपि दिक्कालादौ विशेषगुणस्यासत्त्वान्मनोऽन्यपदं निरर्थकमित्यत आह— द्रव्यत्वादिति । द्रव्यत्वादित्युक्तौ हेत्वधिकरणे मनसि वर्तमानो विशेषगुणाभावो भवति प्रतियोगिव्यधिकरणः तत्प्रतियोगितावच्छेदकीभूतविशेषगुणत्वावच्छिन्नाधिकरणतायाः कालिकादिना केनाऽपि वृत्तिनियामकसंबन्धेन हेतुमति नित्ये मनसि अविद्यमानत्वादिति सबन्धसामान्येन प्रतियोगिव्यधिकरणत्वेन स ध्याभावस्य धर्तुं शक्यतया नातिव्याप्तिरतोऽतिव्याप्तिदानाय मनोऽन्यपदं हेतौ निवेशनीयमित्यभिप्राय इतिविवृतिः। सहजत एव प्रतियोगिव्यधिकरणत्वादिति । इदानीं प्रतियोगिसंबन्धित्वंप्रवेशे प्रयोजनविरहेण प्रतियोग्यधिकरणत्वाभावस्य हेत्वधिकरणे सत्त्वसंभवादिति भावः । तथा च हेत्वधिकरणे गगने ज्ञानरूपसाध्याभावस्य प्रतियोगिव्यधिकरणस्य सत्त्वात् ज्ञानवान् द्रव्यत्वादित्यत्र नातिव्याप्तिः । अतो विशेषगुणवान् मनोऽन्यद्रव्यत्वादित्युक्तमिति भावः । अव्यावर्तकत्वादिति सावयवस्य तत्प्रयोजकत्वात् (उपाधित्वप्रयोजकत्वात् । अन्यथा (सावयवत्वस्योपाधित्वाप्रयोजकत्वे) विभूनामपि (गगनादीनामपि) व्यावर्तकत्वापत्तेः ।

नन्वस्तु परिच्छिन्नपरिमाणवत्त्वमेव व्यावर्तकत्वे प्रयोजकमित्यत्र सिद्धान्तभङ्गभयादाह कालोपाधीति (यथा मनसि कालोपाधित्वं नास्ति तथा दिगुपाधित्वमपि नास्ति

सावयवत्वस्यैवोपाधिप्रयोजकत्वात् नित्यत्वान्मनसो निरवयवत्वेन सावयवत्वाभावात् न च दिगुपाधितायामवच्छिन्नपरिमाणवत्त्वम्, कालोपाधितायाश्च जन्यत्वं प्रयोजकमिति न दोष इति वाच्यम्(विशेषगुणवान् मनोऽन्य द्रव्यत्वादित्यत्र हेत्वधिकरणे मनसि प्रतियोगि-व्यधिकरणसाध्याभावस्यासत्त्वात् तत्रातिव्याप्तिः। मनसो दिगुपाधित्वेन तत्र दैशिक-विशेषणतया विशेषगुणस्य सत्त्वात् कथं मनोऽन्यपदं सार्थकमिति वाच्यम्) परमाणूनां व्यावर्तकत्वस्यानुभावकत्वे उपाधिप्रयोजकभेदकल्पना युज्यते, न चासंदिग्धं तदस्ति (परमाणूनामव्यावर्तकत्वे न सन्देहोऽस्ति) इति दिशि काले च सावयवत्वस्यैवोपाधि-प्रयोजकत्वौचित्यादिति।

**यत्तु मूर्तमात्रस्य दिगुपाधित्वं महादिग्वृत्तितायामवच्छेदकत्वं नत्वधि-करणत्वमिति प्राचां मते संबन्धसामान्यस्यैव तस्य(दिशः) विशेषगुणानधि-करणत्वात् मनोऽन्यपदमिति जा० टी०।**

प्राच्यां घट इतिबुद्धिर्न दिङ्मात्रमधिकरणत्वेन विषयीकरोति प्रतीच्यां घट इति प्रत्ययापत्तेः। दिक्त्वस्य प्राचीप्रतीच्यादिसाधारणत्वात्। नाप्युपाधिमात्रम्(प्राच्यां घट इति बुद्धिः उपाधिमात्रं दिशः विषयीकरोति) तथा सति प्रतीच्यां घट इत्यतः वृक्षे घट इति प्रत्ययापत्तेः। किन्तूपाधिविशेषविशिष्टां दिशं तत्रोपाधेरवच्छेदकत्वमेव नत्वधिकरण-त्वमित्येके(दिशि)घटस्यावच्छेदकत्वं नत्वधिकरणत्वम्) विशिष्टबुद्धेः विशेषणविशेष्योभय-संबन्धावगाहित्ववद् विशिष्टानुयोगिकबुद्धेःविशेषणविशेष्योभयानुयोगिकसंबन्धावगाहितया दिशीव दिगुपाधावपि अधिकरणत्वम् (प्राच्यां घट इति बुद्धिर्विषयीकरोति दिग्घटोभया-धिकरणत्वम्) न च घटे रूपमित्यादिविशिष्टबुद्धिः कथमिति वाच्यम् (घट इव रूपे (?) कथं नाधिकरणतया विषयीकरोतीति वाच्यम्) तस्योपलक्षितानुयोगिकत्वस्यैव स्वीकारादित्यपरे (रूपोपलक्षितघटानुयोगिकसंबन्धमेव घटे रूपमिति बुद्धिः विषयीकरोति तत्र घटस्याधिकरणत्वेन विषयत्वेऽपि रूपस्य नाधिकरणतया विषयत्वं तस्योपलक्षणत्वेना-विशेषणात् विशेषणविशेष्योभयस्याधिकरणतया विषयत्वं न तूपलक्षणोपलक्षितोभयस्येति बोध्यमित्यपरे) इति विवादप्रदर्शनाय जागदीश्यां मते इत्युक्तम्।

**तन्मन्दम्, एवमपि अवच्छेदकतासंबन्धेनैव मनसो विशेषगुणवत्ताया: संभवेन मनोऽन्यपदवैयर्थ्यापत्तेरिति जा० टी० ।**

ममान्त:करणे कोपो मम चेतसि राग इत्यादिप्रामाणिकव्यवहारदर्शनाद् द्वेषेच्छाद्यात्मविशेषगुणावच्छेदकत्वस्य मनोनिष्ठस्य वृत्तिनियामकत्वम् । (अवच्छेदकत्वस्य) अभ्युपेयम्

यत्तु चेष्टात्वावच्छिन्नं प्रति कृतेरवच्छेदकतासंबन्धेन कारणत्वमिति तदनुरोधेन वृत्तिनियामकावच्छेदकत्वस्येति तदपि कारणत्वघटकप्रतियोगितायां कारणतावच्छेदकसंबन्धावच्छिन्नत्वस्य प्रवेशपक्षे । वृत्त्यनियामकसंबन्धस्य प्रतियोगितानवच्छेदकतया कारणत्वासंभवात् । अत्र तादात्म्यादीनामपि वृत्तिनियामकत्वप्रसङ्गान्नातीवादरो विधेय: । ननु स्वमते दिक्कालयोरीश्वरानतिरिक्तत्वादत्राव्याप्तिरेवेत्यत आह—

**जातिमान् भावत्वादित्यादौ इति जा० टी० ।**

तयो: (दिक्कालयो:) ईश्वरानतिरिक्तत्वेऽपि सूर्यपरिस्पन्दावच्छिन्ने तत्र (देशे काले)इदानीं घट इत्यादिबुद्धिविषयत्वम् । उदयादि (उदयाचलादि) सन्निधानावच्छिन्ने प्राच्यां घट इत्यादिबुद्धिविषयत्वं घटादीनां नोपाधित्वं तेनोपधेयोपाधेरेकत्वेन इदानीं घट: प्राच्यां घट इत्यनयोरेकत्वप्रसङ्ग: । घटादीनामुपाधित्वस्यानुभविकत्वे उक्तप्रसङ्गवायरणाय तयोर्भेदो न केनाप्यपलपितुं शक्य इति मन्तव्यम् । मतमिदं दीधितिकृतो नादरणीयं न्यायविद्भि: । उक्तयुक्त्या ईश्वर तदन्त:करणशरीराद्युपाधिभेदकल्पनया सर्वदोषपरीहारेणैकचेतनवादरूपोपनिषदमतप्रवेशापत्तेरिति । (दिक्कालयोरीश्वरत्वादैक्ये इदानीं घट: प्राच्यां घट इत्युभयो: प्रतीत्योरैक्यापत्ति: । उपधेयोपाध्यो: द्वयो: ईश्वरघटयोरुभयत्रैकत्वात् । अत: कालदिशोर्नेश्वरत्वं मन्तव्यम् । इदं दीधितिमतं न समीचीनम्; वेदान्तवासनया तेन लिखितम् स्वीकृतं वा ।

स्वप्रतियोगित्वं यादृशसंबन्धावच्छिन्नं तादृशसंबन्धेन यत् स्वप्रतियोगिसंबन्धि तद्वृत्तित्वाभावस्योक्तत्वादिति जा० टी० ।

अत्र स्वप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वं नास्तीति प्रातीतिकाभाववदभावो लक्षणघटकः । वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपितसंसर्गताावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वोभयसंबन्धेन । स्वा(प्रतियोगित्वा) वच्छेदकावच्छिन्नत्वञ्च स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकताकत्वम् । तत्र न्यूनवारकपर्याप्तिनिवेशफलं तु विशिष्टसत्तावान् जातेरित्यत्राव्याप्तिवारणं ग्रन्थकृतैवोक्तम् । इतरवारकपर्याप्तिनिवेशफलं तु वह्निमान् महानसीयवह्निमद्विषयकज्ञानत्वादित्यत्रातिव्याप्तिवारणम् । अत्र स्वपदं हेतुसमानाधिकरणत्वेनाभिमततत्तदभावव्यक्तिपरम् । तथा च स्वप्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभाववदभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वै० स्वावच्छेदकधर्मावच्छिन्नत्व, स्वनिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकत्वोभयसंबन्धेन । वह्निमान् धूमादित्यत्र लक्षणघटकघटाभावीयप्रतियोगिताविशिष्टा निरूपकता घटत्वावच्छिन्ना तन्निरूपिताधिकरणतावद्भूतलादिनिरूपितवृत्तित्वाभाववान् घटाभावस्तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वात् । अत्रेतरवारकपर्याप्तेरनिवेशे ज्ञानं विषयितया वह्निमत् संयोगेन महानसीयवह्निमद्विषयकज्ञानत्वादित्यत्रातिव्याप्तिः स्यात् । लक्षणघटकसाध्याभावे स्व(प्रतियोगिता) विशिष्टमहानसीयवह्निनिष्ठनिरूपकतानिरूपिताधिकरणतावन्महानसीयवह्निविषयकज्ञाननिरूपितवृत्तित्वस्यैव सत्त्वेन साध्याभावस्य लक्षणघटकत्वापत्तेः । इतरवारकपर्याप्तिनिवेशे तु नोक्तदोषः । महानसीयवह्निविषयकज्ञानवृत्तिसाध्याभावीयवह्निनिष्ठप्रतियोगिताविशिष्टा निरूपकता वह्नित्वावच्छिन्ना तन्निरूपिताधिकरणतावद्वह्निविषयकज्ञाननिरूपितविषयित्वसंबन्धावच्छिन्नवृत्तित्वाभावस्य साध्याभावे सत्त्वेन तदीयप्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वात् ।

न चास्य ज्ञानं वह्निमत्महानसीयवह्निविषयकज्ञानत्वादित्यस्य सद्धेतुत्वमेव, हेत्वधिकरणे साध्यस्य विषयितया सत्त्वेन तत्र साध्याभावस्यासत्त्वादिति वाच्यम् । शुद्धवह्नित्वावच्छिन्नस्य शुद्धवह्नित्वावच्छिन्ननिरूपितविषयित्वस्यैव संसर्गतया महानसीयवह्निविषयकज्ञाने तस्य (वह्नेः) सत्त्वेन विषयितया वह्नेः साध्यतायां सद्धेतुत्वेऽपि प्रकारितासंबन्धेन वह्नेः साध्यतायां महानसीयवह्निविषयकज्ञानत्वस्य व्यभिचारित्वात् । न च तज्ज्ञानस्य (महानसीयवह्निविषयकज्ञानस्य) वह्निप्रकारकतया तत्(प्रकारिता)संबन्धेन तत्र(महानसीयवह्निविषयकज्ञाने) कुतो न वह्निसत्त्वमिति वाच्यम् । शुद्धवह्नित्वावच्छिन्नस्य शुद्धवह्नित्वावच्छिन्ननिरूपितप्रकारिताया एव संसर्गत्वात् । तादृशीय (शुद्धवह्नित्वावच्छिन्ननिरूपिता च) प्रकारिता न तज्ज्ञाने (महानसीयवह्निविषयकज्ञाने) वर्तते महानसीयत्वस्याधिकस्य निरूपकतावच्छेदकत्वात् । उभयधर्मावच्छिन्ननिरूपितप्रकारित्वं च न प्रत्येकधर्मावच्छिन्नस्य संसर्गः । विशिष्टसत्तात्वावच्छिन्ननिरूपितसंसर्गतावत्समवायो न शुद्धसत्त्वस्य संसर्गः । तथा महानसीयवह्निनिरूपितप्रकारता न शुद्धवह्नेः संसर्गो भवति । तस्यापि (महानसीयवह्नेरपि) प्रकारित्वस्य (शुद्धवह्नित्वावच्छिन्ननिरूपितप्रकारित्वस्य) संसर्गत्वे महानसीयवह्निमदिति ज्ञानानन्तरं वह्नित्वेन जानामीत्यनुव्यवसायापत्तेः । महानसीयवह्निमानित्यनुमित्यनन्तरं च वह्निमनुमिनोमीत्यनुव्यवसायापत्तेश्च । न च तदिष्यते । तथासति वह्नित्वावच्छिन्नविधेयताकानुमितौ प्रमाणाभावप्रसंगात् । वह्निं जानामीत्यनुव्यवसायश्च न प्रकारितासंबन्धेन, ज्ञानांशे वह्न्यवगाही वह्निविशेष्यकज्ञानानन्तरमपि तदुत्पादात् (वह्निं जानामीत्यनुव्यवसायोत्पादात्) किन्तु विषयित्वमात्रेणेति । एवं प्रतियोगितासंबन्धेन वह्निसाध्यकमहानसीयवह्न्यभावत्वहेतुकातिव्याप्तिवारणमपि । वह्नित्वावच्छिन्नप्रतियोगितायाः महानसीयवह्नित्वावच्छिन्नप्रतियोगितातो भिन्नत्वेन तथा प्रतियोगितया वह्निरूपसाध्यस्य हेत्वधिकरणेऽसत्त्वेन तदभावस्य लक्षणघटकत्वात् । महानसीयवह्निसाध्यकवह्निमहानसीयविषयकज्ञानत्वहेतुकातिव्याप्तिश्च वह्नित्वमहानसीयत्वगतद्वित्व,महानसीयत्व-

वह्नित्वगतद्वित्वभेदे सहजत वारणीयः । उभयोः प्रकारित्वयोर्भेदेन हेत्वधिकरणे प्रकारितासंबन्धेन तत्तत्साध्यासत्त्वेन साध्याभावस्य लक्षणघटकत्वात् । तदभावे (उभयोर्द्वित्वयोर्भेदाभावे) एकत्वादेः पर्याप्त्यनभ्युपगमेन च समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टसाध्यके धूमे व्यभिचारिणि समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितकालिकसंबन्धावच्छिन्नमहानसीयत्वनिष्ठावच्छेदकतानिरूपितनिरूपकतामादायातिव्याप्तिवारणाय च प्रतियोगिताविशिष्टनिरूपकत्वमेवादरणीयम् । वै० स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व, स्ववृत्तित्वोभयसंबन्धेन । वृतिता च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धेन । वैशिष्ट्यं चोभयत्र प्रसिद्धचतुष्टयेषु यावदादेयं तैश्च बोध्यम् । प्रसिद्धचतुष्टयसंबन्धाश्च स्वसामानाधिकरण्य,स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नस्ववृत्तित्व,स्वानवच्छेदकानवच्छिन्नत्व,स्वावच्छेदकसंबन्धावच्छिन्नत्वरूपाः । एवञ्च प्रतियोगितावच्छेदकनिरूपकतावच्छेदकयोर्विशिष्टावच्छेदकत्वपक्षे(समवायेन महानसीयत्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टप्रतियोगितावच्छेदकता महानसीयत्वविशिष्टवह्नित्वे निरूपकतावच्छेदकता च 'समवायेन वह्नित्वविशिष्टे सति कालिकेन महानसीयत्वे, उभयोरवच्छेदकतयोर्भिन्नत्वपक्षे भिन्नतया स्वानवच्छेदकानवच्छिन्नत्वसंबन्धेन प्रतियोगितावच्छेदकतावैशिष्ट्यस्य निरूपकतावच्छेदकतायां विरहात् (प्रतियोगितावच्छेदकौ कालिकसमवायौ, निरूपकतावच्छेदकौ च तद्विपरीतौ समवायकालिकौ संबन्धौ) । विशेषसंबन्धस्यावच्छेदकत्वपक्षे स्वावच्छेदकसंबन्धावच्छिन्नत्वविरहेण तद् (प्रतियोगितावच्छेदकता)वैशिष्ट्यविरहात् न महानसीयवह्निसाध्यकव्यभिचारिणि अतिव्याप्तिः । वह्नित्वनिष्ठप्रतियोगितावच्छेदकतायां कालिकसंबन्धावच्छिन्नत्वं निरूपकतावच्छेदकतायां वह्नित्वनिष्ठायां समवायसंबन्धावच्छिन्नत्वमित्युभयोः संबन्धयोर्भेदात् । अथ विशिष्टस्यानवच्छेदकत्वे संबन्धविशेषस्यानवच्छेदकत्वे च का गतिरिति चेन्न । रक्तदण्डवानिति प्रतीतौ स्थलभेदेन यथा विलक्षणावच्छेदकताद्वयस्वीकारः, (रक्तवान् दण्डवानिति प्रत्ययानन्तरं रक्तदण्ड-

वानित्यनुव्यवसायो न भवति रक्तदण्डवानितिप्रत्ययानन्तरं च सोऽनुव्यवसायो भवतीति तदुपपत्तये यथा विलक्षणावच्छेदकताद्वयस्वीकारः) तथा महानसीयवह्निमान् इति ज्ञानं वह्निमहानसीयवदितिप्रतीतेर्वारणाय (तथा महानसीयवह्निमानित्यनुभवानन्तरं वह्निमहानसीयवदित्यनुव्यवसायो न भवतीत्थंतदनुव्यवसायोपपत्तये) महानसीयवदिति प्रतीत्युपपत्तये च महानसीयविशेषणतापन्ने वह्निविशेषणतापन्ने च वह्नित्व इवावच्छेदकत्वद्वयस्य विलक्षणस्य स्वीकरणीयतया स्व(प्रतियोगितावच्छेदकता)वृत्त्यवच्छेदकतात्वव्याप्यधर्मवत्त्वस्यापि निरूपकतावच्छेदकतायां वैशिष्ट्यघटकत्वाङ्गीकारेणातिव्याप्तिवारणस्य कर्तुं शक्यत्वादिति मादृशासपरः पन्थाः ।

अयं भावः, वह्निमानिति ज्ञानीयविषयतावच्छेदकता वह्नित्वे, महानसीयवह्निमानिति ज्ञानीयविषयतावच्छेदकता वह्नित्वे, वह्निमहानसीयवानितिज्ञानीयविषयतावच्छेदकता वह्नित्वे परस्परमवच्छेदकत्वानां त्रयाणामेकनिष्ठत्वेऽपि ज्ञानभेदेन वैलक्षण्यमङ्गीकर्तव्यमिति ।

तथा च प्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावन्निरूपितवृत्तित्वाभाववदभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वै० स्व(प्रतियोगिता)निरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्व, स्ववृत्तित्वोभयसंबन्धेन । स्ववृत्तित्वञ्च स्व(निरूपकता)निरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वसंबन्धेन । उभयत्र वै० स्वसामानाधिकरण्य, स्वानवच्छेदकानवच्छिन्नत्वसंबन्धावच्छिन्नत्वस्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्ववृत्त्यवच्छेदकतात्वव्याप्यधर्मवत्वैतत्पञ्चभिः संबन्धैः । कालिकसंबन्धावच्छिन्नवह्नित्वनिष्ठप्रतियोगितावच्छेदकतात्वव्याप्यधर्मवत्त्वस्य, समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठनिरूपकतावच्छेदकतायामसत्त्वेन तादृशप्रतियोगितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य निरू-

पकतावच्छेदकतायां सत्त्वेन तादृशविशिष्टान्यावच्छेदकत्वानिरूपितत्वाभावात् प्रतियोगितावच्छेदकताविशिष्टा निरूपकतावच्छेदकता न भवतीति तां निरूपकतामादाय नोक्तदोष इति बोध्यम् ।

**प्रतियोगितावच्छेदकसंबन्धेन ये प्रतियोगिसंबन्धिनः तत्तद्व्यक्तित्वावच्छिन्नकूटविशिष्टहेत्वधिकरणवृत्तित्वस्यैव तत्र (लक्षणघटकाभावे) वक्तव्यत्वादिति जा० टी० ।**

हेत्वधिकरणनिरूपितवृत्तितावच्छेदककूटत्वप्रतियोगिकपर्याप्त्यनुयोगितानिरूपितपरंपरावच्छेदकत्ववत्त्वेन प्रतियोगित्वस्यात्र लक्षणघटकत्वं बोध्यम् । हेत्वधिकरणनिरूपिता या प्रतियोगितावच्छेदकसंबन्धावच्छिन्नतत्तत्प्रतियोगिसंबन्धितावन्निष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदनिष्ठा वृत्तिता तादृशवृत्तितावद्भेदानुयोगिकपर्याप्तिप्रतियोगिकूटत्ववद्धेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः ।

**वस्तुतस्तु तादात्म्यसंबन्धेनापि न कस्यचित् प्रागुक्तव्याप्यवृत्तित्वमतो यथाश्रुतमेव सम्यक् इति जा० टी० ।**

अत्र तादात्म्यसंबन्धेन कस्यचिदपि न प्रागुक्तव्याप्यवृत्तित्वमिति योजना । व्याप्यवृत्तित्वस्य साध्यतावच्छेदकसंबन्धेनाधिकरणत्वघटितत्वाभ्युपगमेन संगमनीया । तत्र तादात्म्येनात्मसाध्यकस्थले प्रतियोगिवैयधिकरण्याघटितव्याप्तिज्ञानस्यापि प्रमात्मकतया तस्य व्याप्यवृत्तिसाध्यकत्वस्य समुचिततया तन्निर्वाहाय (व्याप्यवृत्तित्वनिर्वाहाय) संबन्धित्वनिवेशस्यावश्यकत्वे संगतिर्बोध्या । तादात्म्यसंबन्धेनापि कस्यचिज्जन्यस्य न व्याप्यवृत्तित्वमिति योजना तु रमणीयैवेति । (साध्यतावच्छेदकसंबन्धेन साध्याधिकरणे येन केनापि वृत्तिनियामकसंबन्धेन) वृत्त्यभावाप्रतियोगित्वरूपव्याप्यवृत्तित्वमित्यस्य तादात्म्येनापि न कस्यचित् जन्यस्य व्याप्यवृत्तित्वं संभवतीत्यर्थः । यथाश्रुतमेव सम्यक्

साध्यतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वमेव हेत्वधिकरणे बोध्यम् । नत्रा तादृशभेदकूटनिवेशः कर्तव्य इति भावः ।

यथाश्रुतमेव सम्यगिति । उक्तव्याप्यवृत्तित्वस्य पारिभाषिकस्यैवा(साध्यतावच्छेदकसंबन्धेन साध्याधिकरणवृत्त्यभावाप्रतियोगित्वरूपस्यैवा,लक्ष्यतानियामकत्वेन तादात्म्यसंबन्धसाध्यकस्थलस्यापि लक्ष्यतया वास्तविकव्याप्यवृत्तित्वस्यैव (पूर्वोक्तस्यैव) इदानीं तादात्म्येन कपिसंयोगादिमतः स्वीकरणीयतया भेदकूटनिवेशे प्रयोजनाभावः ।

**यद्यपि प्रतियोग्यसमानाधिकरणत्वं हेतुविशेषणीकृत्य प्रतियोग्यसामानाधिकरण्यविशिष्टो यो हेतुस्तदधिकरणवृत्त्यभावस्य प्रतियोगितानवच्छेदकत्वविवक्षयैव संयोगी एतत्त्वादित्यादौ नाव्याप्तिसंभव इति जा० टी० ।**

अत्र हेत्वधिकरणत्व एव तादृशवृत्तित्वाभावस्य विशेषणत्वे तात्पर्यम् ।(सामानाधिकरण्यसंबन्धेन प्रतियोग्यधिकरणनिरूपितत्वाभावविशिष्टं यद्धेत्वधिकरणत्वं तद्वद्वृत्त्यभावप्रतियोगितानवच्छेदकेत्यत्र तात्पर्यम्) तेन विषयितया वह्नेः हेतुत्वे समवायेन वह्निज्ञानत्वस्य साध्यत्वे (हेतुज्ञाने) वह्निज्ञाने वह्नौ (विषयितया हेतौ) वह्निज्ञानत्वसामानाधिकरण्यं (हेत्वधिकरणत्वसामानाधिकरण्यम्) न तूक्तसामानाधिकरण्याभाव (प्रतियोगिसामानाधिकरण्याभाव)विशिष्टवह्न्यधिकरणे तादृशवह्निज्ञाने (प्रतियोगिसामानाधिकरण्याभावविशिष्टवह्निज्ञाने) साध्याभावस्य सत्त्वेऽपि नाव्याप्तिः । (तेन समवायेन वह्निज्ञानत्वसाध्यके विषयितया वह्निहेतावव्याप्तिः । तथा हि साध्याभावस्य यः प्रतियोगी (वह्निज्ञानत्वम्) तस्य सामानाधिकरण्यं शुद्धवह्निविषयकज्ञाने हेतुरूपे वह्नौ वर्तते (विषयितया वह्निस्तत्रैव वर्तते) न तु प्रतियोगिसामानाधिकरण्याभावविशिष्टवह्निरूपहेतुविषयकज्ञाने (तत्र तादृशविषयितारूपहेतुतावच्छेदकसंबन्धस्याऽसत्त्वात्)

इति प्रतियोगिसामानाधिकरण्याभावविशिष्टहेत्वधिकरणे साध्याभावस्य कालिकेन सत्त्वात् । शुद्धवह्निज्ञानीयहेतुतावच्छेदकविषयितायास्तत्रासत्त्वात् । हेत्वधिकरणत्वे प्रतियोग्यधिकरणनिरूपितवृत्तित्वाभावस्य विवक्षणे तु नोक्तदोषः । हेत्वधिकरणत्वे शुद्धवह्निज्ञाननिष्ठो यः साध्याभावः तत्प्रतियोग्यधिकरण(साध्याधिकरण)निरूपितवृत्तित्वस्यैव सत्त्वान्न साध्याभावो लक्षणघटकः । नापि वह्नित्वावच्छिन्ननिरूपितविषयितासंबन्धेन वह्नेर्हेतुत्वे तेन संबन्धेन (वह्नित्वावच्छिन्ननिरूपितविषयितासंबन्धेन) विशिष्टवह्नित्वावच्छिन्नाधिकरणत्वाप्रसिद्धावप्यव्याप्तिः । प्रतियोग्यधिकरणाभावविशिष्टस्य वह्निरूपहेतोः शुद्धवह्नित्वावच्छिन्ननिरूपितविषयितारूपहेतुतावच्छेदकसंबन्धेनाधिकरणत्वाप्रसिद्धावपि अव्याप्तिः ।

न च सामानाधिकरण्याभाव उपलक्षणमिति वाच्यम् । तथा सति कपिसंयोगसाध्यकवृक्षवृत्तित्वविशिष्टसत्त्वे सद्धेतौ गुणावच्छेदेन प्रतियोगिसामानाधिकरण्याभाववत् सत्त्वानतिरिक्तविशिष्टसत्ता(वृक्षवृत्तित्वविशिष्टसत्ता)ऽधिकरणवृत्तित्वस्य साध्याभावे सत्त्वेनाव्याप्तेरिति ।

**तथापि "कर्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरण" इत्यग्रिममूलस्वरसेन हेतुसमानाधिकरणाभावस्यैव विशेषणं प्रतियोग्यसमानाधिकरणत्वदलमत एतावान् प्रयास इत्यवधेयमिति जा० टी० ।**

यद्यपि तादृशमूलस्य संयोगाभावव्यभिचारिण्यव्याप्तिवारणपरता संभवति (यद्यपि कर्मणि संयोगाभावः प्रतियोग्यसमानाधिकरण इत्यग्रिममूलस्य संयोगाभावहेतुकव्यभिचारिणि इदं द्रव्यं संयोगाभाववत्त्वादित्यत्र हेत्वधिकरणे द्रव्ये प्रतियोगिसामानाधिकरण्यस्य सत्त्वेऽपि कर्मणि गुणादौ च प्रतियोगिवैयधिकरण्यस्यापि सत्त्वात् साध्याभावो लक्षणघटक इति नातिव्याप्तिरित्यतिव्याप्तिवारणपरता संभवति) । तथापि प्रसिद्धसत्त्वहेतुकव्यभिचारिण्यतिव्याप्तिवारणपरतापरित्यागस्यानुचितत्वेनाभावविशेषणत्वलाभ इति ।

**उक्तप्रतीतिस्तु संयोगाभावनिष्ठस्य संयोगसामानाधिकरण्यस्यावच्छेदकत्वाभावमेव गुणादौ, संयोगानधिकरणीभूतगुणवृत्तित्वमेव वा संयोगाभावादाववगाहत इत्यर्थं इति जा० टी० ।**

अत्रैवं मूले वृक्षे न कपिसंयोग इत्यत्रापि वृक्षवृत्तेः कपिसंयोगनिष्ठायाः अवच्छेदकत्वाभावस्यैव विषयत्वसंभवेन प्रतियोगिवैयधिकरण्यस्यैव व्यर्थत्वं स्यात् । अवच्छेदकत्वाभावस्य तत्र (वृक्षे) कपिसंयोगाभावस्यैव विषयत्वात् । आनुभाविकमिति नास्माकं चित्तमास्कन्दतीति चिन्त्यम् ।

**ननु हेत्वधिकरणे प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वं प्रतियोगिसामानाधिकरण्यानवच्छेदकीभूतहेत्वधिकरणवृत्तित्वमिति यावत्, तच्च व्याप्यवृत्तेरवच्छेदकत्वविरहादप्रसिद्धं गुरुतरञ्चेत्यत आह प्रतियोग्यनधिकरणीभूतेति जा० टी० ।**

सप्तम्या अवच्छेदकत्वार्थकत्वमादृत्याह—प्रतियोगिवैयधिकरण्यावच्छेदकेति । हेत्वधिकरण इति सप्तम्या निरूपितत्वार्थकत्वे प्रतियोग्यनधिकरणनिरूपितं यद्धेत्वधिकरणनिरूपितवृत्तित्वं तद्वदभावे हेत्वधिकरणवृत्तित्वं प्रतियोग्यधिकरणहेतुसामानाधिकरणत्वान्तस्य यथाश्रुतमेवार्थः । तच्च व्याप्यवृत्तेरवच्छेदकत्वाभावेऽपि न दोष इत्यरुचेराह—गुरुतरञ्चेति । तस्य केवलान्वयितयेति । घटादीनां कालोपाधित्वे कालवदेवाभावसत्त्वं (कालादावेवाभावसत्त्वम्) तस्यानुपाधित्वे नित्यवदेव तत्र तादृशाभावः । "तस्य केवलन्वयितयेति" । अयं ग्रन्थो मूले न दृश्यते ।

**ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नत्वस्य वेति दीधितिः ।**

प्रतियोगितावच्छेदकसमानाधिकरणनिरूपकत्वनिष्ठावच्छेदकताभिन्नाधिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्ना-

वच्छेदकत्वानिरूपितप्रतियोगिताकभेदवत्त्वम् । निरूपितत्वसंबन्धावच्छिन्नप्रतियोगित्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्मनिष्ठाधेयत्वसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वनिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदवत्त्वम् ।

प्रतियोगितावच्छेदकतासमानाधिकरणाधेयत्वसंबन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेकत्वानिरूपितप्रतियोगिताकभेदवत्त्वं वोक्तमित्यर्थः ।

**"प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित् अनधिकरणमित्यस्य"—**

प्रतियोगितावच्छेदकसमानाधिकरणनिरूपकताकाधिकरणप्रतियोगिकभेदवद्धेत्वधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरित्यत्र तादृशप्रतियोगिकभेदस्य तत्त्वालोकोक्तप्रतियोगितावच्छेदकसमानाधिकरणनिरूपकतेत्याद्यर्थकरणे कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिः । कपिसंयोगाभावप्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नयत्किञ्चिज्जलादिवृत्तिकपिसंयोगानधिकरणत्वस्य हेत्वधिकरणे एतद्वृक्षे सत्त्वेन साध्याभावस्य प्रतियोगिवैयधिकरण्यतया लक्षणघटकत्वात् ।

हेत्वधिकरणे प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वस्य तत्त्वालोकार्थकरणे संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यत्रातिव्याप्तिः । साध्याभाववतो द्रव्यस्य तत्संयोगाभावानधिकरणत्वस्य समवायादि-

वृत्तिसंयोगाभावानधिकरणत्वस्य हेत्वधिकरणे सत्त्वेन साध्याभावस्य प्रतियोगिव्यधिकरणत्वाभावेन लक्षणाघटकत्वात् ।

प्रतियोगितावच्छेदकं यत्किञ्चित् तदवच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे विशेषणत्वे तत्त्वालोकार्थकरणेऽपि कपिसंयोगाभाववान् आत्मत्वादित्यत्राव्याप्तिः । कपिसंयोगाभावाभावानां कपिसंयोगानां गुणानामधिकरणमात्मेति तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे आत्मनि सत्त्वेन साध्याभावस्य प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वात् । न च कपिसंयोगसामान्याभावप्रतियोगित्वं कपिसंयोगे वर्तते अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति न तु गुणे, अभावाभावस्य प्रतियोगिरूपत्वादिति वाच्यम्, कपिसंयोगाभावरूपस्य साध्यताभावस्य प्रतियोगी कपिसंयोगः स च गुणः । तथा च साध्याभावस्य कपिसंयोगरूपगुणस्वरूपत्वेन कपिसंयोगरूपगुणरूपसाध्याभावप्रतियोगितावच्छेदकत्वस्य गुणसामान्याभावत्वे सत्त्वात् इति भावः ।

**न च नित्यवृत्तित्वविशिष्टद्रव्यत्वाभावस्याभावो न नित्यवृत्तित्वविशिष्टद्रव्यत्वं, विशिष्टस्यानतिरिक्ततया जन्यद्रव्येऽपि नित्यवृत्तित्वविशिष्टद्रव्यत्वस्याभावो नास्तीति प्रतीतिप्रसङ्गात्, किन्तु नित्यैकत्वादिकमेवेति नातिव्याप्तिरिति वाच्यम् इति जा० टी० ।**

अत्रायमाशयः । गुणकर्मान्यत्वविशिष्टसत्तावान् गुण इति ज्ञानानन्तरं सत्त्वं जानामीत्यनुव्यवसायदर्शनात्, सत्त्वस्य द्विधाभानाननुभवात् (विशिष्टसत्त्वानुभवानन्तरं विशिष्टसत्तां जानामि सत्तानुभवानन्तरं सत्तां जानामीति सत्ताया द्विधाभावाननुभवात्) उभयत्र विशिष्टसत्तावान् (सत्तावानित्युभयत्र) सत्तां जानामीत्यनुव्यवसायस्यैव दर्शनाच्च विशिष्टसत्त्वं सत्त्वान्नातिरिच्यते । न च तत्र (विशिष्टसत्तां जानामीति प्रतीतौ) सत्त्वस्य विशेष्यत्वमात्रं प्रकारत्वं तु गुणकर्मान्यत्वस्येत्यभ्युपगमेऽपि उक्तानुव्यवसायस्योपपत्तिरिति वाच्यम् । (विशिष्टसत्त्वं जानामीत्यनुव्यवसायस्योपपत्तिरिति वाच्यम्) । तादृशविशेष्यत्वस्य (विशिष्ट-

सत्त्वं जानामीत्यनुव्यवसायज्ञानीयविशेष्यत्वस्य (सत्तां जानामीत्यनुव्यवसायज्ञानीयविशेष्यत्वस्य) प्रकारतानात्मकत्वे तज्ज्ञानस्य (विशिष्टसत्तां जानामीति ज्ञानस्य सत्तां जानामीति) समूहालम्बनत्वापत्तेः। विशिष्टसत्त्वमित्यनुभवानन्तरं विशिष्टसत्तावान् गुण इत्यनुभवानन्तरं च सत्त्वं जानामीत्यनुव्यवसायीयसत्त्वनिष्ठाविशेष्यता द्विधा प्रकारत्वासमानाधिकरणा, पूर्वोक्तानुभवानन्तरं जायमानत्वात्। तथा च नानामुख्यविशेष्यताशालित्वेन समूहालम्बनत्वापत्तेः। सत्ता नास्तीति निश्चयात्मक बुद्धिप्रतिबध्यत्वानुपपत्तेश्च। (सत्ता नास्तीति निश्चयप्रतिबध्यत्वं सत्ताऽस्तीति बुद्धिमात्रे न तु विशिष्टसत्त्वबुद्धौ सत्त्वमुख्यविशेष्यताकत्वस्यात्रापि सत्त्वात्)। न च गुणकर्मान्यत्वविशिष्टमात्रस्य (अभेदेन) प्रकारत्वेऽपि प्रकारतावच्छेदकत्वस्य वैशिष्ट्य, सत्तात्वोभयवृत्तितया सत्तात्वावच्छिन्नप्रकारताशालिबुद्धित्वरूपप्रतिबध्यतावच्छेदकसत्त्वान्नानुपपत्तिरिति वाच्यम्। प्रकारे भासमानस्यैव प्रकारतावच्छेदकतया सत्तात्वस्य गुणकर्मान्यत्वविशिष्टावृत्तित्वे तज्ज्ञानस्य (सत्त्वं जानामीति ज्ञानस्य) भ्रमत्वापातात्। वृत्तित्वे हि अनतिरिक्तत्वाभ्युपगमः। न च सत्तात्वम् उभयत्र (केवलसत्ताविशिष्टसत्तयोरुभयत्र) साधारणधर्म इति वाच्यम्। केवलस्य (शुद्धसत्तात्वस्य) विशिष्ट(विशिष्टसत्त्व) व्यावृत्तधर्मान्तरानुपलम्भात्। केचने(केवलसत्तात्वे)अनेकविधे विलक्षणे प्रमाणाभावात्। न च विशिष्टस्य शुद्धानतिरिक्तत्वे गुणे विशिष्टसत्ताप्रतीतेः प्रमात्वापत्तिरिति वाच्यम्। विशिष्टाधिकरणत्वस्यैव प्रमात्वनियामकत्वाभ्युपगमात्। विशिष्टसत्त्वाधिकरणत्वस्य विलक्षणत्वेन तस्य गुणेऽसत्त्वात्। न च विशिष्टाधिकरणत्वापेक्षया विशिष्टस्यैव (गुणकर्मान्यत्वविशिष्टसत्त्वस्यैव) कुतो न वैलक्षण्यमिति वाच्यम्। विशिष्टस्यातिरिक्तस्य स्वीकारेऽपि विशिष्टनिरूपिताधिकरणत्वस्य केवलनिरूपिताधिकरणत्वातिरिक्तस्य निरूपकभेदेन स्वीकरणीयत्वात्। इयांस्तु विशेषः अस्माकम् अवच्छेदकं (निरूपकतावच्छेदकं) वैलक्षण्यप्रयोजकम्, भवतां तु निरूपकमेव (आधेयमेव)।

अथ विशिष्टाधिकरणत्वस्य प्रतीतिनियामकत्वे सर्वेषामेवाभावानामैक्य-प्रसङ्गः । घटवति घटाभाववत्ताबुद्धेः घटप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्ना-धिकरणत्वस्य विलक्षणस्यासत्त्वादेव वारणादिति चेत्सत्यम् । विशेषणानुपरक्तस्य सत्त्वस्य प्रतीति(सत्तावानितिप्रतीति)सिद्धतया तस्य (शुद्धसत्त्वस्य) सर्वत्र विशिष्टप्रतीतौ विशेषणोपरागो युक्तः । प्रतियोग्युपरागं विना अभावबुद्धेर-प्रसिद्धतया केवलाभावसद्भावे प्रमाणाभावात् । केवलस्याभावस्याप्रसिद्धया कस्य विशिष्टबुद्ध्यनुसारः स्यात् । विशिष्टबुद्धयो हि (प्रतियोगितया घटादिविशिष्टाभावबुद्धयो हि) तत्तत्प्रतियोग्युपरक्तत्वेन भिन्नमूर्तिकान् अभा-वान् विषयीकुर्वन्ति । केवलमभावत्वमात्रं चानुगताकारानुरोधादेकम् । एवं विशिष्टाधिकरणत्वं यदस्माभिः क्वचिदङ्गीक्रियते क्वचिन्न । न तत्र वाङ्मात्रस्य सहायता । किन्तु वैशिष्ट्ये (विशेषणविशिष्टे मुख्ये) विशेषणस्याधिकरणत्वं येन संबन्धेन निविष्टं तेन संबन्धेन विशेष्ये विशेषणत्त्व विशेष्यवति येन संबन्धेन विशेष्यवत्त्वं तेन संबन्धेन विशेष्यवति विशेष्यवत्वम् एतदुभयसद्भावः विशिष्टाधिकरणताप्रयोजकः । एतादृशोभया-सद्भावो विशिष्टाधिकरणत्वाभावप्रयोजकः । नैतस्याभावाधिकरणत्वसत्त्वासत्त्व-प्रयोजकत्वं संभवति । असंभवात् प्रतियोग्युपरागं विनाऽभावबुद्धेरसिद्ध-तया केवलाभावसद्भावे प्रमाणाभावात् । प्रमाणाद्धि वस्तुसिद्धिर्भवति । प्रतियोगितासंबन्धेन घटविशिष्टाभावबुद्धिः घटाभावं साधयति घटशून्यभूतले) तत्र विशेष्ये (अभावे) प्रतियोगितया घटो निविष्टः, भूतले स्वरूपेणा-भावो निविष्टः । केवलाभावबुद्धिर्न भवति इति प्रमाणाभावेन केवला-भावो नास्ति । घटाभावः पटाभावः इत्याद्यनुगतप्रतीत्या घटाभावपटा-भावादौ अभावत्वमेकं स्वीक्रियते । अनीलघटवति (नीलाभाववद्घटवति) नीलविशिष्टघटत्वावच्छिन्नाधिकरणत्वासत्त्वप्रयोजकम् । किन्तूक्ताधिकरणता (नील-विशिष्टघटत्वावच्छिन्नाधिकरणता) निरूपकस्य (घटस्य) अनीलाद्व्यावृत्तत्वम् । (नीलाभावविशिष्टघटवद्व्यावृत्तम्) तदिवाभावाधिकरणत्वस्थले स्वीकारे घट-

प्रतियोगिकाभावस्याघटप्रतियोगिकाभाववद्व्यावृत्तौ (घटभिन्नपटादिप्रतियोगिकाभाववद्व्यावृत्तौ) एकाभावकथा दूरापेता (घटाभावभिन्नाभावस्य स्वीकारात्) । कदाचिद्रक्तस्य दण्डस्यारक्ततादशायां रक्तविशिष्टदण्डाधिकरणतासत्त्वप्रयोजकं हि विशेष्यसंबन्धविशेषणेन सह विशेष्याधिकरणस्यैककालत्वं तदपि न (तादृशैककालत्वमपि न) प्रकृते सत्त्वप्रयोजकम् (घटाभावाधिकरणत्वसत्त्वप्रयोजकम्) । विशेषणस्य (अभावे प्रतियोगितया विशेषणस्य) घटस्य भूतलेन सहैककालत्वाभावात् । कालविशेषणस्थलीया (इदानीमत्र घटः घटाभावो वा)धिकरणत्वप्रयोजकत्वस्य कालाधिकरणसंबन्धस्य प्रकृतविषयानन्तर्भावादिति । अतएव अभावस्य नेऽननुभाविकम् अधिकरणत्ववैलक्षण्यम् अभ्युपेत्य कयोश्चिदभावयोरभेदोपगमे सर्वेषामेवाभावानामैक्यप्रसङ्ग इत्युक्तं जलादिवृत्तित्वविशिष्टगोत्वाभावेत्यादिदीधितिव्याख्यावसरे विशिष्टस्यातिरिक्तत्वे प्रमात्वस्यापारिभाषिकत्वम् अनुगुणमिति यत्प्रागुक्तं तत्तु एतासु अनतिरिक्तसाधकयुक्तिषु अकिञ्चित्करमित्यलं प्रसङ्गागतविचारबाहुल्येनेति ।

**अत्र नव्याः यथाश्रुतस्य प्रागुक्तक्रमेण प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्या बह्निमान् धूमादित्यादौ सर्वत्रासंभवः स्यात् इति जा० टी० ।**

यथाश्रुतस्य प्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वशब्दप्रतिपाद्यस्य प्रतियोगिवैयधिकरण्यस्य प्रागुक्तक्रमेण स्वाश्रयतत्तद्व्यक्तीत्याद्युक्तरीत्या असंभवः स्यादिति । बह्निमान् धूमादित्यादौ हेतुसमानाधिकरणघटाभावादेः पूर्वक्षणवृत्तित्वविशिष्टघटाभावात्मकतया लाघवेन प्रथमाभावस्य तृतीयाभावस्वरूपत्वेन च घटाभावप्रतियोगित्वं यथा घटे तथा पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेऽपि वर्तते इति प्रतियोगिसामान्यान्तर्गतपूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावाधिकरणताया धूमाधिकरणे पर्वतादौ सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसंभव इत्यर्थः । प्रागुक्तक्रमेणेति । स्वाश्रयतत्तद्व्यक्ति-

वृत्तित्वविशिष्टं यत् स्वं तदभावात्मकस्वप्रतियोगिना सह समानधिकरणत्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्यैव नातिव्याप्तिरिति जगदीशोक्तरीत्येत्यर्थः) । यद्यपि स्वप्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकसंबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणत्वविवक्षायां नासंभवः घटाभावस्य तादृशसंयोगेन प्रतियोगिव्यधिकरणत्वेन प्रसिद्धत्वात् । स्वरूपसंबन्धेन साध्यतायां सद्धेतौ धूमाभाववान् वह्न्यभावादित्यत्राव्याप्तिर्भवत्येवेति बोध्यम् । तत्तु असंभवः स्यादित्यत्रानुपदमेव दर्शितम् ।

**अतो यत्किञ्चित्स्वप्रतियोगित्वं यादृशसंबन्धावच्छिन्नं तादृशसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्यानधिकरणं यत्साधनाधिकरणं तन्निष्ठाभावस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वमेव लक्षणे (साध्यतावच्छेदके) प्रवेशनीयमिति जा० टी० ।**

हेत्वधिकरणवृत्तिप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वृत्तित्वञ्च स्वविशिष्टनिरूपकताकाधिकरणतावद्भेदकूटवत्त्वसंबन्धेन । वै० स्वावच्छेदकसंबन्धावच्छिन्नत्व स्वनिरूपकाभावप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन । स्वत्वस्याननुगतत्वे स्व-(लक्षणघटकाभाव)प्रतियोगितानिरूपितसंसर्गतावच्छेदकतासमानाधिकरणाधेयत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितसंसर्गतानिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपिताधिकरणत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदत्वेन निवेशः (प्रतियोगितावच्छेदकसंबन्धावच्छिन्ननिरूपकताकाधिकरणतावन्निष्ठप्रतियोगिताकभेदकूटवत्त्वेन हेत्वधिकरणे निवेशः) । भवति च संयोगत्वनिष्ठावच्छेदकताकसंसर्गताकघटाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिरणत्वावच्छिन्नप्रतियोगिताकभेदो हेत्वधिकरणवृत्तिरिति नासंभवः । स्वत्वस्याननुगतत्वे च अभावविशिष्टाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम् । वै० स्वतादात्म्य स्वविशिष्ट-

निरूपकताकाधिकरणत्वसंबन्धावच्छिन्न स्व(अधिकरणत्व)निष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधिकरणवृत्तित्वोभयसंबन्धेन । निरूपकतायां स्व(अभाव) वै० स्वप्रतियोगितानिरूपितसंसर्गतावच्छेदकतासमानाधिकरणावच्छेदकताकसंसर्गताकत्व, स्वप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकत्वोभयसंबन्धेन । अत्रोभयत्वावच्छिन्नसंसर्गतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतायां संसर्गतावच्छेदकतासामानाधिकरण्यनिष्ठावच्छेदकतानिरूपितत्वमात्रं निविष्टम् (न पर्याप्तिः) । तेन स्वनिरूपितप्रतियोगितासंसर्गतावच्छेदकतासमानाधिकरणसंयोगत्वनिष्ठावच्छेदकत्वघटितविशेषसंसर्गेण स्वविशिष्टनिरूपकताकाधिकरणत्वरूपविशेषसंबन्धावच्छिन्नस्वनिष्ठा-(अधिकरणत्वनिष्ठा)वच्छेदकताकप्रतियोगिताकभेदवत्त्वस्य हेत्वधिकरणे सत्त्वान्नासंभवः । स्वत्वस्य परिचायकत्वान्नानुगमः (स्वतादात्म्य, स्वविशिष्टनिरूपकताकाधिकरणतावत्त्वसंबन्धावच्छिन्न स्व(अधिकरणत्व)निष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधिकरणनिरूपितवृत्तित्वोभयसंबन्धेनाभावविशिष्टाभावीया या साध्यतावच्छेकसंबन्धावच्छिन्ना प्रतियोगिता तदनवच्छेदकत्वं साध्यतावच्छेदके विवक्षणीयम् । निरूपकतायां स्व वै० स्वप्रतियोगितानिरूपितसंसर्गतावच्छेदकतासमानाधिकरणावच्छेदकताकसंसर्गताकत्व, स्वप्रतियोगितावच्छेदकतासमानाधिकरणावच्छेदकताकत्वोभयसंबन्धेन । संसर्गतावच्छेदकतायां पर्याप्तिर्न निवेश्या । तेन स्वप्रतियोगिकसंयोगादिसंबन्धेन साध्यतास्थले नाव्याप्तिः ।

स्वत्वस्य परिचायकत्वेन नानुगमः । न च पूर्वक्षणवृत्तित्वविशिष्ट घटाभावाभावस्य साध्यत्वे धूमे घटाभावप्रतियोगितावच्छेदकसंयोगेन स्व(साध्याभाव)प्रतियोगितावच्छेदकावच्छिन्नानधिकरणपर्वतनिरूपितवृत्तितावद्घटाभावरूपस्य साध्याभावस्य प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादव्याप्तिः । (पूर्वक्षणवृत्तित्वविशिष्टघटाभावो शुद्धघटाभावश्चैक एव विशिष्टः शुद्धान्नातिरिच्यते इति नियमः । पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावस्याभावः तृतीयाभावः प्रथमाभावरूपः सोऽपि घटाभावरूपः तदीया प्रतियोगिता घट इव पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावेऽपि वर्तते तत्प्रतियोगितावच्छेदकत्वस्य साध्यता-

वच्छेदके सत्त्वादव्याप्तिरिति बोध्यम् । न च स्वीयप्रतियोगितावच्छेदक-संबन्धेन स्वीयप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत्सत्द्वृत्तिसाध्यता-वच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावीययत्प्रतियोगित्वं तत्प्रतियोगिताविशिष्ट-प्रतियोगितात्वेनानुगतं निवेश्यम् । तादृशप्रतियोगितानवच्छेदकत्वं साध्यता-वच्छेदके बोध्यम् । वै० स्वतादात्म्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वनिरूपकाभावीयप्रतियोगितावच्छेदकावच्छिन्नत्वोभयसंबन्धेन स्वविशिष्टनिरूपक-ताकाधिकरणत्ववत्त्वसंबन्धावच्छिन्नस्वनिष्ठा(प्रतियोग्यधिकरणत्वनिष्ठा)वच्छेदकताक प्रतियोगिताकभेदवद्धेत्वधिकरणवृत्तिसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावी-यत्वोभयसंबन्धेनेति नोक्तदोष इति वाच्यम् (तादृशसाध्याभावीयप्रतियोगिता-वच्छेदकस्वरूपसंबन्धेन प्रतियोगिसामानाधिकरण्यस्यैव साध्याभावे सत्त्वेन साध्या-भावस्य लक्षणाघटकत्त्वान्नोक्तदोष इति वाच्यम्) । घटवान् तत्क्रियात्वादित्यत्र कालिकसंबन्धावच्छिन्नप्रतियोगिताकस्य तत्क्रियाऽसमानकालीनपदार्थाभावस्य पूर्व-क्षणवृत्तित्वविशिष्टस्वाभावाभावात्मकतया स्वप्रतियोगितावच्छेदकावच्छिन्नसामान्या-न्तर्गतस्वाभावस्य प्रतियोगितावच्छेदककालिकेन स्वरूपेण वा (साध्यतावच्छेदक-स्वरूपेण वा) हेतुमति सत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वादव्याप्तिरिति चेन्न । स्वविशिष्ट(प्रतियोगिताविशिष्ट)प्रतियोगितावच्छेदका-वच्छिन्नत्वस्यैव संसर्गत्वात् । वै० स्वनिरूपकाभावीयत्व, स्वावच्छेदक-संबन्धावच्छिन्नत्वोभयसंबन्धेन । तथा च तद्व्यक्तिनिष्ठकालिकसंबन्धावच्छिन्न-प्रतियोगितावच्छेदकसंबन्धावच्छिन्नस्वनिरूपकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्य तद्व्यक्तिनिष्ठनिरूपकत्वे एव सत्त्वेन तन्निरूपकताकाधिकरणत्ववत्त्वसंबन्धावच्छिन्न-स्वनिष्ठा(तादृशप्रतियोग्यधिकरणत्वनिष्ठा)वच्छेदकताकप्रतियोगिताक(तत्व्यक्तिनिष्ठ-प्रतियोगिताक)भेदस्य हेत्वधिकरणे सत्त्वेन प्रतियोगिव्यधिकरणाभावस्य प्रसिद्ध्या नाव्याप्तिरिति । न चैवमपि प्रमेयवान् वाच्यत्वादित्यत्र समवायसंबन्धा-वच्छिन्नप्रमेयनिष्ठप्रतियोगिताविशिष्टत्वस्य स्वस्मिन् सत्त्वेन तादृशप्रतियोगिता-वच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वादव्याप्तिरिति वाच्यम् । (तादृश-

प्रतियोगितावच्छेदकसमवायेन प्रतियोग्यनधिकरणे हेत्वधिकरणे समवायेन साध्याभावस्य सत्त्वादव्याप्तिरिति वाच्यम्) । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभावीयत्वं विहाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य विशिष्टप्रतियोगितायामेव विशेषणत्वात् । तथा च स्वीयप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तद्वृत्त्यभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्ना या प्रतियोगिता तत्प्रतियोगिताविशिष्टनिरूपकताकाधिकरणतावत्त्वसंबन्धावच्छिन्न स्व(प्रतियोग्यधिकरणत्व)निष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धेत्वधिकरणवृत्त्यभावीयत्व, स्वतादात्म्योभयसंबन्धेन । निरूपकतायां प्रतियोगिता वै० स्वावच्छेदकसंबन्धावच्छिन्नत्व,स्वावच्छेदकावच्छिन्नत्वोभयसंबन्धेन । तथा च नोक्तदोषः । समवायसंबन्धस्य साध्यतायानवच्छेदकत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताया लक्षणाघटकत्वात् । पारिभाषिकसाध्यतावच्छेदकावच्छिन्नत्वस्य स्वानवच्छेदकसंबन्धानवच्छिन्नत्वरूपस्यैव प्रतियोगितायां निवेश इति बोध्यम् । न च घटनिष्ठसंयोगसंबन्धावच्छिन्नप्रतियोगितायां स्वरूपसंबन्धावच्छिन्नत्वविरहेण तादृशप्रतियोगित्वा(साध्यतावच्छेदकस्वरूपसंबन्धावच्छिन्नायाः प्रतियोगिव्यधिकरणलक्षणघटकाभावीयायाः प्रतियोगितायाः) अप्रसिद्धया संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यत्रातिव्याप्त्यभावेन तत्रातिव्याप्तिपरकग्रन्थासंगतिरिति वाच्यम् । स्वरूपसंबन्धेन साध्यतायां सद्धेतौ धूमाभाववान् वह्न्यभावादित्यत्रोक्तयुक्त्या (पूर्वक्षणवृत्तित्वविशिष्टाभावमादायेत्यादिपूर्वोक्तयुक्त्या) अव्याप्त्या साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य पारिभाषिकस्य स्वानवच्छेदकसंबन्धानवच्छिन्नत्वरूपस्यैव विवक्षितत्वादिति ।

**तथापि सत्ताद्रव्यत्वयोरेव समवेताभावद्रव्यमात्रसमवेताभावयोरभावत्वं लाघवात्, न कपिसंयोगात्मक(कपिसंयोग्यात्मक)समवेतमात्रस्य तथात्वं गौरवादित्याशय इति जा० टी० ।**

तथा च क्रमेण समवेताभावाभावोऽत्र सत्तास्वरूपः द्रव्यमात्रसमवेता-

भावश्च द्रव्यत्वस्वरूप एवेति भावः । लाघवादिति, सत्ताद्रव्यत्वयोर्जातित्वेन-लाघवादित्यर्थः । तथात्वमिति समवेताभावाभावत्वं द्रव्यमात्रसमवेताभावाभावत्वं वा । गौरवादिति समवेतस्य रूपादिरूपत्वेन नानात्वादित्याशयः । एवञ्च साध्याभावकपिसंयोगस्वरूपत्वं न, सत्तारूपसमवेताभावाभावस्य, द्रव्यत्वरूपद्रव्यमात्रसमवेताभावाभावस्य वेति न कपिसंयोगरूपसाध्याभावप्रतियोगित्वं समवेताभावादौ भवति, अतो गुणाभावादेरेव तादृगकपिसंयोगप्रतियोगितया तद-(गुणाभावा)धिकरणत्वस्योत्पत्तिकालावच्छेदेन वृक्षादौ सत्त्वात् साध्याभावो न लक्षणघटकः प्रतियोगिसमानाधिकरणत्वात् । अतो वृक्षत्वं हेतुं परित्यज्यात्मत्वस्य हेतुत्वमभिहितमिति तात्पर्यमिति विवृतिः ।

सत्ताद्रव्यत्त्वयोरिति । अत्र द्वित्वमविवक्षितम् । सत्तामात्रेण समवेतव्यवहारोपपत्तौ गुणत्वद्रव्यत्वादीनामननुगतानां न तथात्वम् समवेताभावाभावत्वम् । सत्त्वस्यैकत्वात् एकत्वमेव विनिगमकमिति। न च विनिगमनाविरह इति बोध्यम् । गुणत्वद्रव्यत्वादिषु मध्ये नैकमपि तादृशं यत् सर्वत्र समवेतव्यवहारप्रयोजकं तस्यैकस्य (द्रव्यंत्वस्य) तथात्वे (समवेतव्यवहारप्रयोजकत्वे) अनेकस्य (द्रव्यत्वगुणत्वादेः) तादृशाभावत्वे (समवेताभावाभावत्वे) गौरवम् । सत्तात्वस्य तथात्वे च (समवेताभावाभावत्वे च) तेनैव (सत्त्वेनैव) सर्वत्र समवेतव्यवहारोपपत्तेः । नापरस्य (सत्ताभिन्नस्य द्रव्यत्वादेः) तथात्वम् (समवेतव्यवहारप्रयोजकत्वम्) इति भावः ।

## अभावाभावस्य प्रतियोगित्वनियमाच्चेति जा० टी० ।

ननु गुणसामान्याभावाभावस्याप्येकत्वस्वरूपत्वमेवास्तु कपिसंयोगादीनां तु न तथात्वम् (न गुणसामान्याभावाभावत्वम्) इत्यात्मत्वहेतावपि न दोषसंभवः (कपिसंयोगाभाववान् आत्मत्वादित्यत्र नाव्याप्तिः, गुणसामान्याभावस्य साध्याप्रतियोगिकतया हेत्वधिकरणे साध्याभावस्य प्रतियोगिवैयधिकरण्याभावात्) इति चेत् । अत्र केचित् स्ववृत्ति (प्रतियोगिवृत्ति) पदार्थविभाजकी-

भूतधर्मानधिकरणवृत्तिप्रतियोगिताकाभावावृत्तित्वम्, स्वप्रतियोगिविशेषणं वाच्यम्। तथा चात्मत्वहेतौ कपिसंयोगात्मकाभावस्य कपिसंयोगान्यकपिवृत्तिगुणान्यगुणसामान्याभावाभावस्यैकतया तदीयतादृशगुणसामान्याभावनिष्ठप्रतियोगित्वस्येदृशाभावावृत्तितया संग्राह्यत्वाद् भवत्येवाव्याप्तिः। (हेत्वधिकरणे आत्मनि साध्याभावस्य कपिसंयोगसामान्याभावस्य यत्किञ्चित्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नस्वप्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्वात्। कपिसंयोगाभावाभावः कपिसंयोगः तद्वृत्तिपदार्थविभाजक उपाधिः गुणत्वं तदनधिकरणं कपिः तद्वृत्तिप्रतियोगिताकाभावावृत्तित्वस्य साध्याभावप्रतियोगिनि गुणसामान्याभावे सत्त्वेन तत्प्रतियोगिकाभावस्य गुणसामान्याभावाभावस्य साध्याभावस्वरूपस्य लक्षणघटकत्वं प्रतियोगिव्यधिकरणत्वञ्च।) वृक्षत्वहेतुके तादृशगुणसामान्याभावनिष्ठप्रतियोगित्वस्य तादृशत्वेन (स्ववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणवृत्तिप्रतियोगिताकाभावावृत्तित्वेन) संग्राह्यत्वेऽपि तत्प्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्ना(गुणसामान्याभावा)धिकरणत्वस्य वृक्षादौ उत्पत्तिकालावच्छेदेन सत्त्वात् (वृक्षे हेत्वधिकरणे साध्याभावो न भवति प्रतियोगिव्यधिकरण इति साध्याभावो न लक्षणघटक इति न तत्राव्याप्तिरत आत्मत्वानुसरणं कृतम्। कपिसंयोगान्यकपिवृत्तिसमवेतान्यसमवेताभावाभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य हेत्वधिकरणे सत्त्वेऽपि तत्प्रतियोगित्वस्य कपिसयोगवृत्तिपदार्थविभाजकीभूत(गुणत्व)धर्मानधिकरणघटत्ववृत्तिप्रतियोगिताकाभाववृत्तित्वेन घटतुमशक्यतया अव्याप्तिरिति न ग्रन्थासङ्गतिः। अतो वृक्षत्वं परित्यज्यात्मत्वहेत्वनुसरणं कृतम्। न चोक्तसमवेताभावमादायैव वृक्षत्वहेतावव्याप्तिरिति वाच्यम्। (न च समवेतान्यसमवेताभावाभावमादायैव वृक्षहेतावव्याप्तिः। साध्याभावीययत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभावस्य हेत्वधिकरणे सत्त्वादिति वाच्यम्)। अनुयोगिताविशिष्टानुयोगितानिरूपितप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षितत्वाद्। वै० स्वतादात्म्य, स्वविशिष्टप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाधिकरणहेत्वधिकरणवृत्त्यभाव-

निष्ठत्वोभयसंबन्धेन । प्रतियोगितायामनुयोगिता वै० स्वाश्रय(अभाव) निरूपितत्व, स्वाश्रय(अभाव)वृत्तिपदार्थविभाजकीभूत(अभावत्व)धर्मानधिकरणवृत्तिप्रतियोगिताकाभावावृत्तित्वोभयसंबन्धेन । तथा च ादृशसमवेताभवाभावत्वरूपानुयोगिताविशिष्टानुयोगितानिरूपितत्वस्य (तथा च समवेतान्यसमवेताभावाभावत्वरूपानुयोगिताविशिष्टानुयोगितानिरूपितत्वस्य) कपिसंयोगाभावनिष्ठप्रतियोगित्वे विरहान्नाव्याप्तिरिति । (समवेताभावाभावत्वरूपानुयोगिताविशिष्टानुयोगितानिरूपितत्वस्य समवेताभावनिष्ठप्रतियोगितानिष्ठत्वेन कपिसंयोगाभावनिष्ठप्रतियोगितायामसत्त्वात् तादृशप्रतियोगितावच्छेदकत्वं समवेताभावत्वनिष्ठं तदभावस्य संयोगसामान्याभावत्वे सत्त्वात् कपिसंयोगाभाववान् वृक्षत्वादित्यत्र नाव्याप्तिः । सं ोगसामान्याभावाभावरूपसाध्याभावप्रतियोगिनः संयोगसामान्याभावस्योत्पत्तिकालावच्छेदेन वृक्षे सत्त्वेन साध्याभावस्य तादृगप्रतियोगिसमानाधिकरणत्वेन लक्षणाघटकत्वात् ।, आत्मत्वहेतौ च प्रतियोगिव्यधिकरणं तमभावमादायाव्याप्तिः संगतेति बोध्यम् । आत्मनो नित्यत्वेनोत्पत्तिकालावच्छेदेन तदभावे प्रतियोगिसमानाधिकरणत्वस्य वक्तुमशक्यत्वादत आत्मत्वस्य हेतुत्वमुक्तम् ।

अथ समवायसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावसाध्यकाभावत्वे साध्याभावत्वरूपानुयोगित्वस्य (प्रमेयत्वस्य) निखिलपदार्थवृत्तित्वेन स्वसमानाधिकरणपदार्थविभाजकीभूतधर्मानधिकरणत्वाऽप्रसिद्ध्याऽनुयोगित्वान्तर(साध्याभावत्वभिन्नानुयोगित्व)मादायातिव्याप्तिः । तस्य (समवायसंबन्धावच्छिन्नप्रतियोगिताकप्रमेयाभावाभावत्वरूपानुयोगित्वस्य) सत्तामात्रवृत्तित्वेन स्व(अनुयोगिता)विशिष्टसत्ताभावनिष्ठप्रतियोगित्वमादायातिव्याप्तिवारणेऽपि समवायसंबन्धावच्छिन्नप्रमेयाभावस्य स्वरूप, विषयित्वाद्यन्तरसंबन्धेन सत्तायां सत्ताभावविषयकज्ञानत्वेऽतिव्याप्तिर्दुर्वारा प्रमेयाभावनिष्ठप्रतियोगितायामुक्तवृत्तित्वरूपविशेषणविरहात् । स्वा(प्रमेयाभावाभावत्वरूपानुयोगित्वा)श्रयवृत्तिपदार्थविभाजकीभूतधर्मानधिकरणवृत्तिप्रतियोगिताकाभावावृत्तित्व - विशेषणविरहात् । समवायेन प्रमेयाभावप्रतियोगितायाः समवेतनिष्ठत्वेन स्वाश्रयवृत्तिपदार्थविभाजकसत्ताभावत्वरूपधर्मानधिकरणज्ञानादिवृत्तिप्रतियोगिताकाभाव-

वृत्तित्वेन तादृशाभावावृत्तित्वरूपविशेषणविरहात् साध्याभावस्य लक्षणाघटकत्वात् । सत्ताभावनिष्ठप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वस्य हेत्वधिकरणे विरहाच्च (सत्ताभावनिष्ठप्रतियोगितावच्छेदकावच्छिन्नसत्त्वाभावानधिकरणत्वस्य सत्ताभावविषयकज्ञाने हेत्वधिकरणे विरहाच्च । सत्ताभावस्य विषयितया सत्ताभावविषयकज्ञाने हेत्वधिकरणे सत्त्वेन सत्ताभावानधिकरणत्वं तत्र न वर्तते) । पटवृत्तित्वविशिष्टघटत्वाभावसाध्यके व्यभिचारिणि अयं पटवृत्तित्वविशिष्टघटत्वाभाववान् प्रमेयत्वादित्यादौ साध्याभाववृत्तिपदार्थविभाजकीभूतधर्मानधिकरणघटत्वनिष्ठप्रतियोगिताकाभाववृत्तित्वस्यैव साध्याभावत्वरूपानुयोगिताश्रयनिरूपितप्रतियोगितायां सत्त्वेनाभावान्तरानुयोगित्वमादायातिव्याप्त्यापत्तिश्च । अतिव्याप्तिवारणायाश्रितकल्पेऽतिव्याप्तेरिष्टापत्तेरयोगादिति चेन्न । (साध्याभावस्य लक्षणाघटकत्वेनान्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वादिति चेन्न) । अनुयोगितावैशिष्ट्यस्य प्रतियोगितायां स्वनिरूपितत्व, स्ववृत्तित्वोभयसंबन्धेन वाच्यत्वात् । वृत्तित्वञ्च स्वनिरूपकत्व, स्वाश्रयप्रतियोगियत्किञ्चिद्वृत्तिपदार्थविभाजकीभूतधर्मानधिकरणप्रतियोगिकाभावावृत्तित्वान्यतरसंबन्धेन । (मूले प्रतियोगिकाभावाभाववृत्तित्वान्यतरसंबन्धेनेति पाठः) । तथा च व्यभिचारिणि साध्यनिष्ठप्रतियोगितैवानुयोगिताविशिष्टा । कपिसंयोगाभावसाध्यकसद्धेतौ अयं कपिसंयोगाभाववान् आत्मत्वादित्यत्र तादृशगुणसामान्याभावनिष्ठप्रतियोगिताऽपीति नासङ्गतिरिति ध्येयम् । (अयं संयोगसामान्याभाववान् आत्मत्वादित्यत्राव्याप्तिदानस्य नासङ्गतिरिति ध्येयम्) । तथा चानुयोगिताविशिष्टानुयोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वै० स्वतादात्म्य,स्वविशिष्टप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावनिष्ठत्वोभयसंबन्धेन । प्रतियोगितायामनुयोगिता वै० स्वाश्रयनिरूपितत्व,स्ववृत्तित्वोभयसंबन्धेन । वृत्तित्वञ्च स्व(प्रतियोगिता)निरूपकत्व, स्वाश्रयाभावप्रतियोगियत्किञ्चिद्वृत्तिपदार्थविभाजकीभूतधर्मानधिकरणप्रतियोगिकाभावावृत्तित्वान्यतरसंबन्धेन तथा च व्यभिचारिणि साध्यनिष्ठप्रतियोगितैवानुयोगिता-

विशिष्टा । कपिसंयोगाभावसाध्यकसद्धेतौ तादृशगुणसामान्याभावनिष्ठप्रतियोगितापीति । धूमवान् वह्नेरित्यत्र धूमाभावत्वरूपानुयोगिता विशिष्टानुयोगिता स्वैव । स्वतादात्म्यस्य स्वविशिष्टप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाधिकरणावृत्तित्वस्य चैतदुभयस्य सत्त्वात् । तादृशानुयोगिताविशिष्टा स्वनिरूपितत्व, स्ववृत्तित्वोभयसंबन्धेन धूमनिष्ठा प्रतियोगिता । सा च प्रतियोगिता स्वा(अनुयोगित्वा)श्रय(धूमाभाव)निरूपितत्व, स्व(धूमाभावत्वरूपानुयोगित्व)वृत्तित्वोभयसंबन्धेन धूमाभावत्वरूपानुयोगिताविशिष्टा भवति । धूमनिष्ठप्रतियोगिताया धूमाभावत्वरूपानुयोगितायां वृत्तित्वञ्च स्व(प्रतियोगित्व)निरूपकत्व स्वाश्रय किञ्चित्प्रतियोग्यवृत्तिपदार्थविभाजकीभूत(गुणत्व)धर्मानधिकरणवृत्तिप्रतियोगिताकाभावाभाव(धूमाभावाभावरूपधूमा)वृत्तित्वान्यतरसंबन्धेन । तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वान्नातिव्याप्तिः ।

वह्निमान् धूमादित्यत्र नाव्याप्तिः । अनुयोगिताविशिष्टानुयोगिताविशिष्टप्रतियोगिता घटनिष्ठा तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः । तथा हि अनुयोगिताविशिष्टानुयोगिता घटाभावत्वरूपा तत्र स्वतादात्म्य स्वविशिष्टप्रतियोगितावच्छेदकयत्किञ्चिद्धर्मावच्छिन्नाधिकरणवृत्तित्वोभयसंबन्धेन स्वैव, तादृशानुयोगिताविशिष्टा स्वनिरूपितत्व, स्ववृत्तित्वोभयसंबन्धेन घटनिष्ठा प्रतियोगिता । तत्र प्रतियोगितायामनुयोगितायाः वैशिष्ट्यञ्च स्व(घटाभावनिष्ठानुयोगिता)निरूपकत्व स्वाश्रयघटाभावप्रतियोगियत्किञ्चिद्वृत्तिपदार्थविभाजकीभूत(गुणत्व,धर्मानधिकरणप्रतियोगिकाभावा(घटाभावा)वृत्तित्वान्यतरसंबन्धेन घटनिष्ठा प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

यत्तु गुणसामान्याभावाभावस्य यत् एकत्वमात्रस्वरूपत्वं तत्र नानुगतत्वप्रयोजकम् । (गुणसामान्याभावाभावस्य त्वयोक्तं यदेकत्वं तस्मिन् एकत्वेनानुगतत्वप्रयोजकम् । द्रव्यत्वादिवदनुगतस्यैकत्वस्याभावात् । अननुगतस्य तस्य गुण-

सामान्याभावाभावस्य स्वसत्तायां (गुणसामान्याभावाभावसत्तायां) गुण सामान्याभावाभावव्यवहारोत्पादकत्वेन तत्स्वरूपत्वे च (गुणाभावाभावस्वरूपत्वे च) (गुणसामान्याभावाभावः किं रूपस्वरूपः किं वा रसादिप्रत्येकस्वरूपः, इत्यत्र विनिगमकाभावात्) निखिलगुणस्वरूपत्वं निखिलगुणात्मकत्वम् गुणसामान्याभावाभावस्येति । तत्तुच्छम् । गुणसामान्याभावाभावस्य निखिलगुणात्मकत्वे तत् किं संख्यारूपत्वं वा परिमाणरूपत्वं वा पृथक्त्वरूपत्वं वेत्यत्र विनिगमकाभावेन संयोगादिरूपतायां लाघवस्यैव विनिगमकत्वात् । एकत्वेन च एकेनैव (गुणसामान्याभावाभावेनैव) तत्तद्द्रव्ये गुणसामान्याभावाभावव्यवहारोपपत्तेः । संयोगादिभिस्तु अनन्तैरिति ।

**दीधितौ यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तदनवच्छेदकत्वस्य (साध्यतावच्छेदके) उक्तत्वादिति ।**

हेत्वधिकरणे यादृशप्रतियोगितानिरूपितावच्छेदकतावद्धर्मनिष्ठावच्छेदकतानिरूपितनिरूपकताकाधिकरणतावान्नेतिप्रतीतिसिद्धस्य प्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपितधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपित निरूपकतावच्छेदकधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपित)निरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकभेदस्य हेत्वधिकरणवृत्तेः निरूपितं यत्प्रतियोगित्वं (हेत्वधिकरणवृत्तितादृशभेदनिरूपितं यत्प्रतियोगित्वं) तन्निरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकतानिरूपितधर्मनिष्ठावच्छेदकतानिरूपितावच्छेदकतानिष्ठावच्छेदकतानिरूपितावच्छेदकतावत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके विवक्षितम् । (यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः) ।

न च महानसीयाभावप्रतियोगितावच्छेदकावच्छिन्नत्वे सति वह्न्यभाव-प्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावान्नेति भेदस्यापि तादृशभेदत्वेन लक्षणाक्रान्ततया तन्निरूपित(तादृशभेदनिरूपित)प्रतियोगितानिरूपितपरम्परा-वच्छेदकतावत्त्वस्य वह्न्यभावप्रतियोगित्वे सत्त्वेन तदवच्छेदकत्वस्य साध्यतावच्छेदके वह्नित्वे सत्त्वाद् वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम् ।

अवच्छेदकत्व(प्रतियोगितावच्छेदकत्व)निष्ठावच्छेदकताविशिष्टनिरूपकत्व-निष्ठावच्छेदकत्वस्य विवक्षितत्वात् । वै० स्वभिन्नावच्छेदकत्वानिरूपितत्व-संबन्धेन । एवञ्च प्रकृते वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिष्ठा-वच्छेदकतायां भेदीयप्रतियोगितानिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपितावच्छे-दकतायां वह्न्यभावप्रतियोगितावच्छेदकवह्नित्वनिष्ठावच्छेदकताभिन्नायाः महा-नसीयाभावप्रतियोगितावच्छेदकमहानसीयत्वनिष्ठावच्छेदकतायाः निरूपितत्वस्य वह्नि-निष्ठनिरूपकत्वनिष्ठावच्छेदकतायां सत्त्वेन स्वभिन्नावच्छेदकत्वानिरूपितत्वस्या-सत्त्वात्, तादृशनिरूपकतानिरूपिताधिकरणतावान्नेति भेदमादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः ।

यद्वा एकत्ववृत्तित्वम् (प्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकता-गतैकत्वम्) निरूपकत्वनिष्ठावच्छेदकतायां विशेषणं वाच्यम् । स्वनिरूपित-परंपरीयोभयावृत्तिधर्म(प्रतियोगितावृत्त्युभयावृत्तिधर्म,निष्ठावच्छेदकतात्वावच्छिन्नप्रति-योगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । तथा च नोक्तदोषः । निरूप-कत्वनिष्ठायां भेदीयप्रतियोगितानिरूपिताधिकरणत्वनिष्ठावच्छेदकतानिरूपितावच्छेदक-तायां तादृशप्रतियोगितागतोभयावृत्तिधर्मनिष्ठावच्छेदकतागतद्वित्ववृत्तित्वेन तस्या एकत्वावृत्तित्वात् । न तादृशनिरूपकतामादाय वह्निमान् धूमादित्यत्राव्याप्ति-रूपदोष इति । तन्न । एकत्वादेः पर्याप्त्यनभ्युपगमेन तन्निवेशासंभवात् ।

वस्तुतस्तु निरूपकत्वनिष्ठभेदीयप्रतियोगितावच्छेदकतायां न किमपि विशेषणादिकं देयम् । निरूपकत्वस्य (प्रतियोगिनिष्ठनिरूपकत्वस्य) यादृश-

प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वेन यादृशप्रतियोगिताविशिष्टत्वेन निवेशनीयतया निरूपकत्व(प्रतियोगिनिष्ठनिरूपकत्व) निष्ठावच्छेदकतावच्छेदकतया प्रतियोगित्वव्यक्तिद्वयस्य प्रवेशासंभवात् । तथा च महानसीयाभावप्रतियोगितावच्छेदकावच्छिन्नत्वे सति वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतामादाय वह्निमान् धूमादित्यत्र नाव्याप्तिः । हेत्वधिकरणे पर्वते वह्न्यभावप्रतियोगित्वव्यक्तिविशिष्टनिरूपकताकाधिकरणताकत्वे सति महानसीयाभावप्रतियोगित्वव्यक्तिविशिष्टनिरूपकताकाधिकरणताद्भेदवारणाय तादृशाधिकरणत्व(हेत्वधिकरणवृत्त्यभावप्रतियोग्यधिकरणत्व)निष्ठावच्छेदकताविशिष्टत्वं प्रतियोगितायां(लक्षणघटकभेदीयप्रतियोगितायां)स्वभिन्नावच्छेदकत्वानिरूपितत्वसंबन्धेन वक्तव्यम् ।

यद्वा, अधिकरणत्वनिष्ठावच्छेदकताद्वयानिरूपितत्वं प्रतियोगितावृत्त्युभयावृत्तिधर्मनिष्ठावच्छेदकताद्वयानिरूपितत्वं वा विशेषणतया प्रतियोगित्वस्योपादेयमिति न कस्यचिद् दोषस्य संभवः । इदं कथनञ्च अधिकरणभेदेनाधिकरणत्वनिष्ठावच्छेदकत्वस्य प्रतियोगिभेदेन प्रतियोगितावच्छेदकत्वस्य च न भेद इति मते बोध्यम् । अन्यथा (अधिकरणभेदेनाधिकरणत्वनिष्ठावच्छेदकताभेदस्य प्रतियोगिभेदेन प्रतियोगितावच्छेदकत्वस्य च भेद इति स्वीकारे) धूमवान् वह्नेरित्यादावतिव्याप्तेः । लक्षणघटकधूमाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकताकाधिकरणत्ववान्नेति भेदीयप्रतियोगितायाम्, अधिकरणत्वद्वयादिनिष्ठावच्छेदकतानिरूपितत्वस्य सत्त्वेन, अधिकरणत्वनिष्ठावच्छेदकत्वद्वयनिरूपितत्वस्य च सत्त्वेन धूमत्वावच्छिन्नप्रतियोगित्वस्य लक्षणाघटकत्वात् । एवं साक्षात्परंपरासाधारणावच्छेदकतानिरूतत्वमभ्युपेत्यैव (तादृशविशेषणं)समुचितम् । अन्यथा (साक्षात्परंपरावच्छेदकत्वनिरूपितत्वास्वीकारे) वह्निमान् धूमादित्यत्राव्याप्तेरुद्धारात् इत्यवधेयम् (अव्याप्तिश्च पूर्वोक्तरीत्या बोध्या) ।

**यत्प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपित(प्रतियोगिक)स्वरूपसंबन्धेन यादृशप्रतियोगितावच्छेकावच्छिन्नाधिकरणतासामान्या-**

**भाववत्त्वं हेतुमतस्तेन सम्बन्धेन तादृशप्रतियोगितानवच्छेदकत्वस्य (साध्यतावच्छेदके) विवक्षितत्वादिति जा० टी० ।**

न चाधिकरणत्वीयस्वरूपोपादाने प्रतियोगितावच्छेदकतयाधिकरणतात्व-प्रवेशो व्यर्थ इति वाच्यम् । वाच्यं प्रमेयत्वादित्यादौ प्रतियोगिता-वच्छेदकावच्छिन्ननिरूपकतानिरूपितप्रमेयत्वनिष्ठाधेयत्वस्य (अधिकरणत्वस्य) स्वरूप संबन्धावच्छिन्ननिरूपकताकप्रमेयत्वनिष्ठाधिकरणत्वस्य च प्रमेयत्वात्मकतयैकत्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धयाऽव्याप्तिप्रसङ्गात् । अधिकरणतात्वावच्छिन्न प्रतियोगिकस्वरूपस्य विवक्षणे च वह्न्यभावप्रतियोगित्वस्यापि लक्षणघटकता-पत्तेः । प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितत्वावच्छिन्नस्य (अधि-करणत्वस्य) तादृशाधिकरणतात्वावच्छिन्नप्रतियोगिकस्वरूपेण (हेत्वधिकरणे) सत्त्वा-संभवादिति । अनुगमस्तु प्रतियोगिताविशिष्टप्रतियोगिताकाभावत्वेन । वैं० स्वावच्छेदकावच्छिन्ननिरूपकताकाधिकरणतात्वावच्छिन्नत्व,स्वावच्छेदकसंबन्धावच्छिन्ना-धिकरणत्वीयस्वरूपसंबन्धावच्छिन्नत्वोभयसंबन्धेन । (समानाधिकरणविषयतयोरभेदः, विषयता च विषयस्वरूपा चेति पक्षे स्वरूपसंबन्धावच्छिन्ननिरूपकताक-प्रमेयत्वनिष्ठाधिकरणत्वस्य प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितप्रमेयत्व-निष्ठाधेयत्वस्य चैक्येन तयोश्च प्रमेयत्वरूपत्वेन च प्रमेयत्वस्य केवलान्वयित्वमिति सर्वत्र विद्यमानत्वेन यत्प्रतियोगितावच्छेदकसंबन्धावच्छिन्नाधिकरणताप्रतियोगिक-स्वरूपेण यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य प्रमेयत्वरूपस्य हेत्व-धिकरणे सत्त्वात् तादृशप्रतियोगिव्यधिकरणाभावस्याप्रसिद्धया इदं वाच्यं प्रमेयत्वत्वादित्यत्राव्याप्तिरतोऽधिकरणतात्वेनाधिकरणत्वस्य प्रवेशः । तथा च नोक्तदोषः । स्वरूपसंबन्धावच्छिन्ननिरूपकताकप्रमेयत्वनिष्ठाधेयतावच्छेदकतायाः आधेयतात्वावच्छिन्नत्वेनाधिकरणतात्वानवच्छिन्नत्वात् । न चाधिकरणतात्वावच्छिन्न-प्रतियोगिकस्वरूपेण यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतासामान्याभाववत्वं हेत्वधिकरणस्य तेन संबन्धेन तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणे नोक्तदोषः । तादृशस्वरूपेण तादृशाधिकरणत्वाभावस्य हेत्वधिकरणे

प्रमेयत्वे सत्त्वादिति वाच्यम् । तथा सति वह्निमान् धूमादित्यत्राव्याप्तेः वह्न्यभावप्रतियोगित्वस्यापि लक्षणघटकत्वात् । अधिकरणतात्वावच्छिन्नस्वरूप-संबन्धेन (तादृशसामान्यसंबन्धेन व्यधिकरणेन) प्रतियोगितावच्छेदकवह्नित्वा-वच्छिन्ननिरूपकतानिरूपितत्वविशिष्टाधिकरणत्वस्य हेतुमत्यसत्त्वात् । तत्प्रतियोगिता-वच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् ।

**अत्र प्रतियोगितावच्छेदकावच्छिन्नत्वं साध्यतावच्छेदकताघटक-संबन्धेनैव ग्राह्यम् । तेन तप्तायःपिण्डस्यापि कालिकादिसंबन्धेन यद्धूमत्वविशिष्टं तृणादिकं संयोगेन तस्याधिकरणत्वेऽपि धूमवान् वह्नेरित्यादौ नातिव्याप्तिरिति जा० टी० ।**

ननु संबन्धसामान्येन प्रतियोगितावच्छेदकावच्छिन्नत्वविवक्षायामेवैतद्दोषस्य (धूमवान् वह्नेरित्यत्रातिव्याप्तिदोषस्य) प्रदर्शिततया कथं तत् (अतिव्याप्ति) संभवः । सर्वेषां लक्षणघटकाभावानां प्रतियोगिसमानाधिकरणत्वेन प्रतियोगि-व्यधिकरणाभावाप्रसिद्धेरिति चेत् । तदयोगोलकसंयुक्तासमानकालीनतद्व्यक्त्य-वच्छिन्नाभावस्यैव प्रतियोगिव्यधिकरणत्वसंभवात् । तत्प्रतियोगितैव लक्षणघटिका तत्प्रतियोगितानवच्छेदकत्वस्यैव साध्यतावच्छेदके धूमत्वे सत्त्वेन न भवति तत्रातिव्याप्तिरिति बोध्यम् । स्ववृत्तिवाच्यत्वादिकं तु न संसर्गः । अतएव (स्ववृत्तिवाच्यत्वादित्यस्य संसर्गत्वाभावादेव) वह्निमान् धूमादित्यत्रा-व्याप्तिसंभवेऽतिव्याप्तिदानमनुचितमिति निरस्तम् । अन्यथा प्रतियोगिव्यधि-करणाभावाप्रसिद्ध्या तत्राव्याप्तेर्दुर्वारत्वात् । उभयोर्मध्येऽव्याप्तेः प्राधान्यात् । न च द्रव्यम् आत्मत्वादित्यत्राव्याप्तिः, विषयितया ज्ञानस्याभावप्रतियोगिता-वच्छेदकावच्छिन्नत्वादिति वाच्यम् । (न च लक्षणघटकाभावे प्रतियोगिता-वच्छेदकस्य विषयितया संबन्धिज्ञानरूपप्रतियोगिसामानाधिकरण्यस्य सत्त्वेन प्रतियोगिवैयधिकरण्याभावस्याप्रसिद्ध्या द्रव्यमात्मत्वादित्यत्राव्याप्तिरिति वाच्यम्) । विषयित्वस्येदानीं संसर्गत्वानभ्युपगमात् । अधिकरणतानिरूपकता(आधेयता)-

वच्छेदकसंबन्धसामान्येनैव प्रतियोगितावच्छेदकावच्छिन्नत्वस्य वाच्यत्वात् ।

न च तथाप्यात्मनि वस्तुमात्रसमानकालीनस्य कस्यचिद्विशेषगुणस्य सर्वदैव सत्त्वादव्याप्तितादवस्थ्यमिति वाच्यम् । (समानकालीनत्वसंबन्धेन प्रतियोगितावच्छेदकविशिष्टज्ञानादिविशेषगुणस्यात्मनि सत्त्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धयाऽव्याप्तिः द्रव्यमात्मत्वादित्यत्र संभवतीति वाच्यम्) । चरमध्वंसत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वादिति ध्येयम् । तस्यैव प्रतियोगिवैयधिकरण्येन लक्षणघटकत्वं बोध्यम् ।

**वस्तुतः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नं यत्प्रतियोगितावच्छेदकत्वं तन्निरूपित(तत्प्रतियोगिक)स्वरूपसंबन्धेनैव निरुक्तप्रतियोगितावच्छेदकत्वाभावः साध्यतावच्छेदके वक्तव्य इति जा० टी० ।**

अत्रावच्छेदकतात्वावच्छिन्नप्रतियोगित्वप्रवेशफलमधिकरणतात्वावच्छिन्नप्रतियोगित्वफलवदेव बोध्यम् ।

**अधिकरणतानिरूपितसंबन्धेनेति तत्त्वालोकः । अत्र यादृशप्रतियोगितावच्छेदकधर्मे तादृशप्रतियोगिताश्रयीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतानवच्छेदकत्वस्य अधिकरणतावच्छेदकत्वस्य द्वयोर्व्यतिरेकस्तत्तद्व्यक्तिभेदकूटवत्त्वमेव हेत्वधिकरणे यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वमित्यस्यार्थो बोध्य इति जा० टी० ।**

अत्रैतत्कल्पपरिष्कारश्च हेत्वधिकरणत्वपरिष्कारवत् । तत्र सद्धेतावेव प्रायोऽहेत्वधिकरणत्वस्य हेत्वधिकरणत्वापत्त्याऽव्याप्तिपरिहारफलम् । अत्र प्रायो व्यभिचारिणि साध्याभावप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्य हेत्वधिकरणे प्रसङ्गेनातिव्याप्तिपरिहारः । तथा च यादृशप्रतियोगितावच्छेदकधर्मे—तादृशप्रतियोगितावच्छेदकाश्रयाधिकरणीभूतयद्यद्व्यक्तिनिष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्व,सामान्यतोऽधिकरणतानिरूपितनिरूपकतावच्छेदकत्वोभयाभावस्तत्तद्-

व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवद्हेत्वधिकरणं भवति तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति प्रतियोगिवैयधिकरण्यघटितसमुदितलक्षणार्थः पर्यवसितः ।

**द्रव्यानुयोगिकसमवाय,विशिष्टसत्तात्वावच्छिन्ननिरूपितप्रकारित्वान्यतरसंबन्धेन सत्तासाध्यकविशिष्टसत्ताप्रकारकज्ञानत्वहेतुकेऽतिव्याप्तिवारणञ्च, द्रव्यत्वसाध्यकोक्तान्यतरसंबन्धेन सत्त्वे सद्धेतौ हेत्वधिकरणत्वप्रदर्शिताव्याप्तेः प्रदर्शितवारणरीत्या कार्यम् ।**

समवायेन घटत्वपटत्वोभयसाध्यकव्यभिचारिणि घटत्वपटत्वोभयवान् द्रव्यत्वादित्यादावतिव्याप्तिश्च । साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकत्वस्य साध्यतावच्छेदके विशेषणतामभ्युपेत्य वारणीया । (समवायेन घटत्वपटत्वोभयत्वावच्छिन्नाधिकरणाप्रसिद्धया साध्याभावो न लक्षणघटक इत्यन्याभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाद् भवति तत्रातिव्याप्तिः । साध्यतावच्छेदके च साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकत्वविशेषणे तु नोक्तदोषः । तादृशसंबन्धितावच्छेदकत्वस्य साध्यतावच्छेदकेऽसत्त्वात् ।

यत्तु घटत्वपटत्वोभयवान् द्रव्यत्वादित्यत्रातिव्याप्तेः वारणं साध्यतावच्छेदके प्रमीयप्रकारतावच्छेदकत्वविशेषणेन कार्यमिति । तन्न । तथा सति (प्रमाया लक्षणघटकत्वे सति) प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वस्य प्रमीयविशेष्यताप्रतियोगिकस्वरूपेणाभावस्य लक्षणघटकत्वोपेक्षाया निर्बीजत्वापत्तेः । अस्मत्कल्पे च प्रमीयत्वप्रवेशेन गौरवस्यैव तदुपेक्षाबीजत्वसंभवात् । (प्रमीयविशेष्यताप्रतियोगिकस्वरूपेण प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभावस्य हेत्वधिकरणे उपेक्षाबीजत्वसंभवात्) । न चोक्तविशेष्यत्वाभावश्च (प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभावश्च)तादृशविशेष्यतात्वेतरधर्मानवच्छिन्नतादृशविशेष्यतात्वावच्छिन्नप्रतियोगिकस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकः केवलान्वयीति प्रतियोगितामात्रस्य लक्षणघटकत्वापत्तिरिति

वाच्यम् । (तथा चासंभवापत्तिरिति वाच्यम्) । ननु लक्षणे प्रतियोगितावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रतियोगिकस्वरूपसंबन्धेन तादृशविशेष्यतावति तत्संबन्धावच्छिन्नविशेष्यत्वाभावस्यावृत्तित्त्वेन कथं तस्य केवलान्वयित्वमिति चेन्न । संसर्गीयप्रतियोगितायामुक्तविशेष्यत्वावच्छिन्नत्वस्या(प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतात्वावच्छिन्नत्वस्या)प्रवेश्यत्वात् ।

न च वह्नीयसंयोगेन वह्निमान् धूमादित्यत्र प्रतियोग्यधिकरणाप्रसिद्धिः (साध्यतावच्छेदकतादृशसंयोगेन घटादिप्रतियोग्यधिकरणाप्रसिद्धिः) स्वाश्रया(प्रतियोगितावच्छेदकाश्रया)धिकरणत्वस्य साध्यतावच्छेदकसंबन्धेनावश्यं वाच्यत्वात् । अन्यथा धूमवान् वह्नेरित्यत्र धूमाभावस्य (कालिकेनायोगोलके धूमसामानाधिकरण्येन) प्रतियोगिवैयधिकरण्यानुपपत्त्या लक्षणाघटकत्वेनातिव्याप्तिः स्यादिति वाच्यम् । प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टाधिकरणत्वस्य साध्यतावच्छेदसंबन्धावच्छिन्नाधिकरणत्वीयस्वरूपसंबन्धेनाभावस्य हेत्वधिकरणे विवक्षितत्वात् । वै० स्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकनिरूपकताकत्व,स्ववृत्तित्त्वोभयसंबन्धेन । अधिकरणताया रूपे वृत्तित्त्वं च स्वाभाववत्त्वसंबन्धेन । स्वाभावश्च स्वसमानाधिकरणसाध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितानवच्छेदकत्व, स्व(अधिकरणता)कालीनसाध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वोभयसंबन्धावच्छिन्नप्रतियोगिताको बोध्य इति ।

नन्वत्र प्रतियोगित्वादिकं नातिरिक्तः पदार्थः । प्रतियोगित्वादिकं तु स्वरूपसंबन्धविशेष इत्युत्तरग्रन्थविरोधात्, किन्तु स्वरूपसंबन्धविशेषः । स च यदि प्रतियोगिस्वरूपः तदा वह्निमान् धूमादित्यादौ सर्वत्रासंभवः, घटादिस्वरूपस्य घटाद्यभावप्रतियोगित्वस्य घटत्वावच्छिन्नत्ववत् द्रव्यत्वसमवेतत्वज्ञेयत्वावच्छिन्नतया तादृशावच्छेदकी-

भूतज्ञेयत्वावच्छिन्नस्य हेतुमति सत्त्वात् प्रतियोगिव्यधिकरणाभावाप्रसिद्धे रिति जा० टी० ।

सर्वत्रासंभव इति। इदमीदानीं प्रकारित्वादिना व्याप्यव्यापकभावानङ्गीकारेण । अन्यथा प्रकारितासंबन्धेन घटसाध्यकतज्ज्ञानत्वे इदं ज्ञान प्रकारितया घटवत् तज्ज्ञानत्वादित्यादौ अव्याप्त्यसंभवेनोक्तग्रन्थासङ्गत्यापत्तेः । अत्र साध्याभावभिन्नाभावस्यैव प्रतियोगिवैयधिकरण्येन प्रतियोगिवैयधिकरण्याभावस्यासंभवकथनासङ्गतं स्यात् ।

न च प्रतियोगितावच्छेदकरूपमेव प्रतियोगित्वमित्यदोषः । समवायेन वह्नेः साध्यत्वे धूमादावतिव्याप्तिप्रसङ्गात्, समवायसंबन्धावच्छिन्नवह्न्यभावस्य वह्नित्वरूपं यत्प्रतियोगित्वं समवायवत् संयोगस्यापि तदवच्छेदकसंबन्धतया (प्रतियोगितावच्छेदकसंबन्धतया) स्वावच्छेदकीभूततादृशसंबन्धेन (प्रतियोगितावच्छेदकीभूतसंयोगसंबन्धेन) साधनवतः (पर्वतादेः) प्रतियोग्यनधिकरणत्वाभावादिति जा० टी० ।

न च प्रमेयवदभावप्रतियोगित्वस्य तत्तत्प्रतियोगित्वाभिन्नतत्तद्धर्मस्वरूपत्वेन तत्प्रतियोगित्वाभिन्नतया (सामान्यप्रमेयरूपप्रतियोगिव्यधिकरणाभावस्याप्रसिद्धचा) असंभव एव संभवतीत्यतिव्याप्तिदानमसङ्गतम्, असंभवातिव्याप्त्योर्मध्ये असंभवस्यैव श्रेष्ठत्वेन तत्परित्यागस्यानुचितत्वादिति वाच्यम् । स्वाभिन्नस्वावच्छेदकत्वस्य विवक्षणेऽसंभवासंभवात् । (प्रतियोगित्वाभिन्नप्रतियोगितावच्छेदकत्वस्य स्वाभिन्नस्वावच्छेदकत्वस्य विवक्षणेऽसंभवासंभवात् प्रमेयवदभावप्रतियोगित्वस्य तत्तद्घटत्वपटत्वादिरूपत्वेन प्रमेयविशेषरूपत्व न तु प्रमेयसामान्यरूपत्वमिति प्रमेयविशेषप्रतियोगितावच्छेदकाश्रयव्यधिकरणत्वस्य प्रमेयविशेषान्तरप्रतियोगिकाभावे सत्त्वेन तदीयप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनासंभवाभावात्)। न च कालिकोऽपि संबन्धो घटाद्यभावप्रतियोगिताको घटस्तेन (कालिकेन) च घटत्वाद्यवच्छिन्नाधिकरणत्वमेव हेत्वकरणे (पर्वतादौ) इति प्रतियोगिव्यधिकरणा-

भात्राप्रसिद्धयाऽसंभव इति वाच्यम् । तत्पर्वतासमानकालीनव्यक्त्यभावप्रतियोगित्वस्यैव लक्षणघटकत्वसंभवात् । तत्पर्वतासमानकालीनव्यक्तिप्रतियोगिव्यधिकरणत्वस्य तत्पर्वतासमानकालीनव्यक्त्यभावे सत्त्वेन प्रतियोगिव्यधिकरणतदभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनासंभवाभावात्) । न च कालिकेन तादृश(तत्पर्वतासमानकालीन)तद्व्यक्तित्वविशिष्टाभावप्रतियोगित्वस्य तत्प्रतियोगित्वेन तत्(पर्वतसमानकालीनतद्व्यक्तिनिष्ठप्रतियोगित्वेन) सहैक्यात् । स्वत्र वच्छेदकताघटककालिकेन प्रतियोगितावच्छेदकतद्व्यक्तित्वस्य तत्पर्वतकालीनेऽपि सत्त्वात् (प्रतियोगिव्यधिकरणाभावस्य) अप्रसिद्धिरिति वाच्यम् । तद्व्यक्तित्वस्य तद्व्यक्त्यात्मकत्वात् । तद्व्यक्तिविशिष्टाभावस्य (तत्पर्वतासमानकालीनतद्व्यक्त्यभावस्य) लक्षणघटकत्वेन तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनासंभवासंभवात् । प्रतियोगित्वस्य प्रतियोगितावच्छेदकताघटकसंसर्ग, प्रतियोगितावच्छेदकोभयात्मकत्वाभ्युपगमेन तत्प्रतियोगित्वयोः (तत्पर्वतासमानकालीनतद्व्यक्तिनिष्ठप्रतियोगित्व, तत्पर्वतसमानकालीनतद्व्यक्तिनिष्ठप्रतियोयोगित्वयोः) तत्तत्संबन्धभेदेनैक्यासंभवाच्च (प्रतियोगितावच्छेदकताघटकसंबन्धभेदेन तत्तत्प्रतियोग्योरैक्यासंभवाच्च) । तथा च तत्पर्वतासमानकालीनतद्व्यक्त्यभाव एव प्रतियोगिव्यधिकरणत्वेन प्रसिद्ध इति नासंभव इति भावः । न च प्रतियोगित्वस्य प्रतियोगितावच्छेदकसंबन्धस्वरूपत्वम् । तथा सति संयोगेन रूपाभावप्रतियोगित्वस्य संयोगरूपत्वेन गुणे गुणानङ्गीकारात् । तस्य (संयोगेन रूपाभावप्रतियोगित्वस्य) रूपेऽसत्त्वप्रसङ्गादिति भावः ।

**तथा च यदभावीययत्प्रतियोगितावच्छेदकसंबन्धेन यदभावीययत्प्रतियोगितानिरूपितावच्छेदकीभूतधर्मावच्छिन्नासंवन्धित्वं हेतुमतः, तदभावीयतत्प्रतियोगितावच्छेदकताशून्यत्वं साध्यतावच्छेदके निवेश्यमित्यदोष इति जा० टी० ।**

यदभावीयत्व, यत्प्रतियोगितात्वोभयधर्मावच्छिन्ननिरूप्यतानिरूपितनिरूपकता-

वच्छेदकतावद्धर्मावच्छिन्नानधिकरणताहेतुमतः तादृशप्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके बोध्यम् ।

**वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । हेतुमन्मात्रस्यैव वह्निधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणा इति जा० टी० ।**

प्रतियोगित्वस्योभयरूपत्वेऽपि (वह्निधूमोभयवान् वह्नेरित्यत्र हेत्वधिकरणे साध्याभावीयप्रतियोगितयोः वह्नित्वधूमत्वोभयरूपत्वेऽपि) उभयत्वेनैव तदवच्छिन्नाधिकरणत्वं प्रत्येकवद्देशावृत्ति, न तु प्रतियोगितात्वेन प्रत्येकवद्देशेऽपि (प्रत्येकप्रतियोगिमद्धर्मवद्देशेऽपि) उभयाभावप्रतियोगिमदिति प्रतीतेरिति भावः ।

**प्रतियोगित्वेत्यपहाय यादृशप्रतियोगितेत्यभिधानादेव तादृशार्थलाभात् । न च प्रतियोगितावच्छेदकरूपं यदि प्रतियोगित्वं तदा यदभावीययादृशप्रतियोगितावच्छेदकसंबन्धेन यदभावीयतादृशप्रतियोगित्वावच्छिन्नस्यानधिकरणत्वं हेतुमत इत्येव सम्यक्, प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवेशो व्यर्थ इति वाच्यम् । वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः, हेतुमन्मात्रस्यैव वह्निधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरणत्वादित्यस्मद्गुरुचरणा इति० जा० टी० ।**

ननु प्रतियोगित्वं यदि प्रतियोगितावच्छेदकरूपं, तदा तादृशाभावनिरूपितं यत्किञ्चित्प्रतियोगित्वं तदवच्छिन्नानधिकरणत्वमेव हेत्वधिकरणे निवेश्यतां तावतैव विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तिवारणं संभवति, जात्यधिकरणगुणवृत्तिविशिष्टसत्ताभावप्रतियोगित्वं वैशिष्ट्यसत्तात्वरूपं तदवच्छिन्ना-(तादृशोभयावच्छिन्ना)धिकरणद्रव्यत्वस्य हेत्वधिकरणे गुणे सत्त्वेन साध्याभावस्य लक्षणघटकत्वादिति व्यर्थं तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वनिवेशन-

मित्याशङ्कते। न चेति। उत्तरयति वह्निधूमोभयवानिति। अतिव्याप्त्यापत्तेरिति। प्रतियोगिताया अव्यासज्यवृत्तितया वह्निधूमोभयरूपत्वं वह्निधूमोभयाभावप्रतियोगित्वं तत्प्रतियोगितात्त्वेन तदवच्छिन्नस्य वह्नेरधिकरणतया वह्निमति अयोगोलकादौ सत्त्वेन साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन लक्षणाघटकत्त्वाद् वह्निधूमोभयवान् वह्नेरित्यत्रातिव्याप्तेः । तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वविवक्षणे तु वह्निधूमोभयत्वरूपं यत् तादृशोभयाभावप्रतियोगितावच्छेदकम् उभयत्वेन रूपेण तस्य व्यासज्यवृत्तितया तेन रूपेण तदवच्छिन्नस्य वह्निधूमोभयस्यानधिकरणताया हेतुमति अयोगोलके सत्त्वादेव नातिव्याप्तिरित्यवधेयम् इति विवृतिः ।

**विरोधस्य साक्षात् अनुमितावेव विरोधित्वमतमालम्ब्य आह—यदि च येन केनापि संबन्धेन साध्यसाधनयोः सामानाधिकरण्यज्ञानादनुमितिः, व्यापकसाध्यसंबन्धितामात्रं वा व्याप्तिः, व्यापकदले साध्यसाधनयोः संबन्धविशेषप्रवेशादेवातिप्रसङ्गभंगादिति विभाव्यते इति जा० टी० ।**

अतिप्रसङ्गभङ्गादिति विरोधस्थले इति शेषः । साध्यतावच्छेदकसंबन्धेनसाध्याधिकरणनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाभाववद्धेतुरूपविरोधस्थले ।

ननु साध्यासामानाधिकरण्यं न विरोधः, अपि तु साध्यव्यापकीभूताभावप्रतियोगिस्वरूप एव सः, तस्यानुमितिविरोधितयैव हेत्वाभासत्वमिति संबन्धविशेषनियन्त्रितसाध्यसामानाधिकरण्यज्ञानं नानुमितिहेतुः, येन केनापि संबन्धेन तादृशसामानाधिकरण्यज्ञानादनुमित्युत्पादादित्याशङ्कते यदि चेति । मात्रपदेनात्र साध्यसामानाधिकरण्यस्य संबन्धविशेषनियन्त्रितस्य व्यवच्छेदः ।

तेन प्रवेशादेवेत्यत्र नैवकारव्यवच्छेद्यासंभवः । साध्यसामानाधिकरण्यस्य संबन्धविशेष(साध्यतावच्छेदकहेतुतावच्छेदकविशेष)नियन्त्रितस्यापि साधारणहेतुसाधारणत्वादिति ।

ननु तादात्म्येन गवादेः साध्यतायां सास्नादावव्याप्तिः, तत्र साधनवन्निष्ठान्योन्याभावप्रतियोगितायाः साध्यतावच्छेदकतादात्म्य-संबन्धावच्छिन्नत्वे मानाभावस्य (अन्योन्याभावत्वस्याखण्डोपाधित्वेन तत्र तादात्म्यसंबन्धावच्छिन्नप्रतियोगिकत्वे प्रमाणाभाव इति तादात्म्यस्य न संबन्धत्वमिति भावः) स्वयमेव बौद्धाधिकारटिप्पण्यामुक्तत्वात् इति जा० टी० ।

अत्यन्ताभावप्रतियोगितायां संबन्धावच्छिन्नत्वसाधकस्य प्रतिबध्यप्रतिबन्धक-भावाद्यनुपपत्त्यादेः (एकसंबन्धेन प्रतियोगिमत्ताबुद्धिं प्रति तदन्यसंबन्धेन तत्प्रतियोग्यभाववत्तानिश्चयस्याप्रतिबन्धकत्वेन तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्वमिति प्रतिबध्यप्रतिबन्धकभावाद्यनुपपत्त्यादेः) भेदस्थलेऽवतारासंभवात् तथा हि यत्र प्रतियोगी वर्तते तत्र तस्य भेदोऽपि वर्तते प्रतियोगिमत्तातद्भेदवत्त्वयोः-प्रतिबध्यप्रतिबन्धकभावानुपपत्तेरभावात् । अतः प्रतियोगितायां संबन्धावच्छिन्नत्वं न स्वीकार्यम् । किञ्च भेदस्थले तादात्म्यसंबन्धस्य नियतत्वेन यत्र तादात्म्येन प्रतियोगिमत्ता तत्र न तत्संबन्धावच्छिन्नप्रतियोगिताकतद्भेदसत्त्वेति प्रतिबध्यप्रतिबन्धकभावानुपपत्तेरभावात् । अत्यन्ताभावस्थले च संबन्धस्य नियतत्वेनैकसंबन्धेन तत्प्रतियोगिमति देशे तदन्यसंबन्धेन तत्प्रतियोगिकाभावस्यापि सत्त्वादिति तयोः प्रतिबध्यप्रतिबन्धकभावानुपपत्त्या संबन्धविशेषोऽत्यन्ताभावीयप्रति-योगितायां निवेश्य इति बोध्यम् । संबन्धस्यैकप्रतियोगिकत्वापरानुयोगिकत्वनियमेन (तादात्म्यस्थले यस्य प्रतियोगित्वं तस्यैवानुयोगित्वमिति) तादात्म्यस्य संबन्धत्वा-संभवाच्च । घटो द्रव्यमित्यादिशाब्दस्य प्रथमान्ततादात्म्यप्रकारकत्वम् (प्रथमाविभक्त्यर्थः तादात्म्यं तच्च प्रकारतया भासते न तु संबन्धतया) । संबन्धश्चाकांक्षाभास्यो न तु पदोपस्थाप्यः सर्वत्र शाब्दबोधे संबन्धस्या-कांक्षाभास्यत्वनियमात् । किं वा घटो द्रव्यमित्यत्र संबन्धानवच्छिन्न-प्रकारताकत्वमभ्युपेयम् । प्रकारतात्वादिकं तु विषयतात्वव्याप्यधर्मविशेष एवेति संबन्धानवच्छिन्नत्वेऽपि न तत्र प्रकारतात्वक्षतिः । अस्तु वा

संबन्धावच्छिन्नैव तत् प्रकारता(घटो द्रव्यमितिशाब्दबोधीयप्रकारतासंबन्धावच्छिन्नैव) तथापि(तत्र प्रकारतायां तादात्म्यसंबन्धावच्छिन्नत्वेऽपि) प्रतियोगितायाः तदभ्युपगमः (तादात्म्यसंबन्धावच्छिन्नत्वाभ्युपगमः) अप्रामाणिक एवेति भावः ।

(ननु भेदत्वस्याखण्डोपाधित्वे अपसिद्धान्तकवलिततया तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमेवान्योन्याभावत्वं वक्तव्यम् । तथा च प्रतियोगितायां तादात्म्यसंबन्धावच्छिन्नत्वमवश्यमेवाङ्गीकर्तव्यमित्यत आह—एवं धनी चैत्रत्वादित्यादौ वृत्त्यनियामकस्वामित्वादिसंबन्धेन धनादेः साध्यतायामपि तादृशसंबन्धा(स्वामित्वसंबन्धा)वच्छिन्नत्वाप्रसिद्धेरत आह—

**यद्वा साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वं हेतुमतो वक्तव्यम्**

इति जा० टी० विवृतिः । तादात्म्यसंबन्धावच्छिन्नप्रतियोगिताकाभावत्वमेव भेदत्वं नत्वनुयोगिताविशेषः प्रमाणाभावादिति मतेऽप्याह एवं धनी चैत्रत्वादित्यादाविति जा० टी० ।

स्वामित्वादिसंबन्धस्य प्रतियोगितावच्छेदकत्वे मानाभावादिति शेषः ।

**यत्तु प्रतियोगितावच्छेदकसंबन्धेन तद्वैयधिकरण्यं प्रवेश्य पुनः प्रतियोगितायाः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविवक्षायां गौरवमतो यद्वेति । संबन्धान्तरानवच्छिन्नतत्तदनन्तप्रतियोगितावच्छेदकभेदकूटघटितत्वेन यद्वेत्यादिकल्पस्यैव गुरुतरत्वादित्याहुरिति जा० टी० ।**

ननु प्रतियोगितावच्छेदकत्वस्योपलक्षणतयैव निवेशः । अन्यथा (तस्योपलक्षणतयाऽनिवेशे) । प्रमेयधूमसाध्यकस्थले प्रमेयधूमवान् वह्नेरित्यादौ गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वपक्षेऽतिव्याप्तेरिति कथं गौरवम् (उपलक्षणस्य प्रतियोगितानवच्छेदकत्वात्) इति चेत् । अत्र केचित् प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे साध्यतावच्छेदके वह्नित्वादौ घटत्वादिभेदनिवेशेऽपि कम्बुग्रीवादिगुरुधर्मभेदस्य न प्रवेशः । विषयिताभिन्न-

संबन्धावच्छिन्नगुरुधर्मावच्छिन्नप्रतियोगितया अप्रसिद्धेः । अन्यथा (साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगितायामनिवेशे । विषयित्वादिसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्य कम्बुग्रीवादिमत्त्वेऽपि सत्त्वेन तद्भेदस्य (कम्बुग्रीवादिमत्त्वादिगुरुधर्मभेदस्य) साध्यतावच्छेदके प्रवेशनीयतया गौरवमिति वदन्ति, अत्र ब्रूमः साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावच्छेदेन पर्याप्तिसंबन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वनिष्ठावच्छेदकावच्छेदकताप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकभेदकूटस्य साध्यतावच्छेदकनिष्ठस्य चक्रवर्तिलक्षणोक्तत्वेन दीधितिकृत्संमतस्य लक्षणघटकतामुपेत्य गौरवोद्भावनं कृतं तच्च स्फुटमेव तत्तत्संबन्धावच्छिन्नप्रतियोगित्वस्य स्वप्रतियोगितावच्छेदकघटकतया भिन्नस्य घटत्वादिभेदस्य लक्षणघटकत्वात् ।

नचोक्तप्रतियोगितावच्छेदकत्वावच्छिन्नभेदनिवेशनमप्रयोजनम् (प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकभेदस्य साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदके निवेशनमप्रयोजनम्) । महानसीयवह्न्यभावप्रतियोगित्वस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वविशेषणेनैव वारणादिति वाच्यम् । उक्तविशेषणोक्तेः शिष्यबुद्धिवैशद्यार्थतायाः प्राक् प्रपञ्चितत्वात् । (नञोऽन्तरार्थकत्वकल्पे बोध्यम्) । पूर्वं तद्विशेषणम् अव्याख्यानरूपग्रन्थे शङ्कोत्तररूपेणोक्तम् । इदानीं दीधितिव्याख्याने तत्संमतविशेषानुसरणमेव युक्तमित्यस्य वक्तुं शक्यत्वाच्च । एवं च वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावमादायाव्याप्तिवारणायैव तादृशरूपे तादृशरूपभेदनिवेशस्यावश्यकत्वमिति ज्ञेयम् । अतएव (तादृशरूपे तादृशरूपभेदस्य निवेशादेव) संबन्धान्तरावच्छिन्न (साध्यतावच्छेदकसंबन्धभिन्नसंबन्धावच्छिन्न) तत्तदनन्तप्रतिप्रतियोगितावच्छेदकभेदकूटेत्यादि लिखनमपि संगच्छते । अन्यथा प्रतियोगितानन्त्यं विहाय धर्मगतानन्त्यमेवोच्येत ।

अथ स्वा(हेत्वधिकरणवृत्त्यभावीयप्रतियोगित्वा)वच्छेदकावच्छिन्ननिरूपकताकाधिकरणतावान्नेति प्रतीतिसिद्धो यो हेत्वधिकरणवृत्तिभेदस्तदीयप्रतियोगिता-

ननु तादात्म्येन गोः साध्यत्वेऽपि गोत्वं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकमित्याकारकव्याप्तिधियोऽनुमितिहेतुत्वात् तदग्रहे (गोत्वत्वाग्रहे) गोविधेयकानुमितिरपि (अयं गोः सास्नावत्त्वादित्यनुमितिरपि) अनुपपन्नेत्यत आह—

**आदीति (गोत्वत्वाद्यग्रहदशायामित्यादीति शिरोमणिः, आदिना-पक्षधर्मतापरिग्रहः इति जा० टी० ।**

तथा च गोविधेयकानुमितेरप्यभ्युपगमे गवेतरावृत्तित्वरूपायाः निरवच्छिन्नगोत्वविधेयकानुमितिप्रयोजकव्याप्तेरुपस्थितिध्रौव्ये (गोत्वं सास्नादिमन्निष्ठाभावप्रतियोगितानवच्छेदकमिति व्याप्तिज्ञाने) धर्मितावच्छेदकविधया गोत्वत्वोपस्थितिः ।

तच्च गोवृत्तित्वे सति गवेतरावृत्तित्वरूपम् गोविधेयकानुमितावपि गोत्वविधेयकत्वस्य संभवेन गोः साध्यकत्वमप्रामाणिकमेवेति भावः ।

**अपेक्षितत्वादिति जा० टी० ।**

तथा च गोत्वधर्मितात्मकावच्छेद्यबुद्धौ अवच्छेदकज्ञानस्य हेतुत्वात् गोत्वत्वरूपधर्मितावच्छेदकज्ञानं विना तादृशगोत्वधर्मिकज्ञानानुदयेन कारणाभावात् गोत्वत्वाग्रहकाले गोसाध्यकानुमितिरपि न संभवतीति भावः इति विवृतिः ।

ननु गोत्वत्वघटकगवेतरावृत्तित्वस्य (गोत्वत्वं गवेतरावृत्तित्वे सति सकलगोवृत्तित्वरूपम्, तद्घटक गवेतरावृत्तित्वस्य) समवायसंबन्धावच्छिन्नवृत्तित्वरूपप्रतियोगिकत्वात् (गवेतरनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वरूपप्रतियोगिकाभावत्वात्) सास्नानिष्ठस्य व्याप्तिरूपस्य समवेतत्वसंबन्धावच्छिन्नवृत्तित्वप्रतियोगिकत्वात् (सास्नारूपस्य गवावयवस्य हेतोः अवयविनि गवि समवेतत्वसंबन्धेन वृत्तित्वम्) उभयोर्भेदे (गवेतरावृत्तित्व, सास्नानिष्ठगोनिरूपितव्याप्त्योर्भेदे) गोत्वत्वोपस्थितेः कथं व्याप्त्युपस्थितिरूपत्वमिति चेत् (कथं गोव्याप्तिरूपत्वं

गवेतरावृत्तित्वस्येति चेत्) । गोतादात्म्येन साध्यत्वे समवायेनैव सास्नाया इह हेतुत्वं गोपदं च पृथिवीपरम् (पृथिवीवाचकम्) गवि पृथिव्यां पृथिवीत्वस्य साध्यस्य सत्त्वेन अयं गौः सास्नावत्त्वात् । तथा च व्याप्तेः गोत्वत्व घटकत्वात् निराबाधमिति नासङ्गतिरिति केचित् ।

परे तु साध्यवदन्यावृत्तित्वरूपव्याप्तिपरामर्शस्य तादृशव्याप्त्यवच्छिन्न हेतुप्रकारताशालिनिश्चयत्वेनैव कारणत्वं न तत्र व्याप्तिर्धर्मितावच्छेदकतात्मक विषयत्वस्य प्रवेशोऽनावश्यकत्वात् । तथा च गवेतरासमवेतत्वोपस्थितौ तदवच्छिन्नगोरूपादेः (गवेतरासमवेतत्वावच्छिन्नगोरूपादेः रूपत्वमविषयीकृत्य परामर्शात् अनुमितेः गोत्वविधेयकत्वसंभवात् नासङ्गतिः ।) अतएव तद् विशिष्टस्य यत्र न पक्षधर्मताधीरित्येव वक्ष्यति न तु तद्विशिष्ट (व्याप्तिविशिष्ट)सास्नादेरिति प्राहुः ।

**आदिना पक्षधर्मतापरिग्रहः, तथा च गवेतरावृत्तित्वरूपव्याप्तेः सास्नाव्यापकता(वच्छेदकता)ग्रहे धर्मितावच्छेदकतयोपस्थितिध्रौव्येऽपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैव अयं गौरित्यनुमितेर्गो-विधेयकत्वमावश्यकमिति तदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्य-मित्याशय इति जा० टी० ।**

इदमुपलक्षणम् (व्यापकत्वं वाच्यमित्युपलक्षणम्) । गोत्वत्वानुपस्थितावपि निरवच्छिन्नगोत्वनिष्ठावच्छेदकताकगोविधेयताकानुमितेः साध्यविशेष्यकहेतुमन्निष्ठा-न्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वज्ञानादपि संभवो बोध्यः । न चैवं व्यापकज्ञानस्य कारणत्वपक्षे स्वरूपतो ज्ञानत्वप्रकारकानुमित्यनुपपत्तिरूपदोष प्रतिपादककेवलान्वयिग्रन्थविरोध इति वाच्यम् ।

उक्तव्यापकस्यावच्छेदकतानवच्छेदकधर्मावच्छेदेनावच्छेदकत्वाभावस्य सत्त्वे एव तत्तत्साध्यवद्भेदप्रतियोगितावच्छेदके निर्वाह्यतया प्रतियोगितानवच्छेदकधर्मावच्छेदेन

प्रतियोगित्वाभावस्यैवावच्छेदकत्वाभावस्यापि अनभ्युपगमे तद्व्यापकत्वासंभवेन तदभिप्रायकत्वात् केवलान्वयिग्रन्थस्यासङ्गतेरभावादिति ।

**प्राञ्चस्तु गोतादात्म्यस्य सास्नाव्यापकत्वग्रहादेव गोस्तादात्म्येन सिद्धिसंभवान्न तदनुरोधेन गोस्तादात्म्येन व्यापकत्वस्वीकारो युक्तः संबन्धगतव्यापकत्वग्रहादेव संबन्धिनोऽनुमितेर्मिश्रादिसंमतत्वादत उक्तं गोत्वत्वाद्यग्रहदशायामिति शिरोमणिः । गोतादात्म्यत्वाद्यग्रहदशायामिति तदर्थ इत्याहुः तच्चिन्त्यमिति जा० टी० ।]**

संवन्धधर्मिकव्यापकताग्रहस्य संवन्धिविधेयकानुमितेरपि हेतुत्वे कदा गोतादात्म्यवान् इत्यनुमितिः कदा गौरित्यनुमितिरिति नियमाभावप्रसङ्गेन तस्याकारणत्वे संवन्धधर्मिकव्यापकताग्रहस्य संबन्धिविधेयकानुमितिं प्रत्यकारणत्वे) तदवलम्बनेन (तस्य कारणत्वालम्बनेन) व्याख्यानस्यानुचितत्वमिह चिन्ताबीजम् ।

**गोत्वत्वाद्यग्रहदशायामित्यस्य गोत्वत्वेनाग्रहो यस्मादिति व्युत्पत्त्या गोत्वबाधनिश्चयदशायामित्यर्थः । तथा च तदानीम् अयं गौरित्यनुमित्यर्थं धर्मिणो धर्मव्यापकत्वमवश्यं स्वीकार्यमित्यपि वदन्ति । इति जा० टी० ।**

धर्मिभेद धर्मात्यन्ताभावयोरेकतया भेदबुद्धेरिवात्यन्ताभावबुद्धेरपि विरोधित्वमानुभविकमिति गोत्वत्वावच्छिन्नाभावनिश्चयदशायां तादृशानुमित्यसंभवः (अयं गौरित्यनुमित्यसंभवः) एवास्वरसोऽपिना सूचितः ।

क्वचित्पुस्तके प्रतियोगिताधर्मिकोभयाभावघटितलक्षणाभिप्रायेण गोत्वत्वाद्यग्रहदशायामित्यादिग्रन्थव्याख्यानमस्ति । तस्यायमाशयः । अनुव्यवसायानुरोधेनोल्लिख्यमानस्यापि (उल्लिख्यमानाया अपि) जातेनिरूपितत्वादिसंबन्धेन स्वरूपतोभाने प्रकारित्व इव अवच्छेद्यत्वेऽपि निरूपितत्वसंबन्धेन स्वरूपतो भानं स्वीक्रियते इति गोत्वत्वाद्यनुपस्थितावपि गोविधेयकानुमित्युपयोगिव्याप्ति

ग्रहस्य संभव इति । न च केवलान्वयिग्रन्थे स्वरूपतो ज्ञानत्वप्रकारकानुमित्यनुपपत्तेर्व्यापकता ज्ञानकारणत्वपक्षे उद्भावितत्तयाऽसङ्गतिरिति वाच्यम् । अवच्छेद्यत्वे निरूपितत्वसंबन्धेन स्वरूपतो भानानभ्युपगमेन तदुक्तेः संगतत्व संभवादिति । वस्त्वन्तर इति विभुरूपेत्यर्थः । विभुद्वयसंयोगस्यानङ्गीकारादिति भावः । गगनासंयुक्तपृथिव्युत्पत्तौ पृथिवीत्वादित्यत्र गगनसंयुक्तमात्रवृत्तिधर्मोप ग्रहायादीत्युक्तमिति ।

**नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मस्य(महाकालत्वादेः) विशेषणताविशेषेणा(कालिकेना)व्याप्यवृत्ति(घटादि)किमपि व्यापकं न स्यादिति ।**

अथात्र महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वाभावः कालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदके (घटत्वादौ) आपाद्यते । आपादकं च महाकालवृत्तिभेदप्रतियोगितावच्छेदकाधिकरणतानिरूपितनिरूपकतानवच्छेदककालिकसंबन्धावच्छिन्नाव्याप्य वृत्तितावच्छेदकत्वम् । महाकालवृत्तिभेदीयप्रतियोगितानिरूपितपरंपरावच्छेदकतावत्प्रति योगितानवच्छेकत्वसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वं वा । स च न संभवति । आपाद्याप्रसिद्धेः । न च स्व(हेतु)सामानाधिकरणप्रतियोगि व्यधिकरणाभावप्रतियोगितानवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकमहाकालत्वाभाव आपाद्यः । उक्तसंबन्धस्य तत्क्रियात्वादेः प्रसिद्धत्वेन तेन (संबन्धेन) महाकालत्वाभावो नाप्रसिद्ध इति वाच्यम् । इष्टापत्तेः । न च प्रति योगिवैयधिकरण्यपदार्थत्वेन प्रवेशे, नेष्टापत्तिरिति वाच्यम् । तथापीदानीम् प्रतियोगिवैयधिकरण्यान्तरस्याज्ञायमानतयाऽऽपाद्यव्यतिरेकनिष्ठस्यासंभवेनापत्तिकारणस्याभावादिति चेन्न । (कालो घटवान् महाकालत्वादित्यत्र कालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदके घटत्वादौ महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वाभाव आपाद्यते, आपादकञ्च महाकालवृत्तिभेदीय

प्रतियोगितावच्छेदकाधिकरणतानिरूपितनिरूपकतानवच्छेदककालिकसंबन्धावच्छिन्नाव्याप्य वृत्तितावच्छेदकत्वम् घटत्वं यदि महाकालवृत्तिभेदीयप्रतियोगितावच्छेदका(घटा) धिकरणतानिरूपितनिरूपकतानवच्छेदककालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्ववत् स्यात् तर्हि महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वाभाववत् स्यात् । अथवा घटत्वं यदि महाकालवृत्तिभेदीयप्रतियोगितानिरूपितपरंपरावच्छेदकतावच्छेदकतावत्प्रतियोगितानवच्छेदक(कालिक)संबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकतावत् स्यात् तर्हि महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वाभाववत् स्यात् । स च (आपाद्यापादकभावः) न संभवति । आपाद्याप्रसिद्धेः । कालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदके घटत्वादौ महाकालत्वसमानाधिकरणकालिकसंबन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वव्यापकतावच्छेदकत्वाभाव आपाद्यते स न प्रसिद्धयति । हेत्वधिकरणे काले कालिकेन सर्वपदार्थस्य (अव्याप्यवृत्तिसर्वपदार्थस्य) सत्त्वेन तेन (कालिकेन तत्र (काले) प्रतियोगिव्यधिकरणाभावाप्रसिद्धया तादृशाभावीयप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वाभावरूपापाद्यस्याप्रसिद्धेः । प्रसिद्ध आपाद्यते नाप्रसिद्ध इति । न च (महाकालत्वरूपहेतु) स्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वसंबन्धावच्छिन्नप्रतियोगिताकमहाकालत्वाभाव आपाद्यः उक्तसंबन्धस्य प्रतियोगिवैयधिकरण्याघटिततादृशव्यापकतावच्छेदकत्वरूपसंबन्धस्य तत्क्रियात्वादेः प्रसिद्धया तेन (उक्तसंबन्धेन) महाकालत्वाभावः प्रसिद्धयति । व्यधिकरणसंबन्धावच्छिन्नाभावस्य केवलान्वयित्वात् आपाद्यस्य वैयधिकरण्यघटितत्वेनास्य संबन्धस्य व्यधिकरणत्वाघटितत्वात् व्यधिकरणत्वमिति वाच्यम् । घटत्वे तेन व्यधिकरणसंबन्धेन महाकालत्वाभावस्य सिद्धस्येष्टापत्तेः सिद्धिसाधनापत्तेश्च । न च प्रतियोगिव्यधिकरणत्व पदार्थत्वेन प्रवेशे नेष्टापत्तिरिति वाच्यम् (न च हेतुसमानाधिकरणप्रतियोगि व्यधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वसंबन्धेन घटत्वादौ महाकालत्वाभाव आपाद्यते तस्यापाद्यस्य नेष्टापत्तिः न वा सिद्धिसाधनं

वेति वाच्यम्) तथापीदानीं प्रतियोगिवैयधिकरण्यान्तरस्याज्ञायमानतयाऽऽपाद्य व्यतिरेकस्य घटत्वनिष्ठस्यासंभवेनापत्ति कारणस्य (आपाद्यव्यतिरेकस्य) अभावात् नापत्तिः संभवतीति चेन्न । व्यापकत्वशब्दार्थतां पक्षीकृत्य साध्यतावच्छेदक संबन्धावच्छिन्नस्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वादिरूपप्रतियोगिवैयधिकरण्य घटितवृत्तित्वेनापादकेनोक्तनिरूपकतानवच्छेदककालिसंबन्धावच्छिन्नाव्याप्यवृत्तितावद् वृत्त्यवृत्त्यत्वमेव ह्यापाद्यते, घटादिसाध्यकमहाकालत्वादेः सद्धेतुत्वनिश्चयादेव घटत्वादौ महाकालत्वव्यापकत्वस्य निश्चयेनापाद्यव्यतिरेकनिश्चयसंभवात् । उत्तर ग्रन्थेन प्रतियोगिवैयधिकरण्यान्तरस्य व्यापकत्वघटकस्य प्रतिपादनेनापादकासत्त्व प्रतिपादनमेव करिष्यत इति । (व्यापकत्वशब्दार्थतां पक्षीकृत्य साध्यता वच्छेदककालिकसंबन्धावच्छिन्नस्व(हेतु)समानाधिकरणाभावप्रतियोगितावच्छेदका वच्छिन्नानधिकरणत्वरूपप्रतियोगिवैयधिकरण्याघटिनेनापादकेनोक्तनिरूपकतानवच्छेदक (हेत्वधिकरणवृत्ति भेदप्रतियोगितावच्छेदकाधिकरणतानिरूपितनिरूपकतानवच्छेदक) कालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावदवृत्त्यवृत्तित्वमेव हि आपाद्यते ।

### उत्तरग्रन्थेन (इदानीं महाकालान्यत्वेति जा० टी० ग्रन्थेन ।

प्रतियोगिवैयधिकरण्यान्तरस्य (अत्रोक्तप्रतियोगिवैयधिकरण्यभिन्नवैयधि-करण्यस्य) व्यापकत्वघटकस्य प्रतिपादनेनापादकासत्त्वप्रतिपादनमेव करिष्यते इति । महाकालवृत्ति हेतुसमानाधिकरण भेदप्रतियोगितावच्छेदकाधिकरणता निरूपितनिरूपकतानवच्छेदककालिकसंबन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकत्वस्यापाद कस्यासत्त्वप्रतिपादनमेव करिष्यते इति ।

यद्वा महाकालत्वलिङ्गकघटादिविधेयकानुमितिर्यदि निरूप्यनिरूपकभावा पन्नविषयताक महाकालत्वसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगितान वच्छेदकघटत्वावच्छिन्नसमानाधिकरणमहाकालत्ववानयमिति परामर्शजन्या स्यात् तत्राऽभ्रान्तपुरुषवृत्तिर्न स्यादित्यापादने तात्पर्यम् ।

### उत्तरग्रन्थे (इदानीं) महाकालान्यत्वविशिष्टो घट इत्यादि ।

जगदीशग्रन्थे पूर्वोक्तभिन्नप्रतियोगिवैयधिकरण्यप्रतिपादनेन तद्घटितव्यापकताज्ञानस्य कारणत्वप्रतिपादनात् आपादकासत्त्वसूचनेनापत्ति निराकरिष्यते इति। आपत्ति प्रत्यापादकज्ञानं कारणमिति न ह्यापादकं विनाऽऽपादनं संभवति।

केचित्तु विधेयतावच्छेदकत्वस्य (हेतु)व्यापकतावच्छेदकत्वनियतत्वेन तदभाव (व्यापकतावच्छेदकत्वाभाव) अव्याप्यवृत्तितावच्छेदके प्रतिपादनेनोक्त निरूपकतावच्छेदक (हेत्वधिकरणमहाकालवृत्तिभेदप्रतियोगितावच्छेदकाधिकरणता निरूपितनिरूपकतानवच्छेदककालिकसंवन्धावच्छिन्नाव्याप्यवृत्तितावच्छेदकघटत्वे महाकालत्वलिङ्गकप्रमानुमितीयकालिकसंवन्धावच्छिन्नविधेयतावच्छेदकत्वाभाव एवोक्तानुमितित्वावच्छिन्न (कालो घटवान् महाकालत्वादित्यनुमितित्वावच्छिन्न) जन्यता निरूपितजनकतावच्छेदकव्यापकत्व (हेतुव्यापकत्व; विषयतानिरूपितविषयत्वस्य प्रमीय विषयत्वीयस्वरूपसंवन्धावच्छिन्नप्रतियोगिताकाभावेनापादकेनापाद्यते। व्यापकतावच्छेदकत्वविषयता च निरूप्यनिरूपकभावापन्ना ग्राह्येति नाप्रसिद्धिः।

**उत्तरग्रन्थेन (इदानीं महाकालान्यत्वविशिष्टघट इत्यादि जा० टी० ग्रन्थेन।)**

कारणीभूत (अनुमितिकारणीभूत) ज्ञानस्य विषयसिद्धिद्वारा प्रमात्व-प्रतिपादनेनापत्ति निराकरिष्यते इति वदन्ति।

**नन्वष्टद्रव्यातिरिक्तेति जा० टी०।**

नन्वष्टद्रव्यातिरिक्तत्वं यदि प्रत्येकं क्षित्यादिभिन्नत्वं तदा कालपद वैयर्थ्यम् तेनैव कालस्य लाभात्। यदि च द्रव्यविभाजकीभूतधर्मावच्छिन्न प्रतियोगिताकाष्टभेदपरं तदा घटत्वस्यापि तथात्वेन व्यापकत्वस्यापि गोत्वादौ प्रसिद्धिसंभव इति चेदत्र केचित् प्रत्येकभेद एव तात्पर्यम्, कालपदं तु कालिकविशेषणतालाभायेत्याहुः।

वस्तुतः कालावृत्तिद्रव्यविभाजकधर्मावच्छिन्नप्रतियोगिताकाष्टभेदवत्त्वं तद-तिरिक्तत्वं (अष्टद्रव्यातिरिक्तत्वम्)। कालपदं कालावृत्तित्वलाभायेति ध्येयम्।

एवं धर्मपदमित्यपि। येन संबन्धेन (कालिकसंबन्धेन) कालमात्रवृत्तित्वं तेन संबन्धेन हेतुतालाभाय । एवं महाकालत्वं परित्यज्यैतादृशहेत्वनुसरणम् (अष्टद्रव्यातिरिक्तकालमात्रवृत्तिधर्मस्यानुसरणम् ।) तेन महाकालत्वतद्व्यक्तित्वादि नानाधर्मसंग्रहः ।

यत्तु महाकालशक्यतावच्छेदको निरुक्त(अष्टद्रव्यातिरिक्त,कालमात्रवृत्ति-धर्म इति तदनुसरणमिति (अष्टद्रव्यातिरिक्तानुसरणमिति) तु न युक्तम् । अष्टद्रव्यातिरिक्त इत्यत्र चतुर्द्रव्यातिरिक्त:(पृथिवीजलतेजोवाय्वतिरिक्तः) इति न्याय इति अष्टद्रव्यातिरिक्तेति जगदीशग्रन्थासंगतेरित्यस्मद्गुरुचरणाः ।

नन्वष्टद्रव्यातिरिक्तेत्यत्राव्याप्यवृत्तिधर्मावच्छेदेन (घटत्वादौ) तादृश(अष्ट-द्रव्यातिरिक्त)कालमात्रवृत्ति हेतुरूप) धर्मव्यापकत्वाभावः साधनीयः । तत्र व्याप-कत्वं किं कालिकसंबन्धेन प्रतियोगिव्यधिकरणनिरुक्त(अष्टद्रव्यातिरिक्त)महाकालत्व समानाधिकरणाभावप्रतियोगित्वाभावरूपम् किं वा प्रतियोगिवैयधिकरण्याघटित-निरुक्त(हेतुसमानाधिकरणसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकाभाव)प्रतियोगि-मत्ताबुद्धिविरोधिताघटकसंबन्धेन निरुक्त(अष्टद्रव्यातिरिक्त)महाकालत्वसमानाधिकरणा-भावप्रतियोगित्वाभावरूपम् ? नाद्यः निरुक्तप्रतियोगित्वाभावरूपव्यापकत्वाप्रसिद्धेः । साध्यतावच्छेदककालिकसंबन्धेन हेत्वधिकरणे सर्वेषां जन्यपदार्थानां सत्त्वेन साध्यतावच्छेदककालिकसंबन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या तादृशव्यापकत्वा-प्रसिद्धेः) साध्याप्रसिद्धिप्रसङ्गात् । (प्रतियोगिव्यधिकरणघटिततादृशव्यापकत्वा-भावरूपसाध्याप्रसिद्धिप्रसङ्गात्) । नापि द्वितीयः अव्याप्यवृत्तितावच्छेदकघटत्वादि धर्मे निरुक्त(अष्टद्रव्यातिरिक्त)कालत्वसमानाधिकरणाभावप्रतियोगित्वाभावरूप-व्यापकत्वाभावस्ये (साध्यरूपस्ये)ष्टत्वेन सिद्धिसाधनापत्तेः । अव्याप्यवृत्तिता-वच्छेदकघटत्वादिधर्मे तादृशप्रतियोगित्वाभावरूपव्यापकत्वाभावस्य सिद्धत्वात् इदानीं घटो नास्तीत्यभावप्रतियोगित्वस्य घटे सत्त्वात् । न च व्याप-कत्वसंबन्धेन निरुक्त(अष्टद्रव्यातिरिक्त) कालत्वाभावः (अव्याप्यवृत्तितावच्छेदक-

घटत्वादौ साधनीयः क्रियात्वरूपधर्मस्य तादृशव्यापकत्वरूपसंबन्धस्य प्रसिद्धेः महाकालत्वादेश्च व्यधिकरणतया तादृशः (तादृशव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगित्वाभावरूपव्यापकत्वरूपः) संवन्धः (तत्तत्क्रियायाःप्रसिद्धः) इति न कोऽपि दोष इति वाच्यम् । निरुक्तव्यापकतारूपसंबन्धो यदि प्रतियोगिव्यधिकरणघटितः, तदा निरुक्त(अष्टद्रव्यातिरिक्त)कालत्वादिधर्मस्य व्यधिकरणतया (कालिकेन हेत्वधिकरणे काले प्रतियोगिव्यधिकरणाभावस्याप्रसिद्धया तद्-घटितव्यापकत्वस्य व्यधिकरणतया व्यधिकरणसंवन्धावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वेन सर्वत्र सत्त्वात्) प्रमेयत्वादिष्वपि तदभावस्य सत्त्वात् (तादृशव्यापकत्वाभावस्य सत्त्वात्) अव्याप्यवृत्तिपदवैयर्थ्यापत्तेः । यदि च प्रतियोगिवैयधिकरण्याघटितः (तादृशव्यापकत्वरूपसंबन्धः) तदा निरुक्तयुक्त्या सिद्धिसाधनापत्तेः (अव्याप्यवृत्तितावच्छेदकधर्मे अष्टद्रव्यातिरिक्तकालत्वसमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वाभावस्य साध्यस्वरूपस्येष्टत्वेन सिद्धिसाधनापत्तेः । घटे इदानीं घटो नास्तीत्यभावप्रतियोगित्वस्य सत्त्वादिति चेदत्र केचित् । अव्याप्यवृत्तिधर्मं (घटत्वादिकं) पक्षीकृत्य प्रतियोगिवैयधिकरण्यघटितव्यापकतावच्छेदकत्व, तदघटित (प्रतियोगिवैयधिकरण्याघटित) व्यापकतावच्छेदकत्वैतदुभयसाधारणैकरूपेण संसर्गत्व मादायाष्टद्रव्यातिरिक्तकालत्वाभावः प्रवेशनीयः । संसर्गतावच्छेदकरूपश्च स्व-(लक्षणघटकाभाव)निष्ठनिरूपकत्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिरूपिताधिकरणत्व-निष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकता-भिन्ना सती (अभावाधिकरणनिरूपितत्वनिष्ठावच्छेदकताभिन्ना सती) अयं निवेशः प्रतियोगिव्यधिकरणस्येति बोध्यम् । स्व (अभाव)प्रतियोगिमत्ताबुद्धि-विरोधितावच्छेदकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना सती स्व(अभाव)प्रति-योगितावच्छेदकावच्छिन्नाधिकरणत्वसंबन्धावच्छिन्नस्व(अभाव)निष्ठावच्छेनकताकभेद-वत्त्वसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकताभिन्ना सती वृत्तितात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिता हेत्वधिकरणनिरूपितवृत्तितानिष्ठावच्छेदकता तन्निरूपिताभावनिष्ठावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकताकसंसर्गताक-

(संबन्धावच्छिन्नसंसर्गताक) स्व(अभाव)निष्ठावच्छेदकताकभेदवत्त्वम् । साध्यतावच्छेदके तदवच्छिन्नसमानाधिकरण्यं व्याप्तिरिति फलितम्) । इत्थञ्च स्व (अभाव)निष्ठनिरूपकताका(हेत्वधिकरणनिष्ठा)धिकरणतावन्निरूपित स्वप्रतियोगिमत्त्वबुद्धिविरोधिताघटकसंबन्धावच्छिन्नहेत्वधिकरणनिरूपितवृत्तितावदभावप्रतियोगितावच्छेदकतासंबन्धेन स्ववान्नेति भेदस्य (हेत्वधिकरणनिष्ठस्य) स्व(लक्षणघटकाभाव)निष्ठनिरूपकताका(हेत्वधिकरणनिष्ठा)धिकरणतावन्निरूपित स्व(अभाव) प्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्व (प्रतियोग्यधिकरणत्व)संबन्धावच्छिन्नस्व (अभाव)निष्ठावच्छेदकताकभेदवत्त्वसंबन्धावच्छिन्नवृत्तितावदभावप्रतियोगितावच्छेदकत्वसंबन्धेन स्ववान्नेत्याकारकभेदस्य च संग्रहान्नासिद्धिर्न वा अव्याप्यवृत्तिदलवैयर्थ्यमित्याहुः ।

वस्तुतस्तु अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मत्वावच्छेदेनाव्याप्यवृत्तितावच्छेदकघटत्वाद्यवच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानिरूपितविपयत्वसंबन्धावच्छिन्नावच्छेदकताऽनतिरिक्तवृत्तिधर्माभाववत्त्वमेव साधनीयत्वान्नोक्तदोषः (साध्याप्रसिद्धिसिद्धसाधनोक्तदोषः) । तादृशजनकतानतिरिक्तवृतिधर्मप्रसिद्धिश्च (तादृशजनकतानिरूपितावच्छेदकतानतिरिक्तवृत्तिधर्मप्रसिद्धिश्च) क्रियात्वादावेव, हेतुश्च कालिकसंबन्धावच्छिन्नप्रतियोगिताविशिष्टान्यत्वरूपः, प्रतियोगितावैशिष्टयञ्च स्वावच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतावद्भिन्नवृत्तित्वसंबन्धेनेत्यस्मद्गुरुचरणाः ।

केचित्तु अव्याप्यवृत्तितावच्छेदकधर्मत्वावच्छेदेन महाकालानुयोगिकानुमितीयकालिकसंबन्धावच्छिन्नविधेयताकत्वाभावः साधनीयः । हेतुश्च महाकालत्वलिङ्गकप्रमीयानुमितिजनकतावच्छेदकीभूतपक्षविषयतानिरूपितहेतुविषयतानिरूपितहेत्वधिकरणनिरूपितवृत्तित्वविषयतानिरूपिता(हेत्वधिकरणनिष्ठा धिकरणत्वविषयतानिरूपितावच्छिन्नत्वविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितावच्छेदकत्वविषयतानिरूपिताभावनिष्ठविषयताविषयत्वाभाव इत्याहुः ।

**तादृशसाध्यं घटादिकं द्रव्यत्वादिकं च तद्वतोऽपि कालस्य तदनधिकरणदेशावच्छेदेन कालिकसंबन्धावच्छिन्नतदभाववत्त्वात् इति जा० टी० ।**

तदनधिकरणदेशेति । देशपदोपादानात् अधिकरणत्वस्यावच्छेदको दैशिक साक्षात्संबन्धो लभ्यते । तेन देशस्य कालिकेनाधिकरणत्वेऽपि न क्षतिः, न वा देशपदस्य वैयर्थ्यमिति ।

**न ह्येवं विधो वाच्यत्वादिः तद(वाच्यत्वाद्य)नधिकरणदेशाप्रसिद्धया तदनवच्छेदेन (वाच्यत्वाद्यनधिकरणदेशानवच्छेदेन) कालिकसंबन्धावच्छिन्नवाच्यत्वाभावस्य दैशिकविशेषणतया कालेऽसंभवादिति भाव इति जा० टी० ।**

देशाप्रसिद्धया तदनवच्छेदेनेति । वाच्यत्वत्वं यतो न किञ्चिन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकम् (केवलान्वयितावच्छेदकत्वात्) अतो न महाकालनिष्ठाभावप्रतियोगितावच्छेदकमिति तात्पर्यार्थः । तेनाप्रसिद्धस्यावच्छेदकत्वासंभवेऽपि न क्षतिः ।

**महाकालान्यत्वविशिष्टघटाभाव एव महाकाले प्रतियोगिव्यधिकरणः सुलभ इति जा० टी० ।**

महाकालान्यत्वविशिष्टाघटाभाव इति । ननु घटवान् महाकालत्वादित्यत्राव्याप्तेरेव पूर्वमुक्ततया तत्स्थले एवाव्याप्तिवारणशङ्का युक्ता, सा चासंभाविनी, उक्तप्रतियोगित्वे(हेत्वधिकरणवृत्तिमहाकालान्यत्वविशिष्टघटाभाव प्रतियोगित्वे) तदितरोभयानवच्छिन्नत्वरूपविशेषणविरहात् (साध्यतावच्छेदकघटत्व तदितरमहाकालान्यत्ववैशिष्ट्योभयावच्छिन्नत्वस्य तदभावीयप्रतियोगितायां सत्त्वेन तस्याः लक्षणाघटकत्वात् । कालो घटवान् महाकालत्वादित्यत्र महाकालान्यत्व विशिष्टघटाभावो यदि लक्षणघटकः स्यात्, तदा तत्प्रतियोगितावच्छेदकत्वस्यैव साध्यतावच्छेदके सत्त्वेन तत्राव्याप्तिः स्यादिति चेन्न । कालो घटवान्

महाकालत्वादित्यत्रादिपदस्य प्रागुक्ततया च घटसाध्यके महाकालान्यत्वविशिष्ट पटाभावं, पटसाध्यके महाकालान्यत्वविशिष्टघटाभावञ्चादायाव्याप्तिवारणे एव ग्रन्थतात्पर्यात् । पृथिवीत्वव्याप्य९टत्वविशिष्टसाध्यके महाकालान्यत्वविशिष्ट तेजस्त्वव्याप्यघटत्वविशिष्टाभावमादायाव्याप्तिवारणे वा ग्रन्थतात्पर्यादिति सुलभ इति । महाकालान्यत्वविशिष्टघटस्य महाकालावृत्तित्वे एव महा कालान्यत्वविशिष्टघटाभावः प्रतियोगिव्यधिकरणः, तस्य तत्त्वे महाकालान्यत्व विशिष्टघटस्य कालावृत्तित्वे) महाकालस्य गदाधरत्वप्रवादव्याकोप इति वाच्यम् । विशिष्टस्य शुद्धानतिरिक्ततया कालिकेन विशेषणविशेष्योभयाधि-करणतयैव सर्वाधारत्वोपपत्तेरिति भावः ।

**तथा सति कालमात्रवृत्तिधर्मस्य तादृशविशेषणतया किमपि व्यापकं न स्यादित्यस्यैव सम्यक्त्वे अष्टद्रव्यातिरिक्तत्वाभिधानस्य सन्दर्भविरोधापत्तेरिति जा० टी० ।**

नन्वष्टद्रव्यातिरिक्तेत्यादिघटकविशेषणताविशेषपदस्य महाकालानुयोगिक-कालिक संबन्धपरत्वमेवोच्यतां तावतैव महाकालान्यत्वविशिष्टघटाभावो न प्रतियोगि व्यधिकरणः, तद्दीयप्रतियोगितावच्छेदकीभूतमहाकालानुयोगिककालिकसंबन्धेन महाकाला न्यत्वविशिष्टघटादिप्रतियोगिनोऽधिकरणाप्रसिद्धेरिति कुतः प्रतियोगिव्यधिकरणा भावप्रसिद्धिरित्याशङ्कते—

**न चात्रेति । अत्रेति नन्वित्यादिग्रन्थे । विशेषणताविशेषपदेन महा-कालनिरूपितविशेषणतायाः (महाकालानुयोगिककालिकसंबन्धस्य) विवक्षि-तत्वात् तादृशसंबन्धेन निरुक्त(प्रतियोग्यधिकरणावृत्तित्वरूप) प्रतियोगि-वैयधिकरण्याप्रसिद्ध्यै वोक्ताभावस्यापि (महाकालान्यत्वविशिष्टघटाभाव-स्यापि) प्रतियोगिवैयधिकरण्यासंभव इति वाच्यम् इति जा० टी० ।**

तथा सति कालमात्रवृत्तिधर्मस्येति मात्रपदोपादानात् कालवृत्त्युभयावृत्ति धर्मस्य हेतुत्वं, धर्मपदोपादानाच्च येन संबन्धेन तन्मात्र(कालमात्र) वृत्तित्वं तेनैव

(कालिकेनैव संबन्धेन) हेतुत्वं च लभ्यते । तथा च कालवृत्त्युभयावृत्ति धर्मस्यैव विशेषणताविशेषेण (कालिकेन) स्वाश्रय(हेत्वाश्रय)निरूपितविशेषणतया (कालिकेन) किमपि व्यापकं न स्यादित्यर्थः । तत्र धर्मस्य विशेषण विशेषेणेत्युक्तौ विशेषणतानिष्ठस्य प्रकृतहेत्वाश्रयनिरूपितत्वरूपस्य विशेषणस्यैव लाभेन कालत्वाश्रयनिरूपितविशेषणतया घटादिसाध्यककालत्वादिहेतोरपि उद्देश्य तया तत्राव्याप्तिविरहेण (यत्किञ्चित्काले तत्पटाभाव एव प्रतियोगिव्यधिकरणो लक्षणघटक इति भावः) ग्रन्थे न्यूनता स्यादिति कालमात्रवृत्तीत्युक्तम् । प्रकृतहेत्वाश्रय(महाकालत्वाश्रय)निरूपितत्व(महाकालानुयोगिकत्व)विशेषस्यैव विवक्षि तत्वे अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रधर्मस्य हेतुतायां महाकालनिरूपित विशेषणत्वमेव लभ्यते इत्याशयेन विशेषणताविशेषपदेन महाकालीयविशेषण तयाऽवृत्ति किमपि व्यापकं न स्यादिति कथं नोक्तमित्याशङ्कापि अपास्ता। महाकालीयविशेषणतात्वेन शब्दानुपादेयत्वे यथावृत्तौ वैयर्थ्याभावादित्याशयः ।

सन्दर्भविरोधापत्तेरिति । तथा च विशेषरूपेण संसर्गत्वानभ्युपगमाभि प्रायकत्वमनुसृत्य विशेषणतानिष्ठस्य कालिकस्यैव विशेषपदार्थताया वाच्यतया कालिकविशेषणतया साध्यतायां नाव्याप्तिरिति भावः । (अयं कालः तत्पटासमानकालः) घटवान् तत्कालत्वादित्यत्र तत्पटाभावः प्रतियोगिव्यधि करणस्तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदकघटत्वे सत्त्वात् इति तत्रा- व्याप्तिदानपरकग्रन्थरूपसन्दर्भविराधापत्तेरिति भावः) ।

अष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्मेत्यन्तं विशेषपदस्य महाकाली- यत्वरूपविशेषे (महाकालानुयोगिककालिकविशेषे) तात्पर्यग्राहकमिति न वैयर्थ्य- संभव इति यदि ब्रूयात् तदाप्याह—

**स्वरूपसंबन्धेन (कालिकरूपस्वरूपसंबन्धेन) गगनादेर्वृत्तित्वे तु इत्यग्रिमग्रन्थविरोधप्रसङ्गाच्च इति जा० टी० ।**

विवृतिः पूर्वमतस्येति । कालिकसंबन्धेन गगनादेर्वृत्तित्वेऽपि तादृश

संबन्धसामान्ये (महाकालानुयोगिकसंबन्धसामान्ये) महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिकत्वविरहात् तादृशघटत्वावच्छिन्नाभावस्यैव निरुक्तक्रमेण (संबन्धधर्मिकोभयाभावघटितलक्षणोक्तरीत्या) प्रतियोगिव्यधिकरणत्वसंभवेन पूर्वमतस्यैव सम्यक्त्वादिति चेन्न (पूर्वमतस्यैवेति गगनादेः कालिकसंबन्धेन वृत्तित्वमते कालिकसंबन्धसामान्ये गगनप्रतियोगिकत्वमहाकालानुयोगिकत्वयोर्द्वयोरेव सत्त्वाद् गगनाभावो घटवान् महाकालत्वादित्यत्र न प्रतियोगिव्यधिकरणोऽतः संबन्धधर्मिकोभयाभावघटितलक्षणं परित्यज्य प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमभिहितं दीधितौ विशेषणताविशेषपदस्य महाकालानुयोगिककालिकसंबन्धपरत्वे तु तादृश(महाकालानुयोगिक)कालिकसंबन्धे महाकालान्यत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्त्वात् महाकालान्यत्वविशिष्टघटाभावस्यैव निर्दोषतया प्रतियोगिताधर्मिकोभयाभावघटितलक्षणानुसरणस्य निर्बीजत्वापत्तेरिति भाव इति विवृतिः । पूर्वपक्षस्यैवेति संबन्धधर्मिकोभयाभावघटितकल्पस्यैवेत्यर्थः ।

इदानीं महाकालान्यत्वविशिष्टघटः, कालोऽयं महाकालान्यत्वविशिष्टघटवान् इत्यादिप्रतीत्या महाकालस्यापि तत्तत्कालोपाध्यवच्छेदेन महाकालान्यत्वविशिष्टघटवत्त्वात्, तथा च प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्या घटवान् महाकालत्वादित्यत्राव्याप्तिरिति भावः ।

**अन्यथोक्तरीत्या खण्डकाल एव विशिष्टघटत्त्वावगाहने वस्तुमात्रस्यैव महाकालेऽसत्त्वप्रसङ्गात्, इदानीं तदानीमित्यादिप्रतीतिव्यतिरेकेण महाकालविषयिण्याः प्रतीतेः स्वरसतः कुत्राप्यसत्त्वादिति जा० टी० ।**

स्वरसत इति महाकालत्वावच्छिन्नविषयकत्वेनानुव्यवसीयमानतयेत्यर्थः ।

**न च खण्डकालस्याधिकरणत्वे मानाभावः । पटध्वंसविशिष्टः कालः पटवदन्य इत्यादि प्रतीतेः प्रमात्वानुरोधेनैव खण्डकालस्यापि**

तथात्वात् (अधिकरणत्वात्) इति सिद्धान्तानुसारी पन्थाः इति जा० टी० ।

पटध्वंसविशिष्ट इति । इदानीं पटध्वंस इति प्रतीतेः तत्तत्क्रिया विशिष्टकालेऽधिकरणत्वावगाहिन्या विशेषणेऽधिकरणत्वानवगाहित्वे इत्यादेः (एवमित्यादेः) मानाभाव इत्यन्तस्यार्थः ।

**अपरे तु महानसीयवह्नित्वेन वह्निघटोभयत्वेन वाऽवच्छिन्नप्रतियोगिताकस्य धूमसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिभिया अवश्यं साध्यतावच्छेदकत्वाघटको यो साध्यवृत्तिधर्मस्तदनवच्छिन्ना हेतुसमानाधिकरणाभावस्य प्रतियोगितालक्षणे निवेशनीया इति जा० टी० ।**

एकव्यक्तिमात्रवृत्तिसाध्यकेऽव्याप्तिं ग्राहयितुमाह उभयत्वेनेति । यत्तु महानसीयत्वस्य महानसवृत्तिस्वरूपतया तदवच्छिन्न(महानसीयत्वावच्छिन्न)प्रतियोगितायां साध्यतावच्छेदकताघटक(समवाय)संबन्धानवच्छिन्नावच्छेदकत्वानिरूपितत्वविरहेण लक्षणाघटकत्वादाह—वह्निघटोभयत्वेनेति । न चोभयत्वमपि पर्याप्तिसंबन्धेनैवावच्छेदकमिति तदवच्छिन्नाभावो(उभयत्वावच्छिन्नाभावो) न लक्षणघटकः । साध्यतावच्छेदकताघटकसमवायभिन्नपर्याप्तिसंबन्धावच्छिन्नतादृशोभयत्व(वह्निघटोभयत्व)निष्ठावच्छेदकत्वस्य तदीयप्रतियोगितायां सत्त्वेन तदभावस्य लक्षणाऽघटकत्वादिति वाच्यम् । धर्मत्रयस्य (वह्नित्वघटत्वोभयत्वैतद्धर्मत्रयस्य) अवच्छेदकत्वस्थले समवायेनोभयत्वस्यावच्छेदकत्वेऽपि क्षत्यभावात् । (साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्ना वह्नित्वे घटत्वे उभयत्वे च वर्तमानाऽवच्छेदकता तन्निरूपितत्वस्यैव प्रतियोगितायां सत्त्वेन तदभावस्य लक्षणघटकत्वादिति) तत्तुच्छम् । महानससंयोगविशिष्टवह्न्यभावस्यापि महानसीयवह्न्यभावत्वेन तद्वारणादिति । (महानसीयवह्न्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिदोषसंभवे तं परित्यज्य वह्निघटोभयाभावमादाय तत्राव्याप्तिदोषदाने निर्बीजत्वापत्तेरिति भावः) ।

इत्थं च यत्र समवायेन घटत्वविशिष्टस्य कालिकसंबन्धेन साध्यता तत्र महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वमप्रसिद्धं स्वरूपसमवायाभ्यामेव तथात्वात् विशिष्टनिरूपित(प्रतियोगिक)समवायस्यानभ्युपगमादिति जा० टी० ।

इत्थं च यत्र समवायेन घटत्वादिविशिष्टस्येति । इदं च किमपि व्यापकं न स्यादित्यत्र किंशब्दस्य समवायादिसंबन्धेन धर्मविशिष्टार्थतामभ्युपेत्य तेन स्वरूपसंबन्धेन किञ्चिद्विशिष्टसाध्यकस्थलेऽव्याप्त्यभावेऽपि न क्षतिः । (कालो तद्व्यक्तिमान् महाकालत्वादित्यत्र तद्व्यक्त्यसमानकालीनापरव्यक्त्यभाव महाकालान्यत्वविशिष्टतद्व्यक्त्यभावादेर्लक्षणघटकत्वेनाव्याप्त्यभावेऽपि न क्षति.) स्वरूपसमवायाभ्यामेव तथात्वादिति । अथ महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकताया अपि साध्यतावच्छेदकताघटकसमवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतया कथं तद्वारणमिति चेत् । अत्र केचित् वह्नित्वनिष्ठावच्छेदकतानिरूपिता सती (निरूपितायाः सत्याः महानसीयत्वनिष्ठावच्छेदकताकनिरूपकताया वह्न्यभावप्रतियोगितावच्छेदकावच्छिन्नतया तद्वारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिता सती प्रतियोगितावच्छेदकतासमानाधिकरणाधेयत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपिता या अवच्छेदकताभिन्ननिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वेन भेदस्य प्रतियोगितावच्छेदकावच्छिन्ननिरूपकत्वनिष्ठावच्छेदकताया उपादेयतया महाकालान्यत्वनिष्ठावच्छेदकताया अधिकावच्छेदकतात्वेन तादृशनिरूपकताकाधिकरणतावद्भेदस्य लक्षणाघटकत्वात् । (साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिता सती प्रतियोगितावच्छेदकता (वह्नित्वनिष्ठावच्छेदकता)समानाधिकरणाधेयत्वसंबन्धावच्छिन्नावच्छेदकता(वह्नित्वनिष्ठावच्छेदकता)निरूपिता या अवच्छेदकता तद्भिन्ना अथ च निरूपकत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिता या प्रतियोगितावच्छेदकावच्छिन्ननिरूपकत्वनिष्ठावच्छेदकता तन्निरूपिता

धिकरणतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधिकरणत्वनिष्ठावच्छेदकताक प्रतियोगिताकभेदस्य (हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नानिरूपकता निरूपिताधिकरणतावान्नेति भेदस्य) हेत्वधिकरणे विवक्षणे नोक्तदोषः। तादृशाधेयत्वसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताभिन्ना या महानसीयत्वनिष्ठा-वच्छेदकता तन्निरूपितत्वस्यैव निरूपकत्वनिष्ठावच्छेदकतायां सत्त्वेन महानसीय वह्निनिरूपकताया लक्षणाघटत्वात्। एवं महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाऽपि निरूपकता न लक्षणघटिकेति महाकालान्यत्वविशिष्टघटाभावो न लक्षणघटक इति प्रतियोगिव्यधिकरणाभावाप्रसिद्धया कालो घटवान् महाकालत्वादित्यत्रा व्याप्तितादवस्थ्यम्। न च निरूपकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकता प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेदकता भिन्नत्वेनाप्युपादेया। तथा च महाकालान्यत्वनिष्ठावच्छेदकतानिरूपिता वच्छेदकताया उक्तभेदवत्त्वविरहेण (प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्व निष्ठावच्छेदकतानिरूपितावच्छेदकताभेदवत्त्वविरहेण) महाकालान्यत्वविशिष्टघटत्वा-वच्छिन्ननिरूपकताकाधिकरणतावद्भेदस्य (हेत्वधिकरणनिष्ठस्य) लक्षणघटकत्व संभवः।

यद्वा साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपिता वच्छेदकतानिरूपितत्वं स्वातन्त्र्येण निरूपकत्वनिष्ठावच्छेदकताविशेषणत्वेनोपादेयं न तु प्रतियोगितावच्छेदकतानिष्ठावच्छेदकतायां भेदप्रतियोगित्वेनोपात्तायामिति महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकताकाधिकरणतावद्भेदस्य लक्षणघटकत्व संभवः। तथा च कालो घटवान् महाकालत्वादित्यत्र नाव्याप्तिरिति वाच्यम्। (महानसीयवह्निनिष्ठनिरूपकतायां साध्यतावच्छेदकताघटकसमवाय सबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितत्वं महानसीयवह्निनिष्ठनिरूपकत्वनिष्ठा वच्छेदकतायां वर्तते सा निरूपकताऽपि लक्षणघटिकेति वह्निमान् धूमादित्यत्र कथमव्याप्तिर्वार्यते इति चिन्त्यम्)।

कालिकेन रूपत्वविशिष्टसाध्यकपृथिवीत्वे, कालिकेन विषयितया च रूपत्वविशिष्टाभावप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतायाः कालिकसंबन्धावच्छिन्न-रूपत्वनिष्ठावच्छेदकतानिरूपितविषयित्वसंबन्धावच्छिन्नावच्छेदकतानिरूपिताया हेत्व-धिकरणवृत्त्युक्तभेदप्रतियोगितावच्छेदकत्वेनाव्याप्तेः। (कालिकेन रूपत्वविशिष्टवान् पृथिवीत्वादित्यत्र कालिकविषयितोभयसंबन्धेन साध्याभावप्रतियोगितावच्छेदका-वच्छिन्ननिरूपकतानिरूपिताधिकरणतावान्नेति भेदस्य हेत्वधिकरणे सत्त्वेन तदीय प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्)। अथ प्रतियोगिता-वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्ति निरूपकतायां साध्यतावच्छेदकताविशिष्टान्यसाध्यतावच्छेदकनिष्ठावच्छेदकत्वनिरूपितत्वं विशेषणं वाच्यम्। अन्यथा घटान्यत्वविशिष्टवाच्यत्वसाध्यकद्रव्यत्वे साध्याभावप्रति-योगितावच्छेदकावच्छिन्ननिरूपकतात्वस्य सामानाधिकरण्यसंबन्धावच्छिन्नवाच्यत्वत्व-निष्ठावच्छेदकतानिरूपितस्वरूपसंबन्धावच्छिन्नघटान्यत्वनिष्ठावच्छेदकतानिरूपितनिरू-पकतायामपि सत्त्वेन तादृशनिरूपकताकाधिकरणतावद्भेदस्य हेत्वधिकरणे सत्त्वात् तत्र साध्याभावस्यासत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् तत्रातिव्याप्त्यापत्तेः। निरूपकतायां रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिता-वच्छेदकत्वसंबन्धेन। साध्यतावच्छेदकतावैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्व; स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन। एवञ्च तादृशोभयसंबन्धेन साध्यता-वच्छेदकघटत्वनिष्ठावच्छेदकताविशिष्टा स्वैव तदन्या घटत्वनिष्ठा विषयित्व-संबन्धावच्छिन्नाऽवच्छेदकता तदनिरूपितत्वस्य महाकालान्यत्वविशिष्टघटनिष्ठनिरू-पकतायां सत्त्वात् तादृशनिरूपकतानिरूपिताधिकरणता ज्ञानादिनिष्ठा तादृशाधिकरणता-वद्भेदस्य हेत्वधिकरणे द्रव्येऽसत्त्वेन तत्र साध्याभावस्य ग्रहीतुमशक्यत्वमिति साध्या-भावस्य लक्षणाघटकत्वादतिव्याप्त्यापत्तेः। न चोक्तरूपवृत्तित्वनिष्ठावच्छेदकतानिरूपिता (प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्व-निष्ठावच्छेदकतानिरूपिता सती) साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकता-निष्ठावच्छेदकतानिरूपितनिरूपकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपिताधि-

करणत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितप्रतियोगिताकत्वेन हेत्वधिकरणे भेद उपादेयः । तथा चोक्तरूप(प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकरूप)वृत्तित्वसामानाधिकरण्यसंबन्धावच्छिन्नघटभेद(घटान्यत्व)निष्ठा-वच्छेदकतानिरूपितस्वरूपसंबन्धावच्छिन्नवाच्यत्वत्वनिष्ठावच्छेदकतानिरूपितनिरूपक-ताकाधिकरणतावद्भेदस्याप्युक्तभेदत्वावच्छिन्नतया हेत्वधिकरणघटरूपद्रव्यवृत्तित्वात् तत्र साध्याभावस्य सत्त्वेन साध्याभावो लक्षणघटक इति घटान्यत्वविशिष्ट-वाच्यत्ववान् द्रव्यत्वादित्यत्र नातिव्याप्तिरिति वाच्यम् ।

न च तादृशानुयोगितावच्छेदकरूपवृत्तित्वसामानाधिकरण्यसंबन्धावच्छिन्न-घटान्यत्वनिष्ठावच्छेदकतानिरूपितघटान्यत्वविशिष्टवाच्यत्वनिष्ठनिरूपकताकाधिकरणता-वद्भेदस्य उक्तभेदत्वावच्छिन्नतया तादृशभेदस्य (घटान्यत्वविशिष्टवाच्यत्ववान्नेति भेदस्य) हेत्वधिकरणे (द्रव्यत्वाधिकरणे घटे सत्त्वेन तत्र साध्याभावस्य सत्त्वाद् साध्याभावो लक्षणघटक इति घटान्यत्वविशिष्टवाच्यत्ववान् द्रव्यत्वा-दित्यत्र नातिव्याप्तिरिति वाच्यम् । स्वरूपेण घटभेदविशिष्टत्वे सति सामानाधिकरण्यसंबन्धेन वाच्यत्वविशिष्टसाध्यकद्रव्यत्वे सद्धेतौ (स्वरूपेण घट भेदविशिष्टवाच्यत्ववान् द्रव्यत्वादित्यत्र साध्याभावप्रतियोगितावच्छेदकगतरूपवृत्ति सामानाधिकरण्यसंबन्धावच्छिन्नघटभेदनिष्ठावच्छेदकतानिरूपितस्वरूपसंबन्धावच्छिन्न वाच्यत्वत्वनिष्ठावच्छेदकतानिरूपितनिरूपकताकाधिकरणतावद्भेदस्य हेत्वधिकरणे घटे सत्त्वेन तत्र साध्याभावस्य सत्त्वात् तत्राव्याप्त्यापत्तेः । एवं च कालिकेन रूपत्वविशिष्टसाध्यकसद्धेतौ कालिकसंबन्धावच्छिन्नरूपत्वनिष्ठावच्छेदकतानिरूपित विषयित्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितनिरूपकतायाः साध्यतावच्छेदकता विशिष्टान्यविषयित्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वेनातादृशतया (साध्यतावच्छे-दकताविशिष्टान्यविषयित्वसंबन्धावच्छिन्नसाध्यतावच्छेदकरूपत्वनिष्ठावच्छेदकतानिरू-पितत्वेन तादृशावच्छेदकत्वानिरूपितत्वविरहेण) अव्याप्तिविरहेण साध्यतावच्छेदकता घटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वं

निरूपकतावच्छेदकतायां निरूपकतायां वा न निवेश्यम् । तथा च घटवान् महाकालत्वादित्यत्र नाव्याप्तिसंभवः । (महाकालान्यत्वविशिष्टघटाभावस्य लक्षणघटकत्वेन प्रसिद्धे ) ।

यत्तु समवायेन वह्नित्वविशिष्टत्वे सति कालिकेन वह्नित्वविशिष्टस्य प्रकारितया साध्यतायां समवायेन वह्नित्वविशिष्टविषयकज्ञानत्वे व्यभिचारिणि समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकत्वमादायातिव्याप्तिवारणाय हेत्वधिकरणे तादृशभेदस्यासत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् । समवाय संबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगतरूपवृत्तित्वमवश्यमेव प्रतियोगितावच्छेदकतावच्छिन्ननिरूपकतायां निवेशनीयमेव न तु भेदप्रतियोगितावच्छेदकतायां विशेषणत्वेन प्रागुक्तं साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितत्वमपीति । तत्र उक्तातिव्याप्तिवारणाय निरूपकतायां तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वमात्रस्योपादेयत्वात् । तथा च प्रकृते तादृशोभयसंबन्धेन वह्नित्वविशिष्टस्य प्रकारितासंबन्धेन साध्यतास्थले नातिव्याप्तिः । समवायसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतायां समवायकालिकोभयसंबन्धावच्छिन्नावच्छेदकताकत्वस्य तादृशनिरूपकतायामसत्त्वात् (तादृशरूपावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोग्यवच्छेदकताकसंसर्गताकत्वस्यासत्त्वात्) ।

न च कालिकसंबन्धावच्छिन्नावच्छेदकताकसमवायसंबन्धावच्छिन्नावच्छेदकताकनिरूपकतावच्छेदकताया अपि नोक्तसंसर्गताकत्वसंभव इति वाच्यम् । तादृशरूपवृत्तित्वस्य (प्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकतावच्छेदकरूपवृत्तित्वस्य) अवच्छेदकतायामेव विशेषणत्वात् । रूपवृत्तित्वं च स्व(अवच्छेदकता)निरूपितसंसर्गतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनेति चेन्न ।

साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्य निरूपकताविशेषणा-

ननुसंधानेनैव समवायेन घटत्वविशिष्टसाध्यकमहाकालत्वेऽव्याप्त्यभिधानात् । तथा सति समवायेन वह्नित्वविशिष्टस्य प्रकारितया साध्यतायां समवायेन वह्नित्वविशिष्टित्वे सति कालिकेन वह्नित्वविशिष्टविषयकज्ञानत्वहेतौ साध्याभाव-प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतात्वस्य कालिकसंबन्धावच्छिन्नसमवायसंबन्धा-वच्छिन्नवह्नित्वनिष्ठावच्छेदकताकनिरूपकतायामपि सत्त्वेनातिव्याप्तेर्वारणाय साध्यता-वच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूप-वृत्तित्वस्य (अवच्छेदकतायां) विवक्षणीयत्वात् । वृत्तित्वं च व्यासज्यवृत्त्य-वच्छेदकतापक्षे स्व अवच्छेदकता) निरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-पर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनावच्छेदकत्वनिष्ठम् । इतरथा (व्यासज्यवृत्त्य-वच्छेदकत्वास्वीकारे)स्वा(निरूपकता)वच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्य-नुयोगितावच्छेदकत्वसंबन्धेन निरूपकत्वनिष्ठमेव बोध्यम् ।

यत्तु समवायेन वह्नित्वविशिष्टसाध्यके तत्तद्वह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टविषयकज्ञानत्वहेतौ तत्तद्वह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्ट-निरूपकत्वमादायातिव्याप्तिवारणाय रूपवृत्तित्वं निवेशनीयमिति । तन्न एतत्कल्पे विशेषरूपेण संसर्गत्वास्वीकारात् । अन्यथा वह्नित्वप्रतियोगिक-समवायेन वह्नित्वविशिष्टसाध्यके सद्धेतौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धेर-व्याप्त्यापत्तेः ।

न च घटान्यत्वविशिष्टवाच्यत्वसाध्यके द्रव्यत्वे प्रागुक्तातिव्याप्तेः का गतिरिति वाच्यम् । प्रतियोगिताविशिष्टनिरूपकत्वस्यैव प्रतियोगितावच्छेदकगत-रूपवृत्तित्त्वेन विवक्षितत्वात् । वै० स्वविशिष्टावच्छेदकतान्यावच्छेदकत्वानिरूपितत्व-स्ववृत्तित्वोभयसंबन्धेन । वृत्तित्व च स्वनिरूपितावच्छेदकताविशिष्टान्या-वच्छेदकत्वानिरूपितत्व, स्ववृत्तित्वोभयोभयसम्बन्धेन । उभयत्र वै० स्व-वृत्तित्वविकलचतुष्टयसंबन्धेन । (स्वसामानाधिकरण्य, स्वावच्छेदकसंबन्धावच्छिन्नत्व, स्वानवच्छेदकानवच्छिन्नत्वैतत्त्रितयसंबन्धेन) । तत्र कालिकेन रूपत्वविशिष्ट-

साध्यके पृथिवीत्वे विषयितया रूपत्वविशिष्टत्वे सति कालिकेन रूपत्वविशिष्टाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वं निरूपकतायां (प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतायां) विवक्षणीयम् । निरूपकताया उक्तरूपवृत्तित्वञ्च स्वनिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । तथा च नोक्ताव्याप्तिः, उभयोरूपयोर्भेदात् । एतेन महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकतायां समवायेन वह्नित्वविशिष्टस्य विषयितया साध्यतायां तत्तद्वह्न्यनुयोगिकसमवायेन वह्नित्वविशिष्टाभावमादायाव्याप्तिवारणाय विवक्षितस्य रूपवृत्तित्वस्य (साध्यतावच्छेकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य) संपत्तये स्व(निरूपकता)निरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेनैव तद्वाच्यम् । निरूपकतावच्छेदकतायां वा तद्विशेषणम् । घटकञ्च साध्यतावच्छेदकसंबन्धावच्छिन्नत्वं न पर्याप्तिगर्भमिति निरस्तम् । उक्तदोषतादवस्थ्यात् । विशेषरूपेण संसर्गत्वानभ्युपगमात् । (कालिकेन रूपत्वविशिष्टसाध्यके पृथिवीत्वे विषयितया रूपत्वविशिष्टत्वे सति कालिकेन रूपत्वविशिष्टाभावमादायाव्याप्तेः । स्वनिरूपितसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नेत्यादीनां संबन्धत्वाभावेन तन्निवेशयितुमशक्यत्वात्) ।

व्यासज्यवृत्त्यवच्छेदकत्वपक्षे महाकालान्यत्वघटत्वोभयवृत्त्यवच्छेदकतायाः संबन्धद्वयावच्छिन्नतया निरूपकत्वे (महाकालान्यत्वविशिष्टघटत्वावच्छिन्ननिरूपकत्वे) रूपवृत्तित्वासंभवाच्च । साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगिताकरूपवृत्तित्वासंभवाच्च । (साध्यतावच्छेदकताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकगतरूप,प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपितसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताक-

पर्याप्त्यनुयोगितावच्छेदकगतरूपयोः परस्परभिन्नत्वात्) । साध्यतानिरूपितावच्छेदकताविशिष्टान्यावच्छेदकताऽनिरूपितत्वस्यैव विशेषणत्वे च (निरूपकतायाविशेषणत्वे च) कालिकेन घटत्वविशिष्टसाध्यकमहाकालत्वेऽव्याप्तिर्बोध्या । तत्र तादृशप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतात्वस्य कालिकसंबन्धावच्छिन्नमहाकालान्यत्वनिष्ठावच्छेदकतानिरूपितकालिकसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकतानिरूपितनिरूपकत्वेऽपि सत्त्वेन तादृशनिरूपकताकाधिकरणतावद्भेदस्य हेत्वधिकरणे विरहात् । एवं च प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्याऽव्याप्तिरिति । इदं तु चिन्तनीयम् । महाकालान्यत्वविशिष्टघटाभावस्य लक्षणघटकत्वसंपत्यर्थमेव प्रतियोगितावच्छेदकावच्छिन्नत्वं प्रतियोगितावच्छेदकताघटकसंबन्धेन वाच्यम् । प्रतियोगितावच्छेदकतायाः पारिभाषिकं साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं च निवेशनीयम् । स्वानवच्छेदकानवच्छिन्नत्व. स्वसामानाधिकरण्योभयसंबन्धेन साध्यतावच्छेदकतानिरूपितसंसर्गतावच्छेदकताविशिष्टसंसर्गतावच्छेदकतात्वावच्छेदकत्वानिरूपितसंसर्गत्वानिरूपितत्वमेव निरूपकतावच्छेदकतायां निवेशनीयम् ।

न च साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वम् अपारिभाषिकं निरूपकतावच्छेदकतायामेव (प्रतियोगितावच्छेदकावच्छिन्ननिरूपकतावच्छेदकतायामेव) निवेशनीयं लाघवादिति वाच्यम् । फलमुखगौरवस्यादोषत्वात् । विशेषरूपेण संसर्गत्वास्वीकारे पारिभाषिकतन्निवेशे प्रयोजनाभावाच्च । अतएव अनुपदमेव वाऽविशिष्टसाध्यकेऽपि कालो घटवान् महाकालत्वादित्यत्राव्याप्तिवारणार्थमेव गुरुभूतस्य प्रतियोगितावच्छेदकताविशिष्टाधिकरणत्वस्य प्रतियोगिवैयधिकरण्यघटकतया निवेशनं वक्ष्यति । न च साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वकल्पाभिप्रायेणैवाव्याप्त्यनुधावनमिति वाच्यम् । तथापि प्रतियोगितावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नत्वविवक्षयाऽव्याप्तिवारणसंभवे प्रयासान्तरस्य सन्दर्भविरोधास्कन्दितत्वापत्तेरित्यलम् ।

स्वरूपसमवायाभ्यामेव तत्र तथात्वात् विशिष्टनिरूपितसमवायानभ्युपगमादिति जा० टी० ।

तादृशप्रतियोगितावच्छेदकतयेति (महाकालान्यत्वविशिष्टत्वावच्छिन्नावच्छेदकतायां घटत्वनिष्ठायां शुद्धसमवायावच्छिन्नत्वानभ्युपगमायाम् महाकालान्यत्वविशिष्टघटत्वनिष्ठावच्छेदकताघटकतया) । तथा च महाकालान्यत्वविशिष्टपटाद्यभावप्रतियोगितावच्छेदकं यदि सामानाधिकरण्यघटितसामानाधिकरण्यसंबन्धेन महाकालान्यत्वविशिष्टपटत्वं स्यात् स्यादेव समवायः प्रतियोगितावच्छेदकः, स च विशिष्टनिरूपित एव विशिष्टस्य प्रतियोगितावच्छेदकत्वात् । संसर्गता च तस्य (अत्र समवायस्य) विशिष्टनिरूपितसमवायत्वेन महाकालान्यत्वविशिष्टपटनिरूपित(प्रतियोगिक)समवायत्वेन समवायत्वमात्रेण वेत्यन्यदेतत् । परन्तु विशिष्टप्रतियोगितावच्छेदकत्वमेव न स्वीक्रियते गौरवात् । (विशिष्टस्य संबन्धीयप्रतियोगितावच्छेदकत्वमेव न स्वीक्रियते गौरवात्) तदनुपस्थितावप्यभावप्रत्ययाच्च । तथा सति न केवलः समवायः अत्र प्रतियोगितावच्छेदकताघटकः, स्वरूपस्य समवायस्य च तथात्वादित्याशयः ।

ऋजवस्तु विशिष्टस्य (महाकालान्यत्वविशिष्टघटत्वस्य) प्रतियोगितावच्छेदकत्वे तन्निरूपित(महाकालान्यत्वविशिष्टपटनिरूपित)समवाय एव प्रतियोगितावच्छेदकताघटकः संसर्गः स च न स्वीक्रियते इति महाकालान्यत्वविशिष्टपटत्ववदभावमादाय न प्रतियोगिव्यधिकरणाभावप्रसिद्धिसंभव इति वदन्ति । तत्र सिद्धान्तभूतोभयाभावघटितकल्पे विशिष्टप्रतियोगिकसमवायाभ्युपगमस्य प्रतीयमानत्वात् । तादृशाभावपदेन महाकालान्यत्वविशिष्टपटत्ववदभावस्य विवक्षितत्वे अत इत्यस्यानन्वयापत्तेश्च । अनभ्युपगमादित्यस्यैव (विशिष्टनिरूपितसमवायस्य प्रतियोगितावच्छेदकताघटकत्वानभ्युपगमादित्यस्यैव) प्रसिद्धिसंभवे हेतुत्वसंभवात् । पूर्वव्याख्यानेऽनभ्युपगमादित्यन्तस्य स्वरूपसमवायाभ्यामेवेत्यत्र हेतुत्वात्, जागदीश्याम् अत इत्यस्योपसंहारार्थत्वान्नासंगतिरिति ।

**कालो घटवान् महाकालत्वादित्यादावव्याप्तिवारणार्थमेवा-विशिष्टसाध्यकस्थलेऽपि प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वप्रवे-शस्य प्रामाणिकतया गौरवस्याकिञ्चित्करत्वादिति जा० टी० ।**

न चाविशिष्टसाध्यके प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यप्रवेशे घटवृत्तित्वोपलक्षितसत्तासाध्यकसद्धेतौ (तद्व्यक्तित्वे द्रव्यत्वे) विशिष्टाभावमादाया-व्याप्तिर्दोष इति वाच्यम् । (पटवृत्तित्वविशिष्टसत्ताभावमादायाव्याप्तिर्दोष इति वाच्यम्) । पृथिवीसमवेतत्वासमवेतत्वस्यापीत्याद्यवच्छेदकत्वनिरुक्तिग्रन्थ-व्याख्यानावसरे प्रसङ्गात् तद्वारणस्य वक्ष्यमाणत्वादिति ।

**विषयिताया वृत्त्यनियामकत्वमते सत्त्ववति घटादौ ज्ञाना-भावस्य सहजत एव प्रतियोगिवैयधिकरण्यं संभवतीत्यतः संयोग सामान्यस्य चेति जा० टी० ।**

विषयिताया वृत्त्यनियामकत्वेन द्रव्ये ज्ञानाभावस्य प्रतियोगिव्यधिकरणस्य सत्त्वेन ज्ञानवान् सत्त्वादित्यत्र नातिव्याप्तिरतः संयोगवान् सत्त्वादित्यत्राति-व्याप्तिर्दत्ता । हेत्वधिकरणे द्रव्ये गुणे कर्मणि कालिकेन संयोगस्य सत्त्वेन संयोगाभावस्य प्रतियोगिव्यधिकरणस्यासत्त्वेन लक्षणाघटकत्वमित्यन्याभावमादायाति-व्याप्तिस्तत्र भवति । न च सत्त्वाधिकरणे नित्यगुणे कालिकविशेषण-तायाः नित्येषु कालिकायोगात् वृत्तिनियामकसम्बन्धेन केनाऽपि सत्त्वायोगात्कथं तत्रातिव्याप्तिः प्रतियोगिव्यधिकरणसाध्याभावस्य सत्त्वादिति वाच्यम् । एकार्थ-समवायेन संयोगस्य तत्रापि (नित्यगुणे हेत्वधिकरणेऽपि) साध्याभावस्य प्रतियोगिव्यधिकरणस्यासत्त्वेनाभावान्तरमादायातिव्याप्तेः । एकार्थसमवायस्य वृत्ति-नियामकतायाः प्रागेवाङ्गीकृतत्वात् ।

यत्तु नित्यान्यत्वविशिष्टसत्त्वे आदिपदग्राह्येऽतिव्याप्तौ तात्पर्यात् । संयोगवान् नित्यान्यत्वविशिष्टसत्त्वादित्यत्रातिव्याप्तिरिति भावः । तत्र

(नित्यान्यत्वविशिष्टसत्त्वाधिकरणे) कालिकेन सर्वत्रैव हेत्वधिकरणे संयोगस्य सत्त्वात् हेत्वधिकरणे साध्याभावो न प्रतियोगिव्यधिकरण इत्यन्याभाव-मादाय तत्रातिव्याप्तिरिति । तन्न । तथा सति ज्ञानसाध्यकेऽपि (ज्ञान-वान् नित्यान्यत्वविशिष्टसत्त्वादित्यत्रापि) तथाऽतिव्याप्तिसंभवेन तत्परित्यागस्या-नौचित्यात् । नित्यान्यत्वविशिष्टसत्त्वाधिकरणे कालिकेन ज्ञानस्य सत्त्वेन प्रतियोगिव्यधिकरणसाध्याभावस्य तत्रासत्त्वात् । अन्याभावमादाय तत्राप्यति-व्याप्तेः सत्त्वात् । यदि चाव्याप्यवृत्तिसाध्येषु संयोगसाध्यकस्य प्रसिद्धत्वेन तत्र (संयोगसाध्यके)अतिव्याप्तेः संभविन्या अनुपादाने न्यूनता स्यादिति तदुक्तिरिति (संयोगवान् सत्त्वादित्यत्रातिव्याप्तिरिति) विभाव्यते । तदैतस्यैव (संयोगवान् सत्त्वादित्यत्रातिव्याप्तिरित्यस्यैव) वा तथात्वेन प्रतिपादयितुमुचि-तत्वादिति

स्वयं मनसः खण्डनाद् भूतत्वमूर्तत्वोभयसाध्यकमूर्तत्वस्य सद्धेतुतामा-शङ्क्याह—

**गुणकर्मान्यत्वेत्यादि जा० टी० ।**

द्वित्वावच्छिन्नप्रतियोगित्वस्य (भूतत्वमूर्तत्वोभयाभावप्रतियोगित्वस्य) व्यासज्यवृत्तित्वाद् वेत्यपि द्रष्टव्यम् । तथा च हेत्वधिकरणे मनसि साध्याभावस्य भूतत्वमूर्तत्वोभयाभावस्य प्रतियोगिव्यधिकरणत्वेन लक्षणघटकत्व-मिति तत्र नातिव्याप्तिः संभवति, अतः स्थलान्तरमाह—गुणेति ।

गुणकर्मान्यत्वविशिष्टसत्तावान् जातेरित्यत्र साध्याभावो न प्रतियोगि-व्यधिकरण इत्यन्याभावमादायातिव्याप्तिः । अतः प्रतियोगितावच्छेदका-वच्छिन्नत्वस्योपादानम् । तथा च गुणे हेत्वधिकरणे साध्याभावः प्रति-योगिव्यधिकरण इति नातिव्याप्तिः । न च पूर्वं विशिष्टसाध्यकस्थलाति-व्याप्तिपरिभवं मनसि निधाय विशिष्टसाध्यकस्थलोत्तरम् उभयसाध्यक-

स्थलोत्कीर्तनम् इदानीं तद्विपरीतमिति सन्दर्भविरोध इति वाच्यम् । शिष्यबुद्धिवैशद्याय मतभेदेन तथोक्तेरदुष्टत्वादिति । मनोऽस्ति न वेति मतभेदो बोध्यः । यद्भट्टाचार्येण द्वन्द्वस्थलेऽल्पाचः पूर्वनिपातनियमेनोभयसाध्यकस्थलातिव्याप्तौ प्राधान्यसत्त्वेऽपि उत्तराभिधानस्याशक्यत्वादुपेक्षणीयमित्युक्तम् । तत्सन्दर्भसौष्ठवातिलोभादिति वेदितव्यमिति । तत्रासमासेन सन्दर्भशुद्ध्यर्थमुभयसाध्यकस्थलस्य पश्चादुक्तेरेव न्याय्यत्वम् अस्वरसोऽभिप्रेतः तर्कालङ्कारस्येति ध्येयम् । (दीधितौ भूतत्वमूर्तत्वविशिष्टं, गुणकर्मान्यत्वविशिष्टसत्त्वत्वविशिष्टसत्तादिकं तु न मनोगुणादिवृत्ति, इत्यत्राल्पाचः द्वन्द्वसमासे पूर्वनिपातोऽत्र भूतत्वेत्यादेः पूर्वनिपातः गुणकर्मान्येत्यस्य परनिपातः, जगदीशोऽत्र न समासः किन्तु वाच्यमेवातो भूतत्वेत्यत्रातिव्याप्तिकथनस्य पूर्वत्वं विशिष्टसाध्यकस्थलेऽतिव्याप्त्युपेक्षणं च मनोऽस्ति न वेति मतभेदप्रदर्शनायोक्तमतः सन्दर्भविरोधो न क्षतिकर इति भावः ।

**इत्थञ्च (निरुक्तातिव्याप्तिदानञ्च) विशिष्टानतिरिक्तत्वं (विशिष्टस्य शुद्धानतिरिक्तत्वं) विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वमित्यभ्युपेत्य इति जा० टी० ।**

तथा च विशिष्टः शुद्धान्नातिरिच्यत इति विशिष्टसत्त्वशुद्धसत्त्वयोरनतिरिक्तत्वेन गुणनिरूपिताधेयत्वस्य सत्तात्वावच्छेदेन तत्र (विशिष्टसत्त्वे) सत्त्वेऽपि गुणनिरूपिताधेयत्वस्य (शुद्धसत्त्वनिष्ठस्य) विशिष्टसत्तात्वावच्छिन्नाधेयत्वातिरिक्ततयानवच्छेदकविशिष्टसत्तात्वावच्छेदेन तदभावः (शुद्धसत्त्वनिष्ठाधेयत्वाभावः) तत्र (विशिष्टसत्त्वे) वर्तत एव । तयोः (शुद्धसत्त्वनिष्ठाधेयत्वविशिष्टसत्त्वनिष्ठाधेयत्वयोः) अतिरिक्तत्वे मानं च सत्त्वं (शुद्धसत्त्वं) गुणवृत्ति, न विशिष्टसत्त्वमिति प्रतीतिरिति । प्रतियोगितावच्छेदकीभूतधर्मावच्छेदेन स्वप्रतियोगित्वसमानाधिकरणाभावाप्रतियोगियत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तित्वाभावकत्वरूपानुपदोक्तप्रतियोगिवैयधिकरण्यपर्यवसितार्थघटितलक्षणे

नातिव्याप्तिसंभवो न वा ग्रन्थासङ्गतिरित्याशयः । (यत्किञ्चिद्धेत्वधिकरण-निरूपितवृत्तित्वाभावः प्रतियोगितावच्छेदकधर्मावच्छेदेन स्वप्रतियोगित्वसमाना-धिकरणाभावाप्रतियोगी यस्याभावस्य तत्कत्वं तस्मिन् अभावे प्रतियोगि-वैयधिकरण्यम् । यत्किञ्चिद्धेत्वधिकरणपर्वतनिरूपितवृत्तित्वाभावो घटे घटाभाव-प्रतियोगित्वसमानाधिकरणाभावाप्रतियोगीति भवति घटाभावो वह्निमान् धूमादित्यत्र प्रतियोगिव्यधिकरणः । न च प्रतियोगितावच्छेदकावच्छेदेनेत्यनुक्तौ सत्तावान् जातेरित्यत्र विशिष्टसत्तात्वावच्छेदेन सत्ताभावप्रतियोगिनि (विशिष्ट सत्त्वे) गुणनिरूपितवृत्तित्वाभावस्य सत्त्वेन तस्य (सत्त्वाभावस्य) लक्षणघट-कत्वादव्याप्तिसंभवे तत्परित्यागो नोचित इति वाच्यम् । स्वप्रतियोगिवृत्तित्वस्य निरवच्छिन्नत्वं विशेषणतया विवक्षितं फलाभावेन प्रतियोगितावच्छेदकव्याप-कत्वासंभवात् । भेदगर्भव्यापकत्वस्यादरे (स्वसमानाधिकरणभेदप्रतियोगितान-वच्छेदकत्वं स्वव्यापकत्वमित्यस्यादरे) अव्याप्तिपरिहाराय वृत्तिभिन्नत्वस्यैव व्याप्य-तया विवक्षितत्वादिति ।

केचित्तु विशिष्टधर्मावच्छिन्नाधेयत्वस्यातिरिक्तत्वोक्त्या स्वप्रतियोगिता-वच्छेदकावच्छिन्नवृत्तित्वसामान्ये यत्किञ्चिद्धेत्वकरणनिरूपितत्वाभावस्य लक्षण-घटकत्वमभिमतमिति वदन्ति । तदसत् । जात्यादिसाध्यकातिव्याप्तेः वक्ष्य-माणाया अलग्नकत्वापत्तेः । यत्तु यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तित्व-सामान्यं स्वप्रतियोगितावच्छेदकानवच्छिन्नमिति तद्यथाश्रुताननुगुण तत्र सामान्यपदस्य स्वप्रतियोगिना संबन्धाव्याख्याने तु रमणीयमेवेति ।

विशिष्टस्येति विशिष्टनिरूपिताधेयत्वस्येत्यर्थ इति जा० टी० ।

विशिष्टधर्मावच्छिन्नाधेयत्वस्येत्यर्थः । गुणे विशिष्टसत्त्वं नेति प्रतीतेः (विशिष्टसत्त्वस्य) गुणेऽसमवायित्वभ्रमकालोत्पन्नायाः विशिष्टसत्त्वाभावविषयकत्वा-भ्यकत्वे भ्रमविगमदशायामपि तदभाव (विशिष्टसत्त्वाभाव) विषयकत्वस्यैवन वयुक्तत्वाद् विशिष्टसत्त्वं न गुणवृत्तीत्यत्रापि हि विशिष्टसत्तात्वावच्छेदे

गुणनिरूपितवृत्तित्वाभावस्याविषयत्वाद् विशेष्यवृत्तित्वे विशिष्टावृत्तित्वस्य गुण-वृत्तित्वेऽसंभवात् गुणवृत्तित्वं न विशिष्टसत्त्वावृत्तीति प्रत्ययविरहात् ।

न च कपिसंयोगो वृक्षावृत्तिरिति प्रत्ययविरहेऽपि प्रतियोग्यनवच्छेदक-देशावच्छेदेन यथा वृक्षे कपिसंयोगाभावः, तथा प्रकृतेऽप्यस्त्विति वाच्यम् । विशिष्टसत्तात्वस्यान्यूनानतिप्रसक्ततया सत्तात्ववदवच्छेदकत्वेनानवच्छेदकत्वविरहात् । न च विशिष्टसत्त्वं न गुणवृत्तीत्यस्य का गतिरिति वाच्यम् । अस्वीकारस्यैव गतित्वात् । नञोऽर्थात्यन्ताभावस्य गुणावृत्तिना सहाभेदान्वयस्य वा व्युत्पत्तिवैचित्र्येणाङ्गीकारात् । प्रत्यक्षाभावनियन्त्रितविषयताके सुतरामेव संभवात् ।

समवायेन न कोऽपि जातिवृत्तिरिति प्रतीत्यनुरोधेन उक्तविषय-कत्वरीतेरङ्गीकरणीयत्वात् । विशिष्टसत्त्वं यदि गुणवृत्ति स्यात् तर्हि गुण-वृत्तिसत्त्वभिन्नं स्यात् इति (विशिष्टसत्त्वस्य) शुद्धसत्त्वाभेदेन गुणवृत्तित्वस्यैव प्रत्युत सिद्धेः । विशिष्टसत्तावान् जातेरित्यत्र हेत्वधिकरणे गुणे साध्याभावस्य प्रतियोगिसमानाधिकरणत्वेन लक्षणाघटकत्वात् । अन्याभावमादायातिव्याप्तिरिति भावः । विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानभ्युपेत्य विशिष्टधर्मावच्छिन्ना-धेयत्वस्यातिरिक्तत्वमभ्युपेत्य चोक्तप्रतीतेः (विशिष्टसत्त्वं न गुणवृत्तीतिप्रतीतेः) विशिष्टसत्तात्वानवच्छिन्नगुणत्वविषयकत्वेनोपपत्तिं विधाय विशिष्टस्यानतिरिक्तत्वा-दिति दीधितिग्रन्थो यद्भट्टाचार्येण ऋजुमार्गेण व्याख्यातः । तदनेन विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानभ्युपगमस्यायुक्तिकरयाङ्गीकारानर्हत्वमालोच्य तर्कालङ्कारेण तत् परित्यक्तम् (विशेष्यवृत्तेः विशिष्टानुयोगिकाभावानभ्युपगमः परित्यक्तः) तत्र युक्त्यनुसरणे विशिष्टधर्मावच्छिन्नाधेयत्वस्यानतिरिक्ततायामेव पर्यवसानमिति गृहाण ।

अत्र विशिष्टनिरूपिताधेयत्वस्यातिरिक्तत्वोपगमे स्वप्रयोगिता-

वच्छेदकावच्छिन्नत्व साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाववद्धेत्व-धिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वसामान्याभावस्य (लक्षणघटकाभावे) विवक्षणान्नोक्तदोष इत्यस्मद्गुरुचरणा इति जा० टी० ।

विवक्षणादिति । यत्किञ्चिद्धेत्वधिकरणनिरूपितवृत्तित्वसामान्ये यदभाव-प्रतियोगितावच्छेदकावच्छिन्नत्व साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्तदभाव-व्यक्तित्वं प्रतियोगिव्यधिकरणत्वमिति विवक्षणादित्यर्थः। वस्तुतस्तु यत्किञ्चिद्धेत्व-धिकरणनिरूपितवृत्तितासामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदक-संबन्धावच्छिन्नत्वोभयाभावः तादृशाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदका-वच्छिन्नसामानाधिकरण्यस्यैव व्याप्तित्वविवक्षणादित्यर्थः ।

अतिरिक्तत्वोपगम इति । इदमुपलक्षणम्, अनतिरिक्तत्वेऽपि (विशिष्ट-निरूपिताधेयत्वस्यानतिरिक्तत्वेऽपि) हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाधिकरणत्व-सामान्ये उभयाभावविवक्षायां दोषाभावात् । (हेत्वधिकरणयत्किञ्चिद्व्यक्ति-निष्ठाधिकरणत्वसामान्ये यदभावप्रतियोगितावच्छेकावच्छिन्नाधेयतानिरूपितत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्तदभावप्रतियोगितानवच्छेदकसाध्यता-वच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । स एवाभावः प्रतियोगि-व्यधिकरण इति विवक्षायां दोषाभावादिति)। अथ यत्किञ्चिद्धेत्वधिकरण-निरूपितसामान्ये इत्येवोच्यताम् अलं वृत्तितात्वनिवेशेनेति चेन्न । संयोगेन घटसाध्यकसंयोगसंबन्धावच्छिन्नघटाभावत्वहेतुकव्यभिचारिणि अतिव्याप्तेः । घटा-भावप्रतियोगित्वे घटाभावप्रतियोगितावच्छेदकावच्छिन्नत्व,संयोगसंबन्धावच्छिन्नत्वयोः सत्त्वात् साध्याभावस्य लक्षणाघटकत्वात् । न चावच्छिन्नत्वस्य विलक्षणत्वेन वृत्तितानिष्ठस्यैव प्रवेश्यतया प्रतियोगित्वे तदभावः (प्रतियोगिविलक्षणा-वच्छिन्नत्वाभावः) अक्षत एवेति वाच्यम् । प्रतियोगित्वाधेयत्वादेः प्रतियोग्या-धेयरूपत्वेऽवच्छेदकरूपत्वे वा घटत्वावच्छिन्नप्रतियोगित्वाधेयत्वयोरैक्येनाधेयत्व-निष्ठयोरपि तयोः (घटाभावप्रतियोगितावच्छेदकावच्छिन्नत्वसंयोगसंबन्धावच्छिन्नत्वयोः)

नाभावः घटाभावप्रतियोगित्वे इत्यन्यपटाभावमादाय तत्रातिव्याप्तेः । आधेयतोपादाने चाधेयतात्वावच्छिन्ननिरूप्यताया एव निविष्टत्वेन प्रतियोगित्वे तद्विरहान्नातिव्याप्तिरिति ।

ननु वृत्त्यनियामकसंबन्धेन साध्यतायां सद्धेतौ धनी चैत्रत्वादित्यादौ हेत्वधिकरणनिरूपितवृत्तित्त्वसामान्ये साध्याभावप्रतियोगितावच्छेदकावच्छिन्नत्व-साध्यतावच्छेदकसंबन्धावच्छिन्नत्वयोरभावसत्त्वेनाऽव्याप्तेरेवैतत्कल्पे संभवितया तदु-पेक्षाया निर्बीजत्वापत्तिः । यदि संबन्धित्वं निवेश्यते, तदा प्रतियोगिता-वच्छेदकावच्छिन्नयत्किञ्चिद्धेत्वधिकरणनिरूपितसंबन्धित्वसामान्ये साध्यतावच्छेदक-संबन्धावच्छिन्नत्वाभावस्यैवास्तु लक्षणत्वमिति चेन्न विभिन्नकालीनयोः पदार्थयोः स्ववृत्तिवाच्यत्वादीनामपि संबन्धत्वाभावे तद्घटनात् तत्क्रियत्वादित्यत्रातिव्याप्तेः । तेषां (स्ववृत्तिवाच्यत्वादीनाम्) तत्संबन्धत्वे तु एतस्य लक्षणान्तरत्व-मेवावसेयमिति । न चोभयाभावमुपेक्ष्य (परित्यज्य) विशिष्टाभाववचन-मेवोचितमिति वाच्यम । व्यधिकरणसंबन्धेन व्यापकत्वापत्तेः । उभयोरे-कत्राधेयत्वे विरहेण वैशिष्ट्यसंभवेन साध्याभावस्य लक्षणाघटकत्वात् । वह्नीयसंयोगेन साध्यतायां प्रतियोगितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकावच्छेदक-संबन्धिभिन्नत्वयोरेकत्राधेयत्वे विरहेण वैशिष्ट्याप्रसिद्ध्याऽभावाप्रसिद्धेरव्याप्तेरिति ।

अत्र साध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्त्वसामान्ये हेत्वधिकरणयत्किञ्चिद्-व्यक्तिनिरूपितत्वयादृशप्रतियोगितावच्छेदकावच्छिन्नत्वोभयाभावस्य यादृशप्रतियोगिता-वच्छेदकावच्छिन्ननिरूपकत्वसामान्ये हेत्वधिकरणयत्किञ्चिन्निष्ठसंबन्धितानिरूपितत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्य लक्षणान्तरत्वं बोध्यम् ।

एवं हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिरूपितवृत्तितानवच्छेदकं यादृशप्रतियो-गितावच्छेदकावच्छिन्नत्वसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयत्वे तादृशप्रतियोगितान-वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति लक्षणान्तरत्वमव-गन्तव्यम् ।

नव्यास्तु साध्यतावच्छेदकसंबन्धेन स्वप्रतियोग्यधिकरणयावद्धेत्वधिकरणको यो यस्तदन्यत्वं प्रतियोगिवैयधिकरण्यं वाच्यम् इति जा० टी० ।

तथा च यदभावप्रतियोगितावच्छेदकावच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वं हेत्वधिकरणताव्यापकं तदवच्छिन्नाभावभिन्नाभावः प्रतियोगिव्यधिकरणः, तादृशप्रतियोगिव्यधिकरणाभावीयप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । वह्निमान् धूमादित्यत्र धूमाधिकरणताव्यापकप्रतियोग्यधिकरणताको वह्न्यभावः, तदन्यो घटाभावः स एव प्रतियोगिव्यधिकरणः । कालो घटवान् महाकालत्वादित्यत्र गगनाभाव एव प्रतियोगिव्यधिकरणाभावः । गगनस्य कालिकेनाधिकरणत्वाप्रसिद्ध्या यदभावपदेन गगनाभावो न धर्तव्यः । कालिकेनापि गगनं न वृत्तीति मतमादृत्येद लक्षणम् ।

अत्र हेत्वधिकरणत्वव्यापकाधिकरणतानिरूपकतावच्छेदकधर्मावच्छिन्नप्रतियोगिताभिन्नत्वेन हेतुसमानाधिकरणाभावप्रतियोगितानिवेशः पर्यवसितः । वह्निमान् धूमादित्यत्र धूमाधिकरणताव्यापकवह्न्यधिकरणताकनिरूपकतावच्छेदकवह्नित्वावच्छिन्नप्रतियोगिताभिन्ना या लक्षणघटकघटाभावीयप्रतियोगिता तदनवच्छेदकत्वं साध्यतावच्छेदके वर्तते, लक्षणघटक स्वा(सद्धेतुस्थले लक्षणाघटकसाध्याभावीयप्रतियोगित्वा)वच्छेदकधर्मावच्छिन्नाधिकरणतावत्त्वसंबन्धेन (स्वावच्छेदकधर्मावच्छिन्नाधेयतानिरूपिताधिकरणतावत्त्वसवन्धेन) हेत्वधिकरणत्वव्यापकप्रतियोगिताभिन्नत्वेन वा प्रतियोगिता निवेश्या । तादृशप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिः । रूपवान् पृथिवीत्वादित्यत्र संयोगादिसंबन्धेन रूपादीनां पृथिवीत्वव्यापकत्ववारणाय च तादृशप्रतियोगितानवच्छेदके (लक्षणाघटकप्रतियोगिताभिन्नप्रतियोगितानवच्छेदके) साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकत्वं विशेषणं वाच्यम् । प्रतियोगिताया न

स्वरूपसंबन्धविशेषरूपत्वं किन्तु प्रतियोगितावच्छेदकत्वरूपत्वमेव । तथा च रूपवान् पृथिवीत्वादित्यत्र संयोगसंबन्धावच्छिन्नप्रतियोगिताभिन्ना घटत्वावच्छिन्नप्रतियोगिता तदनवच्छेदकरूपत्वे साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितावच्छेदकत्वविरहेण न रूपत्ववतो रूपस्य संयोगेन पृथिवीत्वव्यापकत्वम् । समवायसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगिताभिन्नत्वं न संयोगसंबन्धावच्छिन्नरूपत्वावच्छिन्नप्रतियोगितायां वर्तते । प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वस्वरूपत्वात् ।

यद्यपि हेत्वधिकरणत्वसमानाधिकरणावच्छेदकतानिरूपितवृत्तितात्वावच्छिन्नप्रतियोगिताकाभाववान्नेति प्रतीतिसिद्धसामान्यभेदवत्त्वस्य यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वे निवेशे न कोऽपि दोषः । तथापि हेत्वधिकरणत्वव्यापकत्वनिवेशापेक्षया पर्यवसाने न लाघवमिति बोध्यम् ।

यद्यपि हेत्वधिकरणत्वसमानाधिकरणावच्छेदकता (अत्यन्ताभावीयभेदीयप्रतियोगितानिरूपितपरंपरीयावच्छेदकता)निरूपिता वृत्तित्वावच्छिन्ना प्रतियोगिताकाभाववान्नेति प्रतीतिसिद्धसामान्यभेदस्तद्‌वत्त्वस्य हेत्वधिकरणनिरूपितवृत्तित्व नास्तीति सामान्याभावः (वह्न्यभावे वर्तते) तादृशाभाववान्नेति भेदः यादृशप्रतियोगितावच्छेदकावच्छिन्नाधिकरणे निवेशे न कोऽपि दोषः । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकसाध्याभाववान्नेति भेदः लक्षणघटकाभावप्रतियोग्यधिकरणे वर्तते तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वान्नाव्याप्तिः ।

**न चैवं यद्यत्संबन्धेन यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तत्तत्संबन्धान्यसाध्यतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमेव लाघवाद् व्याप्तिरस्तु । तथा च घटवान् महाकालत्वादित्यादौ समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरणः संभवतीति वाच्यम् इति जा० टी० ।**

तथा च यद्यत्संबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तत्तत्संबन्धान्यसाध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरणनिरूपितवृत्तित्वं हेतौ व्याप्तिरित्यर्थः । वह्निमान् धूमादित्यत्र समवायादिना बह्न्यनधिकरणं धूमाधिकरणमिति समवायान्यसाध्यतावच्छेदकसंयोगसंबन्धेन बह्निसामानाधिकरण्यं धूमे वर्तते । न चैवमिति । एवमित्यस्य यथाश्रुतार्थत्याग इत्यर्थः ।

समवायेन घटाद्यभावोऽपि प्रतियोगिव्यधिकरण इति । न चैतल्लक्षणस्याभावाघटिततया इदं लक्षणमसंगतम्, अभावघटितलक्षणस्यैव प्राकरणिकत्वात्, तत्रैव प्रतियोगिवैयधिकरण्यं निविष्टमिति वाच्यम् । एतस्य (एतल्लक्षणस्य) उदक्षरत्ववारणाय स्व(साध्यतावच्छेदकसंबन्धान्यसंबन्धेन साध्याभाव) प्रतियोगितावच्छेदकसंबन्धेन यत् (साध्याभाव) प्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तत्(साध्याभाव)प्रतियोगितावच्छेदकसंबन्धान्यसाध्यतावच्छेदकसंबन्धेन तत्प्रतियोगिता (साध्याभावप्रतियोगिता) वच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्ये तात्पर्यस्य वाच्यतया प्रतियोगिव्यधिकरणाभावघटितत्वेनासंगत्यभावात् । प्रतियोगिवैयधिकरण्यकोटौ प्रतियोगितावच्छेदकत्वेन साध्यतावच्छेदकस्यानुपादानत्वेन तत्स्वरूप (पूर्वोक्तकथितरूप)प्रतियोगिव्यधिकरणाभावत्वस्य घटाद्यभावे संभवेन घटाभावोऽपीत्यस्य नासंगतिः । यत्पदं तत्पदं चाभावपरं बोध्यम् । यत्प्रतियोगित्वप्रवेशस्य वैयर्थ्यं तु नाशङ्कनीयम् । यथाश्रुतेऽपि यद्धर्मावच्छिन्नानधिकरणं हेत्वधिकरणं तद्भिन्नत्वस्य लक्षणत्वसंभवे धर्मस्याभावप्रतियोगितावच्छेदकत्वेनोपादाने वैयर्थ्यशङ्काया दुर्निवारत्वात् । अनुगमस्तु अभाव (साध्यतावच्छेदकसंबन्धान्यसंबन्धेन साध्याभाव)विशिष्टाभाववदन्यसाध्यतावच्छेदकसंबन्ध,धर्मावच्छिन्ननिरूपकताकाधिकरणतावद्वृत्तित्वनिवेशेन । वै० स्वतादात्म्य, स्वप्रतियोगितावच्छेदकावच्छिन्नत्व, स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन स्व(साध्यतावच्छेदकसंबन्धान्यसंबन्धेन साध्याभाव) विशिष्टनिरूपकताकाधिकरणतावदन्यहेत्वधिकरणवृत्तित्वोभयसंबन्धेन । निरूपकतायाम् अभाववत्ता च

स्वप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्व स्वप्रतियोगितावच्छेदकधर्मावच्छिन्नत्वोभय-संबन्धेन ।

यद्वा संबन्धवदन्यसाध्यतावच्छेदकसंबन्धेन साध्यतावच्छेदकावच्छिन्न-सामानाधिकरण्यम् अनुगतव्याप्तिः । संबन्धवत्ता च स्वतादात्म्य स्ववृत्त्य-भावीयसाध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वोभयसंबन्धेन । स्ववृत्तित्वं च हेत्वधिकरणवृत्ति(स्वाश्रयहेत्वधिकरणवृत्ति)भेदप्रतियोगितावच्छेदकतावच्छेदकस्वप्रतियो-गितावच्छेदकावच्छिन्ननिरूपकतावच्छेदकत्वसंबन्धेन ।

केचित्तु संपातायातं घटाभावः प्रतियोगिव्यधिकरण इति वदन्ति । अन्ये तु एतल्लक्षणस्य न लक्षणान्तरत्वमपि तु प्रतियोगिव्यधिकरणाभाव घटितलक्षणस्यैव तात्पर्यार्थत्वमिति सूचयितुं प्रतियोगितावच्छेदकघटत्वावच्छिन्नान-धिकरणं महाकाल इति वक्तव्ये घटोऽपि प्रतियोगिव्यधिकरण इत्युक्तमिति प्राहुः ।

परे तु घटत्वावच्छिन्नानधिकरणं महाकाल इत्येव युक्तः पाठः, क्वचित्पुस्तकेऽस्त्यपीत्याहुः ।

**घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः, केनापि संबन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासंभवात् इति जा० टी० ।**

घटपदं तत्तद्घटपरं तेन विशेषरूपेण संसर्गत्वाभ्युपगमेऽपि नाव्याप्त्य-संभवः । तद्घटवृत्तित्ववैशिष्ट्यमपि विशेषरूपेण संसर्गत्वाभ्युपगमे एव सार्थकम् । तादात्म्यस्य संसर्गत्वे संबन्धित्वप्रवेशे च तद्दधिवृत्तित्वविशिष्ट-प्रमेयवान् तद्दधित्वादित्यत्राव्याप्तिः । तद्दधिवृत्तिता च तादात्म्य-संयोगाद्यन्यतरसंबन्धावच्छिन्ना । साध्यताऽपि तदन्यतरेणैव बोध्या । इदं च तत्संबन्धावच्छिन्नवृत्तित्वविशिष्टस्य तेनैवं संबन्धेन तत्रैव सत्त्वं नान्येन

तादात्म्यभिन्नेन नान्यत्र च विषयित्वादीनां तु न संसर्गत्वमिति मतेन । तेन महाकालानुयोगिककालिकादिना विषयित्वादिना च साध्यानधिकरणत्वस्य हेत्वधिकरणे प्रसिद्धिमादाय नाव्याप्त्यसंभव इति । वस्तुतो विशेषरूपेण संसर्गतामनभ्युपेत्य विषयित्वादीनाञ्चासंसर्गत्वमङ्गीकृत्य पटत्वान्य (पटान्य)प्रमेयवान् घटत्वादित्यादावव्याप्तिं दातुमुचितेति बोध्यम् ।

यद्यपि स्ववृत्तिवाच्यत्वादीनां संसर्गत्वे संयोगादिना वह्न्यादिसाध्यक सद्धेतुमात्रे प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽसंभव एव संभवति । सर्वेषामभावानां स्ववृत्तिवाच्यत्ववत्त्वसंबन्धेन प्रतियोगिसमानाधिकरणत्वात् । तथापि साध्यतावच्छेदकत्वोपादानेऽपि (साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यस्योपादानेऽपि) स्ववृत्तिवाच्यत्वादिसंबन्धेन वह्न्यादिसाध्यकसद्धेतौ (अव्याप्तिरूप) दोषस्य दुरुद्धरतया तेषाम् (स्ववृत्तिवाच्यत्वादीनाम्) इदानीं संसर्गत्वानभ्युपगमस्यैव युक्तत्वात् । असंभवं विहाय धूमवान् वह्नेरित्यादावतिव्याप्तिरिति ।

**न च स्ववृत्तिवाच्यत्वादीनां संसर्गत्वेऽपि तत्संबन्धसाध्यक स्थलस्य व्याप्यवृत्तिसाध्यकतया प्रतियोगिव्यधिकरणघटितलक्षणालक्ष्यत्वात् न दोष इति वाच्यम् तथापि तेषां संसर्गत्वमनभ्युपगम्यातिव्याप्तिरुक्तेत्युक्तेः संभवादिति तु फलितार्थ इति । यद्धर्मावच्छिन्नसंसर्गताकप्रकृतसाध्यकानुमितिः फलं तद्धर्मावच्छिन्नसंबन्धसामान्य इति फलितार्थ इति जा० टी० ।**

साध्यताघटकसंसर्गतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपविशिष्टावच्छिन्नसामान्ये संसर्गतावच्छेदकभेदमात्रेणैव संसर्गताभेदे साध्यताघटकसंसर्गताविशिष्टसंसर्गतासामान्ये वेति विवक्षणीयम् । (यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावो विवक्षणीयः, किं वा यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितानिरूपितत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगितानिरूपितत्व-

सामान्योभयाभावो विवक्षणीयः । तथा च तादृशप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः । तेन पर्वतीयसंयोगेन वह्नेः साध्यतायां धूमे व्यभिचारिणि, कालिकसंयोगोभयसंबन्धेन धूमसाध्यकवह्नौ व्यभिचारिणि च साध्यतानिरूपितसंसर्गतावच्छेदकसंयोगत्वावच्छिन्नत्वस्य महान-सानुयोगिकसंयोगे कालिकेऽपि च वह्न्यभावस्य लक्षणाघटकत्वेन नातिव्याप्तिः। पर्वतीयसंयोगे वह्नित्वावच्छिन्नप्रतियोगिकत्वसत्त्वेऽपि धूमाधिकरणमहानसीया-नुयोगिकत्वाभावेन तादृशोभयाभावस्य सत्त्वेन साध्याभावो भवति लक्षणघटक इति नातिव्याप्तिः ।

घटीयसंयोगे, पर्वतीयसंयोगे वा, हेतुमन्महानसानुयोगिकत्व, वह्नित्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्त्वाद् वह्निमान् धूमादित्या-दावव्याप्तिरतः प्रथमं सामान्यपदमिति जा० टी० ।

अत्र साध्यतावच्छेदकसंबन्धनिरूपितवृत्तितानवच्छेदकत्वमेव तादृशोभयत्वे विवक्षणीयं न तु तादृशोभयाभावे साध्यतावच्छेदकसंबन्धत्वव्यापकत्वं गौरवा-दिति तु चिन्त्यम् । (साध्यतावच्छेदकसंबन्धत्वनिष्ठव्याप्यतानिरूपितव्यापकत्वं यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्य-नुयोगिकत्वोभयाभावे न विवक्षणीयम् किन्तु तादृशोभयत्वे साध्यतावच्छेदक संबन्धनिरूपित(साध्यतावच्छेदकसंबन्धावच्छिन्न)वृत्तितानवच्छेदकत्वमेव निवेश्यम् लाघवात् । व्यापकत्वनिवेशे गौरवाच्च ।

संयोगसामान्ये एव समवायनिष्ठपर्वतानुयोगिकत्वस्य वह्नित्वा-वच्छिन्नप्रतियोगिकत्वस्य च द्वयोरभावसत्त्वात् तथैवाव्याप्तिरतः सामान्योभयेति इति जा० टी० ।

सामान्यपदोपादाने वह्नित्वावच्छिन्नप्रतियोगिकत्वपर्वतानुयोगिकत्वयोरपि तत्सामान्यान्तर्गतत्वमिति तयोः संयोगे सत्त्वेन तत्र न तयोः सामान्याभाव इति वह्न्यभावो न लक्षणघटकः । न च सामान्यपदानु-

पादाने सर्वत्रासंभवसंभवेऽव्याप्तिदानमनुचितमिति भाव्यम् । विशिष्टधीनियामकस्यैव संसर्गत्वे संयोगसमवायदैशिककालिकदिक्कृतविशेषणतानामेव संसर्गत्वेन तत्संबन्धावच्छिन्नवृत्तिताविशिष्टस्य तेनैव संबन्धेन सत्त्वाभ्युपगमेन च, सत्त्ववृत्तित्वविशिष्टप्रमेयत्वसाध्यकसत्ताहेतुकस्थलेऽव्याप्त्यभावात् । सत्त्वानुयोगिकत्वविशिष्टसत्त्ववृत्तित्वविशिष्टप्रमेयत्वाभावरूपसाध्याभाव(प्रतियोगितावच्छेदकावच्छिन्न)-प्रतियोगिकत्वस्य स्वरूपमात्रे (स्वरूपसंबन्धमात्रे) एव सत्त्वेन तन्निष्ठतदुभयाभावस्य (यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतवद्व्यवत्यनुयोगिकत्वोभयाभावस्य) स्वरूपे (स्वरूपसंबन्धे) विरहात् ।

केचित्तु वह्निधूमोभयवान् धूमादित्यत्राव्याप्तेर्न प्रसक्तिः, उभयत्वावच्छिन्न (वह्निधूमोभयत्वावच्छिन्न) प्रतियोगिकत्वस्य संबन्धनिष्ठस्याप्रसिद्धेरिति वदन्ति । तथा च साध्याभावो न लक्षणघटक इति तत्र नाव्याप्तिरिति तदाशयः ।

**तादृशोभयाभावश्च स्वरूपसंबन्धेन बोध्यः, तेन समवायादिना तदुभयाभावस्य संबन्धमात्रे सत्त्वेपि सद्धेतौ नाव्याप्तिरिति जा० टी० ।**

वह्निधूमोभयसाध्यकसद्धेतावव्याप्त्यभावं मनसि निधायाह-सद्धेतौ नाव्याप्तिरिति । सद्धेतुस्वरूपलक्ष्यतावच्छेदकसामानाधिकरण्येनासत्त्वम् । अत्र नाव्याप्तिपदार्थः, सद्धेतावित्यस्यानन्वयापत्तेः । अपि तु लक्षणासत्त्वम्(अव्याप्तिपदार्थः) । तत्र(लक्षणासत्त्वे) सद्धेतावित्यस्यावच्छेदकावच्छेदेनान्वयोऽसतिबाधकेऽवच्छेदकावच्छेदेनान्वयस्यैव व्युत्पन्नत्वादित्यसंभवपरतैवोक्तग्रन्थस्येत्यपि कश्चित् ।

**एतद्घटवान् कालान्तरीयतद्घटत्वादित्यादावेतद्घटत्वावच्छिन्नप्रतियोगिकत्वविशिष्टतद्घटानुयोगिकत्वाप्रसिद्धेः । अभावान्तरमादायातिव्याप्तिरिति जा० टी० ।**

अभावान्तरेति । तद्घटाभावेत्यर्थः । तद्घटप्रतियोगिकत्व, तद्घटानुयोगिकत्वयोः तादात्म्यसंबन्धे सत्त्वेन विशिष्टप्रसिद्धेरिति भावः । (तद्घटप्रतियोगिकत्वविशिष्टतद्घटानुयोगिकत्वरूपविशिष्टस्य प्रसिद्धेरिति भावः ।) गगनप्रतियोगिकत्वविशिष्ट-

महाकालानुयोगिकत्वाप्रसिद्धया गगनाभावमादाय प्रकृताव्याप्तिवारणासंभवश्च स्यात्

**अतो निरुक्तप्रतियोगिकत्वविशिष्टयत्किञ्चिद्धेत्वधिकरणानुयोगिकत्व-सामान्याभावं परित्यज्य तदुभयाभाव उक्त इति जा० टी० ।**

प्रकृताव्याप्तिवारणासंभवः स्यादिति । न च महाकालाभावमादायैवाव्याप्तिवारणं संभवति (कालो घटवान् महाकालत्वादित्यत्राव्याप्तिवारणं संभवति) महाकालप्रतियोगिकत्वमहाकालानुयोगिकत्वयोः तादात्म्यसंबन्धे सत्त्वेन तयोर्वैशिष्ट्यप्रसिद्धेः(तदभावस्य कालिकसंबन्धे सत्त्वात्)इति वाच्यम् कालिकतादात्म्यान्यतरसंबन्धेन साध्यतास्थले अभावस्य तादृशस्या (तादृशविशिष्टाभावस्या) प्रसिद्धेरिति सामान्याभावमपहायेति ।

ननूभयाभावापेक्षया विशिष्टाभावे लाघवं स्यादपि तस्य (विशिष्टाभावस्य) उपादेयत्वम् अव्याप्त्या हेयत्वञ्च तदेव ( लाघवमेव ) नास्ति । सामानाधिकरण्यात्मकगुरुसंबन्धस्यावच्छेदकताघटकत्वात् । प्रतियोगिकत्वस्यावच्छेदकत्वेनाधिकावच्छेदकत्वस्य द्वित्वे विरहाच्चेति । द्रव्ये द्वित्वस्यापेक्षाबुद्धिविशेषविषयत्वरूपतया तस्यावच्छेदकत्वे बहुष्वेव तद्द्वित्वस्य प्रतियोगितावच्छेदकतयाऽप्रवेशेन लाघवमनुसृत्याशङ्कते—साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वादिति दीधितिः अत्र शङ्कते । न च यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिक(त्वविशिष्ट)संबन्धसामान्ये हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिक(त्वविशिष्ट)साध्यतावच्छेदकसंबन्धत्वस्य (व्यतिरेकः) तथाविधसंबन्धसामान्ये वा (हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वविशिष्टसाध्यतावच्छेदकसंबन्धसामान्ये वा) यादृशप्रतियोगितावच्छेदकत्वस्य व्यतिरेकः तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदकत्वस्य कथं नोक्तमिति वाच्यम् इति जा० टी०। न चेति। न चाभावलाघवमनुसृत्योक्तमिति वाच्यम् । सिद्धान्ते व्यापकत्वस्वरूपाभावस्य पूर्वपक्षे व्यापकतारूपाभावस्य प्रतियोगितावच्छेदककोटौ तादृशप्रतियोगित्वस्य प्रवेशेन साम्यादिति ।

ननु हेत्वधिकरणीभूतयद्व्यक्त्यनुयोगिकत्वं यदि तद् (हेत्वधिकरण) वृत्तित्वं तदा धूमवान् वह्नेरित्यादावतिव्याप्तिः। धूमप्रतियोगिकस्यापि संयोगस्य कालिकसंबन्धेनायोगोलकवृत्तित्वात्।

**यदि च साध्यतावच्छेदकसंबन्धस्य संसर्गतानियामको यः संबन्धस्तेन संबन्धेन हेत्वधिकरणवृत्तित्वम् (एव) तदनुयोगिकत्वम्। तदा संयोगेन द्रव्यस्य साध्यतायां द्रव्यजात्यन्यतरत्वादावतिव्याप्तिः, जातौ समवायेन वृत्तेरप्रसिद्धेरिति जा० टी०।**

धूमवान् वह्नेरित्यादावतिव्याप्तिरिति। ननु कालिकसंयोगाभ्यां घटस्य तादात्म्येन च महाकालस्य साध्यतायां महाकालत्वे गगनादिप्रतियोगिकसंयोगे तादात्म्ये वा कालिकेन महाकालवृत्तित्वसत्त्वेन (लक्षणघटकाभावाप्रसिद्धया) अभावाप्रसिद्धया ऽव्याप्तिसंभवे अतिव्याप्त्यनुधावनमनुचितमिति चेत् सत्यम् अतिव्याप्तेः प्रकारान्तरेणावार्यत्वमालोच्यातिव्याप्तेरभिधानम् अव्याप्तिस्तु साध्यतावच्छेदकसंबन्धस्य संसर्गतानियामको यः संसर्गस्तदतिरिक्तसंबन्धावच्छिन्नत्वसाध्यवन्निरूपितत्वोभयाभावस्य वृत्तित्वनिष्ठस्य विवक्षयाऽपि वारयितुं शक्यत इत्येतद्विशेषमालोच्य तद् (अव्याप्त्य)नभिधानमिति न सन्दर्भविरोधः।

यद्वा अतिव्याप्तेः साध्यतावच्छेदकावच्छिन्नप्रतियोगिकसाध्यतावच्छेदकसंबन्धधर्मिकोभयाभावकल्पेऽपि (साध्यतावच्छेदकावच्छिन्नप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तत्प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति कल्पेऽपि) संभवः, अव्याप्तेस्तु नेत्येतद्विशेषमालोच्यातिव्याप्त्यभिधाने न सन्दर्भविरोधः।

**यदि च साध्यतावच्छेदकसंबन्धस्य संसर्गतानियामको यः संबन्धस्तेन संबन्धेन हेत्वधिकरणवृत्तित्वम् (एव) तदनुयोगिकत्वमिति जा० टी०**

संसर्गतानियामक इति । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रकारतानिरूपित-विशेष्यतासंबन्धावच्छिन्नप्रमात्वावच्छिन्नकार्यतानिरूपितसाध्यतावच्छेकसम्बन्धनिष्ठकारणताक इत्यर्थः । (संयोगेन वह्निमान् पर्वत इति प्रमां प्रति समवायेन पर्वते संयोगः कारणमिति कार्यकारणभावः) । यद्वा साध्यतावच्छेदक-संबन्धनिष्ठसंसर्गताप्रयोजकवृत्तितावच्छेदकः (संबन्धः) इत्यर्थः । स च समवायः, स्वरूपश्चेति बोध्यम् । संयोगेन पर्वतो वह्निमान् इत्यत्र संयोगनिष्ठ-संसर्गतायाः प्रयोजिका वृत्तिता पर्वतनिरूपितसमवायसंबन्धावच्छिन्नसंयोगसंबन्ध-निष्ठा वृत्तिता) तद्वृत्तिताप्रयोजकसंबन्धः समवायः अन्यत्र स्वरूपस्वरूपः । ननु पर्वतानुयोगिकस्वरूपाभावस्य स्वरूपेण साध्यतायां पर्वतत्वे (हेतौ) साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतपर्वतानुयोगिकसंबन्धत्ववति स्वरूपे साध्याभा-वात्मकत्वेन (पर्वतानुयोगिकस्वरूपाभावाभावात्मकत्वेन) तत्प्रतियोगितावच्छेदकी-भूतधर्मावच्छिन्नप्रतियोगितानिरूपके साध्याभावरूपे तदुभयस्यैव सत्त्वेन (यादृश-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वै-तदुभयस्यैव सत्त्वेन) तादृशोभयाभावस्यासत्त्वात् साध्याभावस्य लक्षणाघटक-तयाऽभावान्तरमादायातिव्याप्तिः । एवं प्रतियोगितायाः प्रतियोगिस्वरूपत्वे संयोगेन वह्निसाध्यके संयोगाभावत्वे व्यभिचारिणि वह्निप्रतियोगिकसंबन्धत्ववति संयोगे संयोगाभावनिष्ठानुयोगितानिरूपितत्वस्य सत्त्वेन तादृशोभयाभावासत्त्वात् साध्याभावो न लक्षणघटक इत्यभावान्तरमादायातिव्याप्तिः । (सयोगे यादृश-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व यदनुयोगिकत्वयोः सत्त्वेन साध्याभावो न लक्षणघटक इति बोध्यम्) । अनुयोगिताया अनुयोगिस्वरूपत्वे संयोगेन वह्निसाध्यके संयोगनिरूपिताधेयत्वेऽपि व्यभिचारिणि, अतिव्याप्तिरत आह

**साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिकसंबन्धत्वहेत्व-धिकरणयत्किचिद्व्यक्त्यनुयोगिकसंबन्धत्वोभयाभावस्य विवक्षणात् धूम-संयोगस्यायोगोलकानुयोगिकसंसर्गत्वविरहादेव नातिप्रसङ्ग इति जा० टी० ।**

इदं त्ववधातव्यं यत्रैकसंयोगव्यक्त्यापदार्थयोः परस्परं विशिष्टधीः प्रमा तत्र

तयोरेकस्मिन् संयोगेन साध्ये तदीयरूपादौ व्यभिचारिण्यतिव्याप्तिः, तदुभयसयोगस्य निरुक्तोभयाभावविरहादिति जा० टी० । मेषद्वयसंयोगव्यक्त्या उभयोर्मेषयोः परस्परं विशिष्टधीः प्रमा (संयोगेन तन्मेषवान् एतन्मेषः, एतन्मेषवान् तन्मेषः इत्याकारकविशिष्टज्ञानं प्रमा)

**यत्रैकसंयोगव्यक्त्येति** यत्रोपर्यधोभावेन संयुक्तौ घटपटौ उपर्यधोभावनियमेनान्योन्यमाधाराधेयभावं भजेते तत्रैकस्यापि संयोगस्योभयानुयोगिकत्वमुभयप्रतियोगिकत्वञ्चाङ्गीकरणीयमिति, तयोरेकस्य संयोगेन साध्यत्वे तदुभयान्यतरत्वे व्यभिचारिण्यतिव्याप्तिरत्र बोध्या । तदुभयस्य सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात् । नतूपर्यधोभावविरहेण संयुक्तागुल्याद्युभयघटकैकसाध्यके तदुभयान्यतरत्वे तादृशसंयोगे प्रतियोगित्वानुयोगित्वनिरूपकत्वविरहात् । आधाराधेयभावस्थल एव तत्त्वस्य (प्रतियोगित्वानुयोगित्वनिरूपकत्वस्य) भट्टाचार्यादिभिः प्रदर्शितत्वादिति भावः । यत्र यद्यपि संयोगेन स्वस्य स्वस्मिन् विशिष्टबुद्ध्यनुत्पत्त्या (संयोगेन स्वः स्ववानिति बुद्ध्यनुत्पत्त्या) स्वनिष्ठप्रतियोगित्वस्वनिष्ठानुयोगित्वयो निरूप्यनिरूपकभावासंभवात् । साध्यतावच्छेदकसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गताकानुयोगित्वेन यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावविवक्षणे, संसर्गस्यैक्येऽपि संसर्गताया निरूपकभेदेन भिन्नत्वे संसर्गताधर्मिकोभयाभावविवक्षणे वा नातिव्याप्तिः । तथापि अतएवेत्यादिग्रन्थासंगतेः सा विवक्षा नादृता । (तथापि समवायनिष्ठसंसर्गतायां द्रव्यत्वप्रतियोगिकत्वगुणानुयोगिकत्वोभयाभावसत्त्वेन साध्याभावस्य लक्षणघटकत्वेन तत्रातिव्याप्त्यभावेन तत्रातिव्याप्तिकथनमसंगतं स्यात् अतः सा विवक्षा नादृता) । अतएव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगित्वगुणाद्यनुयोगिकत्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ नातिव्याप्तिरिति वदन्तीति दीधितिः । अतएव अनुपदमेवाधिकरणताधर्मिकोभयाभाव आशङ्क्य परित्यक्तः (न च साध्यतावच्छेदकसंबन्धावच्छिन्नाधि-

करणतासामान्ये निरुक्तोभयाभाववत्त्वं विवक्षितमिति । तथा च साध्यता-वच्छेदकसंबन्धावच्छिन्नाधिकरणतासामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयता-निरूपितत्व, स्वरूपसंबन्धेन यत्किञ्चिद्धेत्वधिकरणव्यक्तिवृत्तित्वोभयाभाववत्तादृश-प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षितमित्यर्थः । तत्र हेत्वधिकरणवृत्तित्वं संबन्धेनैव वाच्यमिति सांप्रतम् । अत एवेत्यादि वक्ष्यमाणग्रन्थासङ्गतिप्रसङ्गात् । समवायस्येति । तथा च संबन्धधर्मिकोभयाभावघटितलक्षणस्य निरुक्तार्थकत्वे द्रव्यं जातेरित्यत्र समवायस्यैकत्वमते वक्ष्यमाणातिव्याप्तिर्न संगच्छते, समवायावच्छिन्नाधिकरण-ताया द्रव्यत्वत्वावच्छिन्नाधेयतानिरूपितत्वेऽपि हेत्वधिकरणगुणवृत्तित्वविरहवत्त्वेनो-भयाभावस्याक्षततया द्रव्यत्वाभावस्य लक्षणघटकत्वादित्यर्थ इति विवृतिः ।

यदि च समवायसंबन्धसाध्यके इदं द्रव्यं जातिमत्त्वादित्यादौ वक्ष्य-माणातिव्याप्तिः, यथाश्रुताभिप्रायेण न त्वधिकरणताघटिते । अत वैतद-स्वरसादुभयसाध्यकातिव्याप्तिं वक्ष्यतीति यद्युच्यते (वह्निधूमोभयवान् वह्ने-रित्यत्रातिव्याप्तिं वक्ष्यतीति यद्युच्यते) तदा विवक्षणीयमेव तदिति (अधिकरणताधर्मिकोभयाभावघटितलक्षणमिति) ।

**तादृशसंबन्धेन घटादेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगि-वैयधिकरण्यस्याप्रवेशादिति ध्येयम् इति जा० टी० ।**

तादृशसंबन्धेन घटादेर्व्याप्यवृत्तितयेति । न च व्याप्यवृत्तिसाध्यकस्थलीय-लक्षणस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताघटिततया विषयितासंबन्धेन वस्तुमात्रस्य नित्यज्ञाने सत्त्वेन तत्संबन्धावच्छिन्नाभावाप्रसिद्ध्या व्याप्यवृत्तिसाध्यकलक्ष-णस्याप्यव्याप्तिरितिवाच्यम् । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितापदेन साध्यतावच्छेदकसंसर्गातिरिक्तसंबन्धावच्छिन्नत्वसाध्यतावच्छेदकव्यापकत्वोभयाभावव-त्प्रतियोगिता या एव विवक्षितत्वात् । तथा च समवायादित् पटाद्यभावमादाय लक्षणसमन्वयान्नाव्याप्तिरिति ।

इदमत्रावधेयम् । यद्यपि नित्यज्ञानानुयोगिकविषयितया घटादेर्व्याप्यवृत्तित्वमस्ति । विषयितया घटादेः प्रागुक्तपारिभाषिकव्याप्यवृत्तित्वं (साध्यतावच्छेदकसंवन्धेन यत् स्वाधिकरणं तत्र वृत्तिनियामकसंबन्धेन वर्तमानो योऽभावस्तदीयप्रतियोगित्वाभाववत्त्वरूपं) नास्तीति भवत्येव प्रतियोगिवैयधिकरण्यघटितलक्षणलक्ष्यत्वं घटवान् नित्यज्ञानत्वादिति । न चैवमव्याप्तेः का गतिरिति वाच्यम् । (न चैवमपि घटवान् नित्यज्ञानत्वादित्यत्र विषयितासंबन्धे गगनीयत्वनित्यज्ञानानुयोगिकत्वोभयत्वेन गगनाभावमादायापि प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तेः का गतिः त्वयाऽस्य स्थलस्याव्याप्यवृत्तित्वमिति स्वीकृतत्वादिति वाच्यम् । स्वरूपसंवन्धेन (कालिकेन) गगनादेर्वृत्तित्वपक्षे घटसाध्यकमहाकालत्वहेतुकाव्याप्तिसमत्वेनेदानीमिष्टत्वात् । घटवान् नित्यज्ञानत्वादित्यत्राव्याप्तेर्वारणीयत्वे तु स्वप्रतियोगितावच्छेदकसंबन्धसामान्ये तादृशोभयाभाववत्त्वस्य (निरुक्तप्रतियोगिप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाववत्त्वस्य) प्रतियोगितायां पारिभाषिकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य च विवक्षणीयत्वात् । साध्यतावच्छेदकसंबन्धातिरिक्तसंवन्धावच्छिन्नत्व साध्यतावच्छेदकत्वोभयाभाववत्त्वस्य प्रतियोगितायामेव विवक्षितत्वात् ।

तथा च लक्षणघटकाभावीया प्रतियोगिता पटत्वावच्छिन्नेति नाव्याप्तिः । तस्य च प्रतियोगिताविशिष्टप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसितार्थः । वै० स्वतादात्म्य, स्वावच्छेदकसंवन्धत्वव्यापकाभावप्रतियोगितानिरूपितपरंपरावच्छेदकत्वोभयसंबन्धेन । तथा च परिभाषिकसाध्यतावच्छेदकसंबन्धावच्छिन्नत्ववत्समवायसंवन्धावच्छिन्नपटत्वावच्छिन्नप्रतियोगितैव प्रतियोगिताविशिष्टा भवतीति क्वाऽव्याप्तिशङ्कापीति । लक्षणघटकसमवायसंवन्धावच्छिन्नपटाभावीया प्रतियोगिता भवति प्रतियोगिताविशिष्टा तत्र स्वतादात्म्य स्वावच्छेदक(समवाय)संवन्धत्वव्यापकाभावप्रतियोगितानिरूपितपरंपरावच्छेदकत्वोभयत्वस्य सत्त्वात् । तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यता

वच्छेदके घटत्वे सत्त्वेन घटवान् नित्यज्ञानत्वादित्यत्र नाव्याप्तिः । (तादृश-पटाभावीयप्रतियोगितावच्छेदकसमवायसंबन्धे तादृशाभावीयप्रतियोगितानवच्छेदकत्वं नास्तीत्यभावस्य सत्त्वेन तदभावासत्त्वात् भवति सोऽभावः तत्समवाय-संबन्धत्वव्यापकस्तदीयप्रतियोगितानिरूपितपरंपरावच्छेदकत्वस्य स्वतादात्म्यस्य च समवायेन पटाभावीयप्रतियोगितायां सत्त्वेन भवति प्रतियोगिताविशिष्टा समवायेन पटाभावीया प्रतियोगिता तदनवच्छेदकत्वस्य साध्यतावच्छेदके घटत्वे सत्त्वेन घटवान् नित्यज्ञानत्वादित्यत्र नाव्याप्तिः । एवं यथाश्रुतार्थपरित्यागेन (साध्यतावच्छेदकसंबन्धावच्छिन्ने पारिभाषिकसाध्यता-वच्छेदकसंबन्धावच्छिन्नत्वग्रहणे अपारिभाषिकसाध्यतावच्छेदकसंबन्धिभिन्नत्वस्य परित्यागेन) साध्यतावच्छेदकावच्छिन्नप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये तादृशोभयाभाववत्त्वस्य वक्ष्यमाणतया (यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगि-प्रतियोगिकत्व हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाववत्त्वस्य वक्ष्यमाण-तया) तत्रैतद्दोषस्य (वह्निप्रतियोगिकसंयोगेन वह्निमान् धूमादित्यत्राव्याप्ति-रूपदोषस्य) न संभव इति ।

**तथापि साध्यसाधनभेदेन व्याप्तेर्भेदाद् व्यासज्यवृत्तिधर्मेण साध्यतायां निरुक्तमपहाय यादृशप्रतियोगिताश्रयप्रतियोगिकत्वघटितस्यैव प्रवेशान्नोक्तस्थलाव्याप्तिरिति जा० टी० ।**

प्रवेशादिति । यद्यपीत्यस्य समाधानमाह—तथापीति । व्यासज्य-वृत्तिधर्मेण एकत्वानवच्छिन्नपर्याप्तिकधर्मेण । प्रतियोगित्वाश्रयप्रतियोगिकत्वविवक्षणे नोक्तस्थलेऽतिव्याप्तिः संभवति। साध्यतावच्छेदकसंबन्धसामान्ये तादृशप्रतियोगिता श्रयधूमप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्योगोलकानुयोगिकत्वोभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघटकत्वात् ।

ननु प्रतियोगिवैयधिकरण्याघटितलक्षणे साध्यतावच्छेदकसंबन्धावच्छिन्नत्वस्य लक्षणघटकाभावीयप्रतियोगिताविशेषणतयोक्तस्थले (वह्निधूमोभयवान् धूमादित्यत्र)

संयोगसंबन्धावच्छिन्नवह्निधूमोभयत्वावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याऽव्याप्तिरिति चेन्न । पारिभाषिकस्य तस्य प्रवेश्यत्वात् । साध्यतावच्छेदकसंसर्गातिरिक्त-संबन्धावच्छिन्नत्व, साध्यतावच्छेदकव्यापकत्वोभयाभाववत्प्रतियोगिताया एव साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितापदेन विवक्षितत्वात् । हेतुसमानाधिकरणा-भावप्रतियोगितावच्छेदकत्वाभावस्य साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिता-वच्छेदकत्वीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य विवक्षणीयत्वाद् वा । स्व-वृत्तिवाच्यत्वादीनां संसर्गत्वे तेन संबन्धेन साध्यतायामव्याप्तिर्दुरुद्धरैवेति बोध्यम् । साध्यतावच्छेदकसंबन्धसामान्ये स्ववृत्तिवाच्यत्ववत्वसंबन्धे यादृश-प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगि-कत्वयोरुभयो: सत्त्वेन तादृशोभयाभावस्यासत्त्वात् लक्षणघटकाभावाप्रसिद्ध्याऽ-व्याप्तिरिति ।

**न च वह्निधूमोभयत्वावच्छिन्नप्रकारित्वादावेव तादृशोभयत्वा-वच्छिन्नप्रतियोगिकसंबन्धत्वप्रसिद्धिसंभवः । प्राञ्चां मते प्रकारित्वादेः संबन्धाभावात्, विशिष्टधीनियामकस्यैव तथात्वादिति ध्येयम् इति जा० टी० ।**

अयमाशयः यस्य च संबन्धत्वं तेन विशिष्टबुद्धिरवश्यं जन्यते, स च (संबन्धः) मत्वर्थीयैरभिलप्यते । यथा वह्निमान् पर्वतः, रूपवान् घट इत्यादि । न च विषयितया प्रकारितया वा वह्निमज्ज्ञानं, प्रति-योगितया वह्निमानभाव इत्यादिप्रामाणिकानामभिलाप इति विषयित्व, प्रति-योगित्वादिः संसर्गोऽपि नास्तीति ज्ञायते दृश्यते च वह्निं जानामि, वह्निर्नास्तीत्याद्यभिलापः । न च तेन (वह्निं जानामि, वह्निर्नास्तीत्य-पलापेन) तेषां (विषयित्वप्रतियोगित्वादीनां) संबन्धत्वसिद्धिः द्वितीयाप्रथमयोः संबन्धाभिलापकत्वाभावात् । ज्ञानस्य, अभावादेः प्रत्यक्षादिकञ्च विषयित्व-प्रतियोगित्वादिकं प्रकारतयैव गृह्णातीति ।

प्राचामित्यस्वरससूचनाय । स च (अस्वरसश्च) विषयित्व, प्रतियोगित्वाद्यनुपस्थितिदशायामपि विषयविशिष्टज्ञान, प्रतियोगिविशिष्टाभावादिप्रत्यक्षाद्युत्पत्तेरनिर्वाहः । तेषां (विषयित्वप्रतियोगित्वादीनां) संसर्गत्वे च कार्यकारणभावादि लाघवम् । विषयतासंबन्धेन ज्ञानं प्रति तादात्म्येन विषयः कारणम् । प्रतियोगितासंबन्धेनाभावं प्रति तादात्म्येन प्रतियोगी कारणम्) । अन्यथा (विषयित्वप्रतियोगित्वादीनां संबन्धत्वाभावे) । वह्नित्वेतरधर्मानवच्छिन्नप्रकारताकज्ञानत्वं, मणित्व(चन्द्रकान्तमणित्व) मात्रावच्छिन्नप्रतियोगिताकाभावत्वादिना कारणत्वे इतरधर्मानवच्छिन्नत्वस्याधिकस्य प्रवेशाद् गौरवं दुर्वचत्वं च । स्यात् ।

संसर्गत्वे च (विषयित्वप्रतियोगित्वादीनां संसर्गत्वे च) विलक्षणस्यैव (आकाङ्क्षादिभास्यत्वेन तत्र तत्र विलक्षणस्यैव) संसर्गत्वात् । शुद्धवह्नित्वविशिष्टस्य तन्निरूपितविषयितैव; शुद्धमणित्वविशिष्टस्य तन्निरूपितानुयोगितातदवच्छिन्नप्रतियोगितैव हि संसर्गः । उक्तं चैतत् सिद्धान्तलक्षणव्याख्यायां भट्टाचार्येणापीति ।

यद्यपि साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्ननिरूपित-(आधेयतानिरूपित) साध्यवन्निष्ठाधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्वस्य मूलोक्तसामानाधिकरण्यान्तार्थतास्वीकारे न कोऽपि दोषः । साध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतासमानाधिकरणसाध्यवन्निष्ठाधिकरणताभिन्नहेत्वधिकरणताकत्वस्य मूलोक्तसामानाधिकरण्यान्तार्थतास्वीकारे न कोऽपि दोषः । कपिसंयोगी एतद्वृक्षत्वादित्यत्र साध्याभावाधिकरणतासमानाधिकरणसाध्याधिकरणताया हेत्वधिकरणे एतद्वृक्षे सत्त्वे सत्त्वेन साध्याभावो न लक्षणघटकः । संयोगी सत्त्वादित्यत्र साध्याधिकरणतासमानाधिकरणसाध्याभावाधिकरणता हेत्वधिकरणे गुणे नास्तीति साध्याभावो लक्षणघटक इति न कोऽपि दोषः । तथापि एतदर्थस्य सर्वथा मूलाक्षरालभ्यत्वमालोच्य विशेषरूपेण संसर्गता-

मभ्युपेत्याप्याह—अत्र ब्रूमः । साध्यतावच्छेदकसंबन्धावच्छिन्नप्रकृतसाध्याधिकरणता-निरूपित(प्रतियोगिक)स्वरूपसंबन्धेन यदभावप्रतियोगितावच्छेदकावच्छिन्नाधि-करणतासामान्याभाववत्त्वं हेतुमतस्तदभावप्रतियोगितानवच्छेदकत्वस्य साध्यता-वच्छेदकविवक्षणेनैव सामञ्जस्ये निरुक्तप्रतियोगित्वादेः खण्डशःप्रसिद्धिर्विफला ॥ कालो घटवान् महाकालत्वादित्यादौ कालिकसंबन्धावच्छिन्नघटाधिकरणतानिरू-पित (प्रतियोगिक)स्वरूपसंबन्धेन—

पटत्वावच्छिन्नाधिकरणतासामान्याभावस्यैव हेतुमति सत्त्वेन पटत्वावच्छिन्नाभावस्यैव निरुक्तप्रतियोगिवैयधिकरणस्य सुलभत्वादिति ध्येयमिति जा० टी० ।

अत्र साध्यतावच्छेदकावच्छिन्नत्वं पर्याप्तिघटितम् । प्रतियोगितावच्छेदका-वच्छिन्नत्वं च प्रतियोगितावच्छेदकताविशिष्टावच्छेदकतानिरूपितत्वमात्रम् । वै० स्वसामानाधिकरण्य स्ववृत्तित्व, स्वानवच्छेदकानवच्छिन्नत्व, स्वावच्छेदकसंबन्धा-वच्छिन्नत्वैतत्प्रसिद्धचतुष्टयेषु यस्य यस्योपादेयत्वं तेन संबन्धेन । वृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसंम्बन्धेन । एवञ्च प्रतियोगितयाऽभावो महानसीय-वह्निमान् महानसीयवह्न्यभावत्वादित्यत्र वह्न्यभावमहानसीयाभावौ वह्निमहा-नसीयाभावश्चादाय नाव्याप्तिः । साध्यतावच्छेदके तादृशप्रतियोगितावच्छेदकत्वा-भावस्य सत्त्वात् ।

न च गोत्ववान् कालत्वादित्यत्र सृष्टिकालवृत्तित्वविशिष्टघटत्वाद्य-भावप्रतियोगिसमानाधिकरणत्वेन लक्षणाघटकत्वसंभवः । येन प्रतियोगितावच्छेदका-वच्छिन्नत्वं पर्याप्तिघटितं निवेश्यं स्यादिति बोध्यम् । (अत्र दोषाभावेन प्रतियोगितावच्छेदकावच्छिन्नत्वं पर्याप्तिघटितं न वाच्यम् । अवच्छेदकता-विशिष्टावच्छेदकतानिरूपितत्वस्य लक्षणघटकाभावीयप्रतियोगितायां विवक्षणेन तत्फलस्य सिद्धत्वादिति भावः) । इदमुपलक्षणम् प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकत्वाभावश्च (साध्यतावच्छेदके) साध्यता-

वच्छेदकसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वे यस्वरूपसंबन्धावच्छिन्नवच्छेदकताक इति विवक्षायामपि कालो घटवान् महाकालत्वादित्यत्र नाव्याप्तिरिति ।

**एवं यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धसामान्ये साध्यतावच्छेदकसंबन्धत्व, हेत्वधिकरणीभूतयद्व्यक्त्यनुयोगिकसंबन्धत्वोभयाभावः तादृशप्रतियोगिता कथं नोक्तेति चिन्तनीयम् इति जा० टी० ।**

घटवान् महाकालत्वादित्यत्र गगनत्वावच्छिन्नप्रतियोगिकतादात्म्ये कालिकसंबन्धत्व, महाकालत्व, महाकालानुयोगिकत्वोभयाभावमादाय लक्षणसमन्वयः । गगनाभावो लक्षणघटकः । अत्र समवायिनः संयोगेन साध्यतायां जातिमत्वे व्यभिचारिणि समवायिमान् जातिमत्वादित्यत्र साध्याभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसमवाये साध्यतावच्छेदकसंबन्धत्व हेत्वधिकरणीभूतगुणादियत्किञ्चिद्व्यक्त्यनुयोगिकत्वयोः सत्त्वेन साध्याभावो न लक्षणघटक इत्यन्याभावमादायातिव्याप्तिरतः साध्यतावच्छेदकसंबन्धेत्युक्तम् । ननु अत्र यथाश्रुतोभयाभावनिवेशापेक्षया किं लाघवमस्ति येन तादृशप्रतियोगिता कथं नोक्तमित्युक्तमिति चेत् । (साध्यतावच्छेदकसंबन्धे यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभाव इत्यत्रेवात्रापि सामान्यपदोपादानेन व्यापकत्वरूपाभावघटितत्वस्य समानत्वेन किं लाघवमिति प्रश्नः) । प्रतियोगितावच्छेदककोटौ लाघवमनुसृत्याह—

**एवमिति विवृतिः । एवं यादृशप्रतियोगितावच्छेदकावच्छिन्नेत्यादि जा० टी० ।**

अत्र समवायिनः संयोगेन साध्यतायां जातिमत्वे व्यभिचारिणि समवायिमान् जातिमत्वादित्यत्र साध्याभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसमवाये साध्यतावच्छेदकत्व (साध्यतावच्छेदकसंबन्धत्व) हेत्वधिकरणीभूतयत्किञ्चिद्-

व्यक्त्यनुयोगिकत्वोभयोः सत्त्वेन साध्याभावो न लक्षणघटक इत्यन्याभावमादायातिव्याप्तिः स्यादिति ।

**साध्यतावच्छेदकसंबन्धत्वहेत्वधिकरणीभूतयत्किञ्चिदव्यक्त्यनुयोगिकसंबन्धत्वोभयाभावः तादृशप्रतियोगिता कथं नोक्तेति जा० टी० ।**

नन्वत्र (नन्वस्मिन् लक्षणे) यथाश्रुतोभयाभावनिवेशापेक्षया (साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावापेक्षया) किं लाघवमस्ति (उभयत्र व्यापकत्वप्रविशिष्टत्वेनोभयलक्षणयोः समानत्वात्) येन तादृशप्रतियोगिता कथं नोक्तेत्युक्तमिति चेदत्र ब्रूमः । यद्यपि प्रकृतसाध्यतावच्छेदकसंबन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वापेक्षया यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकत्वे यथाश्रुते गौरवमेव । तथापि प्रकृतानुमितिविधेयतानिरूपितसंसर्गतावच्छेदकावच्छिन्नवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य संयोगवृत्ति(प्रतियोगितावच्छेदकसंबन्धरूपसंयोगवृत्ति)भेदप्रतियोगितावच्छेदकतात्वापेक्षया गुरुत्वेन, द्रव्यानुयोगिकसंयोगेन साध्यतास्थले द्रव्यानुयोगिकसंयोगवृत्तिभेदप्रतियोगितावच्छेदकताकत्वस्य च संयोगवृत्तिभेदप्रतियोगितावच्छेदकतात्वापेक्षया गुरुत्वेन द्रव्यानुयोगिकसंयोगेन साध्यतास्थले द्रव्यानुयोगिकसंयोगवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य च संयोगवृत्तिभेदप्रतियोगितावच्छेदकतात्वापेक्षया गुरुत्वेन तत्तदवच्छिन्नाभावाप्रसिद्ध्याव्याप्तेर्वारणाय तादृशप्रतियोगितावच्छेदकं (साध्यतावच्छेदकसंबन्धवृत्तिभेदप्रतियोगितावच्छेदकं) यद् यत् तत्तद्व्यक्तिभेदकूट एव यथाश्रुतलक्षणे प्रवेश्यः (साध्यतावच्छेदकसंबन्धसामान्ये तादृशोभयाभावघटितलक्षणे प्रवेश्यः) । अत्र प्रमेयवान् भावत्वादित्यत्र विषयित्वादीनामसंसर्गत्वे प्रमेयाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धवृत्तिभेदप्रतियोगितावच्छेदकतात्वस्य संबन्ध(साध्यतावच्छेदकसंबन्ध)वृत्तिभेदप्रतियोगितावच्छेदकतात्वापेक्षया गुरुत्वेन घटाद्यभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धवृत्त्य-

भावप्रतियोगितावच्छेदकतात्वस्य च घटत्वावच्छिन्नप्रतियोगिकसंबन्धवृत्त्यभाव(भेद) प्रतियोगितावच्छेदकतात्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्या दोषवारणाय (अव्याप्तिरूपदोषवारणाय) तादृशावच्छेदकभेदकूटः प्रवेश्यः । तत्र यथाश्रुत-लक्षणे यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वभेदस्य प्रविष्टत्वेन गौरवम् । एवमुभयाभावो यथाश्रुते यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वा-वच्छिन्नप्रतियोगिताकोऽत्र (यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धघटित-लक्षणे) सांसर्गिकविषयताविशेषव्यक्तित्वावच्छिन्नप्रतियोगिताक इति स्फुटमेव यथाश्रुतलक्षणे (साध्यतावच्छेदकसंबन्धघटितलक्षणे) उभयाभावघटकप्रतियोगिघटक-तादृशप्रतियोगिकत्वाभावांशे गौरवम् । तस्य संबन्धाघटकत्वेन तस्योपस्थितेः शाब्दबोधे अपेक्षितत्वेन गौरवम् ।

यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धघटितलक्षणे तस्य संबन्ध-घटकत्वेनोपस्थितेरनपेक्षणेन लाघवमिति बोध्यम् । यथाश्रुत एव तदंशे गौरवम् । घटाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य घटत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्या दोषः स्यादिति तादृशाभावप्रतियोगितावच्छेदकं यत् तदवच्छिन्नप्रतियोगिकत्वं निवेश्यं तत्र वह्नेः साध्यतावच्छेदकस्थले (तादात्म्येन वह्निमत्साध्यकधूमत्वे) साध्याभावस्य लक्षणघटकत्वापत्त्याऽव्याप्तिः स्यात् । प्रतियोगिकत्वस्य विशेष्यो-पादाने समवायनिष्ठप्रतियोगिकत्वमादाय वह्निमान् धूमादित्यत्राव्याप्तिः स्यात् । (साध्यतावच्छेदकसंयोगे समवायनिष्ठप्रतियोगिकत्वाभावेन तादृशोभयाभावस्य सत्त्वेन साध्याभावो लक्षणघटक इत्यव्याप्तिः स्यात्) इति प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिकं यद् यत् तावदन्यान्यत्वमेव प्रतियोगितयोपादेयं तत्र सुतरां गौरवम् । एतेन (पूर्वोक्तदर्शितगौरवेण) हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसंबन्धसामान्ये साध्यतावच्छेदकसंबन्धत्व, यादृशाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकसंबन्धत्वो-भयाभावस्तादृशप्रतियोगितोपादेयेत्येव कुतो नोक्तमिति कथन्नोक्तमित्याशङ्का निरस्ता ।

एवं यथाश्रुतोभयाभावत्वस्यैतादृशोभयाभावत्वापेक्षया गुरुत्वेन व्यापकताशरीरे (संबन्धनिष्ठव्याप्यतानिरूपिततादृशोभयाभावनिष्ठव्यापकताशरीरे) तादृशोभयाभावत्वतदितरोभयानवच्छिन्नत्वप्रवेशेनापि दीधित्युक्तलक्षणे गौरवं बोध्यमित्यलम् ।

**कालस्य जगदाधारत्वप्रवादमनुसृत्याह स्वरूपसंबन्धेन (कालिकेन) गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम् इति जा० टी० ।**

प्रवादमनुसृत्याहेति । गगनस्य कालासंबन्धित्वे तुच्छत्वं स्यात्, यथा शशशृङ्गादिः । (अतो गगनस्य कालसंबद्धत्वं वाच्यम्) कालसंबन्धस्यैव सत्त्वरूपत्वात् । कालसंबन्धित्वं सत्त्वं यथा घटादिः । एवं शब्दादिकं प्रति गगनस्याकारणत्वमपि स्यात् । (गगनस्य) कालासंबन्धित्वे तस्य (कारणत्वस्य) पूर्व(कार्यपूर्व)कालसंबन्धघटितत्वात् । अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वं कारणत्वमित्याद्यपि यद्यपि गगनस्य कालसंबन्धसाधकत्वमस्ति । तथापि प्रामाणिकमेव सत्त्वं यस्य व्यतिरेके यस्याभावस्तत्त्वमेव च कारणत्वमिति पक्षे तस्य गगने कारणत्वस्यासंभवात् । (गगनस्य व्यापकत्वेन सर्वत्र सत्त्वमिति गगनव्यतिरेको नास्ति) प्रवादानुसरणं कृतमिति बोध्यम् ।

**समवायिनः संयोगेन साध्यतायां घटत्वादिहेतावव्याप्तिः साधनवन्निष्ठस्य समवायेन संयोगिसामान्याभावस्य प्रतियोगितायां संयोगसमवायोभयावच्छेद्यता सत्त्वात् । अतो धर्मसंबन्धयोरुपादानम् । तथा च तदभावप्रतियोगिताया धर्मविधया समवायेन, संबन्धविधया संयोगेन चावच्छेद्यत्वाभावान्नाव्याप्तिरिति भाव इति जा० टी० ।**

धर्मसंबन्धयोरुपादानमिति । अथ धर्मविधया यत्साध्यतावच्छेदकं धर्म-

विधया तदवच्छिन्नत्वस्य संबन्धविधया यदवच्छेदकं संसर्गविधया तदवच्छिन्नत्वस्य च निवेशनमभिमतम् । तत्र समवायिनः संयोगेन साध्यतायां घटत्वादिति सद्धेतावव्याप्तिवारणमेकतरनिवेशेनापि संभवात् अपरनिवेशनं व्यर्थमिति चेन्न । विषयितया घटसाध्यकतज्ज्ञानत्वहेतुकसद्धेतौ विषयितया विषय्यभावप्रतियोगितायां संसर्गविधया यदवच्छेदकं यद्विषयित्वं संसर्गविधया तदवच्छिन्नत्वस्य साध्यतावच्छेदकविषयित्वावच्छिन्नत्वस्य च द्वयोः सत्त्वेनाव्याप्तेः । धर्मविधया यदवच्छेदकमित्यस्य विवक्षणीयत्वात् । विषयिणः तादात्म्येन साध्यतायां घटज्ञानत्वे विषयिणो विषयित्वसंबन्धावच्छिन्नप्रतियोगिताकताद‍ृशप्रतियोगितायां धर्मविधया साध्यतावच्छेदकं यद् विषयित्वं धर्मविधया तदवच्छिन्नत्वस्य साध्यतावच्छेदकविषयित्वावच्छिन्नत्वस्य च द्वयोः सत्त्वेनाव्याप्तेर्वारणाय संसर्गविधया यदवच्छेदकमित्यस्य च प्रवेश्यत्वात् । एवं च समवायिनः संयोगेन साध्यतायां सद्धेतौ (समवायिमान् घटत्वादित्यत्र) संयोगिनः समवायेनाभावमादायाव्याप्तिवारणाय धर्मविधया तदवच्छिन्नत्वं संसर्गविधया तदवच्छिन्नत्वं वा प्रवेश्यमित्यत्र विनिगमकाभावेनोभयोरेव प्रवेश्यत्वात् । यदि संसर्गविधयावच्छिन्नत्वं संबन्धानवच्छिन्नावच्छेदकताकत्वं धर्मविधयावच्छेदकत्वं संबन्धावच्छिन्नावच्छेदकताकत्वम् । तथा च लाघवमेव विनिगमकनिर्वचनसंभवे वैलक्षण्यस्याखण्डस्याप्रामाणिकत्वात् । तदा तदैकमेव निवेश्यताम् । वस्तुतस्तु वह्निमान् धूमादित्यत्र महानसीयवह्न्यभावं संयोगसमवायोभयसंबन्धेन वह्न्यभावन्त्वादायाव्याप्तिवारणाय साध्यतावच्छेदकधर्मातिरिक्तधर्मानवच्छिन्नत्व, साध्यतावच्छेदकसंबन्धातिरिक्तसंबन्धानवच्छिन्नत्वोभयाभावस्य (प्रतियोगितायाम्) प्रवेशनीयतया तत्र संबन्धत्वधर्मत्वयोः सार्थक्यस्यातिसुलभत्वमेवेति । यदि च महानसीयवह्न्यभावप्रतियोगितावारणाय साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वमेव प्रतियोगिताविशेषणम् । तदापि समवायिनः संयोगसमवायोभयसंबन्धेन साध्यतायां घटत्वे संयोगिन उभयसंबन्धेनाभावमादायाव्याप्तिवारणाय धर्मविधयावच्छिन्नत्वं प्रवेशनीयमेव । एवं समवायिनः संयोगविशिष्टस्य संयोगेन

साध्यतायां घटत्वे साध्यस्य समवायेनाभावमादायाव्याप्तिवारणाय संबन्धविधयावच्छिन्नत्वस्यापि आपाततः सार्थक्यं बोध्यमिति ध्येयम् ।

**न च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वाभावस्तत्संबन्धेन तद्धर्मावच्छिन्नं व्यापकमित्यर्थोऽस्तु धर्मान्तरावच्छिन्नाभावाप्रवेशेन लाघवादिति वाच्यम् । घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः, तादृशद्रव्यत्वभेदमादाय कथञ्चित् तत्र लक्षणसमन्वयेऽपि दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्राव्याप्तिः । केनापि संबन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासंभवादिति जा० टी० ।**

ननु प्रतियोगितावच्छेदकसंबन्धेन साध्यतावच्छेदकयद्धर्मावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयप्रतियोगितासामान्ये साध्यतावच्छेदकयत्संबन्धावच्छिन्नत्वाभावस्तेन संबन्धेन साध्यतावच्छेदकीभूततद्धर्मावच्छिन्नस्य हेतुव्यापकत्वमेव विवक्ष्यताम् । घटवान् महाकालत्वादित्यत्र तु समवायेन घटाभावमादायैव लक्षणसमन्वयः । तदीयप्रतियोगितायां साध्यतावच्छेदककालिकसंबन्धावच्छिन्नत्वस्यासत्त्वात् । तेन कालिकसंबन्धेन घटत्वावच्छिन्नसामानाधिकरण्यस्य महाकालत्वे सत्त्वेन कालो घटवान् महाकालत्वादित्यत्र नाव्याप्तिरित्ययाशङ्क्य दूषयति घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः । तत्र तादृशद्रव्यत्वभेदमादाय तत्र लक्षणसमन्वयेऽपि तादात्म्येन घटवृत्तित्वविशिष्टद्रव्यत्वानधिकरणत्वस्य घटे सत्त्वेन तादृशभेदीयप्रतियोगितायां साध्यतावच्छेदकसमवायसंबन्धावच्छिन्नत्वाभावस्य सत्त्वेन तेन समवायसंबन्धेन तदवच्छिन्नसामानाधिकरण्यस्य घटत्वे सत्त्वेन नाव्याप्तिरत आह दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादिति । दधित्वविशिष्टेत्यव्याप्यवृत्तित्वसंपत्त्यर्थम् । साध्यतावच्छेदकस्य तादात्म्येन प्रमेयस्य व्याप्यवृत्तित्वात् । वै० दधित्वाधिकरणे समवायेन वृत्तित्वरूपम् । एवं च स्थूलपदं दधिद्व्यणुके व्यभिचारवारणार्थम् ।

तेन द्रव्यत्वव्याप्यव्याप्यजातेः परमाणाववृत्तित्वेन दधित्वविशिष्टप्रमेयाभाववति दधिद्व्यणुके दधित्वहेतोः सत्त्वेऽपि न व्यभिचारः स्थूलदधित्वरूपहेतोरसत्त्वात् ।

घटवृत्तित्वविशिष्टेति संपातायातम् । पूर्वं तादृश (घटवृत्तित्वविशिष्ट) द्रव्यत्वसाध्यकस्थूललिखनात् । अन्यथा विशेषरूपेण संसर्गत्वमन्तरेण तत्सार्थक्यस्यासंभवेन तदभ्युपगमे दधित्वविशिष्टप्रमेयवान् स्थूलदधित्वादित्यत्राव्याप्तेरनुत्थानप्रसङ्गात् । (यथा तत्राव्याप्तिर्वार्यते तथैवात्रापि नाव्याप्तिर्भवतीति बोध्यम्) ।

**तत्रापि दध्यन्तरानुयोगिकसमवायादिसंबन्धेन हेतुमतः प्रकृतसाध्यानधिकरणत्वे तूक्तक्रमेणापि व्यापकत्वं सुवचमिति तु विभावनीयम् इति जा० टी० ।**

विभावनीयमिति । विभावनाबीजं तु विशेषरूपेण संसर्गत्वाभ्युपगमेऽपि स्थलविशेषेऽव्याप्तिः । सा च (अव्याप्तिश्च) यद्यत्संबन्धेन यद्धर्मानवच्छिन्नानधिकरणमित्यादि लक्षणखण्डनव्याख्यानावसरेऽभिहितैवेति ।

**घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादावव्याप्तेः । केनापि संबन्धेन हेतुमतः (घटस्य) साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासंभवात् इति जा० टी० ।**

न चैवं घटानुयोगिकसमवायेनापि तद्घटवृत्तित्वविशिष्टद्रव्यत्वानधिकरणताया हेतुमति घटान्तरे सत्त्वात् कथमव्याप्तिरिति वाच्यम् । तद्घटवृत्तित्वविशिष्टद्रव्यत्वसाध्यकतद्व्यक्तित्वहेतावेवाव्याप्तेरभिप्रेतत्वादिति भावः ।

न चैवम् निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं (हेतुव्यापकत्वं) बोध्यमिति कथनेऽपि संयोगेनापि रूपस्य पृथिवीत्व-

व्यापकत्वापत्तिः । तथाहि संयोगेन रूपवान् द्रव्यत्वादित्यत्र संयोगेन रूपाभावो न लक्षणघटकस्तदीयप्रतियोगितावच्छेदकसंयोगेन रूपत्वावच्छिन्नाधिकरणाप्रसिद्ध्या तदनधिकरणत्वस्यापि वक्तुमशक्यत्वात् । न भवत्यलीकप्रतियोगिकोऽभाव इति सिद्धान्तात् । अपि तु संयोगेन घटाभाव एव लक्षणघटकस्तदीयप्रतियोगितायां साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नत्वस्य सत्त्वेऽपि साध्यतावच्छेदकरूपत्वावच्छिन्नत्वविरहेण तदुभयाभावसत्त्वात् भवति संयोगेन रूपत्वावच्छिन्नस्य पृथिवीत्वव्यापकत्वापत्तिः । तथात्वेऽपि (संयोगेन रूपत्वस्य पृथिवीत्वव्यापकत्वेऽपि तेन (साध्यतावच्छेदकसंयोग)सवन्धेन रूपसामानाधिकरण्याप्रसिद्धेर्नैव व्याप्तिलक्षणातिव्याप्तिविरहात् ।

**व्यापकत्वलक्षणस्य तत्रातिव्याप्तिमपि परिहरति यद्धर्मेत्यत्र-धर्मस्य साध्यतावच्छेदकसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वेनापि विशेषणीयत्वाद्वा इति जा० टी० ।**

यद्धर्मेत्यत्रेति । तथा च यद्धर्मावच्छिन्नत्वघटके साध्यतावच्छेदकीभूतयद्धर्मे साध्यतावच्छेदकसंवन्धावच्छिन्नानधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य विवक्षणीयतया न रूपस्य संयोगेन पृथिवीत्वव्यापकत्वं संयोगसंबन्धावच्छिन्नाधिकरणतानिरूपितनिरूपकतावच्छेदकत्वस्य रूपत्वरूपे यद्धर्मेऽप्रसिद्धत्वादित्याशय इति विवृतिः ।

न च साध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकत्वमेव यद्धर्मरूपे साध्यतावच्छेदके लघुभूतं विशेषणमस्त्विति वाच्यम् । विशिष्टधर्मावच्छिन्नाधेयत्वस्यानतिरिक्तत्वे गुणानुयोगिकसमवायेन गुणान्यत्वविशिष्टसत्त्वस्य द्रव्यत्वव्यापकत्वापत्तेः । गुणानुयोगिकसमवायेन गुणान्यत्वविशिष्टसत्त्ववान् द्रव्यत्वादित्यत्र गुणान्यत्वविशिष्टसत्तात्वावच्छिन्नगुणानुयोगिकसमवायसंबन्धावच्छिन्नाधेयतायाः शुद्धसत्तात्वावच्छिन्नाधेयतायाश्चैक्येन तदवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात्

तेन संबन्धेन साध्याभावो न लक्षणघटकस्तेन साध्यतावच्छेकसंबन्धेन साध्याभावीयप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वस्याप्रसिद्धेरतदन्याभावप्रतियो-गितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् । यद्वा (विशिष्टधर्मावच्छिन्ना-धेयत्वस्यातिरिक्तत्वे आह यद्वेति) ।

**स्वा(प्रतियोगित्वा)वच्छेदकताघटकसंबन्धेन यादृशप्रतियोगिता-वच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये यद्धर्मा-वच्छिन्नावच्छेदकताकत्व, यत्संबन्धावच्छिन्नावच्छेदकताकत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं विवक्षितमिति जा० टी० ।**

तथा च प्रतियोगितावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदक-स्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मा-वच्छिन्नावच्छेदकतानिरूपितत्वसाध्यतावच्छेदकतावच्छेदकयत्संबन्धावच्छिन्नावच्छेदकता-निरूपितत्वोभयाभावस्तादृशतत्संबन्धेन तादृशतद्धर्मावच्छिन्नस्य हेतुव्यापकत्वं तद्-व्यापकसामानाधिकरण्यं हेतौ व्याप्तिरिति विवक्षितमित्यर्थः । अस्ति संयोगेन वह्न्यादेर्धूमादिव्यापकत्वं समवायेन वह्निमतो वह्न्यवयवस्याभावस्य प्रतियोगिता-वच्छेदकताघटक (पर्वतः समवायेन वह्निमान् नेति भेदीयप्रतियोगितावच्छेदकता-घटक) समवायेन तादृशप्रतियोगितावच्छेदकवह्नेरनधिकरणं हेत्वधिकरणं तादृश-प्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्वस्य सत्त्वेऽपि साध्यतावच्छेदकसंयोगसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वविरहेण तादृशोभयाभावस्य सत्त्वात् । कालो घटवान् महाकालत्वादित्यत्र च समवायेन घटवतोऽ-भावमादायैव पूर्वोक्तरीत्या लक्षणसमन्वयः ।

**यद्वा साध्यतावच्छेदकताघटकसंबन्धेनेत्यादि जा० टी० ।**

अथ तादृशप्रतियोगितानिरूपितावच्छेदकतासामान्ये (हेतुसमानाधिकरणा-भावप्रतियोगितानिरूपितावच्छेदकतासामान्ये) यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वो-

भयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य हेतुव्यापकत्वम् तद्व्यापकसामानाधिकरण्यं हेतौ व्याप्तिरित्येव लाघवाद्विवक्षणीयमिति चेन्मैवम्, विशिष्टसत्तावान् जातेरित्यत्र विशिष्टसत्तावदभावस्य प्रतियोगिवैयधिकरण्यसंपत्त्यर्थं स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावदन्यत्वस्यैव हेत्वधिकरणे विवक्षणीयतया वह्निमत्पर्वतत्ववदभावस्य लक्षणघटकत्वेन तदीयप्रतियोगितानिरूपितवह्नित्वावच्छिन्नावच्छेदकतायां तादृशोभयोः (यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयोः) सत्त्वेन वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः ।

न च वह्निमत्पर्वतत्ववदभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकत्वाप्रसिद्धिः, वह्नित्वपर्वतत्वोभयधर्मावच्छिन्ननिरूपकतायाः उभयत्वानवच्छिन्नाया अलीकत्वादिति वाच्यम् । वह्निमत्पर्वतीयवदभावमादायाव्याप्तेः । वह्नित्वपर्वतीयत्वोभयधर्मावच्छिन्ननिरूपकत्वस्य वह्नौ प्रसिद्धत्वात् ।

न च प्रतियोगिताधर्मिकोभयाभावविवक्षायामपि (प्रतियोगितावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकाधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकयत्संबन्धावच्छिन्नावच्छेदकतानिरूपितत्वोभयाभावस्तादृशसंबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं हेतौ व्याप्तिरिति (यद्वेति कल्पेऽपि) तद्दोषतादवस्थ्यम् (वह्निमान् धूमादित्यत्राव्याप्तिदोषतादवस्थ्यम्) वह्नित्वगतैकत्ववृत्त्यवच्छेदकताकत्वस्य तत्प्रतियोगितायां सत्त्वादिति वाच्यम् । साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्यैवोभयाभाववत्प्रतियोगित्वेन विवक्षितत्वात् ।

यद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्व, यत्संबन्धावच्छिन्नावच्छेदकतानिरूपितत्वोभयाभयाभाववत्प्रतियोगित्वेन विवक्षितत्वात् । वृत्तित्वञ्च स्वनिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसंबन्धेन । वह्निमत्पर्वतीया-

भावीयप्रतियोगितायाम् उक्तरूपवृत्तित्वस्य (साध्यतावच्छेदकवह्नित्वगतरूपवृत्तित्वस्य) सत्त्वेन तदभावस्य (वह्निमत्पर्वतीयाभावस्य) प्रतियोगितावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणरूपनिरुक्तप्रतियोगिवैयधिकरण्यविरहान्नाव्याप्तिः। अतएव (वह्निमत्पर्वतीयाभावमादायाव्याप्तेरेव) प्रतियोगिवैयधिकरण्यम्, अत्र (यद्वेति कल्पे) स्वप्रतियोगिभिन्नत्वमेव लाघवाद् विवक्षणीयमित्यपि निरस्तम्। वह्निमत्पर्वतीयाभावस्य स्वप्रतियोगिवह्निभिन्नहेत्वधिकरणपर्वतादिकतया तमादायाव्याप्तेः वह्निमन्महानसीयपर्वतीयाद्यभावमादाय वह्निमान् धूमादित्यत्राव्याप्तेः। किञ्च समवायेन द्रव्यत्वसाध्यकगगनत्वहेतौ गगनं द्रव्यं गगनत्वादित्यत्र समवायेन द्रव्यत्ववतः समवायेनाभावस्यापि लक्षणघटकत्वात्। तत्संबन्धावच्छिन्नप्रतियोगित्वस्य तत्संबन्धप्रतियोगिन्येवाभ्युपगमपक्षे तत्प्रतियोगिभिन्नत्वस्य समवेतगगने सत्त्वादव्याप्तेः।

अथ स्व(प्रतियोगिता)निरूपितावच्छेदकतावदन्यत्वमेव हेत्वधिकरणे प्रतियोगिवैयधिकरण्यघटकं वाच्यम्। अवच्छेदकतावत्ता च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावत्त्वसंबन्धेन।

यद्वा स्वप्रतियोगितावच्छेदकताविशिष्टनिरूपकताधिकरणतावदन्यत्वं विवक्षणीयम्। वै० स्वावच्छेदकावच्छिन्नत्व स्वावच्छेदकसंबन्धावच्छिन्नत्वोभयसंबन्धेन। एवञ्च वह्निमत्पर्वतीयवदभावस्य लक्षणाघटकत्वेन वह्निमान् धूमादित्यत्राव्याप्त्यभावेनावच्छेदकताधर्मिकोभयाभावपरित्यागो नोचितः। न चोक्तपरंपरायाः संसर्गत्वाभावे चोक्तनिवेशासंभवः। स्वनिरूपितयत्किञ्चिदवच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावदन्यत्वं, हेत्वधिकरणे, पर्वतीयत्वावच्छिन्नावच्छेदकतामादाय हेत्वधिकरणमहानसादावस्त्येवेति वाच्यम्। (तत्र वह्निमत्पर्वतीयाभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिरिति वाच्यम्)। स्व(प्रतियोगिता)निरूपितावच्छेदकतात्व-

समानाधिकरणनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वनिष्ठावच्छेदकताकप्रतियोगिता(अवच्छेदकतानिष्ठा)निरूपकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावद्भेदस्यैव निवेश्यत्वात् (हेत्वधिकरणे निवेश्यत्वात्)।

स्वनिरूपितावच्छेदकतात्वसमानाधिकरणावच्छेदकतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिनिरूपकताकाधिकरणतावदन्यत् यद्धेत्वधिकरणं तादृशप्रतियोगितावच्छेदकत्व यत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नत्वोभयाभावस्तेन संबन्धेन तद्धर्मविच्छिन्नसमानाधिकरण्यं व्याप्तिः।

एवं च वह्नित्वगतैकत्वस्यापि तादृशरूपत्वेन तद्वृत्तिनिरूपकताकाधिकरणतावत्त्वस्य हेत्वधिकरणे सत्त्वेनोक्तभेदासत्त्वात् (सत्त्वे उक्तभेदासत्त्वादिति) चेन्मैवम् महानसीयवह्निमान् धूमादित्यत्र महानसीयवह्निमदभावप्रतियोगितावच्छेदकनिष्ठां निरूपितत्वसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवृत्तित्वविशिष्टमहानसीयवह्निमदभावप्रतियोगितावच्छेदकताविशिष्टावच्छेदकतात्वावच्छिन्नप्रतियोगितानिरूपिताम् अवच्छेदकतामादाय वह्नित्वगतैकत्वस्य तादृशावच्छेदकरूपत्ववत्त्वेन तद्वृत्तिनिरूपकताकाधिकरणतासत्त्वेनोक्तभेदस्य हेत्वधिकरणे (पर्वते) विरहेणातिव्याप्तिवारणाय स्वनिरूपितावच्छेदकताकत्वसमानाधिकरणोभयावृत्तिधर्ममात्रावच्छिन्ननिरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वेन प्रगियोगितायाः प्रवेशनीयतया प्रतियोगितधर्मिकोभयाभावकल्पे अवच्छेदकत्वैकाधिकरणप्रवेशापेक्षया, अवच्छेदकताधर्मिकोभयाभावकल्पे प्रतियोगिवैयधिकरण्यशरीरे उभयावृत्तित्वप्रवेश एव गौरवापत्तेः।

(महानसीयवह्निमान् धूमादित्यत्र महानसीयवह्निमदभाव(भेद)प्रतियोगितावच्छेदकवह्निनिष्ठावच्छेदकतानिरूपितनिरूपितत्वसंबन्धावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपिता महानसवृत्तित्वविशिष्टमहानसीयवह्निनिष्ठावच्छेदकतां महानसीयवह्निमद्भेदीयप्रतियोगितावच्छेदकतामादाय तदवच्छेदकताविशिष्टनिष्ठावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकवह्नित्वगतैकत्ववृत्तिनिरूपकताका-

धिकरणतावदन्यत्वस्य हेत्वधिकरणेऽसत्त्वेन साध्याभावो न लक्षणघटक इति तत्रातिव्याप्तिवारणाय स्वनिरूपितावच्छेदकत्वसमानाधिकरणोभयावृत्तिमात्रावच्छिन्न-निरूपितत्वसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वेन प्रतियोगिताया निवेशनीयतया प्रतियोगिताधर्मिककल्पापेक्षयाऽस्मिन् कल्पे गौरवात् ।

यत्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे तादृशाधिकरणत्वा(प्रति-योग्यधिकरणत्वा)वच्छिन्नसामान्यभेदस्य हेत्वधिकरणे निवेशयितुमशक्यत्वात् । भवत्कल्प इव (प्रतियोगिताधर्मिकोभयाभावेति यद्वा कल्प इव) अत्रापि (अच्छेदकताधर्मिककल्पेऽपि) तादृशाधिकरणत्व(प्रतियोगितावच्छेदकावच्छिन्ना-धिकरणत्व) समानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदत्वेनानुयोगिता-वच्छेदकमनुगमय्य तदवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगिकूटत्वावच्छिन्न(हेत्वकरणे)-निवेशे दोषाभावादिति । अत्रोक्तपरंपरायाः (तादृशाधिकरणत्ववत्त्वपरंपरायाः) संसर्गतामभ्युपेत्य तादृशप्रतियोगितावच्छेदकतावदन्यत्वादेः कूटत्वाद्यघटितत्वेन लघुभूतस्य प्रतियोगिवैयधिकरण्यघटकतां मनसिकृत्य भट्टाचार्येणावच्छेदकता-धर्मिकोभयाभाव आदृतः ।

वह्निमान् धूमादित्यत्र वह्निमत्पर्वतीयवदभावमादायाव्याप्तेरेव यत्संबन्धा-वच्छिन्नावच्छेदकताकत्वविवक्षाऽपि निरस्ता । प्रतियोगितायां यत्संबन्धा(साध्यता-वच्छेदकसंबन्धा)वच्छिन्नावच्छेदकत्वविवक्षापि निरस्ता । उक्ताव्याप्ति(वह्निमान् धूमादित्यत्राव्याप्ति)वारणाय साध्यतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयो-गितावच्छेदकरूपवृत्तित्वस्य, स्वनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकतात्वा-वच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वस्य विवक्षणेऽपि पर्वतानुयोगिक-संयोगेन पर्वतीयवद्वह्निमदभावमादायाव्याप्तेर्दुरुद्धरतया साध्यतावच्छेदकसंबन्धा-वच्छिन्नावच्छेदकताकत्वस्य (प्रतियोगितायां) पृथगेव निवेशनीयत्वादिति । पर्वता-नुयोगिकसंयोगेन पर्वतीयवद्वह्निमतो भेदो महानसे हेत्वधिकरणे वर्तते तदीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वसाध्यतावच्छेदक-

संबन्धानवच्छिन्नत्वयोः सत्त्वेन तदुभयाभावस्यासत्त्वादव्याप्तिः । एवं प्रतियोगिताधर्मिकोभयाभावेऽपि तन्नाव्याप्तिरतः साध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वस्य पृथगेव प्रतियोगितायां निवेश्यत्वात् । तथा च नोक्तदोषः । शुद्धसंयोगरूपसाध्यतावच्छेदकसंबन्धेन वह्निमतो भेदस्य पर्वतमहानसादिहेत्वधिकरणेऽसत्त्वेन साध्यभिन्नप्रतियोगितायां तदुभयाभावस्य सत्त्वान्नाव्याप्तिः ।

केचित्तु गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयवह्निमान् धूमादित्यादौ संयोगेन प्रमेयवह्निमदभावप्रतियोगितावच्छेदकता वह्नावेव कल्पनीयतया प्रमेयवह्नित्वावच्छिन्नसंयोगसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः । सिद्धान्ते च विषयितया प्रमेयवह्निमदभावप्रतियोगितावच्छेदकतायां तत्प्रसिद्धिरिति वदन्ति । तन्नातिसमञ्जसम् । गुरुधर्मसाध्यकव्यभिचारिणि (प्रमेयधूमवान् वह्नेरित्यादौ) अतिव्याप्तिवारणाय यद्धर्मत्वस्य पारिभाषिकस्यैव (प्रतियोगितावच्छेदकं यद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकं तदेव प्रतियोगितावच्छेदकम्) विवक्षणीयतया दोषाभावादिति । अत्र (अवच्छेदकताधर्मिकोभयाभावकल्पे) यद्यपि प्रतियोगिवैयधिकरण्यस्य परिष्कारे उभयावृत्तित्वस्य प्रवेशेऽपि प्रतियोगितावच्छेदकतयोभयत्वस्याप्रवेशेन गौरवाभावः । तथापि यथाश्रुते वह्निमत्पर्वतीयवदभावमादाय वह्निमान् धूमादित्यत्राव्याप्तिवारणायोभयाभावनिवेशसार्थक्यं तत्रोभयावृत्तित्वप्रवेशे तेनोभयाभावनिवेशपक्षस्यागुरुत्वेऽपि पूर्वपक्षबीजस्य लाघवस्याभावश्चेति ।

वस्तुतस्तु स्वरूपसंयोगसमवायान्यतमसंबन्धेन प्रमेयस्य साध्यत्वे वाच्यत्वे हेतौ साध्यतावच्छेदकसंबन्धेन प्रमेयवद्भेदस्याप्रसिद्धत्वात् प्रमेयवतः संयोगेन समवायेन वाऽभावस्य प्रतियोगितावच्छेदकताया द्रव्यत्वे सत्त्वे वा कल्पनीयत्वात् । स्वरूपेण तदभावस्य (प्रमेयवदभावस्य) अप्रसिद्धत्वात् । प्रमेयवद्घटाद्यभावप्रतियोगितावच्छेदकत्वस्य घटत्वादिष्वेव कल्पनात् । प्रमेया-

वच्छिन्नसाध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धेः । संयोगस्वरूपसमवायान्यतमसाध्यतावच्छेदकसबन्धावच्छिन्नप्रमेयावच्छिन्नप्रतियोगितावच्छेदकताया अप्रसिद्धेः । केवलान्वयिभिन्ने पारिभाषिकयद्धर्मत्वस्यापि विरहात्, (यद्धर्मावच्छिन्नगमानाधिकरणाभावप्रतियोगितानवच्छेदकं प्रतियोगितावच्छेदकं तदेव पारिभाषिकं प्रतियोगितावच्छेदकं तत्त्वस्य केवलान्वय्यतिरिक्ते विरहात् । यत्किञ्चित्प्रमेयस्य यत्किञ्चित्यत्समानाधिकरणाभावप्रतियोगितावच्छेदकत्वात् । हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वात् केवलान्वयिधर्मसामान्यस्य च प्रमेयतुल्यत्वादव्याप्तिः स्यात् इत्युभयाभावनिवेश आवश्यकः । स्वरूपसंयोगसमवायान्यतमसंबन्धेन प्रमेयस्य साध्यत्वे वाच्यत्वे हेतौ साध्यतावच्छेदकसंबन्धेन प्रमेयवद्भेदस्याप्रसिद्धिः । प्रमेयावच्छिन्नसाध्यतावच्छेदकसबन्धावच्छिन्नावच्छेदकत्वस्याप्रसिद्धयाऽवच्छेदकताधर्मिकतदुभयाभावस्याप्रसिद्धेरव्याप्तिः । उभयाभावनिवेशे तु नोक्तदोषः । विषयित्वादि संवन्धस्थले पृथक्तया वा तदुभयस्य प्रसिद्धेरत्र प्रतियोगितायां तदुभयाभावस्य सत्त्वात् । अतएव यद्धर्मावच्छिन्नावच्छेदकत्वविशिष्टयत्संबन्धावच्छिन्नावच्छेदकताकत्वाभावस्य प्रतियोगितायां निवेशोऽप्यपास्तः ।

केचित्तु भेदप्रतियोगितानिष्ठतदुभयस्यैव लाघवेनाभावप्रतियोगित्वेन प्रविष्टतया तत्र विशिष्टाभावप्रवेशे प्रमेयसाध्यकेऽव्याप्तिः स्यादित्याहुः ।

ऋजवस्तु यत्संबन्धावच्छिन्नयद्धर्मावच्छिन्नावच्छेदकत्वाभावनिवेशे एव तात्पर्यम् । अन्यथा धूमवान् वह्नेरित्यत्रातिव्याप्तेः । धूमवदभावप्रतियोगितायाम् अवच्छेदकतानिरूपितत्वद्वयविरहात् । (हेत्वधिकरणे अयोगोलके साध्य(धूम)वान्नेति भेदीयप्रतियोगितायां यद्धर्मावच्छिन्नयत्संबन्धावच्छिन्नधूमनिष्ठावच्छेदकतानिरूपितत्वस्यैव सत्त्वात् । तादृशावच्छेदकताद्वयनिरूपितत्वद्वयस्यासत्त्वादिति वदन्ति । तदसत् । धूमवत्संयोगेन घटवदभावादिप्रतियोगितायाम्

उभयस्य यथाश्रुतस्यापि सत्त्वात् । विवक्षितस्य रूपवृत्तित्वद्वयस्य धूमवदभावीयप्रतियोगितायामपीत्यतिव्याप्तिविरहात् । उक्तयुक्त्या प्रमेयसाध्यकाव्याप्तेश्चेति दिक् ।

अत्रापि स्वप्रतियोगितावच्छेदकसंबन्धेन यत्प्रतियोगितावच्छेदकानधिकरणत्वं हेतुमतः तद्धर्मावच्छिन्नावच्छेदकताकतत्प्रतियोगितासामान्ये तत्संबन्धावच्छिन्नावच्छेदकत्वाभावविवक्षाऽपि दधित्वविशिष्टप्रमेयादिसाध्यकस्थलाव्याप्त्या पूर्ववदेव निरस्ता वेदितव्या । (केनापि संबन्धेन हेतुमतः साध्यतावच्छेदकावच्छिन्नानधिकरणत्वासंभवात्) ।

**ननु व्याप्यवृत्तिसाध्यकस्थलेऽपि उक्तक्रमेणैव व्यापकत्वं निर्वाच्यम् अन्यथा दण्डिमान् इत्यादौ दण्डित्वप्रकारेण व्यापकत्वानुपपत्तेः । तथा च प्रमेयवान् घटत्वादित्यादावव्याप्तिः । प्रमेयत्वावच्छिन्नत्वस्याप्रसिद्धेरिति जा० टी० ।**

व्यापकत्वानुपपत्तिरिति । तथा च व्याप्यवृत्तिसाध्यकस्थले हेतुमन्निष्ठाभावनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्त्वस्यैव व्यापकत्वस्वरूपतया साध्यतावच्छेदकीभूतानां दण्डादीनां तादृशतत्तद्दण्डयभावप्रतियोगितावच्छेदकत्वेन दण्डादिप्रकारेण दण्डयादेः व्यापकत्वं न भवति अपि तु परंपरया दण्डत्वादिप्रकारेणैवेति । तत्रापि निरुक्तक्रमेण व्यापकत्वाभिधाने तादृशतत्तद्दण्डयादेरभावप्रतियोगितायां दण्डत्वादिमात्रविशिष्टदण्डाद्यवच्छिन्नत्वविरहेणोभयाभावसत्त्वाद् दण्डादिप्रकारेण दण्डयादेर्व्यापकत्वमव्याहतमेवेति भाव इति विवृतिः । निरुक्तक्रमेणेति । प्रतियोगितावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकस्यानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितासामान्ये साध्यतावच्छेदकयद्धर्मावच्छिन्नावच्छेदकतानिरूपितत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नावच्छेदकतानिरूपितत्वोभयाभावस्तादृशतत्संबन्धेन तादृशतद्धर्मावच्छिन्नस्य हेतुव्यापकत्वं तद्व्यापकसामानाधिकरण्यं हेतौ व्याप्तिरिति क्रमेणेत्यर्थः ।

**अन्यथा दण्डिमानित्यादाविति जा० टी० ।**

सर्वेषां दण्डानां हेतुमन्निष्ठतत्तद्दण्डावच्छिन्नाभावप्रतियोगितावच्छेदकत्वेन तदभावस्य (तत्प्रतियोगितावच्छेदकत्वाभावस्य) तत्तद्दण्डानधिकरणे शुद्धदण्डे सत्त्वायोगादव्याप्तिप्रसङ्गेऽपि तत्ताविशिष्ट-दण्डावच्छिन्नत्वस्य शुद्धदण्डावच्छिन्नत्वस्य च विलक्षणत्वेन साध्यतावच्छेदकशुद्धदण्डावच्छिन्नत्वघटितोभयाभावस्य प्रतियोगिता-सामान्ये (हेत्वधिकरणवृत्त्यभावतत्तद्दण्डावच्छिन्नप्रतियोगितासामान्ये) सत्त्वेन नाव्याप्तिसंभव इत्याशयः । न चैवं तद्दण्डवतः साध्यतायां व्यभिचारिणि (तद्दण्डिमान् दण्डिसंयोगादित्यादौ) प्रतियोगितासामान्ये (स्वावच्छेदकताघटक-संबन्धेन यादृशप्रतियोगितावच्छेदकानधिकरणं हेत्वधिकरणं तादृशप्रतियोगिता-सामान्ये) शुद्धदण्डावच्छिन्नत्वघटितोभयाभावसत्त्वेन परंपरया तदवच्छेदकत्वस्य शुद्धदण्डे सत्त्वे विशिष्टेऽपि सत्त्वादिति वाच्यम् । यादृशधर्मावच्छिन्नविधेयका-नुमितिफलं तादृशधर्मावच्छेद्यत्व(तादृशधर्मावच्छिन्नत्व)घटितोभयाभावस्य व्याप्ति घटकत्वेन तद्दण्डावच्छेद्यत्वघटितोभयाभावस्य प्रतियोगितासामान्ये (लक्षणघटकसाध्याभावीयप्रतियोगितासामान्ये) विरहादतिव्याप्तिविरहात् । यद्यपि अवच्छेदकताघटितलक्षणेऽपि यादृशधर्मेऽनवच्छेदकत्वविवक्षायां न दोषः । (स्वावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्व-धिकरणं तादृशप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकमिति विवक्षायाँ न दोषः ।)

तथापि पर्याप्तेरव्याप्यवृत्तितया निराकृतत्वेन साध्यतावच्छेदकधर्मिक-व्यापकतावच्छेदकत्वग्रहस्य प्रमात्वासंभवाद् व्यापकतावच्छेदकतावच्छेदकत्वग्रहस्ये-दानीम् अनुमित्यजनकत्वस्याभ्युपगमात् अवच्छेदकत्वगर्भनिरुक्तिपरित्यागः ।

तस्यानुमितिजनकत्वे च (व्यापकतावच्छेदकतावच्छेदकत्वग्रहस्यानुमिति-जनकत्वे च) यद्रूपावच्छिन्नं तादृशरूपावच्छिन्नमित्यादिविशेषव्याप्तौ वक्ष्यति । अवच्छेद्यतागर्भे तु तत्तद्दण्डावच्छिन्नविधेयकानुमितौ तादृशप्रतियोगितात्व (प्रतियोगिता-

वच्छेदकावच्छिन्नानधिकरणवृत्त्यभावप्रतियोगितात्व)व्यापक तत्तद्दण्डावच्छिन्नत्वघटिताभावप्रतियोगितानिरूपितपरंपरावच्छेदकत्वरूपव्यापकतावच्छेदकत्वग्रहस्य भ्रमत्वात् । शुद्धदण्डाद्यवच्छेद्यत्वघटितोभयाभावस्य प्रतियोगितासामान्यनिष्ठस्य प्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वग्रहस्य च प्रमात्वान्न दोष इति ध्येयम् । तत्तद्दण्डे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदके तादृशप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानस्य भ्रमत्वम् । दण्डरूपसाध्यतावच्छेदकं तादृशाभावप्रतियोगितानवच्छेदकमिति ज्ञानस्य प्रमात्वं बोध्यम् ।

ननु साध्यतावच्छेदकताघटकसंवन्धेन प्रतियोगितावच्छेदकवैशिष्टचोक्तौ साध्यतावच्छेदकताघटकसंबन्धेन यादृशप्रतियोगितावच्छेदकत्वविशिष्टानधिकरणं हेत्वधिकरणमित्युक्तौ) तद्व्यक्तित्वविशिष्टप्रमेयत्वप्रतियोगिकस्वरूपेण. तादृशप्रमेयत्वविशिष्टसाध्यकतद्दधित्वे तेन संबन्धेन प्रतियोग्यनधिकरणत्वस्य हेत्वधिकरणे प्रसिद्ध्याऽव्याप्त्यापत्त्या प्रतियोगितावच्छेदकताघटकसंबन्धेनैव तद्(प्रतियोगितावच्छेदकवैशिष्टचं)वाच्यम् । तथा सति समवायेन रूपवान् पृथिवीत्वादित्यादौ हेत्वधिकरणे विषयितया रूपत्वशिविष्टाभावमादायाव्याप्तिवारणाय साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नयद्धर्मनिष्ठावच्छेदकताकत्वमेव यद्धर्मावच्छिन्नत्वं (प्रतियोगितायां) विवक्षणीयमिति घटाद्यभावाद्यनुयोगिकस्वरूपेण प्रमेयत्वविशिष्टस्य साध्यतावच्छेदकसंबन्धेनाभावप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वस्य तादृशस्य न प्रसिद्धिसंभवः ।

न च तादृशाभावो गुरुधर्मा(प्रमाविषयत्वरूपप्रमेयत्वरूपगुरुधर्मा)वच्छिन्नाभाव इत्यप्रसिद्ध इति वाच्यम् । समवायसंबन्धावच्छिन्नप्रतियोगितायां प्रमेयत्वावच्छिन्नत्वप्रसिद्धिं वदता गुरुधर्मस्यावच्छेदकत्वाभ्युपगमस्येदानीं दर्शितत्वात् । एवं च साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितायामेव प्रमेयत्वावच्छिन्नत्वप्रसिद्धिसंभवे संबन्धान्तरावच्छिन्नप्रतियोगितायां तत्प्रसिद्ध्यनुधावनं वृथेत्यपि निरस्तमित्याशयेनाह—

**तथा च प्रमेयवान् वाच्यत्वादित्यदावव्याप्तिः, प्रमेयत्वावच्छिन्नत्वस्याप्रसिद्धेरिति जा० टी० ।**

अत्र विषयित्वप्रतियोगित्वादीनां संसर्गत्वे साध्यतावच्छेदकताघटकसंवन्धेन प्रतियोगितावच्छेदकवैशिष्ट्योक्तौ दोषाभावाद् यद्धर्मनिष्ठावच्छेदकतायां संबन्धविशेषावच्छिन्नत्वप्रवेशस्यानावश्यकतया साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वेऽपि प्रसिद्धिर्भवत्येवेत्यवधेयम् ।

**अन्यथा प्रकारित्वप्रतियोगित्वसाधारणैकावच्छेद्यत्वविरहेण व्यभिचारिण्यतिव्याप्त्यापत्तेरिति जा० टी० ।**

ज्ञाननिरूपितत्वाभावनिरूपितत्वाभ्यां प्रकारित्वप्रतियोगित्वयोर्वैलक्षण्येत्यादिः । ननु स्वरूपसंबन्धेन (कालिकसंबन्धेन) गगनादेर्वृत्तित्वेऽपि प्रकृतसाध्यीय(प्रकृत साध्यप्रतियोगिक)साध्यतावच्छेदकसंबन्धसामान्ये तादृशोभयाभाव(यद्धर्मावच्छिन्नप्रतियोगिकत्वयत्संबन्धत्वोभयाभाव)विवक्षयैव सर्वसामञ्जस्ये कृतं विवक्षान्तरेण (प्रतियोगिताधर्मिकोभयाभावरूपविवक्षान्तरेण)—

**घटवान् महाकालत्वादित्यत्र घटीयतादृशविशेषणतायां (घटप्रतियोगिककालिकसंबन्धे) पटत्वावच्छिन्नप्रतियोगिकत्वविरहेण पटाभावस्यैव प्रतियोगिवैयधिकरण्यसंभवात् इति जा० टी० ।**

इदमुपलक्षणम् । साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वघटितत्रितयाभावोऽपि निवेशयितुं योग्य इति । साध्यतावच्छेदकसंबन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व(यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व) हेत्वधिकरणीभूतयद्किञ्चिद्व्यक्त्यनुयोगिकत्व, साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वैतत्त्रितयाभावः तादृशप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणीयम् । अत्र विषयित्वादिसंबन्धेन व्याप्यव्यापकभावस्याभ्युपगमे तेन प्रमेयसाध्यकस्थलस्याव्याप्यवृत्तिसाध्यकस्थलत्वेऽपि च न प्रमेयवत् नित्यत्वा-

दित्यत्राव्याप्तिसंभवः । प्रमेयत्वावच्छिन्नप्रतियोगिकविषयितातो घटत्वाद्यवच्छिन्न-प्रतियोगिकविषयित्वस्य वैलक्षण्यात् । अन्यथा घट इति ज्ञानात् प्रमेय इति ज्ञानस्यापि वैलक्षण्यानुपपत्तेरिति प्रमेयत्वावच्छिन्नप्रतियोगिकविषयित्वे घटत्वावच्छिन्नप्रतियोगिकत्वविरहेण घटाभावस्य लक्षणघटकत्वात् ।

यत्तु अत्र नित्यज्ञानानुयोगिकप्रमेयघटत्वावच्छिन्नप्रतियोगिकविषयित्वे साध्यतावच्छेदकसंबन्धत्वे घटत्वावच्छिन्नप्रतियोगिकत्वसत्त्वान्नातिव्याप्तिवारणम् । (साध्याभावस्य लक्षणाघटकत्वात्) । न च प्रतियोगितावच्छेदकमात्रावच्छिन्न-प्रतियोगिकत्वं विवक्षणीयमिति वाच्यम् । तादृशविषयित्वे प्रमेयघटत्वावच्छिन्न-प्रतियोगिकत्वविरहेण साध्याभावस्य लक्षणघटकत्वमिति नातिव्याप्तिरिति वाच्यम् । केवलघटत्वविशिष्टसाध्यकप्रमेयघटज्ञानत्वे सद्धेतौ हेत्वधिकरणानुयोगिकविषयित्वे (विषयित्वरूपसंवन्धे) साध्याभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नप्रतियोगिकत्व-विरहेण साध्याभावस्य लक्षणघटकतयाऽव्याप्तेः ।

न च हेत्वधिकरणानुयोगिकसाध्यतावच्छेदकसंवन्धस्य साध्यतावच्छदक-केवलघटत्वावच्छिन्नप्रतियोगिकत्वविरहे कथं सद्धेतुत्वं सद्धेतुत्वे कथमव्याप्तिरिति वाच्यम् । सद्धेतुत्वे च साध्यतावच्छेदकसंवन्धे हेत्वधिकरणानुयोगिकत्वघट-प्रतियोगिकत्वोभयोः सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात्कथमव्याप्तिरिति वाच्यम् । विषयित्वरूपसंसर्गप्रतियोगित्वस्यैव विषयतारूपतया प्रमेयघटज्ञाने हेत्वधिकरणे केवल-घटत्वविशिष्टस्याविषयत्वे केवलघटत्वविशिष्टविषयत्वास्वीकारे तज्ज्ञानानुयोगिक-विषयित्वस्य केवलघटत्वावच्छिन्नप्रतियोगिकत्वविरहात् घटत्वतद्धर्मविशिष्टस्य घटत्वतद्धर्मविशिष्टप्रतियोगिकविषयित्वादिसंसर्गानुयोगिन्यपि हेत्वधिकरणे सत्त्वा-भ्युपगमात् । तद्धर्ममात्रविशिष्टप्रतियोगिकत्वं (साध्यतावच्छेदकसंबन्धे) नहि तन्त्रं गौरवादिति केवलघटत्वविशिष्टसाध्यकप्रमेयघटज्ञानत्वे सद्धेतुत्वस्यापि निर्वाहादिति भट्टाचार्यैरुक्तम् । तन्नातियुक्तम् । तादृशधर्मावच्छिन्नप्रतियोगिता-कत्वेनैव संसर्गेण तादृशधर्मावच्छिन्नसत्त्वस्य युक्तत्वात् । यदि च विशिष्ट-

धर्मावच्छिन्नप्रतियोगिकसंसर्गः शुद्धधर्मविशिष्टबोधे भासेत भवेदपि स (विशिष्ट धर्मावच्छिन्नप्रतियोगिकसंसर्गः) शुद्धस्य संसर्गः । तथात्वे तद्बोधस्य (शुद्ध धर्मविशिष्टबोधस्य) विशिष्टधर्मविशिष्टवैशिष्ट्यावगाहित्वापत्तेः । प्रकारतावच्छेदकधर्मन्यूनाधिकस्य भासमानसंसर्गप्रतियोगितावच्छेदकत्वेऽतिप्रसङ्गापाताच्च ।

अतएव यद्रूपविशिष्टेत्युक्तेः फलप्रपञ्चे भट्टाचार्येण विशिष्टसत्तात्वावच्छिन्नस्यासत्तया यद्रूपपदस्य वैयर्थ्यमाशंकितं प्राक् । अन्यथा विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकसंसर्गस्य सत्तात्वावच्छिन्नप्रतियोगिकतया तेन संबन्धेन सत्तात्वावच्छिन्नस्य सत्त्वप्रसङ्गे तद्ग्रन्थासङ्गतेः ।

न च विषयत्वादिष्वेव ईदृशनियम इति वाच्यम् । नियमभेदकल्पनायामतिगौरवात् । अन्यथा घटत्वावच्छिन्नप्रतियोगिताकविषयित्व, प्रमेयत्वावच्छिन्नविषयित्वयोर्वैलक्षण्येऽपि प्रमेयविषयकज्ञाने घटस्यापि सत्त्वं स्यात्, विषयित्वसंसर्गस्थले तद्धर्मविशिष्टस्य तदाश्रयप्रतियोगिकसंबन्धेन सत्त्वमित्यस्यैव लाघवेनाभ्युपेयत्वात् । न च प्रमेयत्वावच्छिन्नप्रतियोगिकविषयित्वस्य घटत्वविशिष्टसंसर्गत्वे प्रमेयज्ञानानन्तरं घटं जानामीत्यनुव्यवसायापत्तिरिति वाच्यम् । तुल्यन्यायेन घटत्वमात्रविशिष्टविषयकज्ञानसाधकानुव्यवसायस्य घटं जानामीत्येतद्भिन्नस्याभावात् । तस्य च केवलघटत्वविशिष्टविषयकज्ञान, प्रमेयघटत्वविशिष्टविषयकज्ञानयोः शुद्धघटत्वविशिष्टवैशिष्ट्यावगाहित्वेऽपि प्रमात्वप्रमेयघटज्ञानविलक्षणशुद्धघटज्ञानग्राहकत्वानुपपत्तेः । तस्य च तदभावे ग्राहकान्तराभावेन तज्ज्ञानस्यैवालीकत्वापत्तेरिति विशिष्टज्ञाने शुद्धघटत्वविशिष्टस्यापि असत्त्वमभ्युपेयं स्यात्, भवति सत्त्वं, विशेष्यविधया शुद्धघटत्वविशिष्टस्य विषयत्वादेवेति गृहाणेत्यलमप्रस्तुतजल्पनेन ।

**कालः प्रमेयवान् कालत्वादित्यत्र च कालिकसंबन्धेन प्रमेयसामान्यस्य व्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यस्यैवानुपादेयत्वेन**

निर्दोषादतः पूर्वकल्पे (संबन्धधर्मिकोभयाभावघटितलक्षणे) दोषान्तरमाह (अतिव्याप्तिरूपं दोषान्तरमाह) अतएवेतीति जा० टी० ।

व्याप्यवृत्तितयेति । ननु तत्क्षणान्यवृत्तित्वविशिष्टप्रमेयस्य विभुत्व-विशिष्टप्रमेयस्य वाऽनधिकरणदेशस्य प्रसिद्धतया तस्याव्याप्यवृत्तित्वेन तत्साध-कस्यैतल्लक्षणलक्ष्यतया तत्राव्याप्तिः संभवत्येवेति(साध्यतावच्छेदककालिकसंबन्धे यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, महाकालानुयोगिकत्वोभयस्यैव सत्त्वेन प्रतियोगिव्यधिकरणाभावस्याप्रसिद्ध्या तत्राऽव्याप्तिः संभवत्येवेति) चेन्न तत्संबन्धा-वच्छिन्नवृत्तित्ताविशिष्टस्य तेनैव सत्त्वं नान्येनेति मते स्वरूपसंवन्धावृत्तित्वस्य साध्यविशेषणत्वे कालिकेन साध्यत्वासंभवाद् । कालिकसंवन्धावच्छिन्नवृत्तित्वस्य तथात्वे च (साध्यविशेषणत्वे च) स्वरूपेण तदनधिकरणत्वस्य वस्तुमात्रे सत्त्वेन तादृशानधिकरणस्य कालनिष्ठाभावावच्छेदकत्वासंभवात् । अन्यथा संयोगेन रूपानधिकरणघटादेरपि कालनिष्ठा(भावा)वच्छेदकत्वापत्तेः । कालस्य च कालनिष्ठाभावाधिकरणतायामवच्छेदकत्वानभ्युपगमेन तत्क्षणत्व - तत्क्षणान्य वृत्तित्वविशिष्टप्रमेयाभावावच्छेदकत्वासंभवादित्याशयः ।

यद्वा यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेदका-वच्छिन्नत्व, साध्यतानिरूपितसंसर्गतावच्छेदकधर्मावच्छिन्नसंसर्गतानिरूपितत्व, हेत्व धिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसंसर्गतानिरूपितत्वैतत्त्रितयाभावः, तादृशप्रति-योगित्वस्य लक्षणघटकत्वमभिमतमिति घटत्वावच्छिन्नप्रतियोगित्वस्य प्रमेयत्वाद्यन-वच्छिन्नतया घटाभावप्रतियोगित्वस्य लक्षणघटकत्वसंभव इति भावः ।

दीपिकायां पूर्वकल्पे दोषान्तरमाह । नन्वत्र घटघटान्यप्रमेयोभयवान् महाकालत्वादित्यत्राव्याप्तिः । कालिकविशेषणतामात्रस्य साध्यीय(साध्यप्रति-योगिक)साध्यतावच्छेदकसंबन्धतया तत्र घटत्वादिप्रत्येकधर्मावच्छिन्नप्रतियोगिकत्व; महाकालानुयोगिकत्वोभयस्यैव सत्त्वादिति चेन्न साध्यतावच्छेदकसंबन्धावच्छिन्ना-

धेयतावच्छेदकतासामान्ये साध्यतावच्छेदकनिष्ठत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकसंबन्धावच्छिन्नाधेयतानिरूपितत्वयादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपितत्वैतत्त्रितयाभावस्य विवक्षितत्वात् ।

यद्वेति । न च तथापि तादृशप्रतियोगितासामान्ये यद्धर्मावच्छिन्नं यत् तन्निरूपकत्व, यत्संबन्धावच्छिन्नं यत् तन्निरूपकत्वोभयाभावः निवेश्यतां किमवच्छेदकताद्वयप्रवेशेनेति वाच्यम् । प्रमेयवान् वाच्यत्वादित्यादौ घटाधिकरणत्वाभावीयप्रतियोगितायां प्रमेयत्वावच्छिन्नं यदाधेयत्वं निरूपकत्वस्वरूपसंबन्धावच्छिन्नावच्छेदकताकत्वोभयस्य सत्त्वात् एवं तत्रैव समवायेन प्रमेयवतः संयोगेनाभावमादाय तत्प्रतियोगितायां प्रमेयत्वावच्छिन्नावच्छेदकताकत्व, स्वरूपसंबन्धावच्छिन्नं यत् प्रतियोगितात्वनिष्ठाधेयत्वं तन्निरूपकत्वैतदुभयस्य सत्त्वात् ।

अतएवेतीति । ननु समवायस्य भिन्नत्वेऽपि कालिकसमवायोभयसंबन्धेन सत्तासाध्यके समवायेन व्यभिचारिणि सत्त्वेऽतिव्याप्तिः । साध्यतावच्छेदकसंबन्धसामान्यान्तर्गतसमवाये उभयाभावविरहादिति । (समवाये सत्त्वप्रतियोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयोः सत्त्वेन साध्याभावस्य लक्षणाघटकत्वादिति) समवायैक्यमतानुसरणं निर्वीजमिति चेन्न । संसर्गतावच्छेदकमात्रभेदेन संसर्गताभेदे संसर्गताधर्मिकोभयाभावविवक्षायां दोषाभावात् ।

यद्वा साध्यतावच्छेदकसंबन्धेन साध्यवदनुयोगिकसाध्यतावच्छेदकसंबन्धसामान्ये उभयाभावो विवक्षणीयः (यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावो विवक्षणीयः) । तथा च जन्यानुयोगिकसमवाये कालिके वा गगनादि यत्किञ्चिद्व्यक्त्यनुयोगिकत्वघटितोभयाभावसत्त्वात् । (यादृशप्रतियोगितावच्छेदकावच्छिन्न(गगन)प्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावः साध्यतावच्छेदकसंबन्धसामान्ये वर्तते । न च समवायभेदमतेऽतिव्याप्तिः । द्रव्यं जातेरित्यादावतिव्याप्ति-

रिति । अत्र वह्निधूमोभयवान् वह्ने रित्यादावित्यादिग्रन्थस्योभयसाध्यकाव्याप्ति-वारणाय (संबन्धे उभयप्रतियोगिकत्वविरहेण वह्निधूमोभयवान् धूमादित्यत्र साध्यतावच्छेदकसंयोगे साध्याभावप्रतियोगिवह्निधूमोभयप्रतियोगिकत्वहेत्वधिकरणी-भूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्य सत्त्वेन साध्याभावस्य लक्षणघट-कत्वेनाव्याप्तिवारणाय) प्रतियोगितावच्छेदकाश्रयप्रतियोगिकत्वविवक्षिते (तथा चोक्तस्थले नाव्याप्तिः, साध्यतावच्छेदकसंयोगे साध्याभावीयप्रतियोगिताश्रय-प्रत्येक(धूमो वह्निर्वा)प्रतियोगिकत्व, हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वो-भयस्य सत्त्वेन साध्याभावो न लक्षणघटक इति न तत्राव्याप्तिः) अतिव्याप्तिः वह्निधूमोभयवान् वह्ने रित्यत्र साध्यतावच्छेदकसंयोगे साध्याभावीयप्रतियोगिताश्रयवह्नि-प्रतियोगिकत्व, यत्किञ्चिद्धेत्वधिकरणायोगोलकव्यक्त्यनुयोगिकत्वोभयत्वस्य सत्त्वेन साध्याभावस्य लक्षणाघटकत्वादतिव्याप्ति)रित्येतत्परतया व्याख्यानं न संभव-तीत्यवगन्तव्यम् ।

(वह्निधूमोभयसाध्यवत्पर्वतानुयोगिकत्वहेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिरूपायो-गोलकानुयोगिकत्वोभयाभावस्य साध्यतावच्छेदकसंयोगे सत्त्वेन साध्याभावस्य लक्षणघटकत्वेन वह्निधूमोभयवान् वह्ने रित्यत्रातिव्याप्त्यभावात् तत्रातिव्याप्ति-प्रदर्शकग्रन्थस्यासंगत्यापत्तेरिति बोध्यम् ।

अथ वह्निधूमोभयवान् वह्ने रित्यादावित्यादिग्रन्थेन दीधिति-कारोक्तदोषस्य कृतो भट्टाचार्येण परिहारः संक्षेपादिह प्रदर्श्यते । तथा हि घटद्वयवानिति बुद्धिः द्वित्वोपलक्षितवैशिष्ट्यावगाहिनी(द्वित्व)विशिष्टवैशिष्ट्या-वगाहिनी वा । नाद्यः । एकघटवत्यपि तत्प्रसङ्गात् (घटद्वयवानिति बुद्धि प्रसङ्गात्) । न चोपलक्षितवैशिष्ट्यावगाहित्वेऽपि उभयवैशिष्ट्यावगाहित्व-मेवेति वाच्यम् । प्रविरलशाखे एकस्मिन्नपि वृक्षे दूराद् भेदभ्रमे द्वित्व-प्रकारेण बुद्धिदर्शनात् (इमौ द्वौ वृक्षौ, इति द्वित्वप्रकारकबुद्धिदर्शनात्) तदभाव(द्वित्वाभाव)बुद्ध्यविरोधित्वप्रसङ्गाच्च । द्वितीयेऽपि संयोगस्य संसर्गत्वे

तस्य (संसर्गस्य)भिन्नत्वेनोभयप्रतियोगिकत्वासंभवेन तद्बुद्धेः (वह्निधूमोभयवानिति बुद्धेः) प्रमात्वानुपपत्तिः । प्रकारतावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगिकसंसर्गानुयोगिन्येव तेन संबन्धेन बुद्धेः प्रमात्वात् । तस्मात् उभयत्वावच्छिन्न (वह्निधूमोभयत्वावच्छिन्न)निरूपकतानिरूपितसंयोगसंबन्धावच्छिन्नाधारतैव संसर्गः । तस्य(तादृशाधारतारूपसंसर्गस्य) उभयत्वावच्छिन्नप्रतियोगिकतया प्रमात्वनिर्वाहः (वह्निधूमोभयवानिति बुद्धेः प्रमात्वनिर्वाहः) : एवं चोभयसाध्यकस्थले उभयत्वावच्छिन्ननिरूपकतानिरूपिततत्संबन्धावच्छिन्नाधारताया एव साध्यतावच्छेदकसंबन्धत्वेन न दोषसंभवः (वह्निधूमोभयवान् वह्नेरित्यत्र नातिव्याप्तिः) । तादृशाधिकरणतारूपसाध्यतावच्छेदकसंबन्धे यत्किञ्चिद्धेत्वधिकरणीभूतायोगोलकरूपव्यक्त्यनुयोगिकत्वाभावेन साध्याभावस्य लक्षणघटकत्वान्नातिव्याप्तिः ।

वस्तुतस्तु कुत्रापि संयोगस्य न संसर्गता अपि तु संयोगावच्छिन्नाधारताधेयतयोरेव । अन्यथा पर्वतो वह्निमान् इत्यत्र संयोगः, पर्वते वह्निरित्यत्राधेयत्वम्, पर्वते वह्निरित्यत्र संयोगः, पर्वतो वह्निमानित्यत्राधारत्वमित्यत्र विनिगमकाभावात् उभयत्रैव संयोगस्य संसर्गताया वाच्यतया तद्बुद्ध्योः (पर्वतो वह्निमान् पर्वते वह्निरिति बुद्ध्योः) अविशेषप्रसङ्गः (संयोगरूपसंबन्ध, पर्वत,वह्नीनामुभयत्र समानत्वात्) न चोभयत्र बुद्ध्योः संसर्गावगाहित्वेऽपि प्रकारविशेष्यभावभेदात् भेद इति वाच्यम् । पर्वतो वह्निमान् वह्नौ पर्वतः, इत्येतयोः, पर्वते वह्निः, पर्वतवान् वह्निरित्येतयोः, तथाप्यविशेषप्रसङ्गात् । उभयत्र प्रकारविशेष्योः समानत्वात् ।

न च संयोग एवाधारता, अनुयोगित्वं तु तन्नियामकमिति । आधारतानियामकम् । संयोगस्य द्विनिष्ठत्वेऽपि नाधेये आधारताप्रसङ्गो न वा पर्वतवान् वह्निरित्यस्य प्रमात्वप्रसङ्गः आधारतानियामकानुयोगित्वस्योभयत्रासत्त्वात् । पर्वते वह्निरित्यत्र पर्वतनिष्ठसंयोगप्रतियोगित्वसंसर्ग इति वाच्यम् । आधाराधेयोभयनिष्ठसंयोगसमवायातिरिक्ताधेयव्यावृत्तानुयोगित्वस्वीकारे तस्यैव

संयोगप्रतियोगिकत्वेन संयोगातिरिक्ताधारत्वरूपसंसर्गत्वोपगमात् । अन्यथा आधेय एव संयोग आधारस्य संसर्गप्रतियोगित्व नियामकं वह्निमान् पर्वतं इत्यत्र स्वनिष्ठसंयोगानुयोगित्वं संसर्ग इति वा स्वीकरणीयम्, प्रागुक्तं इत्यत्र विनिगमकाभावात् । उभयत्र (आधेये आधारे च) सतः (वर्तमानस्य) संयोगस्य बुद्धिवैलक्षण्याय कल्पनीयत्वे अनुयोगित्वप्रतियोगित्वयोराधेयेऽनुयोगित्वम्, आधारे प्रतियोगित्वम्, आधेयविशेष्यबुद्धौ संयोगः संसर्गानुयोगित्वं नियामकम् । आधारविशेष्यकबुद्धौ च स्वनिष्ठसंयोगप्रतियोगित्वमित्येतस्यापि विनिगमकाभावेन वक्तुं शक्यत्वाच्च । न च समवायस्यापि संसर्गत्वानुपपत्तिरिति वाच्यम् । आधारस्य समवायानतिरेकात् । न च घटे रूपमित्यस्य रूपवान् घट इत्यतो वैलक्षण्याय वा अतिरिक्ताधारत्वसंसर्गविषयकत्वमित्यत्र विनिगमनाविरह इति वाच्यम् ।

उक्तबुद्धयोः वैलक्षण्याय हि अवश्यं विलक्षणसंसर्गविषयकत्वम्, तत्रा-धारमात्रनिष्ठाधारविशेष्यकबुद्धिविषयः समवायेन परिभाष्यते नत्वाधेयनिष्ठः, न तु समवेतत्वेनेति परिभाषायां कः पर्यनुयोगावसर इत्यलम् ।

यद्वा संयोगस्य भिन्नत्वेन (अनेकत्वेन) तत्प्रतियोगितायाः प्रत्येकम् उभयत्वावच्छिन्नत्वासंभवेऽपि प्रतियोगिताद्वयावच्छेदेनोभयत्वावच्छिन्नत्वस्य संभवात् । यत्रानुयोगिन्युभयसंयोगः, तदनुयोगिक एव प्रत्येकेऽपि तादृशप्रतियोगिकत्वाभ्यु-पगमाच्च नोभयस्थलीयदोषसंभवः । संबन्धधर्मिकोभयाभावकल्पे लौहित्यस्य यत्र स्वसमवायिसंयोगेन साध्यता जवासंयुक्तस्य स्फटिकस्य च तत्राव्याप्तिः । स्फटिका-नुयोगिकसंयोगस्य लौहित्यप्रतियोगिकत्वविरहात्, परंपरासंबन्धस्थले संबन्धघटकस्य विशेषणस्य प्रतियोगिकत्वात् (संबन्धप्रतियोगिकत्वात्) विशेष्यस्यानुयोगिकत्वादेव संबन्धत्वोपपत्तौ विशिष्टप्रतियोगित्वानुयोगित्वयोः मानाभावात् ।

साक्षात्परंपरासाधारणप्रतियोगिताकत्वस्य दुर्वचत्वात्, अयोगोलकसंयोगस्यापि धूमसंयुक्तकालप्रतियोगिकसंयुक्तत्व, धूमीयपरंपरासंबन्धघटकत्वसंभवेन धूमप्रति-

योगिकतया धूमवान् वह्नेरित्यत्रातिव्याप्तिः। धूमप्रतियोगिकत्वायोगोलकानुयोगिकत्वयोः साध्यतावच्छेदकसंयोगे सत्त्वेन साध्याभावस्य लक्षणाघटकत्वात्।

न च संबन्धभेदेनापि भिन्नत्वमेव व्यापकत्वं तत्र परंपरासंबन्धस्थले स्वप्रतियोगिकसमवायवत् प्रतियोगिकत्वमेव निवेश्यते (विशिष्टप्रतियोगिकत्वमेव निवेश्यते) न तु प्रतियोगिकत्वमिति नाव्याप्तिरिति वाच्यम्। विशिष्टघटकविशेषणस्य न प्रतियोगिकत्वमिति धूमवान् वह्नेरित्यत्रायोगोलकानुयोगिक संयोगे तादृशविशिष्टघटकधूमप्रतियोगिकत्वमित्युभयाभावसत्त्वान्नातिव्याप्तिः। साध्यतावच्छेदकसंयोगसंबन्धे उभयाभावसत्त्वान्नातिव्याप्तिः। यत्र परंपरासंबन्धसाध्यकसद्धेतौ तादृशसंबन्धे तादृशप्रतियोगिकत्वानुयोगकत्वोभयसत्त्वेन तदुभयाभावसत्वान्नाव्याप्ति रिति वाच्यम्)। यत्र कालिकघटितसामानाधिकरण्येन घटादेः साध्यता महाकालवृत्तित्वस्य हेतुत्वं तत्र गगनाभावस्यापि लक्षणघटकत्वानुपपत्तिः, गगनप्रतियोगिककालिकविशेषणत्वाप्रसिद्ध्या तद्वत् प्रतियोगिकत्वाप्रसिद्धेः। न च परंपराघटकविशेषणस्य स्वप्रतियोगिकसंबन्धत्वेनैवोपादेयतया गगनप्रतियोगिकविषयित्वप्रसिद्ध्या तद्वत्प्रतियोगिकत्वप्रसिद्धेर्नाव्याप्तिरिति वाच्यम्। स्वसमवायिसमवेतत्वसंबन्धेन घटसाध्यकघटसंयुक्तजलरूपत्वे व्यभिचारिणि रूपानुयोगिकसमवेतत्वे घटप्रतियोगिकसंयोगात्मकसंबन्धवज्जलप्रतियोगिकत्वसत्त्वेनातिव्याप्तेः। एवमनुयोगिकत्वस्य परंपरात्मकस्य परंपरासंबन्धघटकविशेषणनिष्ठाभावप्रतियोगितया विशेषणेऽपि दोष ऊह्यः।

संसर्गतापि परंपरासंबन्धस्थलेऽनेकैवेति संसर्गताधर्मिकोभयाभावविवक्षाऽपि अशक्या। न च संयोगत्वेन संयोगस्य लौहित्यप्रतियोगिकत्वविरहेऽपि लौहित्यस्वसमवायिसंयोगत्वेन लौहित्यप्रतियोगिकत्वस्वीकारान्न दोषः (नाव्याप्तिः) इति वाच्यम्। स्वत्वस्य संसर्गानिविष्टतया किञ्चित्समवायसंयोगात्मकेन साक्षात्संबन्धेन लौहित्यबुद्धेः प्रमात्वापत्तेः। तत्संबन्धस्य परंपरात्मकत्वेन लौहित्यप्रतियोगिकत्वात्। प्रकारप्रतियोगिकविशेष्यानुयोगिकसंबन्धावगाहिबुद्धेरेव प्रमात्वादित्यवधेयम्।

प्रतियोगिताधर्मिकोभयाभावघटितकल्पे तु न दोषः । समवायि-संयोगात्मकपरंपरासंबन्धेन लौहित्याभावस्य समवायिसयोगात्मकसाक्षात्संबन्धेन लौहित्याभावस्य च परस्परं वैलक्षण्योपपत्तये परंपरासंबन्धावच्छिन्नप्रतियोगिता-वच्छेदकत्वस्य परंपरा निखिलपदार्थे पर्याप्तिः, साक्षात्संबन्धावच्छिन्नप्रतियो-गितावच्छेदकतायाश्च विशेषणमात्रे (पर्याप्तिः) तद्विशेषणस्यावच्छेदकतावच्छेद-कत्वमित्यस्य स्वीकरणीयतया साक्षात्संबन्धावच्छिन्नलौहित्याभावप्रतियोगित्वे साध्यता वच्छेदकतापर्याप्त्यधिकरणपरंपरासंबन्धघटकाशेषपदार्थ)पर्याप्तावच्छेदकत्वविरहेणोभया-भावस्य (यत्संबन्धावच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्य) विद्यमानतया प्रागुक्त-लौहित्यादिसाध्यकस्थले सद्धेतौ नाव्याप्तिः । न वा परंपरासंबन्धसाध्यके व्यभिचारिण्यतिव्याप्तिः । साध्यतावच्छेदकसंबन्धपर्याप्तावच्छेदकताकनिरूपकताका-धिकरणतायाः हेत्वधिकरणे विरहेण परंपरासंबन्धावच्छिन्नप्रतियोगित्वस्य लक्षण-घटकत्वात् ।

किञ्च वृत्त्यनियामकसंबन्धेन हेतुतास्थले तेन संबन्धेन हेतुसंबन्धित्वस्या-वश्यं प्रवेश एवेत्यतः संबन्धत्वेन निवेशेऽपि न क्षतिरित्याशयेनाह—

**दर्शितञ्च नियमाघटितमपि संबन्धत्वम् इति जा० टी० ।**

विशेष्यविशेषणान्यविशिष्टधीविषयत्वमेव संबन्धत्वमिति भावः ।

**संबन्धित्वस्यावश्यमित्यादि जा० टी० ।**

इदमुपलक्षणम् । साध्यवत्संयुक्तत्वस्य व्याप्तित्वे तस्य साध्यवदनुयो-गिकसंयोगप्रतियोगित्वरूपत्वेन संयोगत्वेन तत्प्रवेशाद् गौरवमिति तदपेक्षया साध्यवदनुयोगिकत्वेन प्रवेशो लाघवादुचितो विरोधस्य हेत्वाभासता च साक्षादनुमितिविरोधित्वादेव संबन्धत्वमपि तदनुयोगिकत्वप्रतियोगिकत्वविशेष एवेत्यपि बोध्यम् ।

**प्रकारताविशेष्यताभिन्नविषयत्वेति इदं पाठान्तरं बोध्यम ।**

इदञ्च तज्ज्ञानभासमानलक्षणम् । तादात्म्येन संबन्धत्वसामान्यलक्षणं वा तत्प्रतियोगिकसंबन्धत्वं च नेदं (संबन्धस्य लक्षणम्) तथा सति संयोगेन द्रव्यत्वप्रकारकज्ञानीयतादृशविषयताश्रयस्य संयोगस्य द्रव्यत्वसंबन्धत्वापत्तेः । न च प्रमासंबन्धि विषयता (प्रकारताविशेष्यतान्यविषयता) विशेषणं प्रमात्वस्य तत्संबन्धानुयोगिकविशेष्यकत्वावच्छेद्यतत्प्रकारकत्वरूपत्वेऽत्र संबन्धत्वघटिततया आत्माश्रयप्रसङ्गात् । प्रमात्वस्य निश्चयत्ववदव्याप्यवृत्तिजातिविशेषत्वे तत्संबन्धत्व-लक्षणत्वमपि तस्य(संबन्धस्य)संभवत्येव । यद्वा तद्व्यक्तिनिरूपिततादृशविषयता (प्रकारताविशेष्यताऽन्यतरविषयता)विशिष्टविषयत्वं परंपरायाः संसर्गत्वमङ्गीकृत्य विवक्षणीयम् । वै० स्वावच्छेदकावच्छिन्नत्वसंबन्धेनेत्यपि बोध्यम् ।

**दीधितौ अभावत्वञ्चेदमिह नास्ति इदमिदं न भवतीति प्रतीतिनियामको भावाभावसाधारणः स्वरूपसंबन्धविशेष इति ।**

अभावः स्वरूपसंबन्धविशेष इत्यर्थः । न चाभावस्य स्वरूपसंबन्धत्वेऽननुगततयाऽनुगतप्रतीत्यनुपपत्तिः (अभावः, अभावः इत्यनुगतप्रतीत्यनुपपत्तिः) इति वाच्यम् । तद्गत(अभावगत)धर्मान्तरानुयोगितारूपस्यानुगतस्य स्वीकारात् । अतिरिक्तानुयोगित्वस्य स्वीकारेऽपि स्वरूपभेदेन (अभावस्य स्वरूपभेदेन) संबन्धान्तरवत् तद्भेदस्यावश्यकतया अनुगमकधर्मान्तरस्य स्वीकरणीयत्वादिति भावः ।

**दीधितौ अतिरिक्ता एव पदार्था, इति विषयतात्वादिवत् प्रतियोगित्वाधिकरणत्वतत्त्वसंबन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः ।**

यथा च विषयत्वादीनामतिरिक्तत्वं तदालोचनीयं च भट्टाचार्यस्य विषयतावादे इति ।

गुरुणामुपदेशेन ग्रन्थानां च विचारणात् ।
तर्कसाराभिधेग्रन्थे पूर्णः सिद्धान्तसारकः ।

श्री धर्मदत्तकृतिना रचितेन यत्ना

देतेन मा मुदमुपैतु जनोऽपि विद्वान् ।

लोकोपकारकृतमेनमवैत्वसूया—

तीतो मुदं भजतु चाच्छमयूखचूडः ।

स्वश्चारिचञ्चलदृगञ्चलचञ्चरीक—

संचारिचारुचरणाब्जरसं चरन्तु ।

चेतो मधुप्रणयिनः परिचिन्तनैक—

लभ्यं विनन्दति सुधारसमद्रिपुत्र्याः ।

इति सर्वतन्त्रस्वतन्त्रमिथिलामण्डलमण्डनपण्डितकुलपतिझोपाख्य धर्मदत्त (बच्चा)सूरविरिचतसिद्धान्तलक्षणजागदीश्याः क्रोडपत्रं समाप्तम् ।

मैथिलश्रोत्रियपण्डित श्री कृष्णमाधव झा प्रणीता गूढार्थतत्त्वालोकस्य सुबोधनी व्याख्या समाप्ता ।

— :०: —